॥ व्र ॥ श्रीगणेशायनमः। दिवाकरपदद्वन्द्वं फलद्वन्द्वप्रदायकम्। त्रैलोक्यतमसोनाशकर्त्तं तत्प्रणमाम्यहम्॥१॥ योनाग्रन्निजकरमन्दराद्रिमन्थैर्निर्मथ्यप्रथिततरान्धः
१ रसिन्धुम्। लोकेभ्यो वितरति सत्प्रकाशरत्नं वन्दे वनजवनीविनोदवन्धुम्॥२॥ नामं नामं प्रणामोद्बुरभरतचलल्लोचनालिङ्गनेन भ्राम्यद्भृङ्गाजभूरिभ्रमजनः
परौ जानकीवल्लभाङ्घ्री। तातश्रीनीलकण्ठामलपदकृपया लब्धशास्त्रार्थतत्त्वं कुर्वे श्रीशङ्करोऽहं सहृदयहृदयाम्भोजतुष्ट्यै व्रतार्कम्॥३॥ अत्रच स्वकर्त्तव्यविषये
नियतः संकल्पो व्रतमिति श्रीदत्तस्तन्न अग्निहोत्रसन्ध्यावन्दनादिविषये सङ्कल्पइति प्रसक्तेः किं त्वभियुक्तव्रतप्रसिद्धिविषयः सङ्कल्पविशेष एव व्रतं नच व्रत
सङ्कल्पयेदित्यनन्वय इति वाच्यं पाकं पचति दानं दद्यादितिवत्प्रत्ययानुग्रहार्थप्रयोगोपपत्तिरिति नव्याः। तत्र व्रतकालमाह हेमाद्रौ गार्ग्यः। अस्तगे च
गुरौ शुक्रे वाले वृद्धे मलिम्लुचे। उद्यापनमुपारम्भं व्रतानां नैव कारयेत्॥ तत्रैव वृद्धमनुर्बृहस्पती। अग्न्याधानं प्रतिष्ठाश्च यज्ञदानव्रतानि च। माङ्ग-
ल्यमभिषेकश्च मलमासे विवर्जयेत्॥ वाले वा यदिवा वृद्धे शुक्रे चास्तं गतेगुरौ। मलमासएव एतानि वर्जयेद्देवदर्शनम्॥ लल्लः। नीचस्थे वक्रसंस्थेप्यतिचरणगते
वालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा मौंजीवन्धोथ चूडा परिणयनविधिर्वास्तु देवप्रतिष्ठा वर्ज्या सद्भिः प्रयत्नात्त्रिदशपति
गुरौ सिंहराशिस्थिते चेति। नीचस्थो मकरस्थः। कल्पतरौ देवीपुराणे। सिंहस्थं गुरुं शुक्रं सर्वारम्भेषु वर्जयेत्। प्रारब्धं नच सिध्येतमहाभयकरं भवेत्
पुत्रमित्रकलत्राणि हन्याच्छीघ्रं न संशयः। देवारामतडागेषु व्रतोद्यानगृहेषु च। सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्॥ वशिष्ठः। सिंहस्थे तु
मघासंस्थं गुरुं यत्नेन वर्जयेत्। अन्यत्र सिंहभागे तु सिंहस्थोपि न दुष्यतीति॥ सिंहस्थे गुरौ वर्जनीयत्वन्नर्मदोत्तरभागे एव अन्यत्र तु सिंहांशक एव
वर्ज्यः तथाच मदनरत्नादिधृतकालविधाने सिंहस्थितोसुरगुरुर्यदिनर्मदायास्तं वर्जयेत्सकलकर्मसु सौम्यभागे विन्ध्यस्य दक्षिणदिशि प्रवदन्ति चार्याः सिंहांश-
के मृगपतावपि वर्जनीयमिति सिंहांशस्तु पूर्वाफाल्गुण्याः प्रथमः पादः मृगपतौ मकरस्थे गुरौ मकरस्थे देशमाह लल्लः। नर्मदा पूर्वभागे तु शोणस्योत्तर
दक्षिणे गण्डक्याः पश्चिमेभागे मकरस्थो न दोषभाक् इति। केषाञ्चित् स्त्रीकर्तृकाणामन्येषां च व्रतानामगस्त्योदये प्यारम्भं निषेधति। हेमा-

3623

द्रौ लौगाक्षिः। उद्यानिकाशिवपवित्रकमेघपूजा दूर्वाष्टमीफलविरूढकजागराणि। स्त्रीणां व्रतानि निखिलान्यपि वार्षिकाणि कुर्यादगस्त्य उदिते न शुभानि लिप्सुरिति। उद्यानिका व्रतविशेषः। शिवपवित्रकं। आषाढ्यामथवा भाद्र्यां विहितं शिवस्य पवित्रारोपणं। मेघपूजाव्रतविशेषः। दूर्वाष्टमी। भाद्रशुक्लाष्टमी। फलविरूढकं भाद्रशुक्लचतुर्दश्यां पालीव्रतकदलीव्रतापरनामकं। जागरं। आश्विनपौर्णमास्यां कोजागरव्रतं कार्त्तिकचतुर्दश्यां विहितं जागरव्रतञ्च वा। अत्रोभयत्रागस्त्योदयस्यावश्यंभावित्वेन विधेरनवकाशापत्तेर्विकल्पो ज्ञेयः वार्षिकाणीत्यत्र वर्षासु भवानि वार्षिकाणीत्येवव्युत्पत्तिर्नतु वर्षेभवानीति तथासति शरदादिग्रीष्मपर्यन्तमगस्त्योदयानुवृत्तेस्तन्मध्ये विहितानां स्त्रीव्रतानां सर्वथानारम्भ एवापद्येत इति अगस्त्योदयकालश्च दिवोदासीये। उदेति याम्यां हरिसंक्रमाद्रवेरेकाधिके विंशतिमे ह्यगस्त्यः। सप्तमेऽस्तं वृषसंक्रमाच्च प्रयाति गर्गादिभिरभ्यमाणि। व्रतारम्भसमाप्त्योस्तिथिं विशिनष्टि हेमाद्रौ सत्यव्रतः। उदयस्थातिथिर्याहि न भवेद्दिनमध्यभाक्। साखण्डानव्रतानां स्यादारम्भश्च समापनम्। एतद्व्यतिरिक्तायामखण्डायां प्रारम्भमाह। तत्रैववृद्धवशिष्ठः। अखण्डव्यापिमार्त्तण्डा याचखण्डा भवेत्तिथिः। व्रतप्रारम्भणं तस्यामनस्तगुरुशुक्रयोरिति। अनस्तमिति अनस्तगुरुशुक्रायां तिथौ व्रतमारम्भणीयमित्यर्थः। रत्नमालायां। सोमसौम्यगुरुशुक्रवासराः सर्वकर्मसु भवन्ति सिद्धिदाः भानुभौमशनिवासरेषु च प्रोक्तमेव खलुकर्म सिध्यति। विरुद्धसंज्ञा इह येच योगास्तेषामनिष्टः खलु पाद आद्यः। सवैधृतिस्तु व्यतिपातनामा सर्वोऽप्यरिष्टः परिघस्य चार्द्धम्। तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नवपञ्च शूले। गण्डेऽतिगण्डे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः। ब्रह्मयामले। दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा। न त्याज्या शुभकार्येषु प्राहुरेवं पुरातना इति। अथदेशः। व्यासः। सर्वेशिलोच्चया पुण्याः सागराः सरितस्तथा॥ अरण्यानि च पुण्यानि विशेषान्नैमिषं तथा। देवीपुराणे। देशो नदी गया शैल गङ्गानर्मदपुष्करम्। वाराणसी कुरुक्षेत्रं प्रयागं जम्बुकेश्वरम्॥ केदारं वामपादं च कुडवं पुष्करारण्यं। सोमेश्वरं महापुण्यं तथा चामर कण्टकम्। कालञ्जरं तथा विन्ध्यं यत्र वासोगुहस्य च॥ गुहः स्वामिकार्त्तिके यः मनुः सरस्वतीदृष

॥ व्र ॥ द्वत्योर्देवनद्योर्यदन्तरम् । तं ब्रह्मनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥ यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः । वर्णानां सान्तरालानां स सदाचार
२ उच्यते । कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनिकाः । एष ब्रह्मर्षिदेशोवै ब्रह्मावर्त्तादनन्तरः । मत्स्या विराटाः पाञ्चालाः कान्यकुब्जाः शूरसेनिका
मथुरादेशाः अनन्तरः समः । हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः उदाहृतः । विनशनं कुरुक्षेत्रं । आसमुद्रात्तु वै पू-
र्वादासमुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः ॥ सिन्धुनदीपश्चिमतीरव्यावृत्त्यर्थमाह । कृष्णसारस्तु चरति मृगोयत्र स्वभा-
वतः । सज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततःपरः ॥ एतान्द्विजातयोदेशान् संश्रयेरन् प्रयत्नतः । याज्ञवल्क्योपि ॥ यस्मिन्देशे मृगःकृष्णस्तस्मिन्धर्मा-
न्निबोधतेति । अथ व्रताधिकारिणः । स्कान्दे । निजवर्णाश्रमाचारनिरतः शुद्धमानसः । अलुब्धःसत्यवादी च सर्वभूतहितेरतः ॥ व्रतेष्वधिकृतो-
राजन्नन्यथा विफलः श्रमः । श्रद्धावान्पापभीरुश्च मदद्म्भविवर्जितः ॥ पूर्वनिश्चयमाश्रित्य यथावत्कर्मकारकः । अवेदनिन्दको धीमानधिकारी व्रता-
दिषु ॥ निजवर्णाश्रमाचार इत्यनेन चतुर्णांअधिकारो गम्यते । अतएव कौर्म्ये । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव द्विजोत्तम । अर्चयन्ति महा-
देवं यज्ञदानसमाधिभिः । व्रतोपवासनियमैर्होमस्वाध्यायतर्पणैः । तेषां वै रुद्रसायुज्यं सामीप्यं नातिदुर्लभम् ॥ सलोकताच सारूप्यं जायते
तत्र स[illegible]दतः । देवलोपि । व्रतोपवासनियमैः शरीरोत्तापनैस्तथा । वर्णाः सर्वेपि मुच्यन्ते पातकेभ्यो न संशय ॥ अत्राधिकारिविशेषणस्य पुंस्त्वस्या
विवचित[illegible]त्वात् स्त्रीणामप्यधिकारः । भारते । मामुपाश्रित्य कौन्तेय येपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्ते तेपि यान्ति परां गतिमिति ॥
क्वचित् म्लेच्छ[illegible]नामप्यधिकारो हेमाद्रौ देवीपुराणे । स्नातैः समुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ॥ वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः । स्त्रीभिश्च
कुरुशार्दूल त[illegible]द्विधानमिदं शृणु ॥ वैश्यशूद्रयोस्तु द्विरात्राधिकोपवासो न भवति वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते । त्रिरात्रं पञ्चरात्रं वा तयो २
र्व्युष्टिर्नविद्यत इ[illegible]ति शङ्खलिखित निषेधात् । व्युष्टिः फलं सभर्तृकाणां भर्त्राद्याज्ञां विना नाधिकारः । तथाच मदनरत्ने मार्कण्डेयपुराणे । नारी खलु

स्नात्वाचम्य समाहितः। सूर्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत्॥ अत्र प्रातर्व्रतमाचरेदित्येवान्वयः प्रधानक्रियान्वयस्याभ्यर्हितत्वात्। अभुक्त्वेति तु अशक्तस्याभ्यनुज्ञातिक्षीरादिभक्षणापवादः केचित्तु। व्रतदिने प्रातराहारमभुक्त्वा व्रतमाचरेदित्याहुः तत्र उपवासंव्रतंकार्यमित्यनेनैवाभुक्तवतोधिकारस्य प्राप्तत्वादेतस्य वैयर्थ्यापत्तेः अन्ये तु पूर्वदिने व्रताहारमभुक्त्वा अर्थादेकभुक्तं कृत्वोत्तरदिने स्नात्वाचम्य व्रतादिकं कुर्यादित्याहुः परेतु। सर्वत्र पूर्वेद्यु-रेव सायं सन्ध्योत्तरं व्रतं ग्राह्यं वारव्रतादौ बहुशस्तथा दृष्टत्वात्। प्रातः स्नात्वेति चान्वय इत्याहुः। सामान्यधर्मा हेमाद्रौ भविष्ये। क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः। देवपूजाग्निहवनं सन्तोषस्तेयवर्जनम्॥ सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्थितः। देवपूजा यद्दैवत्यं व्रतं तस्य पूजा। अग्निहवनं पूज्यदेवतोद्देशेन होमः प्रक्रमात्। एतच्च सप्तमीव्रते सूर्यपूजाग्निहवनं नवमीव्रते दुर्गापूजा। अनुक्तदेवताव्रते इष्टदेवतापूजा। हवनं व्याहृतिहोम इति केचित्। अत्र क्षमादीनां स्वतन्त्रतया चतुर्वर्गसाधनत्वेन विहितानां व्रताङ्गतया विधानं खादिरं वीर्यकामस्य यूपं कुर्यादितिवत्संयोगपृथक्त्वादुपपन्नमिति हेमाद्रिः। सर्वव्रतेष्वित्यत्र सर्वव्रतपदे भविष्यत्पुराणीय सर्वव्रतपरमतो व्रतान्तरे विध्यन्तर एव होमादीनामंगत्वं नान्यथा। अतएवैकादशीव्रतादौ शिष्टानां होमाद्यनाचरणमिति केचित्। वस्तुतस्तु येष्वेव पुराणान्तरोक्तव्रतेषु होमादिविधिरस्ति तद्विषयकमेव सर्वपदमन्यथात-दितरपरत्वेन संकोचापत्तेरिति पृथ्वीचन्द्रोदयेऽग्निपुराणे। स्नात्वाव्रतवतासर्वव्रतेषु व्रतमूर्त्तयः। पूजा सुवर्णवत्याद्याशक्त्याविभूमिशायिना॥ जपोहोमश्च सामान्यं व्रतान्तेदानमेव च। चतुर्विंशद्वादश वा पञ्च वा त्रय एव वा॥ विप्राः पूज्या यथाशक्तितेभ्योदद्याच्च दक्षिणाम्। व्रतमूर्त्तयस्तद्देवता प्रतिमाः। देवलः ब्रह्मचर्यमहिंसाच सत्यमामिषवर्जनम्। व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः। स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः सङ्कथनादपि॥ विपद्यते ब्रह्मचर्यं न दारेषु तु संगमादिति स्वदारेषु तु संगमात् क्वचित्पाठः आमिषं मांसं। आमिषं दन्तपानीयं गोवर्ज्यं क्षीरमामिषं। मसूरमामिषं सस्ये फले जंबीरमामिषं। आमिषं शुक्तिकाचूर्णमारनालं तथामिषमिति स्मृत्यन्तरोक्तं वा। व्रताद्यारम्भे वृद्धिश्राद्धं कार्यम्। तदाह शातातपः। तानिष्ट्वा तु पितॄन्

ननुज्ञाता भर्त्रा पित्रा सुतेन वा । निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम् ॥ भर्त्राज्ञया तु सर्वव्रतेष्वधिकारः । भार्या भर्तुर्मतेनैव व्रतादीनाचरेत् सदेति कात्यायनोक्तेः । तथाच ॥ पत्यौ जीवति या नारी उपवासव्रतं चरेत् । आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेदिति विष्णुवचनं तद्भर्त्रननुज्ञापरं । यत्तु कश्चित् । नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं । भर्तृशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति ताः ॥ यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्याद्भार्याभ्यर्चनं सत्क्रियां च । तस्य त्वर्द्धं सा फलं नान्यचिता नारी भुंक्ते भर्तृशुश्रूषयैवेति । स्कान्दात्सभर्तृकाणामेकादश्याद्युपवासादावनधिकार इति तन्न । तस्यापि पृथक् स्वातन्त्र्येण भर्त्रननुज्ञापरत्वात् । अतएव व्यासः । कामं भर्तुरनुज्ञाता व्रतादिष्वधिकारिणीति । शंखोऽपि । कामं भर्त्रनुज्ञया व्रतोपवासनियमाः स्त्रीधर्मा इति । नचानुज्ञया व्रतेष्विव यज्ञेऽपि पृथगधिकारापत्तिरिति शंक्यं तस्या श्रुत्यध्ययनजन्यज्ञानाभावेन पृथगभावात् । यद्वा स्कान्दस्य भर्तृशुश्रूषाया स्तावकत्वेनाप्युपपन्नत्वादिति । नच भर्त्रनुज्ञयैवाधिकारे सिद्धे विधवाया व्रतानधिकारापत्तिरिति वाच्यम् । नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा । विफलं तद्भवेत्तस्या यत्करोत्यौर्द्धदैहिकमिति मार्कण्डेयोक्तः । पित्राद्याज्ञया तस्याधिकार इति हेमाद्रिः । स्त्रीणां व्रतग्रहणे विशेषो हेमाद्रौ हरिवंशे । स्नानं च कार्यं शिरसस्ततः फलमवाप्नुयात् । स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती ॥ अथ व्रतधर्माः व्रतसङ्कल्पविधिमारभते । गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः । औदुम्बरं ताम्रमयं उदुम्बरं स्मृतं ताम्रे इति विश्वोक्तेः यद्वान्यच्चव्रतादिकं कल्पयेदिति कल्पतरुः श्रीदत्तस्तु कल्पतरुमते वकारस्वार्थे तेनायमर्थः यस्तु नक्तादिकर्त्तुमिच्छेत्तदपि उक्तविधिनैव गृह्णीयादिति तन्मतं परिष्कृत्यवकारस्योपवासपदस्यच वैयर्थ्यापत्तेः । यत्सङ्कल्पयेत्तद्गृह्णीयादित्यन्वयोपपत्तेरित्यदूषयत् । ताम्रपात्राद्यभावे हस्तेनापि जलं गृहीत्वा सङ्कल्पयेदिति तु युक्तम् । अतएवानन्तभट्टः । यद्वा वार्य्यवधारयेदिति पाठः मदनरत्ने देवलवाक्ये तु यथा संकल्पयेदिति पाठः । यथा कामं फलमुद्दिशेदित्यर्थः । अतएव मार्कण्डेयः । सङ्कल्पं च यथा कुर्यात् स्नानदानव्रतादिके । अनन्तरं कृत्यमाह मदनरत्ने देवलः ॥ अभुक्त्वा प्रातराहारं

श्राद्धे कर्मकिञ्चित् समारभेत्। गृहीतव्रतानाचरणे मदनरत्ने छागलेयः। पूर्वं व्रतं गृहीत्वा यो नाचरेत्काममोहितः। जीवन् भवति चाण्डालो मृत श्वाभिजायते॥ काममोहित इति विशेषणाद्व्याध्यादिनानाचरणे न दोषः। तथाच हेमाद्रौ स्कान्दे। सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम्। अव्रतघ्नानि पठ्यन्ते सकृदेतानि शास्त्रतः। सर्वेभ्यो भूतेभ्यः सकाशाद्व्रतकर्त्तुर्भयं हेमाद्रिमदनरत्ने सर्वभूतभयं व्याधि आरिति पठित्वा व्याख्यातं सर्वभूतभयं भूतभयेभ्यो भयमिति सर्पादिभयाद्व्रताङ्गवैकल्यं तेन व्रतहानिर्भवतीत्यर्थः। गुरुशासनं गुरोराज्ञा। सकृदुक्त्यासकृत्यागे प्रायश्चित्तम्। तदुक्तं स्कान्दगारुडयोः क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि। दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा। नचाच प्रायश्चित्तोक्तेरतिक्रान्तव्रतानाचरणमिति वाच्यम्। प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेदिति स्कान्दात्। अथोपवासधर्माः तत्रोपवासस्वरूपं कात्यायनवृद्धवशिष्ठाभ्यां दर्शितं। उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्वभोगविवर्जितः गुणैस्तज्जपनध्यानतत्कथाश्रवणादयः। उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः। दयासर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गल्यमकार्पण्यमस्पृहेतीत्यादिविष्णुधर्मोत्तरगौतमादिप्रतिपादितैः तच्छब्देनोपास्या देवताव्रतदेवता वा एवं च पापनिवृत्त्या गुणानुष्ठानेन च सहितो निराहारस्य वासोऽवस्थानमुपवास इत्युक्तं भवति इदं च फलसाधनस्योपवासस्य स्वरूपमुक्तं। उपवास पदार्थस्तु स्मृतिपुराणव्यवहारेष्वयं निराहारावस्थानमात्रं। वृद्धवशिष्ठः। उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनं काष्ठेनेति शेषः अतएव तन्निन्दितं। दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि चेति वाक्यशेषाद्विधेरिव निषेधस्यापि विशेषपरतायुक्तैव तेन अलाभे वा निषेधे वा काष्ठानां दन्तधावने। पर्णादिना विशुद्धीत जिह्वोल्लेखः सदैव हीति पैठीनसिवचसा। अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ। अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनमिति व्यासवचसा च पर्णादिना द्वादशगण्डूषैर्वा दन्तधावनं कार्यमेव। देवलः। असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात्। उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् सकृत्तु तेनैव जलपानमभ्यनुज्ञातं। अत्यये चाम्बुपानेन नोपवासः प्रणश्यति। अत्यये जलपानं विना प्राणात्यये विष्णुधर्मे असकृज्जलपानञ्च दिवा

स्वापश्चमैथुनं। ताम्बूलचर्वणं मांसं वर्जयेद्व्रतवासरे। असकृदुदकपानसकृज्जलपाने न दोषः। अत्र पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनं असमाप्ते व्रते पूर्वे कुर्यान्नैव व्रतान्तरमिति तस्यापि व्रतवासरत्वान्मांसनिषेधः पारणदिनएव नतूपवासदिने प्रसक्त्यभावात्। अतएव निर्णयामृते व्यासः वर्जयेत्पारणे मांसं [illegible]औषधं सदेति। अष्टौ तान्यव्रतघ्नानि आपोमूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमिति स्कान्दवचसा प्रसक्तमौषधरूपमपि मांसं व्रता[illegible]दित्यर्थः। विष्णुरहस्ये। स्मृत्यालोकनगन्धादि स्वादनं परिकीर्त्तनम्। अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम्। गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनं व्रतस्थोवर्जयेत्सर्वं यच्चान्यद्बलरागकृदिति हारीतः। पतितपाखण्डादिनास्तिकादिसम्भाषणानृताश्लीलादिकमुपवासादिषु वर्जयेदिति। अत्रादिपदेन यत्पुरुषार्थतया सर्वदानिषिद्धं तदपि क्रत्वर्थतयासंगृह्यते अतएव व्रताधिकारे सुमन्तुः। विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः। निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः पतितादेर्दर्शनेतु विष्णुपुराणे तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः स्पर्शादौ विष्णुधर्मे संस्पर्शेच नरःस्नात्वा शुचिरादित्यदर्शनात्। सम्भाष्यतान् शुचिपदं चिन्तयेदच्युतं बुधः योगीयाज्ञवल्क्यः यदिवाग्यमलोपस्याद्व्रतदानक्रियादिषु व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वाविष्णुमव्ययम्। यमः। मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयमिति। बृहन्नारदीये। रजस्वलां च चण्डालं महापातकिनं तथा। सूतिकां पतितञ्चैव उच्छिष्टरजकादिकम्। व्रतादिमध्येशृणुयाद्यद्येषां ध्वनिमुत्तमः। अष्टोत्तरसहस्रन्तु जपेद्वैवेदमातरम्। वेदमातागायत्रीमिताक्षरायां दक्षः। सन्ध्याहीनोशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत् कुरुतेकिञ्चिन्नतस्य फलमश्नुते। अत्र प्रातःसन्ध्यैवाङ्गमिति केचित्। तातचरणास्तु। अविशेषात्तत्तत्सन्ध्योत्तरभाविनिकर्मादौ साङ्गमिति युक्तमाहुः प्रातःकालीनव्रतादिसङ्कल्पस्तु प्रातःसन्ध्यां कृत्वैव कार्यः प्रातःसन्ध्यां बुधः कृत्वा सङ्कल्पं तत आचरेदिति गौडनिबन्धधृतस्मृतिः मार्कण्डेयपुराणे सूर्योदयं विनानैव व्रतदानादिकः क्रमः क्रमं,उपक्रमः सूर्योदयशब्दे न उषः कालो लक्ष्यते इति कल्पतरुः छान्दोगपरिशिष्टे। सदोपवीतिनाभाव्यं सदा बद्धशिखेनच विशिखोव्युपवीतस्य यत्करोति न तत्कृतम्। पित्र्यमन्त्रानद्रवणे आत्मालम्भे अवेक्षणे। अ ४

धोवायु समुत्सर्गे प्रश्वासे नृतभाषणे । मार्जारमूषकस्पर्शे ह्याक्रुष्टे क्रोधसम्भवे । निमित्तेष्वेषु सर्वत्र कर्मकुर्वन्नपःस्पृशेत् । मार्कण्डेयपुराणे शिरस्नातस्तु कुर्वी
तदैवं पित्र्यमथापि वा । वाराहपुराणे । स्नानसन्ध्यातर्पणादिजपहोमामरार्चनम् । उपवासवताकार्यं सायं सन्ध्याहुतीर्विना । भगवद्गीतायां । तस्मादो
मित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनां । आपस्तम्बः । त्रिमाचस्तु प्रयोक्तव्यं कर्मारम्भेषु सर्वश इति विस्तृताचेयं
सामान्यपरिभाषातातचरणकृताचारमयूखे द्रष्टव्या । अत्र स्त्रीणां विशेषो हेमाद्रौ पाद्मे । गर्भिणी सूतिकादिश्च कुमारीचाप्यरोगिणी । यदा शुद्धा
तदान्येन कारयेत्प्रयतास्वयं । प्रयता शुद्धा स्वयं कुर्यादित्यर्थः पुंसोप्येषविधिर्लिङ्गस्याविवक्षितत्वादिति हेमाद्रिः एवं स्त्रीभिरजोदर्शनेपि कार्यं तथाच सत्य
व्रतः । प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । नच तत्रव्रतस्यस्यादुपरोधः कथञ्चन । व्रतस्य उपवासस्येत्यर्थः पूजादिकं त्वन्येनकारयेत् । तथाच
मदनरत्ने मात्स्ये । अन्तरातुरजोयोगे पूजामन्येन कारयेत् । सूतकेप्यारब्धं भवत्येव । तथाच तत्रैव पूर्वसङ्कल्पितं यच्च व्रतं सुनियतव्रतैः । तत्कर्त्तव्यम्नरैः
शुद्धं दानार्चनविवर्जितमिति । केनकारयेदित्यपेक्षायां तत्रैव पैठीनसिः । भार्यापत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतं । असामर्थ्येपतिस्ताभ्यां व्रतभङ्गो न
जायते । तत्रैव वायुपुराणे । उपवासेत्वशक्तस्तु आहिताग्निरथापि वा । पुत्राद्वा कारयेदन्याद्ब्राह्मणाद्वापि कारयेत् । उपवासं प्रकुर्वाणः पुण्यं शतगुणं
लभेत् । नारी च पतिमुद्दिश्य एकादश्यामुपोषिता । पुण्यं शतगुणं पायादित्याह गालवोमुनिः । मातामहादीनुद्दिश्य एकादश्यामुपोषणे । कृते तु तेफलं
विप्रा समग्रं फलमाप्नुयुः एतेच प्रतिनिधयो नकाम्ये तथाच मण्डनः काम्येप्रतिनिधिर्नास्ति नित्येनैमित्तिकेपि च । काम्येप्युपक्रमादूर्द्ध्वं केचित्प्रतिनिधिं
विदुः । नस्यात्प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्मसु । सदेशकालयोर्नास्ति नारणेरग्निरेव च । नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित् । अथव्रतहवि
ष्याणि । हेमाद्रौ छान्दोगपरिशिष्टे कात्यायनः । हविष्येषु यवामुख्यास्तदनुव्रीहयः स्मृताः । माषकोद्रवगौरादीन् सर्वाभावेपि वर्जयेत् । तत्रैव अग्नि
पुराणे । व्रीहिषष्टिकमुद्गाश्च कलायाः सलिलं पयः । श्यामाकाश्चैव नीवारा गोधूमाद्याव्रतेहिताः । कुष्माण्डा लाबुवार्त्ताक पालकीज्योत्स्निकास्त्यजेत् ।

[illegible]भैक्ष्यं सक्तुकणाः शाकं दधिघृतं मधु। श्यामाकाः शालिनीवाराः यावकं मूलतण्डुलं। हविष्यं व्रतनक्तादावग्निकार्यादिके हितं। मधुमांसं विहायान्यद्व्रते पथ्यितमीरितं। पालक्की पलाकीति शाकविशेषः ज्योत्स्निका कोशातकी। तत्रैव भविष्ये। हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः। कलाय कङ्गुनीवारावास्तुकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्र हरीतकी। पिप्पली जीरकञ्चैव नागरङ्गकतिन्तिडी। कदली लवलीधात्री फलान्यगुडमैक्षवं। अतैलपक्वं मुनयो हविष्याणि प्रचक्षते। लवणे मधुसर्पिषीति क्वचित् पाठः। हैमन्तिकं धा[illegible]कलमाः तदपि सितं श्वेतं अस्विन्नं च हविष्यं कलायाः सतीनापरपर्यायाः मटरइति प्रसिद्धाः वस्तु वथुपतिख्याशाकः हिलमोचिकाः गौडदेशे हेलांचेति प्रसिद्धा कालशाकं उत्तरदेशे कालिकेति केमुकं केमुचा इति पूर्वदेशे प्रसिद्धं। नागरङ्गं नारिङ्गं ऐरावतो नागरङ्गो नादेयीभूमिजम्बुकेत्यमरात् नागरञ्चैवेति पाठे नारंशुण्ठी लवली राय आवले इति महाराष्ट्रभाषयोच्यमानं फलं। हरफारेवडीति मध्यदेशभाषया। अतैलपक्वमित्येतत्कथितं हविष्याणामेव विशेषणम्। मनुः। मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्। अक्षारलवणं चैव प्रकृत्या हविरुच्यते। अनुपस्कृतमपक्वम्। अथ व्रताद्युपयुक्तानि वस्तूनि। तत्र पञ्चरत्नान्यादित्यपुराणे। सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम्। रत्नपञ्चकमाख्यातं शेषं वस्तु प्रवीम्यहम्। कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम्। एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुरिति समयप्रदीपधृतकालिकापुराणोक्तानि वा। कुलिशं हीरकं स्मृत्यन्तरे अभावे सर्वरत्नानां हेमसर्वत्र योजयेत्। विष्णुधर्मोत्तरे। मुक्ताफलं हिरण्यं च वैदूर्यं पद्मरागकम्। पुष्परागञ्च गोमेदं नीलं गारुत्मकं तथा। प्रवालयुक्तान्युक्तानि महारत्नानि वै नव। हेमाद्रौ ब्रह्माण्डपुराणे अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः पञ्चभंगा इति प्रोक्ताः सर्वकर्मसु शोभनाः पञ्चभङ्गाः पञ्चपल्लवाः। पञ्चगव्यं तत्रैव स्कान्दे। गोमूत्रं गोमयं क्षीरं दधि सर्पिर्यथाक्रमं विष्णुधर्मे। गोमूत्रभागतस्त्वार्धं शकृत् क्षीरस्य च त्रयं द्वयं दध्नो ष्टे ५
तस्यैकमेकस्य कुशं वारिजं गोमूत्रादिपरिमाणन्तातचरणकृतप्रायश्चित्तमयूखे ज्ञेयं। विष्णुधर्मे। गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयं। आप्यायस्वेति च क्षीरं

दधिक्राव्णोतिवैदधि तेजोसिशुक्रमित्याज्यं देवस्यत्वाकुशोदकं। एभिस्तु पञ्चभिर्युक्तं पञ्चगव्यं प्रचक्षते। पञ्चामृतं हेमाद्रौ शिवधर्मे। पञ्चामृतं दधिक्षीरं सितामधुघृतं नृप। मदनरत्ने कात्यायनः। आज्यं क्षीरं मधुतथामधुरत्रयमुच्यते। तत्रैवभविष्ये। मधुरोम्लश्चलवणः कषायस्तिक्तएव च कटुकश्चेतिराजेन्द्र रसषट्कमुदाहृतं चतुःसमं गारुडे कस्तूरिकायाद्वौभागौचत्वारश्चन्दनस्यच कुङ्कुमस्यत्रयश्चैकंशशिनस्याच्चतुःसमं। शशीकर्पूरः कर्पूरं चदनं दर्पं कुंकुमञ्च समांशकं। सर्वगन्धमिति प्रोक्तं समस्त सुरवल्लभं। दर्पः कस्तूरिका तथाच कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा। कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः छन्दोगपरिशिष्टे कुष्टं मांसं हरिद्रे द्वे मुराशैलेय चन्दनं। वचाचम्पकमुस्तं च सर्वौषध्योदशस्मृताः पाद्मे। इक्षवस्तृण राजश्च निष्पावाऽजातिधानकम्। विकारवच्च गोक्षीरं कुसुमं कुङ्कुमं तथा। लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते। तृणराजस्तालः अजाजीरकं। आपः क्षीरं कुशाग्राणि दध्यक्षततिला स्तथा। यवाः सिद्धार्थकाश्चेति ह्यर्घोष्टाङ्गः प्रकीर्तितः। पञ्चरात्रे। रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत्। शालि तन्डुल चूर्णेन शुक्लं वायवसम्भवं रक्तं कुसुमं सिन्दूरं गैरिकादिसमुद्भवं। हरितालोद्भवं पीतं रजनी सम्भवं तथा। कृष्णं दग्धयवैर्हरितं पीतं कृष्णविमिश्रकं रजनी हरिद्राकौतुकसंज्ञानि भविष्ये दूर्वायवांकुरश्चैव वालुकं चूतपल्लवाः। हरिद्राद्वयसिद्धार्थ शिखिपचोरगत्वचः। कङ्कणौषधयश्चैताः कौतुकाख्या नव स्मृताः। सप्तमृदोमात्स्ये। गजाश्वरथ्यावल्मीक सङ्गमाह्रदगोकुलात्। मृदमानीय कुम्भेषु प्रक्षिपेच्चत्वरा तथा। गोकुलावधिसप्तचत्वरेण सहाष्टौ मृदो भवन्ति। हेमाद्रौ भविष्ये। सुवर्णं रजतं ताम्रमारकूटं तथैव च। लोहं त्रपु तथासीसं धातवः सप्तकीर्तिताः। आरकूटं पित्तलं तत्रैव षट्त्रिंशन्मते। यवगोधूमधान्यानि तिलाः कंगु स्तथैवच। श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतं। सप्तदशधान्यानि मार्कण्डेय पुराणे व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुकास्तिलाः। प्रियंगवः कोविदाराः कोरदूषाः सतीनकाः। माषामुद्गामसूराश्च निष्पावाः सकुलत्थकाः। आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृतः। कोरदूषाः कोद्रवाः सतीनकाः कलायाः मटर इति प्रसिद्धाः तान्यष्टादशानि स्कान्दे यवगोधूमधान्यानि तिलाः कंगुकुलत्थकाः माषामुद्गामसूराश्च निष्पावाः श्यामसर्षपाः। गवेधूकाश्च नीवा

आढक्योऽथ सतीनकाः चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु हेमाद्रौ चीरस्वामी मूलपत्रकरीराग्र फलकाण्डाधिरूढकाः। त्वक्पुष्पं कवकञ्चेति
६ शाकं दशविधं स्मृतं। करीरं वंशाङ्कुरं अग्रं पल्लवः काण्डं नालं कवकं छत्राकं कलशा उक्ता विष्णुधर्मे। हैमराजततात्राश्च दलमयालचणान्विताः। याचो
दाइप्रतिष्ठादौ कुम्भास्सुरभिषेचने। पञ्चाशाङ्गुलवैपुल्या उत्सेधे षोडशाङ्गुलाः। द्वादशांगुलमूलास्तु मुखमष्टांगुलं भवेत्। पञ्च च आशाश्च पञ्चाशाः
आशादश पञ्चाधिकानि अंगुलानि वैपुल्यमित्यर्थ इति तातचरणाः केचित्तु पञ्चाशदंगुलवैपुल्यमित्यर्थः इत्याहुः प्रतिमाद्रव्यं तत्परिमाणं हेमाद्रौ भविष्ये
अनुक्तद्रव्यतत्संख्यादेवताप्रतिमान्नृप। सौवर्णी राजती ताम्री हचजा मार्तिकी तथा चित्रजापिष्टलेपोत्था निजवितानुरूपतः। आमाषात्पलपर्यन्ताकर्तव्याशा
यवर्जितैः। अङ्गुष्ठपर्वादारभ्य वितस्त्यवधिका स्मृता मात्स्ये तु विशेषः अङ्गुष्ठपर्वादारभ्य वितस्तिर्यावदेव तु व्यूहतः प्रतिमाकार्यानाधिका शस्यते बुधैः
आषोडशात्तु प्रासादे कर्तव्यानाधिका ततः इत्याधिककल्पतरौ प्रतिष्ठा काण्डे ज्ञेयं तथा अनुक्तसंख्यायत्रस्यात्शतमष्टोत्तरं स्मृतं। मात्स्ये। होमेऽग्न्यादि
पूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्तिविधीयते। मदनरत्नेत्राह्मे। यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमा
व्रीहीणामिव शालयः। आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। मन्त्रस्य देवतायाश्च प्रजापतिरितिस्थितिः। मन्त्रस्य देवतायाश्चाविधाने प्रजापति
र्दैवता समस्तव्याहृतिर्मन्त्रः स्मृत्यन्तरेपि नव्याहृत्याषमंहुत इतिगारुडे। प्रणवादिनमोन्तश्च चतुर्थ्यन्तश्च सत्तम। देवतायाः स्वकं नाममूलमन्त्रः प्रकीर्तितः
केषाञ्चित् प्रतिनिधिरुक्तो हेमाद्रौ विष्णुधर्मे। दध्यलाभे पयःकार्यं मध्वलाभे तथागुडः। घृतप्रतिनिधिं कुर्यात्पयो वा दधि वा नृपः। तत्रैव मैत्रायणी
परिशिष्टे दर्भाभावेकाशः प्रतिनिधिः पैठीनसिः सर्वाभावेयवाः प्रतिनिधिः तत्रैव देवलः। आज्य होमेषु सर्वेषु गव्यमेव भवेद्धृतं। तदलाभे महिष्यास्तु
आजमाविकमेव तु। तदलाभे तु तैलंस्यात्तदभावे तु जार्तिलं। तदलाभे तु कौसुम्भं तदलाभे तु सार्षपं हेमाद्रौ परिशिष्टे कात्यायनः अनन्तर्गर्भकं साग्रं
कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्। आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु। अथेध्माः पलाशाश्वत्थखदिररोहितोदुम्बराणां

तदभावे सर्ववनस्पतीनां सर्वकाष्ठकिवर्ज्याण्याहुतिर्द्वादशपर्वपूरिका स्रुवादिना चेत्स्रुवगर्तपूरिता । दैवेन तीर्थेन च हूयते हविःस्वङ्गारिणि स्वर्चिषि पावके च । योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः । मन्दाग्निरामयावी च दरिद्रश्चैव जायते । तस्मात्समिद्धे होतव्यं नासमिद्धे कथञ्चन । आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीन्तथा । मुक्तपुंश्च कृतेचैव पाणिशूर्पस्रुवादिभिः । न कुर्यादग्निधमनं न कुर्यात व्यजनादिना । मुखेनैव धमेदग्निं मुखाद्ध्येषोऽधि जायते । अथ धूपाः हेमाद्रौ भविष्ये । अगुरुं चन्दनं मुस्ता सिल्हकं वृषणं तथा । समभागं तु कर्त्तव्यं धूपोऽयमसृताह्वयः । सिल्हकं सिल्हादइतिप्रसिद्धं वृषणं कस्तूरी तथा षड्भागकुष्ठं द्विगुणो गुडस्य लाक्षात्रयं पञ्चनरस्य भागः । हरीतकी सर्जरसस्य मांसी भागैकमेकं चिलवं शिलाजं घनस्य चत्वारिपुरस्य चैको धूपो दशांगः कथितो मुनीन्द्रैः । सर्जरसः राल इति प्रसिद्धः मांसी जटामासी चिलवं त्रिभागं घनः कर्पूरः पुरः गुग्गुलः अथ सुवर्णमानं । याज्ञवल्क्यः जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतं तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते । गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितं । रजतमानमाह द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव तु निष्कः सुवर्णाश्चत्वार इति । ताम्रमानमाह । कार्षिकः ताम्रिकः पण इति पलचतुर्थांशेन कर्षेणान्वितः कार्षिकस्ताम्रसम्बन्धी पणो भवति कर्षसंज्ञश्च निषण्डे ते षोडशाक्षः कर्षोऽस्त्रीपलं कर्षचतुष्टयमिति । ते षोडश माषाः अक्षः सचकर्ष इत्यर्थः धरणस्यैव पुराणइति संज्ञान्तरं । तेषोडशस्याद्धरणं पुराणश्चैव राजतमिति मिताक्षरायां स्मृतेः शतमानपलेपर्याये सुवर्णचतुष्टयसमं तोलितं रूप्यं राजतो निष्कइत्यर्थः सुवर्णनिष्कस्तु चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणत इति मनूक्तः सचपलसमानएव कोचकार्षापण इत्यपेक्षायां देशभेदेन कार्षापणोभिन्न इत्याह हेमाद्रौ नारदः । कार्षापणो दक्षिणस्यां दिशि रौप्यं प्रवर्तते पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु । षोडशपणा अष्टौ टवूका कार्षापणः पूर्वस्यामित्यर्थः तावता लभ्यं रूप्यं दक्षिणस्यां सइति द्वैतनिर्णयेपितामहचरणाः लीलावत्यां वराटकानां दशकद्वयं यत्साकाकिणी ताश्च पणस्ततस्ते षोडशद्रम्मइहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कइति । अथ धान्य

अ.म ।
७
मानं भविष्ये पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतं । चतुर्भिः कुडवैः प्रस्थः प्रस्थास्चत्वार आढकः । आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितोबुधैः कुम्भोद्रोणद्वयं सूर्पःखारीद्रोणास्तु षोडश । द्रोणद्वयस्यैव सूर्पइति संज्ञा पलंच कुडवः प्रस्थ आढकोद्रोणएवच । धान्यमानेषु वोद्धव्याः क्रमशोऽमीचतुर्गुणाः । द्रोणैस्तु [illegible] खारीविंशत्या कुम्भ उच्यते कुम्भैस्तु दशभिर्वाहुर्धान्यसंख्या प्रकीर्तिता । विंशत्येत्यत्रापि द्रोणैरिति सम्बध्यते । तथाच कुम्भोद्रोणद्वयमिति पक्षा द्विंशति[illegible]ः कुम्भइति पक्षान्तरं द्रोणाढकयोः परिमाणान्तरमुक्तं पराशरेण वेदवेदाङ्गविप्रज्ञैर्धर्मशास्त्रानुपालकैः प्रस्थद्वाविंशतिद्रोणः स्मृतोद्वि प्रस्थ आढक एतेषां च न्यूनाधिकपक्षाणां शक्तिदेशकालाद्यपेक्षया व्यवस्थाज्ञेया । अथ होमद्रव्यमानं सिद्धान्तशेखरे होमद्रव्यप्रमाणानि वक्ष्य-न्तेऽथ यथाक्रमम् । कर्षप्रमाणमाज्यं स्यान्मधुक्षीरञ्च तत्समम् । तण्डुलानां शुक्तिमात्रं पायसं प्रसृतेः समं कर्षमात्राणि भक्ष्याणि लाजामुष्टिमितामताः । अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्द्धमात्रकं । मूलानान्तु त्रिभागःस्यात्कन्दानामष्टमोंशकः इक्षुः पर्वप्रमाणः स्यादङ्गुलद्वितयं लता । प्रादेशमात्रसमिधोव्री-हीणामञ्जलीसमाः तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः । पत्रपुष्पफलादीनां प्रमाणाहुतिरिष्यते । चन्द्रश्रीखण्डकस्तूरीकुङ्कुमागुरुकर्दमाः । हरि-मन्थसमाः प्रोक्ताः गुग्गुलुर्वदरोपमः । हरिमन्थश्चणकः । आहुतीनामिदं मानं कथितं वेदवेदिभिः स्यात्त्रिमुद्रामृगीमुद्राहोमे सर्वफलप्रदेति । मानान्तरं शारदातिलकटीकायां पदार्थदर्शे । कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतं उक्तानि पञ्चगव्यानि शुक्तिमात्राणि साधुभिः तत्समे मधुदुग्धेऽन्न ग्रासमात्रमुदा हृते । दधिप्रसृतिमात्रं स्यात् लाजास्युर्मुष्टिसम्मिता पृथुकास्तत्प्रमाणास्युः सक्तवोपि तथाविधाः । पलार्द्धं गुडमानञ्च शर्करापि तथाविधा । ग्रासार्द्ध मात्रमन्नानामिक्षुः पर्वप्रमाणकः एकं स्यात्पत्रपुष्पञ्च तथाधूपादि कल्पयेत् । मातुलिङ्गं चतुःखण्डं पनसं दशधाकृतं । अष्टधानारिकेलञ्च चतुर्द्धाकदली फलं । त्रिधाकृतं फलं वैल्वं कपित्थं खण्डितंद्विधा । व्रीहयोमुष्टिमानाःस्युः मुद्गामाषायवास्तथा । तण्डुलास्यस्तदर्धांशाः कोद्रवामुष्टिसम्मिताः । लवणं शुक्ति ७
मात्रं स्यान्मरीचान्येकविंशतिः घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा शुक्तिमात्राऽऽहुतिर्दध्नः प्रसृतिः पायसस्य तु । खण्डत्रयं तु मूलानां फलानां स्वस्व-

मानतः ग्रासमात्रन्तु होतव्या इतरेषाञ्च तण्डुलाः अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः। तदभावे तु गोधूमा नतु खण्डिततण्डुलाः एषां केषाञ्चिदन्येषां द्रव्याणामप्यसम्भवे। सर्वचाज्यमुपादेयं भरद्वाजमुनेर्मतात्। सर्वप्रमाणमाकृत्या पञ्चाङ्गुलिग्रहीतयेति सर्वाश्चसूक्ष्माणि पञ्चपञ्चैव इक्षूणां पर्वकमानं लतानामङ्गुलद्वयं। चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमाम्। कलायसम्मितानेतान्। गुग्गुलुन्बदरास्थिवत्। द्रव्यं स्रुवेण होतव्यं पाणिनाक-ठिनं हविः। स्रुवपूर्णाः द्रवाः प्रोक्ताः कठिनाग्रासमात्रकाः। व्रीहयोयवगोधूमप्रियङ्गुतिलशालयः स्वरूपेणैव होतव्या इतरेषां च तण्डुलाः। अथर्त्त्वि ग्वर्णनं हेमाद्रौ पाद्मे। वालाग्निहोत्रिणं विप्रं सुरूपं च गुणान्वितं। सपत्नीकञ्च संपूज्य भूषयित्वाच भूषणैः पुरोहितं मुख्यतमं ज्ञात्वान्यांश्च तथार्त्विजः चतुर्विंशद्गुणोपेतान् सपत्नीकान्निमन्त्रितान्। अहताम्बरसंकाशान् स्रग्विणः शुचिभूषितान्। अङ्गुलीयकानि च तथा कर्णवेष्टान् प्रदापयेत्। तत्रैव लैङ्गे। वस्त्रयुग्मं यथोष्णीषं कुण्डले कण्ठभूषणं। अङ्गुलीभूषणञ्चैव मणिबन्धस्य भूषणं एतानि चैव सर्वाणि प्रारम्भे धर्मकर्मणां पुरोहितायदत्वाथ ऋत्विग्भ्यः सम्प्रदापयेत्। पूर्वोक्तभूषणं सर्वंसोष्णीषं वस्त्रसंयुतं दद्यादेतत्प्रयोक्तृभ्यो आच्छादन पटन्तथा। ऋत्त्विजानां मधुपर्कमाह तत्रैव विश्वामित्रः सम्पूज्य मधु पर्केण ऋत्विजः कर्मकारयेत्। अपूज्यकारयेत्कर्म किल्विषेणैव युज्यते। ऋत्विजां संख्यामाह तत्रैवमात्स्ये हेमालङ्कारिणः कार्याः पञ्चविंशति ऋत्विजः दक्षयेत्सर्वं सर्वानाचार्यं द्विगुणं भवेदिति। दक्षिणयातोषयेदित्यर्थः। अथ सर्वतोभद्रमण्डलं हेमाद्रौ स्कान्दे। प्रागुदीच्यां गतारेखा कुर्यादेकोन विंशतिः खण्डेन्दुस्त्रिपदः कोणाः शृङ्खलापञ्चभिः पदैः। एकादशपदावल्ली भद्रन्तु नवभिः पदैः। चतुर्विंशत्पदावापी परिधिर्विंशतिः पदैर्मध्ये षोडश-भिः कोष्ठैः पद्ममष्टदलंस्मृतम्। श्वेतेन्दुः शृङ्खलाकृष्णा वल्लीनीलेन पूरयेत्। भद्राऽरुणासितावापी परिधिः पीतवर्णकः वाह्यन्तरदलश्वेता कर्णिका पीत वर्णिका। परिध्यावेष्टितं पद्मं वाह्ये सत्वरजस्तमः तन्मध्येस्थापयेद्देवान् ब्रह्माद्यांश्च सुरासुरान्। इति सर्वतोभद्रं। अथ लिङ्गतोभद्रं आग्नेये। चतुर्वि शतिरावेख्या रेखाः प्राग्दक्षिणायताः कोणेषु शृङ्खलापञ्च पदावल्यस्तु पार्श्वतः पदैर्नवभिरालिख्याश्चतुर्भिर्लघुशृङ्खलाः लघवल्यः पदैःषड्भिस्ततोऽष्टादशभिः

॥ श ॥ पदैः कृत्वा लिङ्गानि वाथः खुस्त्रयोदशभिरन्तराः। ततोवीथीद्वयेनैव पीठं कुर्याद्विचक्षणः। तस्य पदा पञ्चपदा द्वाराण्यपि तथैवच। एकाशीति पदं
८ मध्ये पद्मं सलिकमुच्यते। कोणेषु शृङ्खलाः कार्याः पदैस्त्रिभिरतःपरं। पदैश्चतुर्भिर्दिक्षुस्युर्वप्राण्येषां समन्ततः। एकादशपदावल्लीमध्ये ष्टदलमालिखेत्।
पद्मं नवपदं श्वेवं लिङ्गतोभद्रमुच्यते। शृङ्खलाः कृष्णवर्णेन वल्लीनीलेन पूरयेत्। रक्तेन शृङ्खलालध्वीं वल्लीं पीतेन पूरयेत्। लिङ्गानि कृष्णवर्णानि श्वेते
नाप्यथवापिकाः पीठं सपादं श्वेतेन पीतेन द्वारपूरणं। मध्ये स्युः शृङ्खलारक्ताः वल्लीं नीलेन पूरयेत्। भद्राणि पीतपर्वाणि पीतापद्मस्य कर्णिका। द्वारा
नि श्वेतवर्णानि यद्वा चित्राणि कल्पयेत्। तिस्रोरेखावहिःकार्या सितरक्तासिताः क्रमादिति। अथ चतुर्लिङ्गोद्भवं लेख्ये। रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिङ्ग
समुद्भवे। कोणेन्दुस्त्रिपदःश्वेतस्त्रिपदैः कृष्णशृङ्खला। वल्लीसप्तपदानीला भद्रं रक्तं चतुष्पदं। भद्रपार्श्वेमहाभद्रं कृष्णमष्टादशैः पदैः। शिवस्य पार्श्वतोवापीं
कुर्यात्पञ्च पदां सितां। पदमेकं तथापीतं भद्रवाप्योस्तु मध्यतः। शिरसि शृङ्खलायाश्च कुर्यात्पीतं पदत्रयं। लिङ्गानां स्कन्धतः कोष्ठा विंशतिका रक्तवर्णा
काः। परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृतः। पदैस्तु नवभिः पश्चाद्रक्तं पद्मं सकर्णिकं। अथ द्वादशलिङ्गोद्भवं तत्रैव प्रागुदीच्यायतारेखाः षड्
विंशद्विप्रकल्पयेत्। पदानि द्वादशशतं पञ्चविंशतिरेव च। खण्डेन्दुस्त्रिपदःकोणे शृङ्खलाषट्पदैः स्मृता। त्रयोदशपदा वल्ली भद्रन्तु नवभिः पदैः। त्रयोदश
पदावापी लिङ्गमष्टादशैः स्मृतं। लिङ्गत्रयस्य पंक्तौ तु शुभाःकोष्ठाश्चतुर्दश। तेषामुपरिपंक्तौ तु कोष्ठाः सप्तदशैव तु। पूजापंक्तिस्तु विज्ञेया परितः परिक
ल्पिता। पूजापंक्त्यन्तरापंक्तौ कोष्ठाद्व्यशीति संख्यया। परिधिः सच विज्ञेयो मण्डलयोरन्तराद्वयोः। परिध्यन्तरकोष्ठेषु सर्वतोभद्रमालिखेत्। विशेष
श्चात्रविज्ञेयः शृङ्खलाषट्पदा भवेत्। त्रयोदशपदावल्ली भद्रन्तु नवभिः पदैः। पञ्चविंशत्पदावापी परिधिः षोडशात्मकः। मध्ये नवपदं पद्मं कर्णिकाके
सराञ्चितं। सत्वरजस्तमोवर्णाः परितोमण्डलस्य तु। त्रयः परिधयः कार्यास्तत्र द्वाराणि कारयेत्। सितेन्दुः शृङ्खलाकृष्णावल्लीनीला प्रकीर्त्तिता। भद्रं ८
वेदावल्लश्वेवं वापीस्यात्श्वेतवर्णिका। लिङ्गानि कृष्णवर्णानि पार्श्वतोद्वादशैव तु। परिधिः पीतवर्णः स्यात्कमलं पञ्चवर्णकं। इति लिङ्गतोभद्रमण्डलानि।

अथ मण्डलदेवताः तत्र मध्ये ब्रह्माणं ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप् । ब्रह्मस्थापने पूजने विनियोगः । एवमग्रेऽपि ब्रह्मजज्ञानं प्रथमजस्यक् तत
उदीचीमारभ्य वायवीपर्यन्तं सोमादयो वायव्यन्ता अष्टौ लोकपाला स्थापनीयाः । तत्र आप्यायस्व गौतमः सोमो गायत्री ओं आप्यायस्व समेतु अभित्वाजी
गतैः शुनःशेप ईशानो जगती अभित्वा देवसवितः इन्द्रयोमधुच्छन्दा इन्द्रो गायत्री ओं इन्द्रं वो विश्वतः अग्निं काण्वो मेधातिथिरग्निर्गायत्री अग्निंदूतं ।
यमाय सोमं इमोऽनुष्टुप् यमाय सोमं सुनोत यमो घोरः काण्वो निर्ऋतिर्गायत्री मोषुणः परापरा तत्त्वायामि शुनःशेपो वरुणस्त्रिष्टुप् तत्त्वायामि वायो शतं गौतमो
वायुरनुष्टुप् वायो शतं वायुसोममध्ये अष्टौ वसून् ज्मया अत्र मैत्रावरुणो वसिष्ठो वसवः त्रिष्टुप् ज्मया अत्र सोमेशानयोर्मध्ये एकादशरुद्रान् । आ रु
द्रासः श्यावाश्व एकादशरुद्रा जगती आ रुद्रासः ईशानेन्द्रमध्ये द्वादशादित्यान् त्यान्नुयामं देमत्स्यो द्वादशादित्या गायत्री त्यान्नु क्षत्रियान् इन्द्राग्निमध्ये
अश्विनौ राहूगणो गौतमोऽश्विनावुष्णिक् अश्विनावर्त्तिः अग्नियममध्ये विश्वेदेवान् पैतृकान् ओमासो मधुच्छन्दा विश्वेदेवा गायत्री ओमासश्चर्षणी यमनिर्ऋति
मध्ये सप्तयक्षान् अभित्यं देवं वसवत्साप्रजतिः अभित्यं देवं अभित्यं देवं सवितरमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभिप्रियं मतिं कविं ऊर्ध्वा यस्याम
तिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपात्स्वः निर्ऋतिवरुणमध्ये भूतनागान् आयङ्गौः सार्पराज्ञी सर्पा गायत्री आयङ्गौः वरुणवायुमध्ये
गन्धर्वाप्सरसः अप्सरसामेतत्प्रव्यथ्य शृङ्गी गन्धर्वाप्सरसोऽनुष्टुप् अप्सरसां गन्धर्वाणां ब्रह्मसोममध्ये स्कन्दनन्दीश्वरशूलमहाकालान् कुमारं कुमारस्कन्दस्त्रि
ष्टुप् । कुमारंमाता वृषभं वृषभो वैराजो वृषभोऽनुष्टुप् वृषभस्य समानानां । ब्रह्मेशानमध्ये दक्षादीन् सप्त अदितिर्द्यौकौ बृहस्पतिर्दक्षोऽनुष्टुप् अदितिर्द्यौ
रदितिः ब्रह्मेन्द्रमध्ये दुर्गां विष्णुं च तामग्निवर्णां सौभरिर्दुर्गा त्रिष्टुप् तामग्निवर्णां तपसा इदं विष्णुः काण्वो मेधातिथिर्विष्णुर्गायत्री इदंविष्णुः ब्रह्माग्निमध्ये
स्वधां । उदीरतां शंखः स्वधा त्रिष्टुप् उदीरतां सूनृताः ब्रह्मयममध्ये मृत्युरोगान् परंमृत्योः संकसुको मृत्युरोगा त्रिष्टुप् परंमृत्यो अनुपरेहि । ब्रह्मनिर्ऋतिमध्ये
गणपतिं गणानां त्वा गृत्समदो गणपतिर्जगती गणानां त्वा गणपतिं ब्रह्मवरुणमध्ये आपो शन्नोऽम्बरीषः सिन्धुद्वीप आपो गायत्री ओं शन्नो देवी ब्रह्मवायुमध्ये

। ब्र। मरुतः मरुतोयस्वराट्छन्दोगौतमोमरुतोगायत्री मरुतो यस्यब्राह्मणः पादमूलेकर्णिकाधः पृथ्वी। स्योनामेधातिथिर्भूमिर्गायत्री स्योनाः ।।। तत्रैवगङ्गा
८ दिनद्यः इमंमेसिन्धुक्षित्प्रियमेधागङ्गायमुनासरस्वत्योजगती इमंमे गङ्गे यमुने तत्रैवसप्तसागरान् धाम्नोधाम्नोराजं स्ततोवरुणोमुञ्च। ।३।३ प्रधानादिति
कृष्णेति अपामग्ने ततोवरुणोनेमुञ्च मयीवायोमोषधीर्हि सीरतोविश्वव्यचा अभूत्वेतो वरुणनेमुञ्च तदुपरिमेषे नम इति नाम्नामेकं। ततोमण्डलाद्बहिः
[illegible]मेणायुधानिगदांत्रिशूलं वज्रं शक्तिं दण्डं खड्गंपाशं अङ्कुशं। तद्बाह्ये पुनरपितेनैवक्रमेण। गौतमं भरद्वाजं विश्वामित्रं कश्यपं जमदग्निं
वसिष्ठं अत्रिं अरुन्धतीं तद्बाह्ये पूर्वादिएन्द्रीं कौमारीं ब्राह्मीं वाराहीं चामुण्डां वैष्णवीं माहेश्वरीं विनायकीं इत्यष्टौशक्तयः प्रतिष्ठाप्य प्रत्येकं सम्यक् पूज
येत्। इति मण्डलदेवता अथ मुद्रालक्षणानिहेमाद्रौ। संमुखीकृत्य हस्तौद्वौकिञ्चित्संकुचिताङ्गुली। मुकुलीतुसमाख्याताऽपंकजंप्रस्ततैवसा। पूर्वोक्तामुकुलीया
च प्रदेशिनिः स्वताङ्गुलिः व्याकोशमुद्रामुकुलापद्ममुद्रां प्रदर्शयेत्। अङ्गुष्ठवञ्चितौतौ तु स्वकीयाङ्गुलिवेष्ठितौ। उच्चौ चाभिमुखौ हस्तौयोजयित्वातुनिष्ठुरः
तर्जन्यौ कुञ्चितेकृत्वा तथैवचकनीयसी। अधोमुखोद्दृष्टनखास्थितामध्ये करस्यतु। चतस्रस्थोत्थिताः पृष्ठेअङ्गुष्ठावेकतःकुरु। नालंव्यवस्थितौद्वौतुव्योममुद्रा
प्रकीर्तिता। तथान्तरेसर्वदेवतापूजने साधारणेनषण्मुद्राउच्यन्ते। देवतातेन सन्तुष्टासर्वदासन्मुखीभवेत्। अङ्गुष्ठौनिक्षिपेत् सेयंमुद्रात्वावाहनीमता
[illegible]निक्षिपेत्सेयंमुद्रात्वावाहनीस्मृता। अधोमुखोत्वियंचेत्स्यात्स्थापनीमुद्रिकामता। उच्छ्रितावुच्छ्रितौकुर्यात्संमुखीकरणी भवेत्। प्रसृतांगुलिकौहस्तौ
मिथः श्लिष्टौतुसंमुखौकुर्यात्स्वहृदयेसेयंमुद्राप्रार्थनसंज्ञिका। इत्येवं सर्वदेवानां पूजने षट् प्रदर्शयेत्। शिवपूजनेलिङ्गमुद्रा उच्छ्रितं दक्षिणांगुष्ठेवामांगुष्ठेन
बध्नीयेत्। वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिस्सवेष्टयेत्। लिङ्गमुद्रेयमाख्याताशिवसान्निध्यकारिणी श्रीकामःशीर्षिकुर्वीतराज्यकामस्तुनेत्रयोः। मुखेत्वन्ना-
दिकामस्तुग्रीवायां रोगशान्तिकृत्। हृदयेसर्वकामीचज्ञानार्थी नाभिमण्डले। राज्यकामस्तुगुह्येवैराष्ट्रकामस्तुपादयोः। रामपूजने समदशमुद्रा तथा च ८
रामार्चनचन्द्रिकायामगस्त्यः। आवाहनीस्थापनो च सन्निधीकरणी तथा। सुसन्निरोधनीमुद्रासंमुखीकरणी तथा सकलीकरणीचैव महामुद्रातथैव च।
3623

। म ।
सुगन्धः पुष्पं धूपो दीपमथैनचर्पणं। माल्यानुलेपनेचैव नमस्कारविसर्जने इतिषोडश अर्घ्यपाद्याचमान्येषमधुपर्काचमान्यपि। गन्धादयोनिवेद्यान्ताउप
॰ चारादयःक्रमादिति दश। गन्धपुष्पौ धूपदीपौ नैवेद्यं पञ्चमं स्मृतमिति पञ्चशारदातिलके षोडशोक्ताः तथा आसनस्नानवस्त्रभूषणानि परित्यज्य द्वादश
महाकपिल पञ्चरात्रे। गन्धंतैलमथोदद्याद्देवस्यप्रतिमान्ततः। दूर्वाच विष्णुक्रान्ता च श्यामाकं पद्ममेव च। पाद्याङ्गानि च चत्वारि कथितानि मया
यतः। कर्पूरमगुरुं पुष्पद्रव्याण्याचमनीयके। सिद्धार्थमक्षतञ्चैव दूर्वा च तिलमेव च। पञ्चगन्धं फलं पुष्पमष्टाङ्गंत्वर्घ्यमुच्यते। स्नाने वस्त्रे तथा भक्ष्ये
दद्यादाचमनीयकं। उद्वर्तनमपि तत्रैव रजनीसहदेवी च शिरीषं लक्ष्मणापि च। सहाभद्राकुशाग्राणि उद्वर्तनमिहोच्यते। मन्त्रतन्त्रप्रकाशे अच्युता
गन्धपुष्पाणि स्नानपात्रे यथाक्रमम्। तत्रैव द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः। अगस्त्य संहितायां। तथाचमनपात्रेपि दद्याज्जातीफलं मुखे
लवङ्गमपि कङ्कोलं शस्तमाचमनीयके। उक्तद्रव्यालाभे तन्त्रान्तरे। तण्डुलान् अप्रक्षिपेत्तेषु द्रव्याभावे तु तत्स्मरन्। प्रयोगपारिजाते व्यासः। प्रतिमापट्टय
न्त्राणां नित्यं स्नानं न कारयेत्। कारयेत्पर्वदिवसे यदावामलधारणं। स्नानमालायां। नाक्षतैरर्चयेद्विष्णुं न तुलस्यागणाधिपं। न दूर्वयायजेद्देवीं
बिल्वपत्रैर्दिवाकरं। उन्मत्तमर्कं पुष्पञ्च विष्णोर्वर्ज्यं सदाबुधैः। अक्षतास्तु यवाः प्रोक्ता इतिपदार्थादर्शे उक्तत्वाद्यवानामेवायं प्रतिषेधो न तण्डुलादीनां।
तन्त्रान्तरे महाभिषेकं सर्वत्रशङ्खेनैव प्रकल्पयेत्। सर्वत्रैव प्रशस्तोब्जः शिवसूर्यार्चनं विनेति विस्तरस्तु तातचरणकृते आचारमयूखे द्रष्टव्यः। अथ व्रतोद्या
पनानुक्तौ विधिः पृथ्वीचन्द्रोदये नन्दिपुराणे। कुर्यादुद्यापनं तस्य समाप्तौयदुदीरितम्। उद्यापनं विनायत्तु तद्व्रतं निःफलं भवेत्। यत्रचोद्यापनन्नोक्तं व्रता
नुगुणमाचरेत्। वित्तानुसारतोदद्यादनुक्तोद्यापने व्रते। गांचैव काञ्चनं दद्याद्व्रतस्यःपरिपूर्त्तये। समाप्तावुद्यापनमनुक्तोद्यापनविषयं। उक्तोद्यापने तु आदौ
मध्येवाप्यन्ते व्रतस्योद्यापनं भवेदिति वचनात्त्रितयमप्यापि। अथ व्रतभङ्गे सम्पूर्णताविधिर्हेमाद्रौ भविष्ये। युधिष्ठिर उवाच। सम्पूर्णतामनुष्ठानं व्रता
नान्तु जनार्दन। कृपाप्रसादं गुह्यार्थमेतन्मेवक्तुमर्हसि। श्रीकृष्ण उवाच साधु साधुमहावाहो कुरुराजयुधिष्ठिर। रहस्यानां रहस्यन्ते कथयामि व्रतन्तव १०

शङ्खचक्रगदापद्मधेनुकौस्तुभमालिकाः । श्रीवत्सवनमाले च योनिमुद्रां प्रदर्शयेत् । एताभिः सप्तदशभिर्मुद्राभिस्तु विचक्षणः । योराममर्चयेन्नित्यं मोहयेत् ससुरेश्वरं । द्रावयेदपिविप्रेन्द्रततः प्रार्थितमाप्नुयात् । मूलाधाराद्द्वादशांतमानीतः कुसुमाञ्जलिः त्रिस्थानगततेजोभिर्विनीतः प्रतिमादिषु । आवाहनीयं मुद्रास्याद्देवार्चनविधौ मुने । एषैवाधोमुखीमुद्रा स्थापनेशस्यते पुनः । उन्नतांगुष्ठयोगेनमुष्टीकृतकरद्वयं । सन्निधीकरणीमुद्रा देवार्चनविधौ मुने । अंगुष्ठगर्भिणी सैव मुद्रा स्यात्सन्निरोधिनी । उत्तानमुष्टियुगला संमुखीकरणीमता । अङ्गैरेवांगविन्यासः सकलीकरणी भवेत् । अन्योन्यांगुष्ठ संलग्ना विस्तारितकरद्वयी । महामुद्रेयमाख्यातान्यूनाधिक समापनी । कनिष्ठानामिकामध्यांतस्थांगुष्ठातदग्रतः । गोपितांगुष्ठमूलेन संनद्धामुकुलीकृता । करद्वयेन मुद्रा स्यात्सर्वार्थ्येयं सुरार्चने । अन्योन्याभिमुखस्पर्शंव्यत्ययंनतुवेष्टयेत् । अंगुलीभिः प्रयत्नेनमण्डलीकरणं मुने । चक्रमुद्रेयमाख्याता गदामुद्राततःपरं । अन्योन्याभिमुखाश्लिष्टाततःकौस्तुभ संज्ञिका । कनिष्ठान्योन्य संलग्नेसंमुखेद्वि परस्परं । वामस्यतर्जनी मध्ये मध्यानामिकयोरपि । वामानामिकसंस्पृष्टा तर्जनीमध्यशोभिता । पर्वाग्रेणानतांगुष्ठद्वयीकौस्तुभलक्षणा । कनिष्ठान्योन्य संलग्ना विपरीतं तुयोजिता । अधस्तात्स्थापितांगुष्ठामुद्रागारुडसंज्ञिका । तर्जन्यङ्गुष्ठसंलग्नामध्यमानामिकाद्वयी । कनिष्ठानामिकामध्यतर्जन्यग्रकरद्वयी । मुनेश्रीवत्समुद्रेयंवनमाला भवेत्ततः । कनिष्ठानामिका मध्यामुष्टिरुन्नततर्जनी । परिभ्रान्ताशिरस्युच्चैस्तर्जनीभ्यांदिवौकसः । योनिमुद्रासमाख्याताविद्योतित्करद्वया । तर्जन्याकृष्टमध्यान्तेस्थितानामिकयुग्मिका । मध्यस्थस्थितांगुष्ठायेयंशस्तामुनेर्चने । इति मुद्रालक्षणं । अथोपचाराः पदार्थादर्शज्ञानमालायां । अष्टत्रिंशत्षोडशद्वादशपञ्चोपचारकाः । तान्विभज्यप्रवक्ष्यामि केतैतैर्यजतैश्वरं । अर्घ्यंच पाद्याचमनेमधुपर्कमुपस्पृशं । स्नानंनीराजनं वस्त्रमाचमञ्चोपवीतकं । पुनराचामभूषेचदर्पणालोकनं ततः । गन्धपुष्पे धूपदीपौ नैवेद्यञ्चततः क्रमात् । पानीयंतोयमाचामंहस्तवासस्ततःपरं । हस्तवासःकरोद्वर्त्तनं । ताम्बूलमनुलेपञ्चपुष्पदानं पुनःपुनः । गीतं वाद्यं तथा नृत्यं स्तुतिंचैवप्रदक्षिणं । पुष्पाञ्जलि नमस्काराष्टत्रिंशत्समीरिता । इत्यष्टत्रिंशत् आसनंस्वागतंचार्घ्यंपाद्यमाचमनीयकं मधुपर्काचनास्नानवसनाभरणानि च ।

वसिष्ठो गर्गगौतमधौम्याश्चिवशिष्ठांगिरसस्तथा। वचनान्नारदादीनां पूर्णं भवतु मे व्रतम्। एवम्बिधविधानेन गृहीत्वा ब्राह्मणो व्रजेत्। दाताततश्चैव
व्र । येस्मिन् ब्राह्मणस्य गृहे स्वयं। ततः पञ्चमहायज्ञानिर्वपेद्ग्नोअन्नादिकं। एवं यः कुरुते भक्त्या व्रतमेतन्नरोत्तम। तस्य सम्पूर्णतां याति तद्व्रतं यत्पुराकृतम्।
११ सर्वं संपूर्णतां याति प्रसन्ने व्रतदैवते। भग्नानि यानि मद्मोहवशाद्गृहीत्वा जन्मान्तरेष्वपि नरेण समत्सरेण। सम्पूर्णपूजनपरस्य पुरो भवन्ति सर्वव्रता
नि परिपूर्णफलप्रदानि। अथ सर्वव्रतेषु सामान्यतः पूजाविधिः सहस्रशीर्षेत्यवाहनं। आगच्छागच्छ देवेश तेजोराशे जगत्पते। क्रियमाणां मया पूजां
गृहाण सुरसत्तम। पुरुष एवेत्यासनं। नानारत्नसमायुक्तं कार्तस्वरविभूषितं। आसनं देवदेवेश प्रीत्यर्थं प्रतिगृह्यतां एतावानिति पाद्यं। गङ्गादिसर्व
तीर्थेभ्यो मयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थं प्रतिगृह्यतां। त्रिपादूर्ध्वेत्यर्घ्यं। नमस्ते देवदेवेश नमस्ते धरणीधर। नमस्ते कमलाकान्त अर्घ्यंग्रनः
प्रतिगृह्यतां। तस्माद्विराडित्याचमनीयं। कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतं। आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः। यत्पुरुषेणेति स्नानं।
गङ्गा च यमुना चैव नर्मदा च सरस्वती। तापीपयोष्णी रेवा च ताभ्यः स्नानार्थमागतं। तोयमेतत्सुखस्पर्शं स्नानाय प्रतिगृह्यतां। तं यज्ञमिति वस्त्रं सर्वभूषा
धिके देवलोकलज्जानिवारणे। मयोपपादिते तुभ्यं वाससी प्रतिगृह्यतां। तस्माद्यज्ञात्सर्वहुतः संभृतमिति यज्ञोपवीतं। दामोदर नमस्तेस्तु त्राहि मां भव
सागरात्। ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम। तस्माद्यज्ञात्सर्वहुत इति गन्धं। श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरं। विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रति
गृह्यतां। तस्मादश्वेति पुष्पं। माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां। यत्पुरुषमिति धूपं वनस्प
तिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां। ब्राह्मणोस्येति दीपं। आज्यञ्च वर्तिसंयुक्तं वह्निना योजितं मया। दीपं
गृहाण देवेश त्रैलोक्यतिमिरापहं। चन्द्रमा इति नैवेद्यं। अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं। भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यतां। इदं फलं मया
देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि। नाभ्या आसीदिति ताम्बूलं। पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं। कर्पूरादिसमायुक्तं ११

सम्पूर्णताङ्गता यत्र तत्रसम्यक् फलप्रदं। यद्वोर्णं नरनारीभिर्भवेत्सम्पूर्णकारकं। अवश्यं तच्च कर्त्तव्यं सम्पूर्णं फलकाङ्क्षिभिः। किञ्चिद्भग्नं प्रमादेन यद्व्रतं व्रतिनां स्थितं। तत्सम्पूर्णं भवेत्सर्वं व्रतेनानेन पाण्डव। उपद्रवैर्वैङ्कविधैर्महामोहाच्च पाण्डव। यद्भग्नं किञ्चिद्देवस्याद्व्रतं विघ्नविनाशकं। तत्सम्पूर्णं भवेत्पार्थ सत्यं सत्यं [illegible]। काञ्चनं रूप्यकं रूपं शिल्पिना तु घटापयेत्। भग्नव्रतस्ययो देवस्तस्यरूपं विनिर्मितं। व्रतं स्त्रीपुंसयोर्वाथ प्रारब्धं यद्व्रतं किल। नच निष्पादितं किञ्चिद्दैवात्कार्यं तथास्थितं। द्विभुजं पङ्कजारूढं सौम्यं प्रहसिताननं। निष्पादितं शिल्पिनाच तस्मिन्नेव दिने पुनः। तन्माने तु पुनः प्राप्ते ग्राह्यके विधिनाद्युते। स्नापयेत्पयसादध्ना घृतक्षौद्ररसाम्बुभिः। गन्धचन्दन पुष्पैश्च पूजां कुर्यात्समाहितः। तोयपूर्णस्य कुम्भस्यमुखे विन्यस्य देवतां। धूपदीपाद्यनैवेद्यैरन्नैर्बहुप्रकारकैः। अर्घं प्रदद्यात्तन्नाम्नामन्त्रेणानेन पाण्डव। उपोषणस्यदानस्य प्रायश्चित्तं कृतं जले। शरणञ्च प्रपन्नाः स्मः कुरुष्वाद्यदयां पुनः प्रसन्नोभवभीतस्य भिन्नचर्यव्रतस्य च। कुरुप्रसादं सम्पूर्णं व्रतं संजायतां मम। यच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि। तत्सर्वं त्वत्प्रसादेन सम्पूर्णं जायतां मम। पूर्वदक्षिण पश्चात्तु उत्तरेच बलिं हरेत्। उपर्यधस्तात्सर्वेभ्यो दिक्पालेभ्यो नमोनमः। इदमर्घ्यमिदं पाद्यन्तेभ्यस्तेभ्यो नमोनमः। पादौ च जानुनी चैव कटिं शीर्षकवचसी। कुक्षिं तु हृदयं पृष्ठं वाक्चक्षुश्च शिरोरुहान्। पूजयित्वा स्वदेवस्य ततः पश्चात्क्षमापयेत्। पूजितस्त्वं यथाशक्त्यानमस्तेस्तु सुरोत्तम। ऐहिकामुष्मिकीं देवकार्यसिद्धिं दिशस्व मे। एवं क्षमापयित्वा तु देवं रूपविधानतः। तन्मूर्तिञ्च द्विजातिभ्यो विधिवत्प्रतिदापयेत्। स्थित्वा पूर्वामुखो विप्रो गृह्णीयाद्दर्भपाणिना। विप्रहस्ते प्रयच्छेच्च दाताचैवोत्तरामुखः। मन्त्रेणानेन कौन्तेय सोपवासः प्रयत्नतः। इदं व्रतं मयाखण्डं कृतमासीत्पुराद्विज। तत्सर्वं पूर्णमेवास्तु तवमूर्तिप्रदानतः। ब्राह्मणोऽपि प्रयच्छेत मन्त्रेणानेनतद्व्रतम्। वाक्यं पूर्णमतः पूजाव्रतेनानेनतेपुरा। सम्पूर्णस्यात्प्रसादेन तव पूर्णमनोरथाः। ब्राह्मणायत्प्रभाषन्ते तन्मन्यन्तेदिवौकसः। सर्वदेवमयाविप्रानतद्वचन मन्यथा। जलधिः क्षारतां नीतः पावकः सर्वभक्षतां। सहस्रनेत्रः शक्रोपि कृतोविप्रैर्महात्मभिः। ब्राह्मणानां तु वचनात् ब्रह्महत्याविनश्यति। अश्वमेधफलं साग्रं लभन्तेनात्रसंशयः। व्यासवाल्मीकिवचनात्पराशर

ताम्बूलं प्रतिगृह्यतां । समाप्तावग्निर्दक्षिणा । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यतामिति । नीराजनं यज्ञेनेति पुष्पाञ्जलिः । नमस्ते पुण्डरीकाक्ष नमस्तेऽमरप्रिय । नमस्ते कमलाकान्त वासुदेव नमोऽस्तु ते । यानि कानि च पापानि ब्रह्महत्यासमानि च । तानि तानि विनश्यन्तु प्रदक्षिण पदे पदे । इति प्रदक्षिणा । नमः सर्वहितार्थाय जगदाधारहेतवे । साष्टाङ्गोऽयं प्रणामस्तु प्रयत्नेन मया कृतः । इति नमस्कारः इति सामान्यपूजाविधिः ॥ इति श्रीमीमांसकनीलकण्ठ भट्टात्मजशङ्करकृतौ व्रतार्के परिभाषा समाप्तिमगात् ॥ अथादौ प्रतिपद्व्रतानि । मात्स्ये वर्जयित्वा मधौ यस्तु दधिक्षीरघृतैक्षवं । दद्याद्वस्त्राणि सूक्ष्माणि रसपात्रैर्युतानि च । रसपात्रैर्दध्यादिपात्रैः । संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति हेमाद्रौ पाद्मे वर्जयेच्चैत्रमासे तु यस्तु गन्धानुलेपनं । शुक्तिं गन्धभृतां दद्याद्विप्राय श्वेतवाससी । भक्त्या तु दक्षिणां दद्यात्सर्वकामार्थसिद्धये । गन्धदान वस्त्रदान मन्त्रौ । नन्दनावासमन्दार सखे वृन्दारकार्चित । चन्दनं त्वत्प्रसादान्मे साद्रानन्दप्रदो भव । शरण्यं सर्वलोकानां लज्जाया रक्षणं परं । सुवेषधारि त्वं यस्माद्वासः शान्तिं प्रयच्छ मे इति मन्त्राभ्यां गन्धवाससी दद्यात् । चैत्रे शुक्लप्रतिपदि संवत्सरारम्भविधिर्ब्राह्मे । सा च प्रतिपत्सूर्योदयव्यापिनी ग्राह्या ॥ श्रीभगवानुवाच ॥ चैत्रमासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि । शुक्लपक्षे समग्रन्तु तदा सूर्योदये सतीति ब्राह्मात् । प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवाविति भविष्योत्तराच्च । दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वैव । वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । पूर्वविद्धैव कर्त्तव्या प्रतिपत्सर्वदा बुधैरिति वृद्धवसिष्ठवचनादिति बहवः युक्तं तु दिनद्वये । उदयसम्बन्धाभावे संवत्सरारम्भप्रयुक्तकार्यलोपप्रसक्ताविदं वचनं पूर्वयुताग्राह्यताविधायकं दिनद्वये तत्सम्बन्धे तु संपूर्णत्वादेव पूर्वप्राप्ते कदा कार्यमित्याकांक्षाविरहात्पूर्वयुतत्वविरहाच्च नैतद्वचनात्पूर्वेति । ब्राह्मे प्रवर्त्तयामास कालस्य गणनामपि । ग्रहानब्दानृतून्मासान् पक्षान् सम्वत्सराधिपान् । ददौ स भगवान् ब्रह्मा सर्वदेवसमागमे ब्राह्म्यां सभायां ब्रह्मा समनिर्देश्य तनुन्ततः यथोक्तैस्तैर्नमस्यं तस्तु वन्तस्थाप्युपासते । ततस्ते व्रतशुश्रूषा गत्वा चैव स्वमालयं । स्वानि स्वान्यथ कर्माणि ते नियु

॥ अ ॥ कालु पतिरे । ब्राह्मी वमाकामरूपाविशेषेण तदानघ । धारयत्यमलं रूपमनिर्देश्यं मनोहरा । ततः प्रभृति योधर्मःपूर्वैः पूर्वतरैः कृतः । अद्यापि गूढः
१२ सुतरां कर्तव्यो वै प्रयत्नतः । तत्र कार्या महाशान्तिः सर्वकल्मषनाशिनी । सर्वोत्पातप्रशमनी कलिदुःस्वप्ननाशिनी । आयुप्रदा पुष्टिकरी धनसौभाग्य
वर्द्धिनी । मङ्गल्या च पवित्रा च लोकद्वयसुखावहा । तस्यामादौ च संपूज्यो ब्रह्माकमलसम्भवः । पाद्यार्घ्यपुष्पधूपैश्च वस्त्रालङ्कार भोजनैः होमैर्बल्युपहा
रैश्च तथा ब्राह्मण तर्पणैः । ततः क्रमेण देवेभ्यः पूजाकार्या पृथक् पृथक् । कृत्वोङ्कार नमस्कारौ कुशोदकतिलाक्षतैः । पुष्पधूपप्रदीपाद्यैर्भोजनैश्च यथा
क्रमं । मन्त्रं संपूज्यमानैस्तु वहुरूपं परिसृजेत् । मन्त्रमिति जातावेकवचनं । वहुरूपं मन्त्रं नानारूपानुमन्त्रान् परिसृजेत् । परिगृह्णीयादित्यर्थः तेनत्तु
नमोब्रह्मण इत्यादि विष्णवेपरमात्मनेनम इत्येवं मन्त्रवाक्यं वेदोपात्तादेवताशब्दाश्चतुर्थ्यन्ताः प्रणवादयो नमोन्ता मन्त्रत्वेन ग्राह्याः ओं नमो ब्रह्मणे
तुभ्यं कामायच महात्मने । नमस्तेस्त्वनिमेषाय त्रुटयेच नमोस्तुते । नवायच नमस्तुभ्यं नमस्तेस्तु क्षणाय च । नमोनमस्ते काष्टायै कलायै ते नमोनमः । नाडि
काधिपसूर्याय मूहूर्ताय नमोनमः । नमो निशाभ्यः पुण्येभ्यो दिवसेभ्यश्च नित्यशः । पक्षाभ्यां चाथमासेभ्यः ऋतुभ्यः षड्भ्यएवच । अयनाभ्यां च पञ्चभ्यो
वत्सरेभ्यश्च सर्वदा । नमस्कृत्ययुगादिभ्यो ग्रहेभ्यश्च नमोनमः । अष्टाविंशति संख्येभ्यो नक्षत्रेभ्यो नमोनमः । राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एवच ।
प्रतिवर्षाधिपेभ्यश्च विख्यातेभ्यो नमः सदा । नमोस्तु कुलनागेभ्यः सानुयात्रेभ्य एवच । सानुयात्रेभ्यः सानुचरेभ्यः । नमश्चतुर्दशभ्यश्च मनुभ्योऽस्तु नमोनमः
नमः पुरन्दरेभ्यश्च तत्संख्येभ्यो नमोनमः । पञ्चाशते नमोनित्यं दक्षकन्याभ्य एवच । नमो देव्यै सुभद्रायै जयायै चाथ सर्वदा । भृशाश्वाय नमस्तुभ्यं सर्वा
स्त्रजनकायच । नमस्ते बहुपुत्राय पत्नीभिः सहितायच । नमोवृध्यै तथा वृद्ध्यै निद्रायै धनदायच । नलकुवरयक्षाय गुह्यकस्वामिने नमः । नमोस्तु शङ्ख
पद्माभ्यां निधिभ्यामथ नित्यशः । भद्रकाल्यै नमोनित्यं सुरभ्यै च नमोनमः । वेदवेदाङ्ग वेदान्त विद्यासंख्येभ्य एवच । नागयक्षसुपर्णेभ्यो नमोस्तु गरु- १२
डायच । सप्तभ्यश्च समुद्रेभ्यः सागरेभ्यश्च सर्वदा । उत्तरेभ्यः कुरुभ्यश्च नमऐरावताय च । भद्राश्वकेतुमालाभ्यां नमः सर्वत्र सर्वदा । इलावृत्ताय नमो

हरिवर्षायचैवहि। नमः किं पुरुषेभ्यश्च भारताय नमोनमः। नमोभारतभेदेभ्यो नवभ्यश्चाथ सर्वदा। पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमोनमः। का
लाग्निरुद्रशेषाभ्यां हरये क्रोडरूपिणे। सप्तभ्यस्त्वथलोकेभ्यो महाभूतेभ्य एवच। मनसेवुद्धयेचैव नमः प्रकृतये तथा। पुरुषायाभिमानाय नमोऽस्त्वव्यक्त
मूर्त्तये। हिमवत्प्रमुखेभ्यश्च पर्वतेभ्यो नमस्तथा। पौराणीभ्यश्च गङ्गाभ्यः सप्तभ्यश्च नमोनमः। नमोऽस्त्वाद्यमुनिभ्यश्च सप्तभ्यश्चाथ सर्वदा। नमोऽस्तु पुष्क
रादिभ्यस्तीर्थेभ्यश्च पुनः पुनः। निम्नगाभ्यो नमोनित्यं वितस्ताद्याभ्य एवच। चतुर्दशभ्योदीर्घेभ्यो धारिणीभ्यो नमोनमः। नमोधात्रेविधात्रेचछन्दोभ्यश्च
नमोनमः। सुरभ्यैरावणाभ्यांच नमोभूयो नमोनमः। नमस्तथोच्चैःश्रवसे ध्रुवायच नमोनमः। नमोऽस्तु धन्वन्तरये शस्त्रास्त्राभ्यां नमःसदा विनायककुमा
राभ्यां विघ्नेभ्यश्च नमः सदा। शाखायैच विशाखायैनैगमेयायवै नमः। नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृभ्य एवच। ज्वरायरोगपतये भस्मप्रहरणाय च।
ऋषिभ्यो वालखिल्येभ्यः केशवाय नमः सदा। अगस्तये नारदायव्यासादिभ्यो नमोनमः। अप्सरेभ्यः सोमपेभ्यो देवेभ्यश्च नमोनमः। असोमपेभ्यश्च
नमस्तुषितेभ्यो नमः सदा। आदित्येभ्यो नमोनित्यं द्वादशभ्यश्च सर्वशः। एकादशभ्यो रुद्रेभ्यस्तपस्विभ्यो नमोनमः। नमोनासत्यदस्राभ्यामश्विभ्यां नित्य
मेवहि। साध्येभ्यो द्वादशभ्यश्च पौराणेभ्यो नमः सदा। एकोनपञ्चाशद्भ्यो मरुद्भ्यश्च नमोनमः। शिल्पाचार्याय देवाय नमस्ते विश्वकर्मणे। अष्टभ्यो लो
कपालेभ्यः सानुगेभ्यश्च सर्वदा। आयुधेभ्यो वाहनेभ्यो वर्मभ्यश्च नमः सदा। आसनेभ्यो दुन्दुभीभ्यो देवेभ्यश्च नमः सदा। दैत्यराक्षसगन्धर्वपिशाचेभ्यश्च
नित्यशः पितृभ्य सप्तभेदेभ्यः प्रेतेभ्यश्चनमोनमः। सुसूक्ष्मेभ्यश्च देवेभ्यो भावगम्येभ्य एवच। नमस्ते वहुरूपाय विष्णवे परमात्मने। अथकिं वहुनोक्तेन मन्त्रे
णानेनचार्चयेत्। प्राङ्मुखोदङ्मुखान्विप्रान् देवानुद्दिश्य पूर्ववत्। अथवा किमत्रविस्तरेण ब्राह्मणानेव देवतोद्देशेन पूजयेदित्यर्थः पूर्ववत् मन्त्रोक्त
क्रमेण। अर्घैः पुष्पैश्च धूपैश्च वस्त्रैर्माल्यैः सहृष्टकं। संहृष्टकं सरोमाञ्चं हृष्टरोमाणमर्चयेदित्यर्थः। धनधान्यानुविभवैर्दक्षिणाभिश्च सर्वदा। इति।
इतिहास पुराणानां प्रवक्तांश्च द्विजोत्तमान्। कालज्ञान् वेदवेदज्ञान् भृत्यान् सम्वन्धि वान्धवान्। अनेनैव तु मन्त्रेण स्वाहान्तेन पृथक् पृथक्। अपि

ह्यायाग्नये होमः कर्तव्यः सर्वकर्मसु। वेदविच्चक्षुषीदत्वा स्थानेप्राधानिकेसति। यविष्ठाय श्रेष्ठाय वेदवित् वेदोक्त विधिना: मदनरत्नेतु वेदवतइति पठित्वा वे
दोक्तविधिनेति व्याख्यातं। चक्षुषी आज्यभागौ प्राधानिकेस्थाने प्रधानहोमारम्भे। होमारम्भे ततः कुर्यात् मङ्गलालम्भनं नरः। मदनरत्ने शालाशो
भाततः कार्या मङ्गलालम्भनं ततइति पाठः भोजयित्वा द्विजान् सर्वान् सुहृत्सम्बन्धि वान्धवान्। विशेषेण च भोक्तव्यं कार्यस्यापि महोत्सवः। नवसंवत्स
रारम्भः सर्वसिद्धि प्रवर्तकः। इति सम्वत्सरारम्भविधिः। अथात्रैव विष्णुधर्मोत्तरोक्तमारोग्यप्रतिपद्व्रतं। पुष्कर उवाच। सम्वत्सरावसाने तु पञ्चदश्या
मुपोषितः प्रातःप्रतिपदि स्नातः कुर्याद्व्रतमनन्यधीः। पूजयेद्भास्करं देवं वर्णकैः कमलेकृते। वर्णकैः रक्तश्वेतनीलपीतादिभिः शुक्लेन गन्धमाल्येन चन्दनेन
सितेन च। तथा कुन्दुरुधूपेन घृतधूपेन भार्गव। कुन्दुरुः सल्लकीनिर्यासः। अपूपैः सैकतैर्दध्नापरमान्नेन भूरिणा। सैकतैः शर्कराविकारैरोदनेन च
शुक्लेन सता लवणसर्पिषा। सता उत्तमेन क्षीरेणच फलैः शुक्लैर्वस्त्रैर्ब्राह्मणतर्पणैः पूजयित्वा जगद्धामदिनभागे चतुर्थके। आहारं प्रथमं कुर्यात्सघृतं मनु
जोत्तमः। सर्वञ्च मनुजश्रेष्ठो घृतहीनं विवर्जयेत्। भुक्ताच सकृदेवान्नमाहारं च समाचरेत्। पानीयपापानं कुर्वीत ब्राह्मणानुमते पुनः प्रथममाहारं
प्रथमग्रासं। सर्वं प्रथमं प्रथमं चाहारं। एकमेव ग्रासं भक्षयित्वाऽवशिष्टमन्नं त्यजेत्। ब्राह्मणानुमत्यापुनराहारमवशिष्टान्नभोजनं पुनः पानीयपानञ्च
कुर्यादित्यर्थः। ब्राह्मणानुमत्याभुञ्जानोपि घृतहीनं न भुञ्जीत। घृतहीनं विवर्जयेदिति निषेधात्। संवत्सरमिदं कृत्वा ततः साक्षात्त्रयोदश। पूजनं
देवदेवस्य तस्मिन्नहनिभार्गव। संवत्सरं संवत्सरशुक्लप्रतिपत्सु। त्रयोदशमिति लिङ्गदर्शनात्। सवस्त्रं सहिरण्यञ्च ततोदद्याद्द्विजातये। पूजनं पूजोप
करणं प्रतिमादि। व्रतेनानेन धर्मज्ञोरोगमेवं व्यपोहति। आरोग्यमाप्नोति गतिं तथाग्र्यां यशस्तथाग्र्यं विपुलांश्च भोगान्। व्रतेन सम्यक् पुरुषोथ नारी
संपूजयेद्यस्तु जगत्प्रधानं जगत्प्रधामं सूर्यं। इति आरोग्यप्रतिपद्व्रतं अथास्यामेवोक्तं विद्याव्रतं। मदनरत्ने विष्णुधर्मे। मार्कण्डेय उवाच। अष्टपत्रं 
तु कमलं विन्यसेद्वर्णकैः शुभैः। ब्रह्माणं कर्णिकायान्तुन्यस्य सम्पूजयेद्विभुं। ऋग्वेदं पूर्वपत्रे तु यजुर्वेदन्तु दक्षिणे। पश्चिमे सामवेदन्तु उदक् चाथर्वणं तथा

आग्नेये च तथाङ्गानि धर्मशास्त्राणि नैरृते। पुराणञ्चैव वायव्ये ऐशान्यां न्यायविस्तरं। एवं विन्यस्य धर्मज्ञः सोपवासस्तु पूजयेत्। चैत्रशुक्लमथारभ्य सोपवासो जितेन्द्रियः। सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव। सम्वत्सरं महाराज शुक्लगन्धानुलेपनैः। भूरिणा परमान्नेन धूपदीपैरतन्द्रितः। सम्वत्सरान्ते गां दद्याद्व्रते चीर्णे नरोत्तम। इदं व्रतं यस्तु करोति राजन्। सवेदवित्स्याद्बहुविधर्मनिष्ठः। कृत्वा सदा द्वादशवत्सराणि। विरिञ्चिलोकं पुरुषः प्रयाति। इति विद्याप्रतिपद्व्रतं। अथाचैव भविष्योक्तं तिलकव्रतं। श्रीकृष्ण उवाच वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः। शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः। नारी नरो वा राजेन्द्र सन्तर्प्य पितृदेवताः। नद्यास्तीरे तडागे वा गृहे वा तदलाभतः। पिष्टातकेन विलिखेद्वत्सरं पुरुषाकृतिं। पिष्टातकः पटवासको गन्धद्रव्यचूर्णविशेषः। ततश्चन्दन चूर्णेन पुष्पधूपादिनार्चयेत्। मासर्तुनामभिः पश्चान्नमस्कारान्तयोजितैः। मासर्तुनामभिश्चैत्रवसन्तादिनामभिः। पूजयेद्ब्राह्मणो विद्वान्मन्त्रैर्वेदोदितैः शुभैः। सम्वत्सरोसीति पठन्मन्त्रं वेदोदितं द्विजः। नमस्कारेण मन्त्रेण शूद्रोपीत्थं प्रपूजयेत्। शूद्रोपीत्यनेन न स्त्रीणां परिग्रहः। तासां विशेष विध्यभावे वैदिकमन्त्रानधिकारात् सम्वत्सरोसि परिवत्सरोसीत्यादि यजुर्वेद प्रसिद्धो मन्त्रः नमस्कारेण मन्त्रेण सम्वत्सराय नम इत्यादिना एवमभ्यर्च्य वासोभिः पश्चात्तमभिवेष्टयेत्। कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदकादिभिः ततस्तं पूजयेत्पार्थ पुरःस्थित्वा कृताञ्जलिः भगवंस्त्वत्प्रसादेन वर्षं चेममिहास्तु मे। संवत्सरोपसर्गा मे विलयं यान्त्वशेषतः। एवमुक्त्वा यथाशक्त्या दत्वा विप्राय दक्षिणां। ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजं। ततः प्रभृत्यनुदिनं तिलकालंकृतं मुखं धार्यं सम्वत्सरं यावच्छशिनेव नभस्तलं। एवं नरो वा नारी वा व्रतमेतत् समाचरेत्। सदैव पुरुषव्याघ्र भोगान् भुवि भुनक्त्यसौ। भूतप्रेतपिशाचाद्यैर्दुर्वारा वैरिणो ग्रहाः। निरर्थका भवन्त्येते तिलकं वीक्ष्य तत्क्षणात्। निरर्थकाः प्रयोजनशून्या अनिष्टकरणे असमर्था इत्यर्थः। अथ वसन्ते प्रतिपत्तिथिः। शुक्ला तस्यां प्रकुर्वीतेति वसन्तशुक्लाप्रतिपत् लब्ध्वा तया व्रतमिदं चैत्रे गृहीतं द्विजसन्निधौ इत्यनेन च चैत्रस्यैवेति विज्ञायते। पूर्वमासीन्महीपालो नाम्ना शत्रुञ्जयो नृपो। चित्रलेखेति तस्याभूद्भार्या चारित्र भूषणा। तया व्रतमिदं चैत्रे गृहीतं द्विजसन्निधौ।

॥ व्र ॥ वत्सरंपूजयित्वा च ध्यात्वाहृदिजनार्दनं। हंतुमाचेम्नु कामोवासमागच्छतियः पुरः। प्रयातिप्रियकृत्वस्याहृष्टातुतिलकंनरः। सपत्नीदर्पप्रहरावशीकृत
१४ महीतला। भर्तुर्हृष्टाप्रहृष्टाभासुखमास्तेनिराकुला। यावत्करेणाभिभूतोभर्तापुत्रः सवेदनः। शिरोर्त्तिना संप्रयातः सुहृदांसुखदायकः शिरोर्तिना
प्रयातः। शिरोवेदनाप्रयातः शिरोवेदनायुक्तः। धर्मराजपुरात्प्राप्ताः सर्वभूतापहारकाः। तस्मिन्क्षणे महाराज धर्मराजस्य किंकराः। तस्याद्वारमनुप्राप्ताः
प्रविष्टागृहभञ्जनाः। प्रभुंजयंसमानेतुं कालमृत्युपुरः सराः पार्श्वस्थितां चित्रलेखांतिलकालं कृताननां। दृष्ट्वाप्रनष्ट संकल्पापराहत्यगताः पुनः गतेषुतेषु-
सन्नृपः पुत्रेणसहभारत। नीरुजो बुभुजे भोगान् पूर्वकर्मार्जितान् शुभान्। अक्रूरेणसमाख्यातं ममपूर्वंयुधिष्ठिर। एतत्त्रिलोकतिलकारव्यविभूषणं च पुण्यं
व्रतं सकल दुष्टहरं परं च। इत्थंसमाचरतियः समुखंविहृत्यमर्त्यः प्रयातिपदमच्युतमिंदुमौलेः॥ इति तिलक व्रतं। अथश्रावणशुक्लप्रतिपदादि सोमवासरारभ्य
वारप्राप्तरोटकव्रतं ॥ युधिष्ठिर उवाच। हृषीकेशमयाकारिव्रत दानान्यनेकधा। श्रोतुमिच्छामि देवेश व्रतंसंपत्तिदायकं। येन व्रतेनदेवेश पुनाराज्यं
लभामहे। तथाव्रतन्तुमेब्रूहि यादवानां कृपाकर॥ ॥श्रीभगवानुवाच॥ वदामिशुभदंपार्थ लक्ष्मीवृद्धि प्रदायकं। धर्मार्थकाममोक्षाणां निदानं परमं
व्रतं। युधिष्ठिरउवाच॥ केनचादौपुराचीर्णंमर्त्यैकेन प्रकाशितं। विधिनाकेन कर्त्तव्यं तत्सर्वंब्रूहि केशव॥ श्रीभगवानुवाच॥ आसीत्सौम्यपुरे राजा
सोमोनामेतिविश्रुतः। क्षत्रधर्मेति कुशलः प्रजापालन तत्परः। तस्य राज्ये प्रजाः सौम्या सर्वधर्मपरायणाः। तस्य राज्ञस्तुचामात्यःसोपिसौम्यः शुभा
वहः। तस्मिंपरस्तुसौम्यंचतदसौम्यां वुनाश्रुतं। अभूत्सोमेश्वरोदेवोलोकानां पालनायच। तत्राभवत्सोमशर्मा ब्राह्मणो वेदपारगः। वेदार्थ विद्यास्त्रविच्च
शुद्धाचारोतिदुर्लभः। तस्य भार्या शुभाचारा पुरन्ध्री चारुभाषिणी। भर्तृशुश्रूषणरताकल्याणी प्रियवादिनी सोकरोच्च कुटुंबार्थंकणयज्ञंदिने
दिनेन न लभ्यतेधिकंतेन धनं धान्यं तथैवच। अतीव खेदखिन्नस्तुविचार्य्यच पुनः पुनः। किं करोमि क्वगचामि सभार्योहि महीतले। १४
केनकर्मविपाकेन ईदृशं लभ्यते फलं। अथवार्थकरं धर्मदेवपूजादिकं शुभं ससोमेशेकरोद्भक्तिं दैन्यप्रणाशायपार्थिव। कदाचित् वेदवि

स्तोसौ प्रजगामसरोवरं । अभूत्सोमेशः प्रत्यक्षस्तस्मिन् शौम्यसरोवरे । वृद्धब्राह्मणरूपेण कृपयापरयायुतः । तेन संदुःखितो दृष्टः सोमशर्माद्विजोत्तमः किमर्थं क्रियते दुःखंत्वयाथाचरणेनच । किञ्चिद्दत्तंनास्तिपूर्वं तदर्थमीदृशं फलं । तस्य तद्वचनं श्रुत्वा ब्राह्मणस्त्विदमब्रवीत् । भोभो विप्रवरश्रेष्ठ व्रतमेकं वदामिते । तेनादिष्टं व्रतंचेदं पूर्णसंपत्तिदायकं । सोमशर्मोवाच ॥ भोभो ब्राह्मणशार्दूल व्रतंतद्वदमेप्रभो । यस्यानुष्ठानमात्रेण लक्ष्मीवृद्धिःप्रजायते । कस्मिन्मासे च कर्त्तव्यं किंदानं कस्यभोजनं । धनलाभाय कर्त्तव्यं कस्यदेवस्य पूजनं । कैस्तुपुष्पैः प्रकर्त्तव्यापूजाचारुतराशुभा । नैवेद्यं कीदृशं देयं अर्घं कैस्तुफलैर्भवेत् । यदि तुष्टोसिविप्रेन्द्रतत्सर्वंब्रूहिमेप्रभो ॥ ब्राह्मणउवाच ॥ साधुत्वयाविप्रपृष्टंव्रतंवृद्धिप्रदायकं । विधानं तस्य वक्ष्यामि सर्वसिद्धि प्रदायकं । श्रावणेच सितेपक्षे प्रथमेसोमवासरे । प्रकर्त्तव्यं व्रतं विप्र शुभं नियम पूर्वकं । सार्द्धमासत्रयं विप्रकर्त्तव्यं विधिपूर्वकं । विल्वपत्रैस्तुकर्त्तव्यं चतुर्दश्यां तुकार्त्तिके । व्रतारम्भे तुकर्त्तव्यो नियमस्तुविचक्षणैः । अद्यारभ्य व्रतंदेवरोटकाख्यं मनोहरं । करोमिपरयाभक्त्या पाहिमां जगतां गुरो । दिने दिने प्रकर्त्तव्या पूजादेवस्य शूलिनः । कथां विना न भोक्तव्यं प्रत्यहञ्च पुनः पुनः । उपोषणं चतुर्दश्यां कर्त्तव्यं विधिपूर्वकं । शुचिर्भूत्वादिवे तस्मिन् कर्त्तव्यं रोटकव्रतं । चतुर्दश्यां निराहारः स्थित्वाचैवपरे हनि । भोक्ष्यामि पार्वतीनाथ सर्वसिद्धि प्रदायकं । उपोषण मन्त्रः । कृत्वामध्याह्निकं कर्म नित्य पूजादिकं तथा । तस्यांरात्रौतु कर्त्तव्या पूजादेवस्य शूलिनः । शुभेचैतत्प्रदेशेतु कर्त्तव्यं पुष्पमण्डपं । पूज्यः स्तत्र शिवोदेवो धर्मकामार्थ सिद्धये । क्षीरादिस्नपनं कुर्याच्चंदनादि विलेपनं । कृष्णागुरुसकर्पूर मृगनाभिविमिश्रितं । पुष्पैर्नानाविधैरम्यैः पूज्यो देवोमहेश्वरः । धनकामेन कर्त्तव्या पूजादेवस्य शूलिनः । विल्वपत्रै रखण्डैश्च तुलसीपत्रकैस्तथानीलोत्पलैश्चारुतरैः । कर्त्तव्या पुण्यवर्द्धिनी । कह्लारकमलैश्चैव कुमुदैश्चातिशोभनैः । चंपकैर्मालती पुष्पैः कुर्विंदैश्चशुभावहैः । मन्दारैश्चार्कपुष्पैश्च पूजाचान्यैःशिवप्रियैः अन्यैर्नानाविधैःपुष्पैः ऋतुकालोद्भवैःशुभैः । धूपैर्नानाविधैःपार्थ पुण्यवर्द्धनसाधकैः । दीपास्तत्रप्रकर्त्तव्या घृतपूर्णा मनोरमाः । लेह्यैःपेयैस्तथा भोज्यैः स्वादुभिश्च शिवप्रियैः । अन्यैर्नानाविधै रम्यैः तथा विप्रवरैस्तुतं नैवेद्यंतुप्रकर्त्तव्यं रोटकानां

विशेषतः । कर्त्तव्यारोटकापश्चपुरुषाशार मानतः । द्वौतुविप्रायदातव्यौद्वाभ्यांचभोजनं शुभं । एकोद्देवाय दातव्यौ नैवेद्यार्थं सदा वुधैः । महेशायच न्दा

तव्यस्ताम्बूलं सुमनोहरं । अर्घ्यदानं प्रकर्त्तव्यं धनसम्पत्तिदायकं । येनाफलं नारिकेलं जम्बीरम्बीज पूरकं । खर्जूरीच शुभाद्राक्षा मातुलिङ्गं मनो रमं । आक्षोटानिच दाडिम्बं नारिङ्गानि शुभानिच । कर्कटीचशुभाप्रोक्ता अर्घदाने मनोहरा । अन्नैर्नानाविधैःपार्थ ऋतुकालोद्भवैःशुभैःयःकरोत्यर्घ्यदानं चतस्यपुण्यं वदाम्यहं । इलाग्वसागरैर्युक्तांरक्षैस्थान्यैर्मनोरमैः । दत्वायत्फलमाप्नोति तेन तत्फलमाप्नुयात् । अनेनैवविधानेन तत्कार्यं व्रत सिद्धये । पञ्च वर्षन्तु कर्त्तव्यमतुलंधनमोक्षभिः । पश्चादुद्यापनं कुर्याद्रोटकाख्यव्रतस्यच । उद्यापनेतु कर्त्तव्यौ हेमरौप्यौतु रोटकौ ॥ इति श्रीशिवपुराणे विल्वरोटक व्रतं ॥ अथ कार्त्तिक शुक्लद्वितीया यमद्वितीया साचापराह्नव्यापिनी ऊर्जेशुक्लद्वितीयायामपराह्णेर्चयेद्यमं । स्नानं कृत्वाभानुजन्यांयमलोकंनपश्यति । ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितोयमः वेष्ठितः किंनरैर्हृष्टैस्तस्मैयच्छतिवांछितमिति । स्कान्दात् । दिनद्वये,अपराह्नव्याप्तावव्याप्तौवापरैव युग्मान्नीतियुग्मवा क्यात् । हेमाद्रौभविष्येप्रथमाश्रावणेमासि तथा भाद्रपदेपरा । तृतीयाश्वयुजेमासि चतुर्थी कार्त्तिके भवेत् । श्रावणे कलुषा नाम तथा भाद्रे च निर्मला । आश्विनेप्रेतसञ्चारा कार्त्तिके याम्यकामयेति चतस्रोद्वितीया उपक्रम्य प्रथमायां किञ्चित्प्रायश्चित्त द्वितीयायां सरस्वतीपूजा तृतीयायां श्राद्धं कर्त्तव्य त्वेनसूचयित्वा चतुर्थ्यामस्याकर्त्तव्यमुक्तं कार्त्तिके शुक्लपक्षेतु द्वितीयायां युधिष्ठिर । यमोयमुनया पूर्वंभोजितस्स्वगृहेर्चितः । अतोयमद्वितीयेयं त्रिषुलोकेषुवि श्रुता । अस्यां निजगृहे पार्थ न भोक्तव्यमतोनरैः । यत्नेन भगिनी हस्तात् भोक्तव्यं पुष्टिवर्धनं । दानानिच प्रदेयानि भगिनीभ्यो विशेषतः । सुवर्णलङ्कार रवस्त्रान्न पूजा सत्कार भोजनैः । सर्वाभगिन्यः संपूज्या अभावे प्रतिपन्नकाः । प्रतिपन्नकाः तत्र स्थाने मता । पितृव्यभगिनीहस्तात्प्रथमायां युधि- ष्ठिर पितृव्यभगिनी पितृव्यसंवन्धेन भगिनी पितृव्यकन्येत्यर्थः मातुलस्यसुताहस्ताद्द्वितीयायां तथान्वपमातुर्मातुःस्वस्रैव तृतीयायां तयोःकरात् । भोक्तव्यं 
सहजायास्व भगिन्याहस्ततः परं । सर्वासु भगिनी हस्तात् भोक्तव्यं वलवर्धनं । धनं यशस्य मायुष्यं धर्मकामार्थ साधकं । यस्यांतिथौयमुनयायमराजदेवः

संभोजितो निजकरात्स्वसृसौहृदेन तस्मात्स्वसुः करतलादिह यो भुनक्ति प्राप्नोति रत्नधनधान्यमनुत्तमं सः। इति हेमाद्रौ भविष्ये यमद्वितीयाविधिः। तथैव भ्रातृद्वितीयाविधिर्लिखितस्तत्र स्कान्दे। या तु भोजयते नारी भ्रातरं युग्मके तिथौ। अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात्। भ्रातुरायुःक्षयो नूनं न भवेत्तत्र कर्हिचित्। तथा यमं चित्रगुप्तं यमदूतांश्च पूजयेत्। अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः। सहजद्वयैः भ्रातृभगिनीभिः। अर्घ्यमन्त्रस्तु एह्येहि मार्तण्डज पाशहस्त यमान्तकालोकधरामरेश भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते। धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज पाहि मां किङ्करैः सार्धं सूर्यपुत्र नमोऽस्तु ते। इति। लैङ्गे। कार्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनं। या न कुर्यात् विनश्यन्ति भ्रातरः सप्तजन्मसु। पाद्मे उत्तरखण्डे। भद्रे भगिनि भोक्तास्मि त्वदन्नं प्रियसौहृदे। श्रेयसे च नमस्तुभ्यं आगतोऽस्मि तवालयं। त्वद्वाक्यं ततः श्रुत्वा सत्वरं क्रियते तदा। अद्य भ्रातृमती जातास्त्वया धन्यास्मि मानद। भोक्तव्यं तदहं चैव स्वायुषे मम मानद। कार्तिके शुक्लपक्षस्य द्वितीयायां सहोदरः। यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः। अस्मिन् दिने पूजनाच्च नारी वा पुरुषोऽपि वा। अपविद्धा कर्मपाशैः स्वेच्छया ये पचन्ति हि। पापेभ्यो विप्रमुक्तास्ते मुक्ताः कर्मनिबन्धनात्। तेषां महोत्सवो वृत्तो यमराष्ट्रे सुखावहः। तस्मादत्रैव मद्गेहे भोजनं कुरु कार्तिके। आशिषः प्रतिगृह्यास्या नमस्कृत्य ततोऽर्चयेत्। सर्वा भगिन्यः संपूज्या ज्येष्ठा उभयतस्तथा। स्वसारो निजकाश्चैव निजपित्रनुसारतः। भ्रातरा युष्मपुष्ट्यर्थं भगिनीभिर्यमस्तथा। पूजनीया प्रयत्नेन प्रतिमाश्च विधानतः। मार्कण्डेयो बलिर्व्यासो हनूमांश्च विभीषणः। कृपः द्रौणिः परशुराम सप्तैते चिरजीविनः मार्कण्डेय महाभाग सप्तकल्पान्तजीवित चिरञ्जीविर्यथा त्वं हि तथा मे भ्रातरं कुरु॥ इति भ्रातृद्वितीयाविधिः॥ इति श्रीभट्टनीलकण्ठात्मज भट्टशङ्करकृतौ व्रतार्के द्वितीयाव्रतानि॥ अथ तृतीया व्रतानि॥ तत्र चैत्रशुक्लतृतीयायां सौभाग्यशयनव्रतं॥ मात्स्ये मत्स्य उवाच। वसन्तमासमासाद्य तृतीयायां जनप्रियं। सौभाग्याय सदा स्त्रीभिः कार्यं पुत्रसुखेप्सुभिः। शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत्। तस्मिन्नहनि सा देवी किल विश्वात्मना सती। पाणिग्रहणिकैर्मन्त्रैः पुरुहारवर्णिनी। तया सहैव देवेशं तृतीयायां समर्चयेत्। फलै-

मं॰। नानाविधैर्धूपदीपैर्नैवेद्यसंयुतैः। प्रतिमां पञ्चगव्येन तथा गन्धोदकेन च। स्नापयित्वार्चयेद्गौरीमिन्दुशेखरसंयुतां। नमोऽस्तु पाटलायै तु पादौ
१६ देव्याः शिवस्य तु। शिवायेति च सङ्कीर्त्य जयायै गुल्फयोस्तथा त्रिगुणायेति रुद्रस्य भवान्यै जङ्घयोर्युगं शिवं रुद्रेश्वरायेति जयायै इति जानुनी।
सङ्कीर्त्य हरिकेशाय तथोरू वरदे नमः। ईशायेश कटिं रत्यै शङ्करायेति शङ्करं। कुक्षिद्वये च कोटव्यै शूलिनः शूलपाणये। मङ्गलायै नमस्तुभ्यमुदरञ्चापि
पूजयेत्। सर्वात्मने नमो रुद्रमैशान्यै च कुचद्वयं शिवं वेदात्मने तद्वत् रुद्राण्यै कण्ठमर्चयेत्। त्रिपुरघ्नाय विश्वेशमनन्ताय करद्वयं त्रिलोचनायेति हरं बाहू
कालानलप्रिये सौभाग्य भवनायेति भूषणानि समर्चयेत्। नमोऽर्द्धनारीशहरप्रसितां गीतिनासिकां नम उग्राय लोकेश ललितेतियुतभ्रुवौ। शर्वाय पुर-
हन्तारं वसुदेव्यै तथालकं। नमः श्रीकण्ठनाथाय शिवं केशांस्तथार्चयेत्। भीमोग्रसौम्यरूपिण्यै शिवः सर्वात्मने नमः। शिवमभ्यर्च्य विधिवत् सौभाग्या
ष्टकमित्यतः। स्थापयेत् घृतनिष्पाव कुसुम्भक्षीरजीरकं। तवराजेक्षुलवणं कुस्तुम्बुरुमथाष्टमं। दत्तं सौभाग्यकृद्यस्मात् सौभाग्याष्टकमित्यतः एवं निवे
द्य तत्सर्वमग्रतः शिवयोः पुरः। चैत्रे शृङ्गोदकं प्राश्य स्वपेद्भूमावरिन्दम। पुनः प्रभाते तु तथा कृतस्नानजपः शुचिः। संपूज्य द्विजदाम्पत्यं माल्यवस्त्रविभू-
षणैः। सौभाग्याष्टकसंयुक्तं सुवर्ण प्रतिमाद्वयं प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत्। एवं संवत्सरं यावत् तृतीयायां सदा मुने। प्राशने दानमन्त्रे च
विशेषोऽयं निबोध मे। गोशृङ्गोदकमाद्ये स्यात् वैशाखे गोमयं पुनः। ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतं। श्रावणे दधि संप्राश्यं नभस्ये च कुशोदकं।
क्षीरमाश्वयुजे मासि कार्त्तिके पृषदाज्यकं। मार्गशीर्षे तु गोमूत्रं पौषे संप्राशयेत् घृतं। माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने। ललिता विजया भद्रा
भवानी कुमुदा शिवा। वासुदेवी तथा गौरी मङ्गला कमलासती। उमा च दानकाले तु प्रीयतामिति कीर्त्तयेत्॥ मल्लिकाशोककमलकुन्दं तोयल मालती
कुब्जकं करवीरञ्च, बाणमम्लान कुङ्कुमं। सिन्दुवारञ्च सर्वेषु मासेषु क्रमशः स्मृतं। बाणं नीलकुरण्टः। जपाकुसुमं कुसुम्भमालती शतपत्रिका। यथालाभं १६
प्रशस्तानि करवीरञ्च सर्वदा। एवं संवत्सरं यावदुपोष्य विधिवन्नरः। स्त्री वा भक्त्या कुमारी वा शिवामभ्यर्च्य भक्तितः। व्रतान्ते शयनं दद्यात् सर्वोप-

स्कारसंयुतं । उमामहेश्वरं हैमं वृषभं च गवा सह । स्थापयित्वा च शयने ब्राह्मणाय निवेदयेत् । गोयुग्मं हैमं । अन्यान्यपि यथाशक्त्या मिथुनान्यंबरादिभिः ।
धान्यालङ्कारगोदानैः रत्नवस्त्रधनसञ्चयैः । वित्तशाठ्येन रहितः पूजयेद्गत विस्मयः । एवं करोति यः सम्यक् सौभाग्यशयन व्रतं । सर्वान् कामानवाप्नोति
पदमानंत्यमश्नुते । फलस्यैकस्य च त्यागमेतत् कुर्वन् समाचरेत् । यश कीर्त्तिं समाप्नोति प्रतिमासं नराधिप । सौभाग्यारोग्यरूपायुर्वस्त्रालंकार भूषणैः । न
वियुक्ता भवेद्राजन्नब्दानि च शतत्रयं । यस्तु द्वादशवर्षाणि सौभाग्य शयनं व्रतं । करोति सप्तचाष्टौवाश्रीकंठ भवनेमरैः । पूज्यमानो वसेत् सम्यक् यावत्
कल्पायुतत्रयं । नारी वा कुरुते याति कुमारी वा नरेश्वर । सा पितरफलमाप्नोति देव्यानुग्रहलालिता ॥ इतिमात्स्ये सौभाग्यशयन व्रतं ॥ अत्रैवगौर्या-
दोलोत्सवः तदुक्तं हेमाद्रौ देवीपुराणे । तृतीयायां यजेद्देवीं शंकरेण समन्वितां । कुंकुमागुरुकर्पूर मणिवस्त्रस्रगर्चितां । सुगन्धपुष्पधूपैश्च चंदनेन सुमा
सया । आंदोलं दोलके द्वत्त शिवोमातुष्टये सदा । रात्रौ जागरणं कार्यं प्रातर्दद्यात्तु दक्षिणा । सौभाग्याय सदा स्त्रीभिः कार्या पुत्रसुखादिभिः । अथ
चैत्र शुक्लतृतीयायामरुन्धती व्रतं । तत्र स्त्रीणामेवाधिकारः अवैधव्यादिफल श्रवणात् । अथ पूजा । अष्टकर्णिकयायुक्ते मण्डले पूजयेत्तुतां । अरुन्धतीं
महादेवीं वसिष्ठसहितां सतीं । आवाहनं । अरुन्धति महादेवि सर्वसौभाग्यदायिके । दिव्यं सुचारुवेषं च आसनं प्रतिगृह्यतां । आसन सुखाय शीतलं
दिव्यं नानागन्धसुवासितं । पाद्यं गृहाणदेवेशि अरुन्धतिनमोस्तुते । पाद्यं । अरुन्धति महाभागे वसिष्ठप्रियवादिनि । अर्घ्यं गृहाणकल्याणि भर्त्रा
सह पतिव्रते । अर्घ्यं ॥ गङ्गातोयं समानीतं सुवर्णकलशे स्थितं । आचम्यतां महाभागे वसिष्टसहिते नघे । आचमनं ॥ गङ्गासरस्वती रेवापयोष्णी
नर्मदा जलैः । स्नापितासिमयादेवि तथा शान्तिं कुरुष्वमे । स्नानं । नानारागं समुद्भूतं दिव्यं चारु मनोहरं । वस्त्रं गृहाणदेवेशि अरुन्धति नमोस्तुते ।
वस्त्रं । कर्पूर कुङ्कुमैर्युक्तं हरिद्रादि समन्वितं । कस्तूरिका समायुक्तं चन्दनं प्रतिगृह्यतां । चन्दनं ॥ अक्षताश्च सुरश्रेष्ठाः कुङ्कुमाक्ताः सुशोभनाः । नाना
लङ्कारसिद्ध्यर्थं प्रीत्यर्थं प्रतिगृह्यतां । माल्यादीनि सुगन्धीनि मालत्यादीनि वै पुनः । मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां ॥ पुष्पं ॥ वनस्पति

॥ व्र ॥ रसोद्भवो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां ॥ धूपं ॥ आज्यन्त्रिवर्त्तिसंयुक्तं वह्निनायोजितं मया। दीपं गृहाण देवे
१७ शि त्रैलोक्य तिमिरापहं॥ दीपं ॥ अन्नं चतुर्विधं स्वादुरसैःषड्भिः समन्वितं। नैवेद्यं गृह्यतां देवि प्रसादं कुरु सर्वदा ॥ नैवेद्यं ॥ पूगीफलंमहद्दिव्यं
नागवल्लीदलैर्युतं। कर्पूरादि सुसंयुक्तं ताम्बूलं प्रतिगृह्यतां ॥ ताम्बूलं इदं फलमितिफलं। हिरण्यगर्भ इति दक्षिणा। पुत्रान् देहि धनं देहि सौ
भाग्यंदेहि सुव्रते। [illegible]न्यांश्च सर्वकामांश्च देहि देवि नमोस्तुते ॥ मूलमन्त्रप्रार्थना ॥ अरुन्धति महाभागे वसिष्ठप्रियवादिनि। सौभाग्यं देहि मे देवि
धनपुत्रांश्च सर्वदा। उत्तरार्घ्यं ॥ द्विभुजां चारुसर्वाङ्गीं साक्षसूत्रकमण्डलुं। प्रतिमां काञ्चनींकृत्वा नामभिःपरिपूजयेत्। ओं देववन्द्ये नमःपादौ पूज
यामि। लोकवन्द्यै॥ जानुनीपू सम्पत्तिदायै कटिं गम्भीरनाम्न्यै नाभिं लोकधात्र्यैस्तनौ जगद्धात्र्यै कण्ठं शान्त्यै वाक् वरदायै हस्तौ धृत्यै मुखं सर
स्वत्यै शिरः। सकलप्रियायै शिखा वसिष्ठप्रियायै सर्वाङ्गं ततोनीराजनं। पुष्पाञ्जलिश्च वंशपात्रेस्थितं पूर्णं वायकं द्रव्यसंयुतं। अरुन्धती प्रीण
नार्थं ब्राह्मणाय ददाम्यहं। वायकं सुवर्णमूर्त्तिसंयुक्तां वशिष्ठेन सुशोभितां। अरुन्धती प्रीणनार्थं ब्राह्मणाय ददाम्यहं। मूर्तिदानमन्त्रः। गच्छ देवि
यथास्थानं सर्वालङ्कारभूषिते। अरुन्धति नमस्तुभ्यं देहि सौभाग्यमुत्तमं। विसर्जनं ॥ इति अरुन्धती पूजनं ॥ अथ कथा स्कान्दे। स्कन्द उवाच।
अरुन्धती व्रतं वक्ष्ये नारी सौभाग्यदायकं। येन चीर्णेन वैसम्यक् नारीसौभाग्यमाप्नुयात्। जायते रूपसम्पन्ना पुत्रपौत्रसमन्विता। वसन्ते तु समासाद्य
तृतीयां पुरुषर्षभ। स्नानं कृत्वा तु वैसम्यक् चिराचोपोषितासती। मिथुनानिच चत्वारि समाहूय पतिव्रता। पूजयेत्पुष्पताम्बूलैश्चन्दनैश्च तथाक्षतैः।
कुङ्कुमागरु कर्पूरैः सिन्दूरैर्मृगनाभिभिः। शिलापट्टेन संस्थाप्य जीरकं लवणान्वितं। लोष्टकेन समायुक्तं वस्त्रं युग्मेन वेष्टितं। आवाहयेन्महादेवीं वसिष्ठ
प्राणसम्मितां। पतिव्रतानां सर्वासां मुख्यां वै देवभामिनीं। द्विभुजां चारुसर्वाङ्गीमक्षसूत्र कमण्डलुं। प्रतिमां काञ्चनीं कृत्वा नामभिः परिपूजयेत् देववन्द्ये १७
नमःपादौ जानुन्यालोकवन्दिते। कटिं सम्पूजयेत्तस्याःसर्वसम्पत्ति दायिनीं। नाभिंगभीरनाम्न्यै तु लोकधात्र्यै तथास्तनौ जगद्धात्र्यै यथाकण्ठौवाक् शान्त्यै।

भमस्तथा। हस्तौ तु वरदायै तु मुखं धृत्यै नमः पुरः। अरुन्धत्यै तथा पूज्यं शिरस्तु सकलप्रिया। एवं सम्पूज्य तां देवीं गन्धपुष्पोपचारकैः। पूजयित्वा सतीं देवीं ततश्चार्घ्यं प्रदापयेत्। अरुन्धति महाभागे वसिष्ठप्रियवादिनि। सौभाग्यं देहि मे देवि धनपुत्रांश्च सर्वदा। उत्तरार्घ्ये मन्त्रः। पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते। अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते। प्रार्थनामन्त्रः। सुवासिन्योऽथ सम्पूज्याः समाप्ति दिवसे सदा। शु भमन्त्राचतै पुष्पैर्दद्यात् शूर्पेण भक्षकान्। होमं चैव तदा कुर्यात्समिद्भिश्च तिलैः पृथक्। अष्टोत्तरशतं संख्या प्रार्थनामन्त्रतः सुधीः। मिथुनानि च सम्पूज्य भूषणाच्छादनादिभिः। नानाविधोपचारैश्च चतुर्विंशति संख्यया। आचार्याय सभार्याय वस्त्राण्याभरणानि च। शय्यां सोपस्करां दद्यात् कांस्यपात्रं सदीपकं। आदर्शं चामरञ्चैव धेनुं दद्यात्सुशोभनां। पश्चात्तु भोजयित्वाथ स्त्रियः शूर्पान् समोदकान्। मोदकान् काञ्चनञ्चैव तथा वस्त्रं यथाविधि। पोलिकां घृतपूपांश्च पूरीकाश्च विशेषतः। सोहोलिकाश्च दातव्या एकैकं द्विगुणं तथा। भोजनद्वयपर्याप्तं दीनानाथांश्च पूजयेत्। एवं व्रतं समाप्याथ पश्चान्नक्तं समाचरेत्। अनेनैव विधानेन मानिनी कुरुते व्रतं। अवैधव्यं त्वमाप्नोति तथा जन्म सहस्रकं। पुत्रपौत्रसमायुक्ता धनधान्यसमावृता। जीवेद्वर्षशतं सार्धं सहभर्त्रा महाव्रता। एवमभ्यर्चयित्वा तु पदं गच्छेदनामयं। देवभार्या यथा स्वर्गे ऋषिभार्या तथैव च। राजभार्या महाभागा सर्वकामफलप्रदं पुरावृत्तमिदं विप्रा शृणुध्वं व्रतमुत्तमं। आसीद्विप्रः पुरा विप्राः सर्वशास्त्रविशारदः। तस्यैका कन्यकाजाता रूपेणाप्रतिमा भुवि। ततो विवाहं सम्यग्वै पिता तस्याकरोद्द्विजः। बालरण्डा तु साजाता निर्वेदादगमद्गृहात्। यमुनातीरमासाद्य चकार विपुलन्तपः। एकभक्तादिकैश्चैव कृच्छ्रचान्द्रायणैस्तथा। मासोपवासनियमैरात्मानं पावयन् सती। कदाचिदागतस्तत्र भ्रमन् गौर्या सदाशिवः। यमुनातीरमासाद्य विनीतान्तां ददर्श सा। कृपया च शिवा गौरी महादेवमुवाच सा। देवकेनेदृशीं प्राप्ता बालवैधव्यतां दशां। वदेश्वर महादेव कृपां कुरु कृपानिधे। श्रीमहादेव उवाच। अयं विप्रः पुरा गौरि कुलशीलयुतो भुवि। तेन कन्या परिहृता सुरूपा युवती सती। सतां विवाह्य तरुणीं विदेशं व्यगमद्द्विजः। तस्य च बहुतिथं कालं सापश्यत् पत्युरागमं

 नागतस्तु तदा विप्रो यावज्जीवं गतोद्विजः। तस्याजन्मगतं सर्वं निःफलं पतिनाविना। तेन पापेन विप्रोसौ नारीत्वं प्राप्तवान् शिवे। स्वनारीं यः परि
 त्यज्य निर्दोषां कुलसम्भवां। याति देशान्तरं वाथ अन्धाइव महार्णवे। परदाररतोवास्यादन्यां वा कुरुते स्त्रियं। सोन्यजन्मनि देवेशि स्त्रीभूत्वावि
धवाभवेत्। या नारी तु पतिंत्यक्त्वामनोवाक्काय कर्मभिः। रहः करोति वैजारं गत्वावा पुरुषान्तरं। भोगान् भुक्त्वाच यायोविन्मदेन प्रमदासती। तेन
कर्मविपाकेन सा नारी विधवा भवेत्। स्वपत्नीं कुलसम्भूतां पतिव्रतरतां सतीं। अनुकूलां परित्यज्यपरां योयातिचेच्छया। सपापोजायतेन्यस्मिन् स्त्री
हीनोविप्रजन्मनि। अनेन सदृशं देवि लोकेस्मिन्नास्ति पातकं। न वैधव्यात्परोव्याधिर्न वैधव्यात्परोज्वरः। न वैधव्यात्परःशोको न वैधव्यात्परो
कुशः। निरयो नच वैधव्यात्कष्टं वैधव्यतान्नृषु। तेन पापेन बहुना जायते बालरण्डिका। इतितस्य वचःश्रुत्वा सा गौरी विस्मिता भवत्। पप्रच्छतं
महादेवं गौरी सा करुणान्विता। केनेदृशं महत्पापं बालवैधव्यदायकं। नश्यते कर्मणाकेन तन्मां वद कृपांकुर॥ महादेव उवाच॥ शृणु देवि प्रवक्ष्या
मि बालवैधव्य नाशनं। अरुन्धती व्रतं पुण्यं नारी सौभाग्य दायकं। यत्कृत्वा बालवैधव्यात् मुच्यतेनात्रसंशयः। श्रुतमेतत्तदाविप्रा गौर्याशङ्करतोव्रतं
यमुनातीरमासाद्य उपदिष्टं तदा द्विजाः। तस्यै नार्यै महादेव्या कृतमेतद्व्रतं तथा। तेन पुण्येन महता व्रतजेनमुनीश्वराः। सा नारी चागमत्स्वर्गं मुक्ता
वैधव्यतस्तदा। इत्थं व्रतफलं सम्यक् उपदिष्टं मुनीश्वराः। कृतमन्यैश्च बहुभिस्तेपि मुक्ता न संशयः अरुन्धती व्रतमिदं एतत्कार्यं मुनीश्वराः। नारी
वैधव्यतोमुच्येत् सौभाग्यं प्राप्नुयात्परं। इति हेमाद्रिस्कान्दे अरुन्धती व्रतं॥ अथ वैशाखशुक्लतृतीयायां भविष्योत्तरोक्तमक्षय तृतीयाव्रतं॥ इयं च
श्राद्धादौ पूर्वाह्णव्यापिनी ग्राह्या द्वे शुक्ले द्वे तथा कृष्णे युगादीकवयोविदुः। शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके इति नारदीयात्। पूर्वाह्णे तु
सदा ग्राह्या शुक्लामनुयुगादयः। दैवे कर्मणि पित्र्ये च कृष्णेचैवापराह्णिका इति गारुडाच॥ अत्र पूर्वाह्णापराह्ण शब्दौ द्वेधाविभागपराविति। अथ 
व्रतविधिः। वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुं। नारायणं पूजयेथाः पुष्पधूपविलेपनैरिति। तथा बोस्यां ददानिकरकान् वारिबीजसमन्वितान्।

स याति पुरुषो वीर लोकान् वै हेममालिनः। वीजमन्त्रान् हेममाली सूर्यः। तथा वैशाखशुक्लपक्षे तु तृतीयायां तथैवच। गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः॥ ॥ श्रीकृष्ण उवाच॥ वह्वनाथ किमुक्तेन किम्बह्वक्षरमालया। वैशाखस्य सितामेकां तृतीयामक्षयां शृणु। तस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणं। दानञ्च क्रियते तस्यां तत्सर्वं स्यादिहाक्षयं। आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते। सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी। पुरा महोदयः पार्थवणिगासोत्सुनिर्द्धनः। प्रियं वदः सत्यवृत्तिर्देवब्राह्मणपूजकः। पुण्याख्यानैकचित्तोभूत्कुटुम्बव्याकुलोपि सन्। तेन श्रुतावाच्यमाना तृतीयारोहिणीयुता। यदास्याद्बुधसंयुक्ता तदा सा तु महाफला। तस्यां यद्दीयते किञ्चिदक्षयं स्यात्तदेवहि। इति श्रुत्वा च गङ्गायां सन्तर्प्यपितृदेवताः। गृहमागत्यकरकान् सान्नानुदकसंयुतान्। अन्नपूर्णान् वृहत्कुम्भान् जलेन विमलेन च। यवगोधूमलवणान् सक्तुदध्योदनं तथा। इक्षुक्षीर विकारांश्च सहिरण्यांश्च शक्तितः। सुविशुद्धेन मनसा ब्राह्मणेभ्यो ददौ वणिक्। भार्य्ययावार्य्यमाणोपि कुटुम्बासक्तचित्तया। तावत्तस्थौस्थिरेसत्वेमत्वासर्वं विनश्वरं धर्मासक्तमतिः पार्थ कालेन वहुना ततः। जगाम पञ्चत्वमसौ वासुदेवमनुस्मरन्। ततः सक्षत्रियोजातः। कुशावत्यां युधिष्ठिर। वभूव चाक्षया तस्य सम्हद्धिर्धर्मसंयुता। इयाय सुमहायज्ञैः समासवरदक्षिणैः। स ददौ गोहिरण्यानि दानान्यन्यान्यहर्निशं। वुभुजे कामतोभोगान् दीनान्धां स्तर्पयन् शतैः तथाप्यक्षयमेवास्य क्षयं याति न तद्धनं। श्रद्धापूर्वंतृतीयायां यद्दत्तं विभवं विना। इत्येतत्ते समाख्यातं श्रूयतामत्र योविधिः। तृतीयां तु समासाद्य स्नात्वा सन्तर्प्य देवताः। एकभक्तं तदा कुर्याद्वासुदेवं प्रपूजयेत्। उदकुम्भान् सकरकान् सान्नान् सर्वरसैः सह। ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते। छत्रोपानत्प्रदानञ्च गोभूकाञ्चनवाससां। यद्यदिष्टतमं वान्यत्तद्देयमविशङ्कया। एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि। अनाख्येयं नमे किञ्चिदस्तिस्वस्त्यस्तु तेऽनघ। अस्यां तिथौ क्षयमुपैतिहुतं न दत्तं तेनाक्षयेति कथिता मुनिभिस्तृतीया। उद्दिश्यदैवतपितॄन् क्रियते मनुष्यैस्तच्चाक्षयं भवति भारतसर्वमेव इति भविष्योत्तरोक्तमक्षयतृतीयाव्रतं। अस्यामेव विष्णुधर्मोत्तरोक्तमक्षयतृतीयाव्रतं वैशाखशुक्लपक्षे तु तृतीयायामुपोषितः। अक्षयं फलमाप्नोति सर्वस्य

॥भू॥ सुकृतस्य तु। तथा सा कृत्तिकोपेता विशेषेण च पूजिता। तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते। अक्षया सा तिथिस्तस्मात्तस्यां सुकृतमक्षयं। अक्षतैः
१८ पूज्यते विष्णुस्तेन साप्यक्षया स्मृता। अक्षतैस्तु नरः स्नातो विष्णोर्दत्वा तथा क्षतान्। सक्तूंश्च संस्कृतांश्चैव हुत्वा च भृगुनन्दन। एतामब्दतृतीयानां
सर्वासान्तु फलं लभेत्। इति विष्णुधर्मोक्तमक्षयतृतीयाव्रतं। अथाचारप्राप्तं श्रावणशुक्लतृतीयायां स्वर्णगौरीव्रतम्॥ तत्र पूजा॥ देवि देवि समागच्छ
प्रार्थयेऽहं जगत्पते। इमां मयाकृतां पूजां गृहाण सुरसत्तमे। आवाहनं। भवानि त्वम्महादेवि सर्वसौभाग्यदायके। अनेक रत्नसंयुक्तमासनं प्रतिगृह्यतां
आसनं। सुचारुशीतलं दिव्यं नानागन्धसुवासितं। पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते। पाद्यं। श्रीपार्वति महाभागे शङ्करप्रियवादिनि।
अर्घं गृहाण कल्याणि भर्त्रा सह पतिव्रते। अर्घं॥ गङ्गातोयं समानीतं सुवर्णकलशस्थितं। आचम्यतां महाभागे रुद्रेण सहितेऽनघे। आचमनं। गङ्गा
सरस्वतीरेवा कावेरी नर्मदाजलैः। स्नापितासि मया देवि तथा शान्तिं कुरुष्व मे। स्नानं॥ सर्वसत्वाधिके सौम्ये लोकलज्जानिवारणे। मयोपपादिते तुभ्यं
वाससी प्रतिगृह्यतां। वस्त्रं। कर्पूरकुङ्कुमैर्युक्तं हरिद्रादिसमन्वितं कस्तूरिका समायुक्तं चन्दनं प्रतिगृह्यतां। चन्दनं। माल्यादीनि सुगन्धीनि मालत्या
दीनि वै प्रभो। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां। पुष्पं। देवद्रुमरसोद्भूतः कालागुरुघृतान्वितः। आदीयते मया धूपो भवानि घ्राणतर्पणः। धूपं।
आज्यश्चवर्तिसंयुक्तं वह्निनायोजितं मया। दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहं। दीपं। अन्नं चतुर्विधं स्वादुरसैः षड्भिः समन्वितं। नैवेद्यं गृह्यतां
देवि प्रसादं कुरु सर्वदा। नैवेद्यं॥ कर्पूरैला लवङ्गादि ताम्बूलदलसंयुतं। क्रमुकस्य फलं चैव ताम्बूलं प्रतिगृह्यतां। ताम्बूलं। इदं फलं मया देवि स्थापितं
पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि। फलं। हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्त पुण्यफलदमतः शान्तिं प्रयच्छ मे। दक्षिणा।
पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते। अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते। प्रार्थना। भवान्याश्च महादेव्या व्रतसम्पूर्णहेतवे। प्रीतये १८
द्विजवर्याय वायनं प्रददाम्यहं। वायनमन्त्रः। नानाषोडशपक्वान्नैर्वेणुपात्राणि षोडश। कुर्याद्वस्त्रादिभिर्युक्तान्याङ्गयद्विजदम्पती। व्रतोद्यापन पूर्त्यर्थं

ब्राह्मणेभ्यो ददाम्यहं स्वलङ्कृताः सुवासिन्यः पाति व्रत्येन भूषिताः। ममकामसमृद्ध्यर्थं प्रतिगृह्णन्तु भूषिता इति गौरीपूजा। अथोद्यापनं युधिष्ठिर उवाच। उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसम्पूर्ण हेतवे। श्रीकृष्ण उवाच। उद्यापनविधिं वक्ष्ये सावधानेन वै शृणु। विंशद्दण्ड प्रमाणेन प्रमितं दक्षिणोत्तरे। प्रत्यक् प्रागपि राजेन्द्र नवगोचर्मनिष्यते। गोचर्ममात्रं संलिप्य गोमयेन विचक्षणाः। मण्डलं कारयेत्तत्र नानावर्णं सुशोभनं गृहमण्डलपार्श्वे तु पद्ममष्टदलं लिखेत्। तन्मध्ये स्थापयेत् कुम्भमव्रणं स्वन्मयं शुभं। ताम्रपात्रं प्रकुर्वीत पलैः षोडशभिस्तथा। तदर्धार्धेन वा कुर्याद्वित्तशाठ्यं विवर्जयेत्। कर्षमात्र सुवर्णेन प्रतिमां कारयेद्बुधः। तदर्धं मध्यमं प्रोक्तं तदर्धन्तु कनिष्ठकं। कृत्वा रूपं प्रयत्नेन पार्वत्यास्य हरस्य च। अथ ताम्रमये पात्रे प्रतिमां तत्र विन्यसेत्। श्वेतवस्त्र युगच्छन्नं श्वेतयज्ञोपवीतिनं। भाजनं च तिलैः पूर्णं कलशस्योपरिन्यसेत्। पार्वत्यास्तु युगंदद्यात्स्थापयित्वा विधानतः। वेदोक्तेन प्रतिष्ठा च कर्तव्या तु यथाविधि। पश्चाद्घृतेन स्नपनं कृत्वा देवस्य चोत्तम। स्नानं च कारयेत्पश्चात्ततःपूजां समारभेत्। चन्दनेन सुगन्धेन सपुष्पैश्च प्रपूजयेत्। धूपञ्च कल्पयेद्गन्धं चन्दनागरुसंयुतं। नानाप्रकारनैवेद्यं तथा दीपञ्च कारयेत्। अर्चयेत् पूजयेद्भक्त्या गन्धपुष्पैः फलाक्षतैः आवाहनादि कर्तव्यं पुराणागमसम्भवैः। कार्याविधानतः पूजा भक्तिश्रद्धासमन्वितः। देवदेव समागच्छ प्रार्थयेऽहं जगत्पते। इमां मया कृतां पूजां गृहाण सुरसत्तम। एवंपूजा प्रकर्तव्याराचौ जागरणं ततः। गीतनृत्यादिसंयुक्ता कथा पुस्तकवाचनं। अर्चयेत्पूर्ववद्देवं पश्चाद्धोमञ्च कारयेत्। स्वगृह्योक्तविधानेन कृत्वाग्निस्थापनन्ततः। प्रारभेच्च ततोहोमं नवग्रहपुरःसरं। तिलांश्च यवसंमिश्रानाज्येन च परिप्लुतान्। सङ्कर्षणेति पर्यन्तान् कृत्वाविधिवदाचरेत् एवं समाप्य होमन्तु तत्राचार्यं प्रपूजयेत्। अर्घं पुष्पप्रदानैश्च वस्त्रालङ्कारभूषणैः। शक्त्यासदक्षिणां कुर्यात्प्रकारैर्गोधिकान्विता। धेनुं सदक्षिणां दत्वा सुशीलाञ्च पयस्विनीं। सुवर्णशृङ्गीं रौप्यखुरीं कांस्यदोहनसंयुतां। रत्नपुच्छां वस्त्रयुतां ताम्रपृष्ठीमलंकृतां। सवत्सामव्रणां भद्रां धेनुन्दद्यात्प्रयत्नतः। सुवर्णेन च संयुक्तामाचार्यायच साधवे। षोडशभिः प्रकारैश्च पक्वान्नैः प्रीणयेत्सदा। षोडशप्रमितैर्दद्याद्ब्राह्मणेषु प्रयत्नतः। वंशपात्रस्थितैः पश्चात्पक्वान्नं वा

॥ व्र ॥ वस्त्रैः शुभैः अन्येभ्यो ब्राह्मणेभ्यश्च दक्षिणाश्च प्रयत्नतः। प्रयत्नपरयाभक्त्या प्रदद्याद्वित्तसारतः। बंधुभिः सह भुंजीत नियतश्च परेऽहनि। एवं कृत्वा भ...
२० परिपूर्णं व्रतीयतः। इति श्रीभविष्योत्तरपुराणे स्वर्ण गौरी उद्यापनं समाप्तं ॥ अथ कथा ॥ पुराकैलासशिखरे सिद्धगन्धर्वसेविते। उमया सहितः स्कन्दः
पप्रच्छ शिवमव्ययं। स्कन्द उवाच ॥ करुणासागरेशान लोकानां हितकाम्यया। व्रतं कथय देवेश पुत्रपौत्रप्रवर्धनं ॥ श्रीशङ्कर उवाच ॥ साधु पृ-
महाभाग कथयामि षडानन। स्वर्णगौरीव्रतं नाम सर्वसंपत्करं नृणां। पुरासरस्वतीतीरे विमलाख्या महापुरी। तत्रचन्द्रप्रभो नाम राजाभूद्वनदोपमः।
तस्य स्त्री रूपलावण्य सौन्दर्यसरविभ्रमा। महादेवी विशालाख्ये भार्ये वालमृगेक्षणे। तयोः प्रियतरा ज्येष्ठा तस्यासीत् नृपतेर्मता। स कदाचिद्वनं भेजे
मृगयासक्तमानसः। तत्र शार्दूलवाराहवनमाहिष कुञ्जरान्। हत्वा बभ्राम तृष्णार्त्तः संरस्तुविपिने महत्। चकोरचक्रकारण्ड पुण्डरीक शताकुलं।
उत्फुल्लहंसकोद्दाम कुमुदोत्पल मण्डितं। अपूर्वमवनीशोऽसौ ददर्शाप्सरसांसरः। समासाद्य सरस्तीरं पीत्वाजलमनुत्तमं। भक्त्या गौरीमर्चयन्तं ददर्शाप्सर
सांगणं। किमेतदिति पप्रच्छ राजा राजीवलोचनः। स्वर्णगौरी व्रतमिदं क्रियतेऽस्माभिरुत्तमं। सर्वसंपत्करं नृणां तत्कुरुष्व नृपोत्तम। राजोवाच ॥
विधानं कीदृशं ब्रूत किंफलं विस्तरान्मम। तावूचुर्योषितः सर्वानभोमासि तृतीयके। प्रारब्धव्यं व्रतमिदं गौर्याःषोडशवत्सरान्। तच्छ्रुत्वा सोपिजग्राह
व्रतं नियत मानसः। गुणैःषोडश संयुक्तं दोरकन्दक्षिणे करे। ववंधानेन मन्त्रेण करिष्येहं व्रतं तव। ततःकृत्वा व्रतं देव्या मदिरामदमत्तमः। प्रधृत
दोरकं हस्ते दृष्ट्वाचपतिकोपना। त्रोटित्वा साच चिक्षेप वाह्यशुष्कतरूपरि। न कर्त्तव्यं न कर्त्तव्य मितिराज्ञि वदत्यपि। तेन संस्पृष्टमात्रेण तरुःपल्लवतां
गतः। तद्वितीया ततोदृष्ट्वा विस्मयाकुलिताभवत्। तन्मूलेदोरकंछिन्नं गृहीत्वा सावबंधह। ततस्तद्व्रतमाहात्म्यात्पतिप्रियतरा भवत्। देवी व्रताप
चारेण सात्यक्ता दुःखितावने। प्रययौ सा महादेवीं ध्यायन्तीशसमन्विता। मुनीनामाश्रमे पुण्ये निवसन्ती सती क्वचित्। निवारिता मुनिवरैर्गच्छ २०
पापे यथा सुखं धावती विपिनं घोरं गणाध्यक्षं ददर्शह। तेन दृष्टापि सा गौरीं द्रष्ट्वाम्यहमुपोषिता ततोददर्शाग्रतकं गच्छन्ती च सरोवरं। ततोवन

श्रियं चाग्रे सर्वाभरणभूषितां पश्यन्ती शनकैस्तदङ्गजन्ती चैवमानुषी। तैस्तैर्निराकृता दृष्टानि विसानि विषसादह। ततस्तत्कृपया गौरी प्रादुरासीन्महासती। तां दृष्ट्वा दण्डवद्भूमौ नत्वा स्तुत्वा नृपप्रिया। जय देवि नमस्तुभ्यं जय भक्त वर प्रदे। जय शंकरवामाङ्गे मङ्गले सर्वमङ्गले। ततो वध्वावरं भक्त्या गौरीमभ्यर्च्य सद्व्रतं। चक्रे देवि पदं तस्य ददौ सौभाग्य सम्पदः। इति तस्याः प्रसादेन सर्वान् भोगान वाप्य च। अन्ते शिवपुरं प्राप्तः कान्ताभिः सहितो नृपः। यः शोभनं व्रत मिदं कथितं शिवेन कुर्यान्मम प्रियतरो भविता च गौर्याः। प्राप्य श्रियं समधिकं शुचि शत्रुसंघं निर्जित्य निर्मल पदं सहसा प्रयाति॥ ॥ इति श्रीस्कांदपुराणे गौरी खण्डे स्वर्णगौरी व्रतं सम्पूर्णं॥ ॥ अथ भाद्रशुक्लतृतीयायां शिष्टपरिगृहीतं हरितालिका व्रतं॥ ॥ तच्च परविद्धायां कार्यं। मुहूर्त्तमात्र सत्त्वेपि दिने गौरी व्रतं पर इति माधवोक्तेः। तच्च तृतीयामुहूर्त्तमात्र सत्त्वेपि परैव ग्राह्या शिष्टाचारात् मुहूर्त्त मात्र सत्त्वेपि दिने गौरीव्रतं परे शुद्धाधिकायामप्येवं गणयोग प्रशंसनादिति माधवः युक्तन्तु विद्धाधिकायामिव शुद्धाधिकायामपि परा प्रायकप्रमाणा भावात् सम्पूर्णत्वेन द्वितीयायुतनिषेधा प्रवृत्तेः पूर्वैव अतएव कलाकाष्ठापि वा चैव द्वितीया सम्प्रदृश्यते सा तृतीया न कर्त्तव्या गणसंयुतेति स्कान्दे सेति तच्छब्देन पूर्वोक्तद्वितीयायोग निवृत्ति पूर्वक एव चतुर्थी युतावाविधिः संगच्छते एवं चतुर्थी सहिता यातु सा तृतीया फलप्रदेत्यापस्तम्बीय मप्येतत्परमेव एतच्छ्रुतिमूलकल्पना लाघवात् द्वितीया युतानधिकातु सर्वथापि निषेधे द्वितीयायुतैव कार्य्या गुणानुरोधेन प्रधान लोपस्यान्यथात्वात् अग्निहोत्रहवनालाभे निर्वापस्येव एकदशी तृतीया वा षष्ठीचैव तथ व्रतविधिः।' मासपक्षाद्युल्लिख्य मम समस्तपापक्षय पूर्वक सप्त जन्म राज्यसौभाग्यादि विवृद्धये उमामहेश्वर सायुज्यतासिद्ध्यर्थं हरितालिका व्रतं करिष्ये। तदादौ गौरी युक्तमहेश्वरं पूजयिष्ये। अथ ध्यानं। पीतकौशेयवसनां हेमाभां कमलासनां। भक्तानां वरदां नित्यं पार्वतीं चिन्तयाम्यहं। मन्दार माला कुलितालकायै कपालमालांकित शेखराय। दिव्याम्बरायै च दिगम्बराय नमः। शिवायै च नमः शिवाय॥ इति ध्यानं। देवि देवि समागच्छ प्रार्थयेहं जगन्मये। इमां मया कृतां पूजां गृहाण सुरसत्तमे। शिवगौरीभ्यां नमः। आवाहनं॥ भवानी त्वं महादेवी सर्वसौभाग्य दायिके। अनेकरत्नसंयुक्त

॥ व्र ॥ मासनं प्रतिगृह्यतां । आसन । सुचारुशीतलं दिव्यं नाना गन्ध समन्वितं । गृहाण देवि देवेशि महादेवि नमोस्तुते । पाद्यं ॥ श्रीपार्वति महाभागे
२१ शङ्कर प्रियवादिनि । अर्घ्यं गृहाणकल्याणि भर्तासहपतिव्रते ॥ अर्घ्यं ॥ गङ्गाजलं समानीतं सुवर्ण कलशेस्थितं । आचम्यतां महाभागे रुद्रेण सहिते
नघे ॥ आचमनीयं ॥ गङ्गासरस्वतीरेवा कावेरी नर्मदा जलैः । स्नापितासि मया देवि तथा शान्तिं प्रयच्छमे । स्नानं ॥ उक्तमन्त्रैः पञ्चामृत स्नापनं ।
आप्यायस्वेतिपयसा । दधिक्राव्ण इति दध्ना । घृतंमिमिक्ष इति घृतेन । मधुवातेति मधुना । स्वादुःपव स्वेतिशर्करया ॥ इति पञ्चामृतं । आपोहिष्ठेति
शुद्धोदकेन चारुणैः स्नानं । हरिद्रा सुगन्ध द्रव्यै रुद्वर्त्तनञ्च । पुनराचमनं । सर्वसत्वाधिके रम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी
प्रतिगृह्यतां । वस्त्रं ॥ कर्पूरागरुसंमिष्टं कुङ्कुममादि समन्वितं । कस्तूरिकासमायुक्तं चन्दनं प्रतिगृह्यतां । गन्धं । रञ्जिताः कुसुमौघेन अक्षतास्थाति
शोभनाः । ममैषां देवि दानेन प्रसन्नाभवपार्वति । अक्षताः । सन्मल्लिका वकुलचम्पक पाटलाब्ज पुन्नागजाति करवीररसालपुष्पैः । विल्व प्रवाल
तुलसी दल मालतीभिस्त्वांपूजयामिजगदीश्वरि मे प्रसीद ॥ पुष्पाणि । देवद्रुमरसोद्भूतः कृष्णागरु समन्वितः ॥ आनीतोयं मयाधूपो भवानिप्रतिगृह्यतां ।
धूपं । त्वंज्योतिः सर्वदेवानां तेजसांतेज उत्तमं । आत्मज्योतिः परंधामदीपोयं प्रतिगृह्यतां । दीपं । अन्नंच विविधं स्वादुरसैः षड्भिःसमन्वितं ।
भक्ष्यभोज्य समायुक्तं नैवेद्यं प्रतिगृह्यतां । नैवेद्यं । पुनराचमनीयं ॥ मलयाचल सम्भूतं कर्पूरेण समन्वितं । करोद्वर्तनकञ्चारुगृह्यतां जगतःपते ।
करोद्वर्तनं ॥ इदं फलमितिफलं । कर्पूरैलालवंगादि ताम्बूली दलसंयुतं । क्रमुकस्य फलंचैव ताम्बूलं प्रतिगृह्यतां । तांबूलं हिरण्य गर्भेति दक्षिणा ।
वज्रमाणिक्यवैदूर्यमुक्ता विद्रुममंडितं । पुष्परागसमायुक्तं काञ्चनं प्रतिगृह्यतां । सुवर्ण पुष्पम् । चन्द्रादित्यौचधरणी विद्युदग्निस्तथैवच । त्वमेवसर्वते
जांसि आर्त्तिक्यम् प्रतिगृह्यतां । नीराजनं । अथ नाम पूजा । उमायै नमः । गौर्यै नमः । पार्वत्यै नमः । जगद्धात्र्यै । जगत्प्रतिष्ठायै । शान्तिरूपिण्यै २१
हराय नमः । महेश्वराय शम्भवे शूलपाणये नमः । पिनाकधृषे शिवाय पशुपतये महादेवाय पुष्पाञ्जलिं यानिकानिच पापानि । जन्मान्तरकृतानिच ।

तानि सर्वाणि नश्यंति प्रदक्षिणपदे पदे प्रदक्षिणा। अन्यथा शरणं नास्तित्वमेव शरणं मम। तस्मात्कारुण्यभावेन रक्षरक्ष महेश्वरीति नमस्कारः॥ ततोवैणवपात्रस्थंवायनं दद्यात्। अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणं। वायनं गौरि विप्राय ददामि प्रीतये तव। सौभाग्यारोग्यकामानां सर्वसंपत्समृद्धये। गौरीगिरीशतुष्ट्यर्थं वायनन्ते ददाम्यहमिति मन्त्राभ्यां वायनं दद्यात्। अथ कथा। मन्दारमाला कुलितालकायै कपालमालाङ्कितशेखराय। दिव्याम्बरायैच दिगम्बराय नमः शिवायैच नमः शिवाय॥ कैलासशिखरे रम्ये गौरी पृच्छति शङ्करं। गुह्याद्गुह्यतरंगुह्यं कथयस्व महेश्वर। सर्वेषां धर्मसर्वस्वमल्पायासं महत्फलं। प्रसन्नोसि यदा नाथ तथ्यं ब्रूहि ममाग्रतः। केन त्वंहि मया प्राप्तस्तपोदान व्रतादिना। अनादि मध्यनिधनो भर्त्ताचैव जगत्प्रभुः॥ ईश्वर उवाच॥ शृणु देवि प्रवक्ष्यामि तवाग्रे व्रतमुत्तमं। यद्गोप्यं ममसर्वस्वं कथयामि तव प्रिये। यथा चोडु गणे चन्द्रोग्रहाणां भानुरेवच। वर्णानाञ्च यथा विप्रो देवानां विष्णुरुत्तमः। नदीषु च यथा गङ्गा पुराणानांतु भारतं। वेदानां च यथा साम इन्द्रियाणां मनो यथा। पुराणवेद सर्वस्वं आगमेन यथोदितं। एकाग्रेण शृणुष्वेतत् यथा दृष्टं पुरातनं। येन पुण्यप्रभावेण प्राप्तमर्धासनंमम। तत्सर्वं कथयिष्येहं त्वं मम प्रेयसीयतः। भाद्रे मासि सिते पक्षे तृतीया हस्तसोमयुक्। तदनुष्ठानमात्रेण सर्वपापैः प्रमुच्यते। शृणु देवि त्वया पूर्वं यद्व्रतंचरितं महत्। तत्सर्वं कथयिष्यामि यथा वृत्तं हिमाचले॥ पार्वत्युवाच॥ कथं कृतं मया नाथ व्रतानामुत्तमं व्रतं। तत्सर्वं श्रोतुमिच्छामि त्वत्सकाशान्महेश्वर॥ ईश्वरउवाच॥ आसीत्तत्र महादिव्यो हिमवान्नाम उत्तमः। नाना भूमि समाकीर्णो नाना द्रुमसमाकुलः। नाना पक्षिसमायुक्तो नाना मृगविचित्रितः। यत्रदेवाः सगन्धर्वाः सिद्धचारणगुह्यकाः। विचरन्ति यथा देवि गन्धर्वध्वनिसङ्कुलं। स्फाटिकैः काञ्चनैः शृङ्गैर्मणिवैडूर्य भूषितैः। भुजैर्लिखन्निवाकाशं सुहृदो मन्दिरं यथा। हिमेन वर्धितो नित्यं गङ्गाध्वनिविनादितः। पार्वति त्वं तत्रबाल्येपरमंचाचरत्तपः। अब्दद्वादशकं देवि धूम्रपानमधोमुखी। सम्वत्सरं चतुःषष्ठि पक्वपर्णाशनं कृतं। दृष्ट्वातातेन तत्कष्टं चिन्तया दुःखितो भवत्। कस्मै देया मया कन्या एवं चिन्तातुरो भवत्। तदैवांबरतः प्राप्तो ब्रह्मपुत्रस्तुधर्मवित्। नारदो मुनि

॥ श्र ॥ शार्दूलः शैलमुख्योदिदृक्षया । दत्वार्घ्यं विष्टरम्पाद्यं नारदायोक्तवान् गिरः । शैलउवाच ॥ किमर्थमागमः स्वामिन् वदस्व मुनिसत्तम । मद्भाग्येन संप्राप्तं
॥ २२ ॥ त्वदागमनमुत्तमं ॥ नारदउवाच ॥ शृणुशैलेन्द्रमेवाक्यं विष्णुनाप्रेषितोस्म्यहं । योग्यंयोग्याय दातव्यं कन्यारत्नमिदं त्वया । वासुदेवसमो नास्ति ब्रह्मविष्णु
शिवादिषु । तस्मैदेया त्वया कन्या ममार्थे संमतं मम ॥ गिरिरुवाच ॥ वासुदेवः स्वयंदेवः कन्यां प्रार्थयते यदि । तदा मया प्रदातव्या त्वदागमनगौरवात् ।
इत्येवं गदितं श्रुत्वा तस्य त्वन्तर्दधे मुनिः । ययौ पीतांवरधरं शङ्खचक्रगदाधरं । कृताञ्जलिपुटो भूत्वा मुनीन्द्रस्तमभाषत ॥ नारदउवाच ॥ शृणुदेव भव-
त्कार्यं विवाहो निश्चितस्तव । हिमवांस्तुतदा गौरीमुवाच वचनं मुदा । दत्तासि त्वं मया पुत्रि देवाय गरुड़ध्वजे । श्रुत्वा वाक्यं पितुर्देवी सखीभिः सहिता
वने । सिंह व्याघ्र मृगैर्व्याप्ते तत्रसुप्तासि निर्जने । सख्युवाच ॥ किमर्थं दुःखिता देवि कथयस्व ममाग्रतः । यतो भवत्यभिहितं करिष्येहं न संशयः ॥
पार्वत्युवाच ॥ सखिप्रिये शृणुत्वद्यमनोभिलषितं मम । कपर्दिनंच भर्तारं करिष्येहं न संशयः । एतन्मेचिंततं कार्यं तातेन कृतमन्यथा । तस्माद्देहपरि
त्यागं करिष्येहं सखिप्रिये । पार्वत्या वचनं श्रुत्वा सखीवचनमब्रवीत् । पिता यत्र न जानाति गमिष्यामो हितद्वनं । इत्येवं संमतं कृत्वानीतासि त्वं महद्वनं
पिता निरीक्षयामास हिमवांस्तु गृहे गृहे । केन नीतासि मे पुत्रि देवदानवकिंन्नरैः । नारदाय कृतं सत्यं किंदास्ये गरुड़ध्वजं । इत्येवञ्चिंतयाविष्टो मू-
र्छितो निपपातह । हाहा कृत्वा प्रधावन्ति लोकास्ते गिरिपुङ्गवं । ऊचुर्गिरिवरं सर्वे मूर्च्छाहेतुं गिरे वद ॥ गिरिरुवाच ॥ दुःखस्य हेतुं शृणुत कन्यारत्नं
हृतंमम । दष्टा वा कालसर्पेण सिंह व्याघ्रेण वाहृता । न जानेक्वगता पुत्री केन दुष्टेन वाहृता । चकंपे शोकसंतप्तो वातेनेव महातरुः । गिरिर्वनाद्वनं
यावत्तदालोकनकारणात् । सिंहव्याघ्रैश्च भल्लूकैरहिभिः सहितं वनम् । त्वं चापि विपिने घोरे व्रजन्ती सखिभिः सह । तत्र दृष्ट्वा नदीरम्यां तत्तीरेच
महागुहां । तां प्रविश्य सखीसार्द्धमन्नभोगविवर्जिता । संस्थाप्य वालुकापिण्डं पार्वत्या सहितं मम । या तृतीया भाद्रपदे हस्तनक्षत्रसंयुता । तत्र २२
वार्चितयोतेन रात्रौ जागरणं कृतं । तेन व्रतप्रभावेण आसनं चलितं मम । संप्राप्तोहं तदा तत्र यत्र त्वं सखिभिःसह । प्रसन्नोस्मि मया प्रोक्तं वरं ब्रूहि

वरानने । पार्वत्युवाच ॥ यदि देव प्रसन्नोसि भर्त्ता भवतु मे हरः । तथेत्युक्त्वा तु तां देवीं कैलासं पुनरागतः । ततः प्रभाते संप्राप्ते नद्यां सर्वं विसर्जितं । पारणन्तु कृतं तत्र सख्यासार्द्धं त्वयाशुभं । हिमवानपि तं देशमाजगाम वनं घनं । चतुराशा निरीक्षंस्तु विह्वलः पतितः पुनः । दृष्टं तत्र नदीतीरे प्रसुप्तं कन्यकाद्वयं । उत्थाप्योत्संगमारोप्य रोदनं कृतवान् गिरिः । सिंह व्याघ्रादि भल्लूक वने दुष्टे कुतः स्थिता ॥ पार्वत्युवाच ॥ शृणु तात मया ज्ञातं त्वं दास्यसि शूलाय मां । तदन्यथा कृतं तात तेनाहं वनमागता । ददासि तात यदि मामीश्वराय तदा गृहं । आगमिष्यामि नैवं चेदिह स्थास्यामि निश्चितं । तथेत्युक्त्वा हिमवता नीतासि त्वं गृहं प्रति । पश्चाद्दत्ता त्वमस्माकं कृत्वा वैवाहिकीं क्रियां । तेन व्रतप्रभावेण सौभाग्यं साधितं त्वया । अद्यापि व्रतराजस्तु न कस्यापि निवेदितः । नामास्य व्रतराजस्य शृणु देवि यथा भवत् । आलिभिर्हरितायस्मादतः सा हरितालिका ॥ पार्वत्युवाच ॥ नामेदं कथितं तस्य विधिं वद मम प्रभो । किं पुण्यं किं फलं चास्य केनच क्रियते व्रतं ॥ ईश्वरउवाच ॥ शृणु देवि विधिं वक्ष्ये नारीणां व्रतमीदृशं । करिष्यसि प्रयत्नेन यदि सौभाग्यमिच्छसि । तोरणादि प्रकर्त्तव्यं कदलीस्तम्भमण्डितं । आच्छाद्य पट्टवस्त्रैस्तु नाना वर्णविचित्रितैः । चन्दनेन सुगन्धेन लेपयेद्गृहमण्डपं । शङ्खभेरीमृदङ्गैस्तु कारयेद्बहुनि-स्वनैः । नानामङ्गलगीतञ्च कर्त्तव्यं मम सद्मनि । स्थापयेद्वालुकालिङ्गं पार्वत्या सहितं मम । पूजयेद्बहुपुष्पैश्च गन्धधूपादिभिर्नवैः । नानाप्रकारैर्नैवेद्यैः पूजयेज्जागरञ्चरेत् । नारिकेलैः पूगफलैर्जंवीरैर्बकुलैस्तथा । वीजपूरैः सनारङ्गैः फलैरन्यैश्च भूरिशः । ऋतुकालोद्भवैर्भूरि प्रकारैः कन्दमूलकैः । धूपादि गन्धैश्च तथा मन्त्रेणानेन पूजयेत् । नमः शिवाय शांताय पञ्चवक्त्राय शूलिने । नन्दिभृङ्गिमहाकालगणयुक्ताय शम्भवे । शिवायै हरकांतायै प्रकृत्यै सृष्टिहेतवे । शिवायै सर्वमाङ्गल्यै शिवरूपे जगन्मये । शिवे कल्याणदे नित्यं शिवरूपे नमोस्तुते । शिवरूपे नमस्तुभ्यं शिवायै सततं नमः । नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमोनमः । संसारभयसंतापात् त्राहि मां सिंहवाहिनि । येन कामेन देवि त्वं पूजितासि महेश्वरि । राज्यं सौभाग्यसम्पत्तिं देहि मामंबपार्वति । मन्त्रेणानेन देवि त्वां पूजयित्वा ममासह । कथां श्रुत्वा विधानेन दद्यादन्नञ्च भूरिशः । ब्राह्मणेभ्यो यथा शक्त्या देयावस्त्रहिरण्यगाः । अन्येभ्यो दीयते भूरि

॥ व्र ॥ [illegible]दिकं। भर्त्तासह कथां श्रुत्वा भक्तियुक्तेन चेतसा। कृत्वाव्रतेश्वरं देवि सर्वपापैः प्रमुच्यते। सप्तजन्म भवेद्राज्यं सौभाग्यं चैववर्द्धते। तृतीया-
॥ २३ ॥ यां तु [illegible] कुरुते यदि। सप्तजन्मभवेद्वन्ध्या वैधव्यं जन्मजन्मनि। दारिद्र्यं पुत्रशोकञ्च कर्कशादुःखभागिनी। पच्यते नरके घोरे नोपवासं करो-
ति या। राजते कांचने ताम्रे वैणवे वाथ मृन्मये। भाजनेविन्यसेदन्नं सवस्त्रं फलदक्षिणं। वायनं द्विजवर्याय दद्यादन्तेच पारणं। एवं विधिं या कुरुतेच
नारी त्वया समाना रमते स्वभर्त्रा। भोगाननेकान्भुविभुज्यमानासायुज्यमंते लभलते हरेण। अश्वमेधसहस्राणि वाजपेयशतानिच। कथा श्रवणमात्रेण त
त्फलं प्राप्यतेनरैः। एतत्ते कथितं देवि तवाग्रे व्रतमुत्तमं। कोटियज्ञ कृतं पुण्यमस्यानुष्ठानमात्रतः॥ ॥ इति भविष्योत्तर पुराणे हरितालिकाव्रतं॥ अथोद्या-
पनं पार्वत्युवाच॥ उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर। भक्तितःश्रोतुमिच्छामि व्रतसम्पूर्त्तिहेतवे॥ श्रीमहादेव उवाच॥ उद्यापनविधिं वक्ष्ये व्रतराज
सुशोभने। यस्यानुष्ठानमात्रेण सम्पूर्णंहि व्रतं भवेत्। चतुस्तंभं चतुर्द्वारं कदलीस्तंभमण्डितं। घंटिकाचामरयुतं कमलैरुपशोभितं। चन्दनागरुकर्पूरैर्लेपितं
मण्डपं शुभं। मध्ये वितानंबध्नीयात् पञ्चवर्णैरलङ्कृतं। तन्मध्ये कारयेत्पद्मं पञ्चवर्णैः सुशोभनैः। तस्योपरिन्यसेद्व्रीहीन्द्रोणेन परिसम्मितान् सौवर्णं राजतं
ताम्रं कलशं विन्यसेद्बुधः। पञ्चरत्नानि निक्षिप्य सर्वौषधिसमन्वितं। तस्योपरिन्यसेत्पात्रं सौवर्णं राजतं शिवा। वृषारूढंमहादेवं रजतेन विनिर्मितं।
सर्वाऽवयवसंयुक्तां गौरीं हेम्नाविनिर्मितां। पूजयेत्तत्र गन्धाद्यैः पुष्पैर्नानाविधैः शुभैः। रात्रौ जागरणं कुर्यात्कथावाचनपूर्वकं। ततः प्रभाते विमले कृत्वा
स्नानादि कर्मच। पूर्ववत्पार्चयेद्देवं पश्चाद्धोमंचकारयेत्। स्वगृह्योक्तेन विधिना कृत्वाग्निस्थापनं ततः। प्रारभेच्च ततो होमं नवग्रहपुरःसरं तिलांश्च
यवसमिश्रानाज्येनच परिप्लुतान्। जुहुयाद्रुद्रमन्त्रेण गौरीमन्त्रेण वेदवित्। अष्टोत्तरशतवापि अष्टाविंशतिमेववा। एवं समाप्यहोमन्तु तथाचार्यं
प्रपूजयेत्। सुवर्णरत्नवासोभिर्गांच दद्याद्यथा विधि। शय्यांसोपस्करां दद्यादाचार्याय प्रयत्नतः। षोडशद्विजयुग्मांश्च पक्वान्नाद्यैश्च भोजयेत्। सौभाग्य २३
द्रव्यवस्त्राणि वंशपात्राणि षोडश। दातव्यानि प्रयत्नेन ब्राह्मणेभ्यो यथा विधि। अन्येभ्यो विप्रवर्येभ्यो दक्षिणांच प्रयत्नतः। भूयसीं परया भक्त्या प्रदद्या

च्छिव तुष्टये। उद्दिश्य पार्वतीश्चैव सर्वं कुर्यादतन्द्रितः। बंधुभिः सह भुंजीत नियतश्च परेऽहनि। एवं या कुरुते नारी व्रतराजं सुमध्यमे। सौभाग्य मखिलं तस्याः सप्तजन्म न संशयः॥ इति श्रीभविष्योत्तरपुराणे तृतीयोद्यापनं॥ इति श्रीभट्टनीलकण्ठात्मज भट्टशंकर कृतौ व्रतार्केद्यापन हरितालिका तृतीया-व्रतं॥ अथ हस्तर्क्षगतश्रावार प्राप्तं हस्त गौरीव्रतं। सूतउवाच। कुन्त्यां च तदुपेतायां हस्तिनापुरमुत्तमं। मानितायानरेन्द्रैश्च तनयैः पञ्चभिस्तथा। तस्याः कुशलमन्विच्छन्नाजगामाथ माधवः। अभिनन्द्य सुखासीनं देवदेवं जनार्दनं। उवाच कुन्तीसानन्दाश्रुप्रगल्भमिदं वचः। कुन्त्युवाच धन्यास्मि कृतकृत्यास्मि सनाथास्मि परन्तप। साहं सम्भाविताद्यास्मि त्वया सर्वं जगद्गुरो। यदि मे सुप्रसन्नोसि तदा चक्ष्वव्रतं विभो। यद्विधाय सुखं राज्यं प्राप्नुया-त्तनयैः सह। श्रीकृष्ण उवाच कुन्ति ते कथयिष्यामि व्रतानामुत्तमं व्रतं। यत्कृत्वा सुखसन्तानं धनधान्यसमन्वितं। विधूतदुष्कृतापुण्या सपुत्राराज्यमा प्स्यसि। हस्तगौरीव्रतं भद्रे कुरुष्व शुचिमानसा। यत्कृत्वा सर्वतःसम्यग्लभते वाञ्छितं फलं। कुंत्युवाच यच्चोक्तन्ते व्रतं नाथ विधानं तस्य कीदृशं। केन पूर्वंकृतंदेव तन्मे ब्रूहि जनार्दन। श्रीकृष्ण उवाच कैलासशिखरे देवि हस्तस्थेच दिवाकरे। दिवाप्रसुप्तागौरीतु हरसन्निधिमागता। सा सुप्तादेवदेवेशं स्वप्नेशम्भुं ददर्शह। अर्धदेहं वृषार्धस्थमर्द्धचन्द्रकलाधरं। किमिदं तन्ममाचक्ष्वतप्यते मानसं मम। ईश्वर उवाच देवि पूर्वं निषिद्धासि हस्तर्क्षगतेरवौ। नसुप्तव्यं दिवातच तस्येदं विहितं फलं। शृणुदेवि त्वया येन खण्डितोहं विलोकितः। त्वयारब्धं व्रतं देविमदाराधनकाम्यया। अपूर्णेस्मिन् प्रसन्नोस्मि तत्त्वया च समुज्झितं। अपूर्ण व्रतया नेन दृष्टोहं तादृशस्त्वया। तत्कुरुष्वाधुना देवि हस्तगौरी व्रतं शुभं। पार्वत्युवाच। आदिश्यतां व्रतं नाथ विधानेन महेश्वर। आरम्भोस्य कदाकार्यः कोविधिः कस्य पूजनं। ईश्वर उवाच मण्डपेस्थापनं कुर्यात्सर्वालङ्कार भूषितं। अन्वहं काञ्चनैः पुष्पैः फलमुक्तान्वि तैः शुभैः। नैवेद्यैः पञ्चशाखैश्च शृणुयात्प्रत्यहं कथां। दिने चतुर्दशे प्राप्ते स्थापयेत्प्रतिमां शुभां। पक्वान्नैः पूरितैः शुभ्रैः सार्धं सार्धं त्रयोदश। सार्धं त्रयो दशदिने नैवेद्यमुपकल्पयेत्। फलमूलानि चान्यानि तावन्तिसमुपाहरेत्। पूजयेच्च सुवर्णस्य पुष्पैस्तान्यैः सुगन्धिभिः। चन्दनै धूपदीपैश्च ताम्बूलैश्च फला

॥ व्र ॥ दिभिः । स्नापयेच्च कुष्टकैर्गौरीं हरं हेमसंयुतां । दक्षिणां च ततो दत्त्वा नत्वा देवीं विसर्जयेत् । सार्धत्रयोदश तथादीपकाश्चोचिकान्विताः । सुवा
॥ २४ ॥ सिन्यै निवेद्यत्वा तावतः स्वयमाचरेत् ॥ व्रतं समाचरेद्देवि यावद्वर्षत्रयोदशं । स्वर्णमात्रनगौर्यादि प्रतिवर्षं विसर्जयेत् । ततश्चतुर्दशे वर्षे तदुद्यापनमा-
चरेत् । संस्थाप्य मण्डपे गौरीं काञ्चनीं काञ्चने गजे । पूर्वोक्तविधिना पूज्य वासराणि त्रयोदश । चतुर्दशेऽथ दिवसे संजाते प्रातरुत्थिता । कृत्वोपवास
नियमं गजे गौरीं प्रपूजयेत् । पक्वान्नं स्वर्णपात्रेषु त्रयोदशसु विक्षिपेत् । स्त्रीभ्यश्च कंचुकीर्दत्त्वा भोजयित्वा विसर्जयेत् । एवं देवि व्रतं कृत्वा सर्वान् का-
मानवाप्नुयात् । पश्चात्तु सदा कार्या प्रतिमा मृत्तिकामयी । पात्राणि वैणवान्येव पीतपुष्पाणि चैव हि ॥ श्रीकृष्ण उवाच ॥ ततश्चक्रे व्रतं गौरी प्राप्ता
वाञ्छितं फलं । त्वमप्येतद्व्रतं कुन्ति कुरु श्रद्धासमन्विता । अथ भक्त्या व्रतं कुन्ती सविधानं तदा करोत् । गन्धारीचापि तच्छ्रुत्वा व्रतं चक्रे यथाविधि
तुष्टाव भक्तिभावेन तुष्टा गौरी ततोऽब्रवीत् ॥ पार्वत्युवाच । कुन्ति ते परितुष्टास्मि वरं वरय सुव्रते ॥ कुंत्युवाच ॥ देहि मे सर्वसम्पत्तिं सर्वसौख्यं म-
होदयं । प्रयच्छ मम पुत्राणां महद्राज्यमनामयं । व्रतमेतत्तु यः कुर्यात्तल्लोकमवाप्स्यति । न दारिद्र्यं न वैधव्यं न शोको नापि दुष्कृतं । कष्टतापं च तं
देवि कदाचिन्न भविष्यति । तथेत्युक्त्वा ततो गौरी तत्रैवान्तरधीयत । एतद्व्रतं सकलदुःख विनाशहेतुं सौभाग्यराज्यफलभावनयाचरन्ति । या योषितः
सुखमनन्तमिहापि पूज्य गौरीपतिं पतिरतास्तु ततो लभन्ते ॥ इति भविष्योत्तरे हस्तगौरीव्रतं ॥ अथ भाद्रशुक्लतृतीयायां कोटीश्वरीव्रतं ॥ मदनरत्ने
स्कान्दे । रम्भोवाच ॥ देवलोके महादेवि गणिकासौख्य संयुता । मर्त्यलोके तथा सर्वास्त्रियः सौभाग्यगर्विताः । कथं भाग्यञ्च भोगांश्च लभन्ते परमे-
श्वरि । पार्वत्युवाच ॥ शृणु भद्रे परं गुह्यं सर्वकामफलप्रदं । दुर्भागानाञ्च नारीणां सौभाग्यकरणं परं । लक्षेश्वरीति विख्यातं ततः कोटीश्वरीव्रतं ।
तृतीया शुक्लपक्षे तु मासि भाद्रपदे भवेत् । तस्या व्रतं तु संग्राह्यं यावद्वर्षचतुष्टयं । उपवासेन कर्त्तव्यं वर्षे वर्षे तु सुन्दरि । अक्षतानां तण्डुलानां २१
तिलानां च सुलोचने । लक्षमेकं विनिश्चाय क्षिपेत्पयसि शोभने घोर सम्मिश्रितैः कार्या देव्या मूर्त्तिः सुलोचना । कृत्वा तु पुष्पप्राकारं पुष्पमालाभि

मण्डितं। संस्थाप्य पार्वतीं देवीं पूजयेद्भक्ति शक्तितः। पूजयेद्विविधैः पुष्पैः कुङ्कुमागरुचन्दनैः। गन्धैर्धूपैश्च नैवेद्यैः फलैश्च विविधैस्तथा। वस्त्रेणैव रक्तेन पूजयेत्परमेश्वरीं। नमोनमस्ते देवेशि लक्षेश्वरि नमोऽस्तुते। कोटीश्वरि नमस्तुभ्यं नमस्ते हरवल्लभे। उमादेवि नमस्तुभ्यं कात्यायनि नमोऽस्तुते। नमः कालिमहाकालि शिवदुर्गे नमोऽस्तुते। नमः सर्वाणि रुद्राणि अपर्णे शङ्करप्रिये। सर्वभूतहितेदेवि चाहि संसारसागरात्। पूजामन्त्रः नमो लक्षेश्वरी देवि कोटीश्वरि नमोऽस्तुते। गृहाणार्घं मयादत्तं शङ्करेण समं मम। अर्घमन्त्रः पुराव्रतमिदं भद्रे रुद्राण्या यत्कृतं शुभं। सत्यया ब्रह्मसाविचा अरुन्धत्याकृतं पुरा। दमयन्त्या च रोहिण्या कृतं व्रतवरं शुभे। गौरिणीभिर्जयेच्छन्त्या इत्याचचे सदोचितः। एवम्विध विधानेन करोति नियत व्रतं। न तस्यस्याच दारिद्र्यं नच दुष्टवियोजनं। अष्टपुत्रा भवेन्नारी भर्त्तारञ्च गुणाधिकं। सुरूपं गुणिनं कान्तं पण्डितं प्रियदर्शनं। ईश्वरञ्चैव राजानं लभेद्दीर्घायुषं प्रियं। दातारं चैव भोक्तारं समस्तजनवल्लभं। सुशीलं धार्मिकं शूरं चन्द्रवत् प्रियदर्शनं। सुरूपा सुभगाचैव सदा पत्युः प्रिया भवेत्। सहपत्या वरारोहा कुरुते राज्यमुत्तमं। अन्तकाले समंतेन मोदते चिदिवे तथा। षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च। इदं कृत्वा पुरे शाची इन्द्रंलेभे पतिं शुभं। रोहिणी पतिमालेभे चन्द्रं व्रतनिषेवणात्। राणादेवी सुभर्तारमादित्यं प्राप्यसत्पतिं। इदं ते कथितं भद्रे व्रतं कोटीश्वरीपरं। लक्षेश्वरीति विख्यातं कुरुरम्भे मनोहरं॥ इति कोटीश्वरीव्रतं॥ अथाश्विनकृष्णतृतीयायां हरद्गौरी व्रतं। तच पूजा चतुर्भुजां सुवर्णाभां नानालङ्कारभूषितां। हिमेन्दुतुहिनाभासां मुक्तामणिविभूषितां। पाशाङ्कुशधरांदेवीं ध्यायेत् सर्वार्थसिद्धिदां। कमण्डलुधरां सूक्ष्मां पानपात्रञ्च विभ्रतीं। ध्यानं। एहिमातर्विशुद्धेत्वं चिगुणे परमेश्वरि। आवाहयामि भक्त्या त्वां प्रसन्ना भव सर्वदा॥ आवाहनं॥ महादेव प्रियेदेवि भक्तानन्द विधायिनि। हेमरत्न कृतं देवि आसनन्ते विनिर्मितं। पाशांकुशधरां देवीमासनेस्थापयाम्यहं। आसनं। अक्षमालांकुशधरे वीणापुस्तकधारिणि। भक्त्या दत्तं मयातोयं पाद्यार्थं प्रतिगृह्यतां पाद्यं॥ अर्घं ददामि ते मातर्भक्तानामभयं करे। गृहाणत्वं हरद्गौरि नमस्कारस्तुते मम॥ अर्घं॥ भक्तानामिष्ट

॥ व्र ॥ हे मातः सर्वालङ्कारसंयुते। आचम्यतां जगन्मातर्हरिद्गौरि नमोऽस्तु ते ॥ आचमनं ॥ ततः पञ्चामृतस्नानं। स्नापयामि जगन्मातस्त्वां सुतीर्थजलेन वै।
॥ २५ ॥ प्रार्थितासि मया देवि सद्यस्तापविनाशिनि ॥ स्नानं ॥ वस्त्रधौतं मया देवि दुकूलं तवनिर्मितं। भक्त्या समर्पितं मातर्गृह्यतां जगदम्बिके। वस्त्रं ॥ अथ
सिन्दूरहरिद्रा कुङ्कुमादि सौभाग्य द्रव्याणि निवेदयेत्। मलयाचलजं शुद्धं घनसारं मनोहरं। गन्धं गृहाण देवि त्वं हरिद्गौरि नमोऽस्तु ते। गन्धं ॥ चंपका
दीनि पुष्पाणि भक्त्यानीतानि मे शुभे। पूजार्थं गृह्यतां देवि जातीपुन्नागमालतीः ॥ पुष्पं ॥ माल्यादीनि सुगन्धीनीति पुष्पं ॥ धूपोयं गृह्यतां देवि
कालागरु घृतान्वितः। आघ्रेयः सर्वदेवानां देवद्रुमरसोद्भवः। धूपः ॥ दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहं। वह्निनायोजितं मातर्हरिद्गौरि नमो
ऽस्तु ते। दीपः ॥ नैवेद्यं गृह्यतां देवि। इति नैवेद्यं। कर्पूरैला लवङ्गादि नागवल्लीदलैर्युतं। पूगीफलयुतं देवि ताम्बूलं प्रतिगृह्यतां ॥ ताम्बूलं। हिर
ण्यगर्भगर्भस्थमिति दक्षिणा। धारयिष्यामि भद्रे त्वां त्वद्भक्तात्वत्परायणा। आयुर्देहि यशो देहि सौभाग्यं देहि मे शिवे। दोरकबन्धनं। क्षेमसम्पत्करे
देवि सर्वसौभाग्यदायिनि। सर्वकार्यप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते। ततश्चन्द्रार्घ्यः। गगनान्तरसंदीप क्षीराब्धिमथनोद्भव। आभासितदिगन्तान्त
रमानुज नमोऽस्तु ते। गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन्। पक्वान्नं फलसंयुक्तमिति वायनं। आहूतासि मया देवि पूजितासि मया शुभे। मम
सौभाग्यदानाय यथेच्छा तत्र गम्यतां ॥ विसर्जनं ॥ इति पूजा ॥ अथ कथा ॥ विजयोवाच ॥ अथान्यद्धरितीगौरी व्रतं वक्ष्यामि कन्यके। मासि भाद्र
पदे पक्षे तृतीयायाञ्च तद्व्रतं। भाद्रोऽप्यदर्शान्तः चन्द्रोदयोत्तरं पूजाविधानात् कृष्णपक्षे पूजनानुष्ठानाचाराच्च। पक्षोऽत्र कृष्णः आनयेद्धरितीं गौरीं शाखा
मूलफलैः सह ॥ निक्षिप्य देवतावेद्यां दधन्तीं सिकतां शुभां। न्यसेच्चन्द्रोदयं दृष्ट्वा स्नात्वा धौतांबरावृता। सखीभिः सहिता सम्यगलङ्कृत्य प्रपूजयेत्।
गौरीमावाह्य विधिवत् सिकतामण्डले शुभे। गन्धपुष्पाक्षतैर्दिव्यैर्धूपैर्दीपैरनेकशः। सर्वोपचारैर्हरितीं पञ्चपञ्चभिरर्चयेत्। एवंपूज्य यथाशक्त्या कृत्वा चैव २५
प्रदक्षिणं। दोरकं बन्धयेत्पश्चात् तन्तुपञ्चकनिर्मितं। बध्नामि दोरकं भक्त्या हरितीत्वत्परायणा। आयुर्देहि यशो देहि सौभाग्यं देहि मे शुभे। अनेन

दोरकं बध्वा चन्द्रायार्घ्यञ्च निवेदयेत्। क्षेमसम्पत्करे देवि सर्वसौभाग्यदायिनि। सर्वकामप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते। गगणाङ्गण सन्दीपेति चन्द्रार्घ्यं। कथामेतां च शृणुयाद्गौर्यग्रे तन्मनाः सदा। ततो गोधूमचूर्णेन पञ्चभिः कुडवैर्मितं। पक्वान्नमर्धं विप्राय दत्वा भुञ्जीत च स्वयं। एवं वै पञ्चवर्षाणि कृत्वा व्रतमनुत्तमं। सर्वान् कामानवाप्नोति नात्र कार्य्या विचारणा। कन्योवाच॥ केन चादौ पुराचीर्णं व्रतं यत्तु त्वयोदितं। ईप्सितं कोऽपि लेभे वा व्रतस्यास्य प्रभावतः। विजयोवाच॥ शृणु कन्ये यथापूर्वं पार्वत्या कथितं यथा॥ सूत उवाच॥ शृणुध्वमृषयः सर्वे नैमिषारण्यवासिनः। पुराकृतयुगस्यादौ सर्वभूतहितैषिणा। शम्भुना कथितं गौर्यै तद्व्रतं कथयाम्यहं। कदाचिदुपविष्टन्तं पार्वती पर्यपृच्छत। शम्भो त्वां प्रष्टुमिच्छामि करुणाकर शङ्कर॥ सर्वबाधोपशमनं सर्वकामफलप्रदं। *व्रतानां सर्वदानानामुत्तमं ब्रूहि तत्वतः। आयुरारोग्यदं देव पुत्रपौत्रप्रदायकं तद्व्रतं ब्रूहि देवेश यद्यहं तव वल्लभा॥ ईश्वर उवाच। शृणु देवि परं गुह्यं व्रतं परमदुर्लभं। पुराभूद्द्वापरस्यान्ते पाण्डोः प्रियवराङ्गना। वर्षषोडश सम्पूर्णा सम्पन्ननवयौवना। अनपत्या तु सा कुन्ती भर्त्तारमिदमब्रवीत्। केन कर्मविपाकेन पुत्रहीनास्मि दुःखिता। अनपत्यप्रतीकारमिदानीं ब्रूहि तत्वतः॥ पांडु उवाच॥ ऋषिशापोऽस्ति मे भद्रे यतस्तेन भविष्यति। भर्त्तुस्तद्वचनं श्रुत्वा पितृगेहेऽभ्यगात्स्वयं। पितुर्गेहे वर्त्तमाना कुन्ती व्यासं ददर्श ह। नमस्कृत्य च तं प्राह कुन्ती मुकुलिताञ्जलिः॥ कुंन्त्युवाच॥ तात मे कथयाशु त्वं पुत्रसन्तान दायकं। सर्वसम्पत् प्रदं नृणां व्रतमेकं महामुने॥ व्यास उवाच॥ शृणु त्वं हरितालिगौर्या व्रतं सन्तान दायकं। भाद्रकृष्णतृतीयायां निशिचन्द्रोदये शुभे। स्नानं कृत्वा तु विधिवन्मौनी भूत्वा व्रतं चरेत्। सर्वसम्पत्करं स्त्रीणां धनपुत्रान्नसौख्यकृत्। भूहिरण्यादिदानानां सर्वेषामधिकं व्रतं। पञ्चवर्षं विधातव्यं तत उद्यापनं चरेत्। उद्यापनविधानेन सम्पूर्णं फलमश्नुते। अन्ते तु कारयेद्भद्रे सौवर्णं हरितालिफलं। षष्ट्युत्तरचतुर्भिस्च शुभैर्बीजैर्युतं तु तत्। देव्याः पुरस्तु संस्थाप्य पूर्ववत्प्रति पूजयेत्। आचार्यं पूजयेद्भक्त्या विप्रान् पञ्च तथैव च। सुवासिन्यः पञ्च पूज्या वस्त्रालङ्कारभूषणैः कञ्चुकैश्चैव ताटङ्कैः कण्ठसूत्रैर्हरिप्रिया। वंशपात्राणि युग्मानि सूत्रैः संवेष्टितानि च। सिन्दूरं जीरकं चैव सौभाग्यद्रव्यसंयुतं। गोधूमपि

सुस्नातं च तृतीयकवसंचकं वायनानिच पंचैवताभ्योदत्वातुभोजयेत्। अर्घं दत्वावायनानिदत्वाभुंजीतवाग्यतः। ततफलं धारयेत्कंठेसर्व्वकामसमृद्धये।
॥ व्र ॥ ततः प्रातःसमुत्थाय सालंकारा सखीजने। गीतवाद्ययुता नद्यां गौरीं तांतु विसर्जयेत्। आहूतासि मया देवि पूजितासि मया शुभे। मम सौभाग्यदानाय
। २६ ॥ यथेष्टं गम्यतां त्वया। एतद्व्रतप्रभावेण काचिद्ब्राह्मणकन्यका। पतिं संजीवयामास निर्भर्त्स्य यमकिंकरान्। तस्माच्चरत्वं व्रतमेतदाद्यमायुप्रदं पुत्रसमृद्धिदंच।
पुत्रैश्च पौत्रैश्चयुता च पत्यागौरीप्रसादाद्भवजीववत्सा। य इदं शृणुयान्नित्यं श्रावयेद्वासमाहितः समुक्त्वा विपुलान् भोगान् अन्ते शिवपदंव्रजेत्। इति
भविष्योत्तरेहरिद्रागौरी व्रतं। इदं कर्णाटकेषुप्रसिद्धं। अथ मार्गशीर्षेमाघे वा कृष्णतृतीयायां सौभाग्यसुन्दरी व्रतं। तच्चचतुर्थीयुतायां कार्य्यं न द्वितीयायां
द्वितीयावेधरहिता तृतीया या सिता भवेत्। चतुर्थी योगिनी किंचित्क्षुद्रा वापि यदा भवेदितिकथायामुक्तेः। नारद उवाच। भगवन्तेप्रजा सृष्टानानावर्णाश्च
यायुषाः। स्वेदजाश्चंडजाश्चैवउद्भिज्जाश्चजरायुजाः। देवासुराः सगंधर्वाः सयक्षचोरगरक्षसाः। एके सुरूपा सुभगा बलिनश्चापरेतथा तथान्येदुःखसंयुक्ता
काणामूकाश्चपंगवः। दुःशीलादुर्भगाहीनाः परकर्मकरासदा। एतन्मेद्भुतं धातः संशयंछेतुमर्हसि। ब्रह्मोवाच। शृणुवत्सप्रवक्ष्यामि त्वं भक्तोसिप्रियोसिमे।
कर्मबीजप्ररूढंहिशरीरं पांचभौतिकं। येदत्तदानाजायंतेसुरूपाः सुखिनोनराः। तपः प्रभावाज्जायन्तेबलिनः सुभगास्तथा। अदत्तदानाजायंते परकर्म
कराः सदा। परापवादवक्तारः परद्रव्यापहारिणः। हन्तारः प्राणिनांचैव अभक्ष्याणां च भक्षकाः। क्रमशोनरकान् भुक्त्वा जायन्ते कुत्सिता नराः। दरिद्राः
पङ्गवोमूकाः काणाद्यादुर्भगास्तथा॥ नारदैवं स्वकर्मोत्थैर्नरानार्यस्वदुःखिताः॥ नारदउवाच॥ उपायंब्रूहिमेभगवन् येनकर्मक्षयोभवेत्। तपोदानं
व्रतंतीर्थं शरीरस्य च शोषणं। दुःखसन्तापतप्तानां जीवितान्मरणं वरं। ब्रह्मोवाच। शृणु नारद यद्गुह्यं व्रतानामुत्तमंव्रतं। सर्व्वदुःखप्रशमनं। व्याधिदा
रिद्र्यनाशनं। सुखसौभाग्यजननं पुत्रपौत्रप्रदायकं। सुरूपदं च सौभाग्यकरणं कामदं तथा। नारीणां च विशेषेण सुखसौभाग्य दायकं। वशिष्टाय- २६
पुराप्रोक्तं ऋषीणां च समागमे। कैलासशिखरेरम्ये शंकरेणमहात्मना। नारदउवाच। कस्मात्प्रोवाच भगवान् कृपाकस्माद जायत। ब्रह्मोवाच। इद्याद्भुतं

धात्रीफलं ददेदर्घं कक्कोलं प्राशयेन्निशि। नैवेद्येवटकाः कार्या घृतशर्करयान्विताः। कक्कोलांबु तदाप्राश्य राज्यसौभाग्यहेतवे। घृतेन बोधयेद्दीपं रात्रौ
॥ श्र ॥ जागरणं सदा। सर्वकामप्रदा देवि सर्वदुःखहरा परा। सर्वैश्वर्य प्रदा देवी सर्वपापहरा सदा। एकापि बहुधात्मानं नामरूपप्रभेदतः। माघमासे
॥ २७ ॥ च संप्राप्ते बदर्या दन्तशोधनं। प्रातः कुर्वीत नियमं रूपसौभाग्यहेतवे। अपराह्ने ततः स्नात्वा सर्वाभरणभूषिता। चूतपुष्पैश्च संपूज्या रूपसौभाग्य
सुन्दरी। नालिकेरादिदानञ्च नैवेद्यं शष्कुलीस्मृता। प्राशनञ्चैव कस्तूरी रूपसौभाग्यसंयुता। पूजयेत्तत्र सा सर्वकामसौभाग्य सुन्दरी। फाल्गुनस्यासितेपक्षे
प्रातर्निभ्रमसंयुता। सौभाग्यसुन्दरीबिल्वदन्तकाष्टं तु कारयेत्। स्नानं कृत्वा तथानारी काञ्चनारैश्च पूजयेत्। नैवेद्यं सक्तवस्तत्र घृतशर्करयान्विता।
यक्षकर्दमजोलेपो धूपश्चागुरु सम्भवः। सर्वासु च तृतीयासु विधिरेष उदाहृतः। बीजपूरार्घदानञ्च प्राशन चन्दनोदकं। प्राशनस्य प्रभावेण सर्वान्
कामानवाप्नुयात्। पारणञ्च प्रकर्तव्यं सहसर्वैश्च बांधवैः। चैत्रेमासि प्रकर्त्तव्या तृतीया पापनाशिनी। प्रयत्नेन प्रकर्त्तव्या सुखसौभाग्य सुन्दरी। दन्त
काष्टं प्रकुर्वीत जम्बूवृक्ष समुद्भवं। पूजा दमनकेनैव त्वर्घ्येबिल्वफलं स्मृतं। नैवेद्यं मण्डकाः प्रोक्ता शर्कराघृतसयुताः। सुख सौभाग्यप्राप्त्यर्थं प्राशनं वक्ष
वारिणः। वैशाखस्या सिते पक्षे तृतीयायामुपोषयेत्। मालतीदन्तकाष्टञ्च नियम ग्रहणं ततः। पति सौभाग्यदांदेवीं सुन्दरीं पूजयेत्ततः। पद्मै
सितैः सुरक्तैश्चमल्लिकाभिश्च पूजनं। दधिभक्तं सकर्पूरं शर्करा घृत संयुतं। नैवेद्यं कल्पयेद्देव्याः अर्घे चाम्र फलं भवेत्। हेमोदकंच संप्राश्य पुष्टिसौभा
ग्यमाप्नुयात्। ज्येष्ठे मासि तृतीयायां उपवास पराभवेत्। यूथिकादंतकाष्टंच लावण्य सुभमर्थिनो। मल्लिका कुसुमैः पूज्यां यक्षकर्दम चर्चितां। लावण्य
सुभगां देवीं सुन्दरीं पूजयेत्ततः। कदली फलार्घदानंच नैवेद्यं घृतपूरिका। मौक्तिकाम्बु ततःपीत्वा लावण्य सुभगा भवेत्। आषाढे च ततो मासि पति
सौभाग्य सुन्दरी। प्रातस्तस्याम कर्त्तव्यं दन्तकाष्टमशोकजं। नियमं तत्र कुर्वीत तृतीयायां प्रयत्नतः। बिल्वपत्रैः कोमलैश्च पति सौभाग्य सुन्दरीं।
जंबूफलार्घदानञ्च नैवेद्यं पायसंस्मृतं। शर्कराघृतसयुक्तं सुन्दरी प्रीयतां मम। विद्रुमांबु निशि प्राश्यं हविषा पारणं स्मृतं। सपत्नीनां पुरं नैव सापश्यति

च सौभाग्यं महं धत्वा जगत्प्रभुः। तथा रूपं च शीलं च सौभाग्यमतुलं तथा। हत्वाशिरः प्रकंपं च महासम्बद् शंकरः। पृष्टवान् कारणं देवं वशिष्टः
शिवकारिणं। ईश्वरउवाच। अहो व्रतस्य महात्म्यं श्रूयताम्हषिसत्तमाः। पुरा जन्मनि शूद्रस्य दास्यकर्मकरासदा। उच्छिष्टभोजनानित्यं उच्छिष्टशायना
सदा। कुरूपा दुर्भागा दीना रूचागद्गद भाषिणी। नाम्ना मेघवती ख्याता दुर्दर्शवदना शुभा। एकदाप्रेषणार्थं सा गता ब्राह्मणसंनिधौ शुभं व्रतं च नारीणां
वाच्यमानं द्विजन्मना। सौभाग्यसुन्दरीनाम तृतीयासर्व्वकामदा। ज्ञानचौरागमेशास्त्रे सर्व्वकामफल प्रदा। मयाप्रकाशिता पूर्व्वं प्रार्थितोसि मया तथा।
चीर्णं तासां प्रसंगाच्च मेघवत्या प्रसंगतः। कुत्सितं चैवनैवेद्यं दत्तं दानं च किंचन। हविष्यं च तथोच्छिष्टं पारणं च तथाकृतं। केवलं च व्रतं चीर्णं श्रद्धा-
पूतेन चेतसा। श्रद्धया धार्यतेधर्मो बहुभिर्नोर्थराशिभिः। ऋषयश्चक्रिरे धर्मं श्रद्धया भावितात्मनः। तेन धर्मविपाकेन निषादाधिपतेः सुता। सुरूपा
च सुशीला च सर्वलक्षणसंयुता। संपूर्णावयवा शान्ता तस्यादेव्या प्रसादतः। उच्छिष्ट भोजनाज्जाता निषादानाञ्च योनिषु। अदत्तदानात्संजाता तपसा
भोगवर्जिता। व्रतप्रभावात् सायाता सुरूपा च पतिव्रता। महासौभाग्यसंयुक्ता साक्षाल्लक्ष्मीरिवापरा। सर्वकामप्रदा देवी नन्दिनीवा वसत् गृहे। तद्व्रतं
चास्ति देवर्षे सर्वकामफलप्रदं। नारद उवाच॥ व्रतस्यास्य विधिं ब्रूहि कोविधिः किञ्च पूजनं। कस्मिन्मासे प्रकर्त्तव्यं देवता का प्रकीर्तिता। किं
पुष्पं किञ्च नैवेद्यं ध्यानं कस्य च पूजनं॥ ब्रह्मोवाच॥ व्रतस्यारम्भणं चादौ मार्गशीर्षे थमाव्दके। द्वितीयावेधरहिता तृतीया या सिता भवेत्। चतु
र्थी योगिनीकिञ्चिच्छुद्धा वापि यदा भवेत्। उपवासं प्रकुर्वीत दन्तधावनपूर्वकं। अपामार्गेण कुर्वीत दन्तशुद्धिं तदाव्रती। उमेदेवि नमस्तुभ्यं शङ्कर
स्यार्द्धशारिणि। प्रसीद श्रीमहेशानि करिष्ये व्रतमुत्तमं। सान्निध्यं कुरु मे देवि व्रतेस्मिन् हरवल्लभे। नियममन्त्रः। सौभाग्य सुन्दरीनाम वसिनो सा
प्रकीर्तिता। सर्वकामप्रदा देवि सर्वसत्ववशङ्करी। तस्यादर्शन मात्रेण सदा सज्जायते जत्। द्रोणपुष्पैश्च संपूज्यं दाडिम्बं चार्घहेतवे। नैवेद्य मोदकान्
दद्यात्कर्पूरं प्राशयेत्ततः। वत्सपौषासिते पक्षे तृतीयायां व्रतं भवेत्। विल्वकादम्ब काष्ठञ्च मरुकेणच पूजनं। राज्यसौभाग्यदा नाम सुन्दरीं पूजयेत्ततः।

कदाचन। श्रावणे मासि संप्राप्ते तृतीयायामुपोषिता। बिल्वी वा दन्तकाष्ठञ्च जातीपुष्पैश्च पूजनं। सर्वैश्वर्यं च सौभाग्यं सुन्दरीं पूजयेत्ततः। नैवेद्यं
गुडकं सारं धूपदीपादिकं तथा। कदलीफलार्घ्यदानं च प्राशनेशालतं पयः। गजाश्व पशुदासीनां हेमरत्नादिवाससां। ईश्वरीसर्वलोकानां भगवत्या
श्चादतः। मासिभाद्रपदे प्राप्ते पूज्या सौभाग्यसुन्दरी। दन्तकाष्ठन्तु कर्त्तव्यं मातुलुङ्गी समुद्भवं। उत्पलैः पूजयेद्देवीं अर्घ्यंकर्कोटकीफलं। नैवेद्येशोक
वर्त्तिन्यं पिवेन्माषिकशवं पयः। कर्पूरागुरुकस्तूरी मुखदेशेसुगन्धिनी। आश्वयुज्यसिते पक्षे तृतीयाया व्रतं चरेत्। दन्तकाष्ठं प्रकर्त्तव्यं मधूकच समुद्भवं।
पूजयेत्परया भक्त्या सुखसौभाग्यसुन्दरीं। उत्पलैः शतपत्रैश्च पूजाकार्या प्रयत्नतः। नारङ्गमर्घदानार्थं कूष्माण्डं वापि कल्पयेत्। नैवेद्ये गवकान् कुष्मान् घृत
शर्करयान्वितान्। औन्दुवरं पयःप्राश्य सुन्दरीप्रीयतां मम। सुखपौत्र समायुक्ता सुखसौभाग्य सुन्दरी। कार्त्तिकेमासि संप्राप्ते तृतीयामुपवासतः। औन्दु
वरं दन्तकाष्ठं कृत्वाव्रतमुपाचरेत्। केतकीभिश्च सौभाग्य नाम्नासंयोग सुन्दरी। निवेदयेदपूपांश्च सुगन्धीन् शालिसम्भवान्। अक्षोटं चार्घदाने च
लवङ्गं प्राशयेत्ततः। सावियोगं नचाप्नोति पितृभ्रातृ सुतादिभिः। एवं चीर्णे व्रते कुर्यादुद्यापनविधिं ततः। सर्वशास्त्रमधीयानं आगमेषु विशारदं।
आचार्यं प्रार्थयेत्प्रातर्मार्गशीर्षे यथाविधि। चीर्णव्रता महाचार्य उद्यापनविधिं मम। व्रतवैकल्यनाशाय यथाशास्त्रं समाश्रितः। सुन्दरी मण्डलं कार्यं गौरी
तिलकमेवच। उमामहेश्वरं देवं सौवर्णेन तु कारयेत्। व्रतारम्भे यथाशक्त्याराजतं वापि कारयेत्। वित्तशाठ्यमकुर्वीत सतिद्रव्ये फलार्थिना। तथं प्रपू
ज्यतां मूर्त्तिंतामेवं मण्डलेर्चयेत्। सर्वोपचारैर्गन्धैश्च पुष्पैर्नानाविधैरपि। एकैव सा जगन्माता बहुरूपैर्व्यवस्थिता। रूपैर्द्वादशभिश्चैवपूज्या सौभाग्य
सुन्दरी। ततः पद्मनिभां देवीं रक्तवस्त्रोपशोभितां। रक्ताभरणशोभाढ्यां रक्तकुङ्कुमचर्चितां। ध्यात्वाह्येवंविधां देवीं पूजयेदेकमानसा। रात्रौ जागरणं
कार्यं गीतवादित्रनिःस्वनैः ततः सर्वाणि पुष्पाणि नैवेद्यानि फलानि च। अर्घार्थं परिकल्प्यानि सर्वकामार्थ सिद्धये। ततः प्रभातेविमलेस्नानं कृत्वा विधान
तः। कुसुम्भ कुसुमैर्होमं किंशुकैर्वापि कारयेत्। अष्टोत्तरशतं पूर्णं मधुत्रयसमन्वितं। तदभावे तु कर्त्तव्यं शतपत्रैर्विधानतः। आसुरेण च मन्त्रेण

॥ व्र ॥ गौर्यं मुख्यं समाचरेत्। भोजयेच्च प्रयत्नेन चत्वार्यष्टौ प्रयत्नतः। मिष्टान्नेन सपत्नीकान् भुक्तांश्चैव परिधापयेत्। वस्त्रालङ्करणैश्चैव यथाशक्त्या प्रपूजयेत्।
२८ सौभाग्यवस्तूनि चैकैकं नारीणां चैव दापयेत्। ततो हस्ते प्रदातव्यं कुङ्कुमं लवणं गुडं। नारिकेलं तथा बल्ली दूर्वासिन्दूरकज्जलं। मङ्गलाष्टकमेतद्धि दत्वा सौभाग्यमाप्नुयात्। आचार्यं च सपत्नीकं वस्त्रालङ्करणैः शुभैः। परिधाप्य यथाशक्त्या मण्डलं तत्समर्पयेत्। प्रार्थयेच्च ततो देवीं सर्वसौभाग्यसुन्दरीं। पूजितासि महादेवि सर्वसौभाग्य सुन्दरी। दत्वा मत्प्रार्थितान् कामान् गच्छ देवि यथासुखं। मूर्त्तिश्च मण्डलं देव्या उपचारांश्च सर्वशः। गुरोर्गृहाण सर्वं त्वं सुन्दरी प्रीयतामिति। त्वत्प्रसादान्मयाचीर्णं व्रतमेतत्सुदुर्लभं। क्षमस्व विप्रशार्दूल प्रसादसुमुखो भव। एवंचीर्णव्रता नारी सततत्या भवेत्सदा। येनेदञ्च कृतं तस्य प्राप्तं जन्मनः फलं। नातः परतरं किञ्चिद्व्रतं सौभाग्य कारकं। देहान्ते शिवलोके तु भोगान् भुक्ता यथेप्सितान्। इति सौभाग्य सुन्दरी व्रतं

इति मीमांसकभट्टनीलकण्ठात्मज भट्टशङ्करकृतौ व्रतार्के तृतीया व्रतानि ॥

अथ चतुर्थी व्रतानि ॥ तत्र श्रावणकृष्णचतुर्थ्यां सङ्कटचतुर्थी व्रतं। तच्च चन्द्रोदयव्यापिन्याङ्कार्यं। श्रावणे बहुले पक्षे चतुर्थ्यान्तु विधूदये। गणेशं पूजयित्वा तु चन्द्रायार्घं प्रदीयते। इति कथायां तत्र च पूजाविधानात् दिनद्वयेत द्व्याप्तावव्याप्तौ वा पूर्वा मातृविद्धा गणेश्वर इति वचनात्। अथ व्रतविधिः। मासपक्षाद्युल्लिख्य विद्याधनपुत्ररोगमुक्तिसङ्कष्टनाश कामः। स्त्री तु भर्त्रादिकामा सङ्कष्ट चतुर्थीव्रतं करिष्य इति सङ्कल्प्य सौवर्णरूप्यताम्रमृन्मयाद्यन्यतमां गणपतिमूर्त्तिं कृत्वा जलपूर्णं वस्त्रयुतं कुम्भं तस्याग्रे स्थापयित्वा षोडशोपचारैः पूजयेत्। आसनम्। लम्बोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकं। नानारत्नैः सुवेषाढ्यं प्रसन्नास्यं विचिन्तयेत्। ध्यायेद्गजाननं देवं तप्तकाञ्चन सुप्रभं चतुर्भुजं महाकायं सूर्यकोटि समप्रभं। आवाहनं। आगच्छ जगन्नाथ सुरासुरनमस्कृत। अनाथनाथ सर्वज्ञ विघ्नराज कृपां कुरु। गजास्याय नमः। आसनं। मोमात्वं सर्वलोकानामिन्द्रादीनां विशेषतः। भक्तदारिद्र्यविच्छेत्ता एकदन्त नमोस्तु ते। विघ्नराजाय नमः। पाद्यं। मोदकानामर्प्यणेन भक्ता २८
नां वरदायक। देवदेव नमस्तेस्तु भक्तानां फलदो भव। लम्बोदराय नमः॥ अथार्घमन्त्रः। महाकाय महारूप अनन्तफलदायक। देवदेव नमस्तेस्तु

सर्वेषां पापनाशन। शङ्करसूनवे नमः। अर्घं स्नानं पञ्चामृतेनैव गृहाण गणनायक। अनाथनाथ सर्वज्ञ नमो मूषकवाहन। उमासुताय नमः। आ
चमनं। कुरुष्वाचमनं देव सुरवन्द्य सुवाहन। सर्वाघदलनस्वामिन्नीलकण्ठ नमोऽस्तुते। वक्रतुण्डाय नमः। रक्तवस्त्रकयुग्मं च देवानामपि दुर्लभं। गृहा
णमङ्गलं देव लम्बोदरहरात्मज। शूर्पकर्णाय नमः। ब्रह्मसूत्रं सोत्तरीयं गृहाण गणनायक। आरक्तं ब्रह्मसूत्रञ्च कनकस्योत्तरीयकं। कुब्जाय नमः।
चन्दनं। गृहाणेश्वरसर्वज्ञदिव्यं चन्दनमुत्तमं। करुणाकरगुह्याद्य गौरीसुतनमोऽस्तुते। गणेश्वराय नमः पुष्पं। सुगन्धिदिव्यमाल्यञ्च गृहाणगणनायक।
विनायकनमस्तुभ्यं शिवसूनो नमोऽस्तुते। विघ्ननाशिनेनमः। अनेनैवनाम्ना दूर्वाकुङ्कुमाक्षताश्च देयाः। धूपं। दशाङ्गं गुग्गुलं धूपमुत्तमं गणनायक। गृहा
ण देवदेवेश उमासुत नमोऽस्तुते। विकटाय नमः दीपं। सर्वज्ञसर्वरलाद्यं सर्वेशविबुधप्रिय। गृहाण मङ्गलं दीपं घृतकर्पूर संयुतं। वामनाय नमः।
नैवेद्यं। नैवेद्यं गृह्यतां देव नानामोदक संयुतं। सर्वान्नफलयुक्तं सर्वभावसमन्वितं। सर्वदेवाय नमः। फलं। फलान्यमृत तुल्यानि सुगन्धीन्यघनाशन
आनीतानि यथाभक्त्या गृहाणेमानि सर्वदा। सर्वार्तिनाशिने नमः। तांबूलं। तांबूलं गृह्यतां देव नागवल्लीदलैर्युतं। कर्पूरपूगसंयुक्तं सुगन्धं मुखभूषणं
विघ्नहर्त्रे नमः। प्रदक्षिण मन्त्रः। सर्वदेवाधि देवाय सर्वसिद्धिप्रदायक। भक्त्या नतामि मां पूजां गृहाणेमामुतप्रभो। सर्व्वदेवाधिदेवाय नमः।
एवं पूजा प्रकर्त्तव्या षोडशैरुपचारकैः। मोदकान् कारयेन्मातस्तिलजान्दशपार्व्वति। देवाग्रे स्थापयेत्पञ्च पञ्चविप्राय कल्पयेत्। पूजयित्वा तु तं विप्रं
भक्तिभावेन देववत्। दक्षिणां च यथाशक्त्यादत्वापंचैव मोदकान्। भक्षयन्निशिचन्द्रस्य अर्घं दत्वा यथाविधि॥ चन्द्रार्घ्य मन्त्रः। क्षीरसागरसम्भूत
सुधारूपनिशाकर। गृहाणार्घ्यं मयादत्तं गणेशप्रीतिवर्द्धनम्। विप्रवर्यनमस्तुभ्यं मोदकान्वै ददाम्यहं। मोदकान् सफलान्यंच देवदक्षिण
वाञ्छितान्। आपदुद्धारणार्थाय गृहाणद्विजसत्तम। गणेश प्रार्थना। अवुद्धमतिरिक्तं वा द्रव्यहीनं मयाकृतं। तत्सर्वं पूर्णतां यातु विघ्नरूप
गणेश्वर। ब्राह्मणान् भोजयेद्देवि यथान्नेन यथासुखं। स्वयं भुञ्जीत पञ्चैव मोदकान् फलसंयुतान्। अशक्तश्चैकमन्नं वा भुञ्जीतदधिसंयुतं। अथ

॥ व्र ॥ वा भोजनं कार्यमेकवारं हिमाद्रिजे। प्रतिमां गुरवेदद्यादाचार्याय सदक्षिणां। वस्त्रं कुम्भसमायुक्तमादौ मन्त्रमिमं जपेत्। विसर्जनमन्त्रः। गच्छगच्छ
२९ सुरश्रेष्ठ स्वस्थानं त्वं गणेश्वर। व्रतेनानेनमेनित्यं यथोक्तफलदोभव। अथ कथा। हिमाद्रौ स्कान्दे॥ ऋषय ऊचुः॥ दारिद्र्य शोककष्टाद्यैः पीडिता
नांश्चवैरिभिः। राज्य भ्रष्टैर्नृपैः सर्वैः क्रियते किंशुभार्थिभिः। धन क्षीणैर्नरैः स्कंद सर्वोपद्रव पीडितैः। विद्या सुख गृह भ्रष्टै रोगयुक्तैः शिवार्थिभिः।
कर्त्तव्यं किंवदो पायं पुनः क्षेमार्थ सिद्धये॥ स्कंद उवाच॥ शृणुध्वं मुनयः सर्वे व्रतानामुत्तमं व्रतं। संकष्टतरणं नामामुत्रेह फलदायकं। येनोपायेन
संकष्टंतरंति भुविदेहिनः। यद्व्रतं देवकीपुत्रः कृष्णो धर्माय दत्तवान्। अरण्ये क्लिश्य मानाय पुनः क्षेमार्थसिद्धये। यथा कथितवान् पूर्वं गणेशो मातरं
प्रति। तथा कथितवान् श्रीशो द्वापरे पांडवान्प्रति॥ ऋषयऊचुः॥ कथं कथितवानंबां पार्वतीं श्रीगणेश्वरः। तथा पृच्छन्ति मुनयो लोकानुग्रहकांक्षिणः।
स्कंदउवाच॥ पुरा कृत युगे पुण्ये हिमाचल सुता सती। तपस्तप्तवती भूरि न दृष्टः शङ्करः पतिः। तदासस्मार हेरम्बं गणेशं पूर्वजं सुतं। तत्क्षणा
दागतं दृष्ट्वा गणेशं परिपृच्छति॥ पार्वत्युवाच॥ तपस्तप्तं मया घोरं दुस्तरं लोमहर्षणं। न प्राप्तः पूर्व कांतो वै गिरीशो मम वल्लभः संकष्ट तरणं दिव्यं
व्रतं नारद उक्तवान्। त्वदीयं यद्व्रतं तावत्कथयस्व पुरातनः। ततश्रुत्वा पार्वतीवाक्यं संकष्टतरणं व्रतं। प्रीत्याकथितवान्देवो गणेशो ज्ञान सिद्धिदः।
श्रीगणेश उवाच॥ श्रावणे बहुले पक्षे चतुर्थ्यांतु विधूदये। गणेशं पूजयित्वातु चन्द्रायार्घंच दीयते॥ पार्वत्युवाच॥ क्रियते केन विधिना। किंकार्यं किंच
पूजनं॥ उद्यापनं कदाकार्यं मन्त्राः केस्युस्तु पूजने॥ किं ध्यानं श्रीगणेशस्य गणेश वद विस्तरात्॥ श्रीगणेश उवाच॥ चतुर्थ्यां प्रातरारभ्य दन्त
धावनपूर्वकं। ग्राह्यं व्रत मिदं पुण्यं संकष्टतरणं शुभं। कर्त्तव्य इति संकल्प्य व्रतेस्मिन् गाणपंस्मरेत्॥ स्वीकार मन्त्रः। निराहारोस्मि देवेश यावच्चन्द्रो
दयो भवेत्। भोक्ष्यामि पूजयित्वाहं संकष्टात्तारयस्वमां। एवं सङ्कल्प्यराजेन्द्र स्नात्वा कृष्णतिलैःशुभैः। आह्निकं तु विधायैवं पश्चात् पूज्यो गणाधिपः। २९
त्रिभिर्माषैस्तदर्द्धेन तृतीयांशे नवा पुनः॥ यथा शक्त्या तु वा हैमी प्रतिमा क्रियतेऽमला। माष मात्रा तदर्द्धस्य तृतीयांशे नवापुनः। हेमा भावे तु रौप्य

स्य तामस्यापियथा सुखं। सर्वथैव दरिद्रेण क्रियते मृन्मयी शुभा। वित्तशाठ्यं न कर्त्तव्यं कृते कार्यं विनश्यति। जलपूर्णं वस्त्रयुतं कुंभं तस्योपरिन्य सेत्। पद्ममष्ट दलं पुण्यं गन्धपुष्पैः प्रपूजयेत्। श्रीगणेश उवाच॥ एवं व्रतन्तु कर्त्तव्यं प्रतिमासं त्वया द्विजे। यावज्जीवन्तु वावर्षाण्येक विंशति वाथवा अशक्तश्चाप्येकवर्षं वा प्रतिवर्षं थापिवा। उद्यानन्तु कर्त्तव्यं चतुर्थ्यां श्रावणे सिते। स्वीकारश्च तथा कार्यः सङ्कष्ट हरणे तिथौ। गणपञ्च तथाचार्यं सर्व शास्त्रविशारदं। श्रद्धया प्रार्थयेदादौ तेनोक्तं विधिमाचरेत्। एकविंशतिविप्रांश्च वस्त्रालङ्कार भूषणैः। पूजयेद्गोहिरण्याद्यैः ऊंत्वादौ विधिनानलं। होमयेन्मोदकान् पश्चात् तिलजान् घृतसंयुतान्। अष्टोत्तर सहस्रंवा नोचेदष्टोत्तरं शतं। अष्टाविंशति संख्यातैर्मोदकैर्वा सशर्करैः अशक्तोऽष्टौ शुभान् सूक्तान् जुहुयात् जातवेदसि। पुष्पमण्डपिका कार्या मनोह्लाद कारिणी। पूजयेत्तत्र गणपं भक्त सङ्कष्ट नाशनं। गीतैर्वादिचनिनदैर्भक्तिभावपुरस्कृतैः पुराणवेदध्वनैस्तोषयेच्छ्रीगणेश्वरं। एवं जागरणं कार्यं शक्त्यादानादिकं तथा। सपत्नीक मथा चार्यं भूषयेद्वस्त्र भूषणैः। उपानच्छत्र गोदान कमण्डलु फलादिभिः। शय्या वाहन भूदान धन धान्य गृहादिभिः। यथा शक्त्या प्रकर्त्तव्यं दारिद्र्या भावमिच्छता। एकविंशति विप्रांश्च भोजयेन्नामभिर्मम। गजास्यो विघ्नराजश्च लम्बोदर शिवात्मजौ। वक्रतुंडः शूर्पकर्णः कुब्जश्चैव गणेश्वरः। विघ्न नाशो हि विकटो वामनः सर्व दैवतः। सर्वार्तिनाशी भगवान्विघ्नहर्त्ता च धूम्रकः। सर्व देवाधिदेवस्य सर्वषोडशवैस्मृताः। एकदन्तः कृष्णपिङ्गो भालचन्द्रो गणेश्वरः। गणपश्चैक विंशश्च सर्वएते गणेश्वराः। दुर्गायेन्द्रस्य रुद्रस्य कुलदेव्याधिकं भवेत्। विशेषेणाष्टदशभिर्मोदकै र्वायनं स्मृतं। एवं कृत विधानेन प्रसन्नोऽहं नसंशयः। ददामि वांछितान् कामान् तद्व्रतं मत्प्रियं कुरु। श्रीकृष्णउवाच। एवं तु कथितं सर्वं गणेशेन स्वयं नृप। पार्वत्या तत्कृतं राजन्व्रतं सङ्कष्ट नाशनं। व्रतेनानेन सालेभे महादेवं पतिंस्वकं। तत्कुरुष्व महाराज व्रतं सङ्कष्ट नाशनं। चतुर्थी सङ्कटा नाम स्कन्देन कथिता ऋषीन्। ऋषिभिर्लोक कामैस्तैर्लोकेततमिदं व्रतं॥ सूतउवाच॥ कृतं युधिष्ठिरेणैव राज्यकामेन वैद्विजाः। तेन शत्रून्निहत्याजौ स्वराज्यं प्राप्तवान् स्वयं। तस्मात्सर्वप्रयत्नेन व्रतं कार्यं विचक्षणैः। येन धर्मार्थ कामाश्च

मोक्षश्चापि भवेत् किल। यः करोति व्रतं विप्रा सर्व्वकामार्थसिद्धिदं। सवाञ्छितफलं याति पश्चाद्गाणेशतां व्रजेत्। यदा यदा परं विप्रा नरः प्राप्नोति
३० सङ्कटां। तदा तदा प्रकर्तव्यं व्रतं सङ्कटनाशनं। त्रिपुरं हन्तुकामेन कृतं देवेन शूलिना। त्रैलोक्यभूतिकामेन महेन्द्रेण च तत्कृतं। रावणेन कृतं पूर्व्वं
वालिबन्धन सङ्कटे। स्वकीयं प्राप्तवान् राज्यं गणेशस्य प्रसादतः। सीतान्वेषण कामेन कृतं वायुसुतेन च। सङ्कल्प्य दृष्टवान् सोयं सीतां राम प्रिया पुरा
दमयन्त्या कृतं पूर्वं नलान्वेषणकारणात्। सापतिं नैषधं लेभे पुण्यश्लोकं द्विजोत्तमाः। अहल्यापि पतिं लेभे गौतमम्प्राणवल्लभं। विद्यार्थी लभते विद्यां
धनार्थी धनमाप्नुयात्। पुत्रार्थी पुत्रमाप्नोति रोगी रोगाद्विमुच्यते॥ इति व्रतार्के सङ्कष्टचतुर्थी व्रतं॥ अथ श्रावणे कार्त्तिके वा शुक्लचतुर्थ्यां दूर्वागण
पतिव्रतं मदनरत्ने सौरपुराणे॥ स्कन्द उवाच। केनव्रतेन भगवन् सौभाग्यमतुलं भवेत्। पुत्रपौत्र धनैश्वर्य्यैर्मनुजः सुखमेधते। तन्मेवद महादेव
व्रतानामुत्तमं व्रतं। ईश्वर उवाच॥ अस्ति दूर्वा गणपतेर्व्रतं त्रैलोक्यविश्रुतं। भगवत्या पुराचीर्णं पार्व्वत्या श्रद्धया सह। सरस्वत्या महेन्द्रेण विष्णुना
धनदेन च। अन्यैश्च देवैर्मुनिभिर्गन्धर्व्वैः किं नरैस्तथा। चीर्णमेतद्व्रतं सर्वैः पुराकल्पे षडानन। चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा। तस्यां व्रत
मिदं कुर्यात् कार्त्तिक्यां वा षडानन। कार्तिक्यां कार्तिकसम्बन्धिन्यां शुक्लचतुर्थ्यां। गजाननं चतुर्वाहुमेकदन्तविपाटितं। विधाय हेम्नाविघ्नेशं हेम
पीठासनस्थितं। तथा हेममयीं दूर्वान्तदाधारे व्यवस्थितां। संस्थाप्य विघ्नकर्त्तारं कलसे ताम्रभाजने। वेष्टितं रक्तवस्त्रेण सर्वतोभद्रमण्डले। पूजयेद्रक्त
कुसुमैः पत्रिकाभिश्च पञ्चभिः। विल्वपत्रमपामार्गं शमीदूर्वाहरिप्रिया। हरिप्रिया तुलसी। अन्यैः सुगन्धकुसुमैर्यथालब्धैः सुगन्धिभिः। फलैश्च मो
दकैः पश्चादुपहारं प्रकल्पयेत्। यथावदुपचारैश्च पूजयेद्गिरिजासुतं। उमासुतनमस्तुभ्यं विश्वव्यापिन् सनातन। विघ्नौघंछिन्धि सकलं सर्द्धपाद्यं ददामि
ते॥ अर्घमन्त्रः॥ गणेश्वराय देवाय उमापुत्राय वेधसे। पूजामद्य प्रगच्छामि गृहाण भगवन् मम। विनायकाय शूराय वरदाय गजानन। उमासुता ३०
य देवाय कुमार गुरवे नमः। लम्बोदराय देवाय सर्वविघ्नापहारिणे। उमांगमलसम्भूते दानवानां वधाय वै। अनुग्रहाय लोकानां सदैव पार्वती

भृक्। धूपमन्त्रः॥ परं ज्योतिः प्रकाशाय सर्व्वसिद्धिप्रदायकं। दीपन्तुभ्यंप्रदास्यामि महादेवात्मने नमः। दीपमन्त्रः॥ गणानांत्वागणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन् भूतिःसीदसादनं। उपहारमन्त्रः। गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन। व्रतं सम्पूर्णतां यातु त्वत्प्रसादाद्विभावन। प्रार्थनामन्त्रः॥ एवं संपूज्यविघ्नेशं यथाविभव विस्तरैः। सोपस्करं गणाध्यक्षमाचार्याय निवेदयेत्। गृहाण भगवन् ब्रह्मन् गणराजं सदक्षिणं। व्रतं त्वद्वचनादद्य संपूर्णं यातु सुव्रत। दानमन्त्रः॥ एवं यः पञ्चवर्षाणि कृत्वोद्यापनमारभेत्। ईप्सितान् लभते कामान् देहान्ते शाङ्करं पदं। अथवा शुक्लपक्षस्य चतुर्थ्यां संयतेन्द्रियः। कुर्याद्वर्षचयं त्वेवं सर्वसिद्धिं समाप्नुयात्। उद्यापनं विना यस्तु करोति व्रतमुत्तमं तेन शुक्लतिलैः कार्यं प्रातस्स्नानं षडानन। हेम्ना वा राजतेनापि कृत्वा गणपतिं बुधः। पञ्चगव्यैस्तु संस्नाप्य दूर्वाभिः संप्रपूजयेत्। मन्त्रैस्तु दशभिर्भक्त्या दूर्वायुक्तैः शिखिध्वज। दूर्वायुक्तैर्दशभिर्मन्त्रैः पूजा दूर्वायुक्तैः पञ्चगव्यैः स्नापनं। तेच दशनाममन्त्रा उक्ताः स्कन्दपुराणे। गणाधिपनमस्तेस्तु उमापुत्राघनाशन। विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। एकदन्ते भवक्त्रेति तथा मूषकवाहन। कुमारगुरवे तुभ्यमेभिर्नामपदैः पृथगिति। इत्येवं कथितं वत्स सर्वसिद्धिप्रदं शुभं। व्रतं दूर्वागणपतेः किमन्यच्छ्रोतुमिच्छसीति॥ इति सौरपुराणोक्तंदूर्वागणपतिव्रतं। अथ भानुवारयुक्तायां यस्यां कस्यांचिच्छुक्लचतुर्थ्यामारभ्य दूर्वागणपतिव्रतं॥ स्कान्दे॥ कैलासशिखरे रम्ये सर्वदेवनिषेविते। सिद्ध सङ्घसमाकीर्णे गन्धर्वगणसेविते। देव्यासह महादेवो दीव्यच्चैर्विनोदितः। जितासित्वं जितेत्याह पार्वतीं परमेश्वरः। सापित्वं जितइत्याह स विवादस्तयोरभूत्। चित्रनेमिस्तदापृष्टो मृषावादमभाषत। तदाक्रोधसमाविष्टा गौरी शापं ददौ ततः। प्रसादिता ततस्तेन विशापञ्च जगाद सा। यदा सरोवरे रम्ये चरिष्यति भवान् भुवि। तदा स्वर्गणिका सर्व्वा वीक्ष्यन्त्यस्त्वां समागताः। तदा भवविशापस्त्वमित्युक्तः सपपातह। ततः कतिपयाहोभिः कृष्णानंतसरोवरे। कृष्णोभूत्वावसंस्तत्र ददर्श स्वर्विलासिनीः। ततस्तु सादूरं गत्वा पप्रच्छ प्रणिपत्यताः। किमेतद्भोमहाभागाः पूजायामभिवांछितं। ततस्ता अब्रुवन्तस्मै दूर्वाविघ्नेश्वरव्रतं। क्रियतेस्माभिरिहच परमाभी

॥ व्र ॥ इष्टसिद्धये । ततो ब्रवीन्महाराजा व्रतं मे दातुमर्हथ । येनाहं गिरिजाशापान्मुच्येयं चिरदुःखितः । ततस्ता अब्रुवन् सर्वा व्रतमेतदनुत्तमं । दूर्वाविघ्नेश्वरो
॥ ३१ ॥ यत्र पूज्यते सर्वसिद्धिदः । शुक्लपक्षे चतुर्थी या भानुवारेण संयुता । तस्यां तिथौ समारभ्य षण्मासान् व्रतमाचरेत् । प्रत्यहं षण्नमस्काराः षट् दूर्वाः षट्
प्रदक्षिणाः । शुक्लपक्षे चतुर्थ्याश्च प्रत्येकं त्वेकविंशतिः । एकभक्तं च कर्त्तव्यं कथां च शृणुयादिमां ध्यायेद्विनायकं देवं समाहितमनाः शृणु । तप्तकाञ्चनसङ्का
शं सर्वाभरणभूषितं । जटाकलापशुभगं कुङ्कुमेनोपरञ्जितं । गजाननं प्रसन्नास्यं सिन्दूरतिलकाङ्कितं । विशालवक्षसम्भानुं मुक्तामणिविभूषितं । चतुर्भुज
मुदाराङ्गं किङ्किणीकङ्कणैर्युतं । पाशाङ्कुशधरं देवं दन्तमोदकधारिणं । महोदरं महानागं वद्धकुक्षिं मदान्वितं । सुन्दरांशुकसम्वीतमिभास्यमपराजितं ।
प्रणतामरसन्दोहमौलिमाणिक्यरश्मिभिः । विराजिताङ्घ्रिकमलं सर्वदेवनमस्कृतं । अभीष्टफलदं देवं सर्वभूतोपकारकं । एवं ध्यात्वा जपेन्नित्यं विनाय
कमतन्द्रितः । एवं चरित्वा षण्मासान् शुचिः सत्यपरायणः । पश्चाद्गन्धादिदूर्वाभिरर्चयेत्तं सदापुनः । उद्यापनं च कुर्यात्तु देशकालानुसारतः । ततो
मगधदेशस्य मानेन यवपिष्टकं । दशमानकमादाय दशाष्टावपि मोदकान् । कृत्वा घृतेन तत्सम्यक् षट् देवाय षडात्मने । षड्विप्राय प्रदातव्यं श्रोत्रियाय
कुटुम्बिने । विनायको महाध्यक्षो विघ्नेशः श्रीगणाधिपः वरदः सुमुखश्चैव दूर्वाषट्कैः प्रपूजयेत् । षट्दूर्वाश्च तथा दद्यात् महापूजां प्रकल्पयेत् । एवं
कुरु महेशानप्रीत्यर्थमभिवाञ्छितं । तथेत्युक्ता चित्रनेमिः प्रीणयित्वा विनायकं । शापान्मुक्तस्ततः शम्भुमभ्यगात्प्रहसन्निव । शङ्करेण ततः दृष्टः चित्रनेमि
स्तथा जगौ । व्रतं श्रुत्वा ततः शम्भुर्गणेशस्य कुतूहलात् । गौरीकोपप्रसादाय शिवोपि कृतवांस्तथा । सापि देवी शिवेनोक्तं चक्रे व्रतमनुत्तमं । कार्त्तिके
योपि मात्रोक्तः स्वस्युर्दर्शनेच्छया । व्रतं चकार नन्दीच कार्त्तिकेयोक्तमादरात् । सोपि राजा प्रसादाय पुत्रार्थंच चकार ह । ततः क्रमेण लोकेस्मिन् प्रचु
रीभूतमुत्तमं । व्रतं दूर्वागणेशस्य सर्वसिद्धिकरं परं । शोकव्याधिभयोद्वेग बन्धव्यसनवर्जितः । विमुक्तः पुत्रपौत्रादि धनधान्यसमावृतः । इहलोके सु ३१
खीभूत्वा पश्चाच्छिवपुरं व्रजेत् । दूर्वाख्येन व्रतेनैव विघ्नेशस्य प्रसादतः । यः पठेत्परया भक्त्या कथामेतां दिने दिने । शृणुयाद्वापि सततं सर्वसिद्धिम

वाप्नुयात्॥ इति स्कन्दपुराणोक्तं दूर्वागणपतिव्रतान्तरं समाप्तं॥ अथ भाद्रशुक्लचतुर्थ्यां सिद्धिविनायकव्रतं। हेमाद्रौ स्कान्दे॥ तत्र मध्याह्नव्यापिन्यां कार्यं प्रातः शुक्लतिलैः स्नातो मध्याह्ने पूजयेन्नृपेति गणपतिकल्पे तत्रैव पूजाविधानात्। दिनद्वये तद्व्याप्तावव्याप्तावेकदेशव्याप्तौ वा पूर्वाऽन्यथाऽपरा। चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते। मध्याह्नव्यापिनी सा तु परतश्चेत्परेऽहनीति हरस्याप्युक्तेः॥ अथ व्रतविधिः॥ मासपक्षाद्युल्लिख्य जयपुत्रादि कामः स्त्रीतुसौभाग्य कामा। श्रीसिद्धिविनायकप्रीत्यर्थं सिद्धिविनायकपूजनमहं करिष्ये इति सङ्कल्प॥ षोडशोपचारैः पूजां कुर्यात्। एकदन्तं शूर्प कर्णं गजवक्त्रं चतुर्भुजं। पाशांकुशधरं ध्यायेत् सर्वसिद्धिविनायकं। ध्यायेत् गजाननं देवं पद्मकाञ्चनसन्निभं। चतुर्भुजं महाकायं सर्वाभरणभूषितं। दन्ताक्षमालापरशुपूर्णमोदकधारिणं। मोदकासक्तशुण्डाग्रमेकदन्तं विनायकं। ध्यानं। आवाहयामि विघ्नेश सुरराजार्चितेश्वर। अनाथनाथ सर्वज्ञ पूजार्थं गणनायक॥ आवाहनं॥ विचित्ररत्नरचितदिव्यास्तरणसंयुतं। स्वर्णसिंहासनं चारु गृहाण सुरपूजित। आसनं॥ अर्घ्यं च फलसंयुक्तं गन्ध पुष्पाक्षतैर्युतं। गणाध्यक्ष नमस्तेस्तु गृहाण करुणानिधे॥ अर्घ्यं॥ सर्वतीर्थसमुद्भूतं पाद्यं गन्धादिभिर्युतं। विघ्नराज गृहाणेदं भगवन् भक्तवत्सल॥ पाद्यं दध्याज्य मधुसंयुक्तमधुपर्कं मयाहृतं। गृहाण सर्वलोकेश गणनाथ नमोऽस्तुते॥ मधुपर्कं॥ विनायक नमस्तुभ्यं त्रिदशैरभिवन्दितं। गङ्गोदकेन देवेश सद्य आचमनं कुरु॥ आचमनं॥ स्नानं पञ्चामृतं दिव्यं सर्व्वतीर्थाहृतैस्तथा। गन्धतोयैः रमापुत्र गृहीत्वाभीष्टदायक॥ स्नानं॥ रक्तवस्त्रद्वयं देव देवाङ्ग सदृशं प्रभो। सर्व्वप्रद गृहाणेदं लम्बोदर हरात्मज। वस्त्रं। राजतं ब्रह्मसूत्रञ्च काञ्चनं चोत्तरीयकम्। गृहाण चारु सर्व्वज्ञ भक्तानां भक्तवत्सलः॥ यज्ञोपवीतं॥ नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च। भूषणानि गृहाणार्घं पार्व्वतीप्रियनन्दन॥ आभरणं॥ गन्धं गृहाण भगवन् सर्वगन्धसमन्वितं। गणाध्यक्ष नमस्तेस्तु भक्ताभीष्टफलप्रद॥ गन्धं॥ अक्षतान् धवलान् देव गृहाण द्विरदानन। अनाथनाथ सर्वज्ञ गीर्वाण सुरपूजित॥ अक्षताः॥ सुगन्धीनि च पुष्पाणि जातीकुन्दमुखान्यपि। विविधानि च पत्राणि गृहाण गणनायक। पुष्पं अथांगपूजा गणेशाय नमः पादौ

। व्र । विघ्नराजाय जानुनी । आखुवाहनाय ऊरू हेरम्बाय कटिं कामारिसूनवे नाभिं । लंबोदरायउदरं । गौरीसुताय स्तनौ गणनायकाय हृदयं स्थूलक
। ३२ । र्णाय । कण्ठं स्कन्दाग्रजाय स्कन्धौ । पाशहस्ताय हस्तान् । गजवक्त्राय मुखं । विघ्नहर्त्रे ललाटं सर्वेश्वराय शिरः । श्रीगणाधिपाय सर्वाङ्गं पूजयामि ॥ अथ
पत्रिका पूजा ॥ सुमुखाय मालती पत्रं समर्पयामि गणाधिपाय भृङ्गराजं उमापुत्राय विल्वपत्रं । गजाननाय दूर्वापत्रं । लम्बोदराय वदरीपत्रं ॥ हरसून
वे । धत्तूरपत्रं । गजकर्णाय तुलसीपत्रं वक्रतुण्डाय समीपत्रं । गुहाग्रजाय । अपामार्गपत्रं । एकदन्ताय वृहतीपत्रं । विकटाय करवीरपत्रं विनायकाय
अश्मंतपत्रं ॥ कपिलाय अर्कपत्रं गजदन्ताय अर्जुन पत्रं विघ्नराजाय विष्णुक्रांतपत्रं ॥ वटवे दाडिमपत्रं सुराग्रगंण्याय देवदारु । भालचन्द्राय मरुत्पत्रं हेर-
म्बाय सिन्दूरपत्रं । चतुर्भुजाय जातीपत्रं सर्वेश्वराय अगस्त्यपत्रं । एवं एकविंशतिपत्राणि समर्प्य ततो दूर्वायुग्मं गृहीत्वातु गन्धपुष्पाक्षतैर्युतं ॥ पूजयेत्
सिद्धिविघ्नेशं प्रत्येकं सर्वनामभिः । गणाधिप नमस्तेस्तु उमा पुत्राघनाशन । विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । एक दन्तेभवक्त्रेति तथा मूषकवाहन ।
कुमारगुरवे नित्यं पूजनीयः प्रयत्नतः । दशाङ्गं गुग्गुलं धूपं सुगन्धंच मनोहरं । गृहाण सर्वदेवेश उमा पुत्र नमोस्तुते । सर्वज्ञ सर्वलोकेश त्रैलोक्य
तिमिरापह । गृहाण मङ्गलं दीपं रुद्र प्रिय नमोस्तुते । दीपं । सफलान् सगुडां स्तैव मोदकान् घृतपाचितान् । नैवेद्यं सफलं दद्यात् नमस्ते विघ्न ना
शिने । नैवेद्यं । ततः आचमनं करोद्वर्त्तनं । इदं फलमिति फलं तांवूलं गृह्यतां देव गृहाण सुर पूजित । अनाथनाथ सर्वज्ञ मामुद्धर महेश्वर तांवूलं
हिरण्यगर्भमिति दक्षिणा । विघ्नेश्वर विशालाक्ष सर्वाभीष्ट फल प्रद । प्रदक्षिणं करोमि त्वां सर्वान् कामान् प्रयच्छ मे ॥ प्रदक्षिणा नमस्ते विघ्न
संहर्त्रे नमस्ते ईप्सितप्रद । नमस्ते देवदेवेश नमस्ते गणनायक । यन्मयाचरितं देव व्रतमेतत् सुदुर्लभं । त्वत्प्रसादाद्गणेश त्वं सफलं कुरु सर्वदा । प्रार्थना
विनायक नमस्तुभ्यं सततं मोदक प्रिय । अविघ्नं कुरु मे देव सर्व कार्येषु सर्वदा । वायणमन्त्रः । विनायकस्य प्रतिमां वस्त्रयुग्मसमर्चितां । तुभ्यं सम्प्रददे ३२
देव प्रीयतां मे गजानन । विनायक गणेशान सर्वदेव नमस्कृत । पार्वतीप्रियविघ्नेश मम विघ्नं विनाशय । प्रतिमादानं गणेशः प्रतिगृह्णाति गणेशो

वैदद्दातिच। गणेशस्तारकोभाभ्यां गणेशाय नमोनमः॥ इति पूजाविधिः। अथ कथा॥ शौनकाद्या महात्मनो नैमिषारण्य वसिनः सूतं पौराणिकश्रेष्ठमिदं वाक्यमवोचन् ऋषय ऊचुः॥ निर्विघ्नेनतु कार्याणि कथं सिध्यंति सूतज। अर्थ सिद्धिः कथं नृणां पुत्रसौभाग्यसम्पदः। दम्पत्योः कलहे चैव बन्धुभेदे तथा नृणां। उदासीनेषु लोकेषु कथं सुमुखता भवेत्। विद्यारम्भे तथा नृणां वाणिज्ये कृषि कर्मणि। नृपतेः परचक्रेच जयसिद्धिः कथं भवेत् कां देवतां नमस्कृत्य कार्यसिद्धिर्भवेन्नृणां। एतत् समस्तं विस्तार्य्य ब्रूहि मे सूत पृच्छतः। सूतउवाच॥ सन्नद्धयोः पुरा विप्राः कुरुपांडवसेनयोः। पृष्टवान् देवकीपुत्रं कुंतीपुत्रो युधिष्ठिरः॥ युधिष्ठिर उवाच॥ निर्विघ्नेन जयं मह्यं वद देवकिनन्दन। कां देवतां नमस्कृत्य संम्यग्राज्यं लभेमहि। श्रीकृष्ण उवाच॥ पूजयस्व गणाध्यक्षमुमामलसमुद्भवं। तस्मिन् सम्पूजिते वीर ध्रुवं राज्यमवाप्स्यसि॥ युधिष्ठिर उवाच॥ देवकेन विधानेन पूजनीयो गणाधिपः। पूजितस्तु तिथौ कस्यां सिद्धिदो गणपो भवेत्। श्रीकृष्ण उवाच॥ मासि भाद्रपदे शुक्ले चतुर्थ्यां पूजयेन्नृप। मासि माघे श्रावणे तु मार्गशीर्षेथवा भवेत्। गजवक्त्रन्तु शुक्लायां चतुर्थ्यां पूजयेन्नृप। यदा चोद्भवते भक्तिस्तदा पूज्यो गणाधिपः। प्रातःशुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप। निष्ककाञ्चसुवर्णेन तदर्धार्द्धेन वा पुनः। स्वशक्त्या गणनाथस्य स्वर्णरौप्यामथाकृतिं। अथवाच्छन्मयीं कुर्याद्वित्तशाठ्यं न कारयेत्। गणनाथः सिद्धिविनायकः तद्रूपं च स्कांदे॥ एकदन्तं शूर्पकर्णं गजवक्त्रञ्चतुर्भुजं। पाशांकुशधरं देवं ध्यायेत् सिद्धिविनायकं। कृत्वा पूजां प्रयत्नेन स्नाप्य पञ्चामृतैः पृथक्। गणाध्यक्षेतिनाम्ना वै गंधं दद्याच्च भक्तितः। आवाहनासनार्घंच दत्वा पश्चात्प्रयत्नतः। रक्तं सर्वप्रदे वस्त्रयुग्मं दद्याच्च भक्तितः। विनायकेतिपुष्पाणि धूपं सोमासुताय च। दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने। किञ्चित् सुवर्णं पूजान्ते ताम्बूलं च समर्पयेत्। दूर्वाङ्कुरान् विगृह्याथ विंशतिञ्चैकमेव हि। पूजनीयः प्रयत्नेन एभिर्नामपदैः सदा। गणाधिपनमस्तेस्तु उमापुत्राघनाशन। विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। एकदन्तेभवक्त्रेति तथा मूषकवाहन। कुमारगुरवेतुभ्यं पूजनीयः प्रयत्नतः। दूर्वायुग्मं गृहीत्वा तु गन्धपुष्पाक्षतैर्युतं। एकैकेन तु नाम्नातु दत्वैकं सर्वनामभिः। अथैकविंशतिं

 घृतपक्वमोदकान् घृतपाचितान्। स्थापयित्वा गणाध्यक्षसमीपे कुरुनन्दन। दशविप्राय दातव्या स्वयं चाद्यात्तथा दश। एकं गणाधिपे दद्यात् सनैवेद्यं नृपो
 त्तम। जातरूपमयं देवं ब्राह्मणाय निवेदयेत्। कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवतां। ब्राह्मणान् भोजयेत्पश्चाद्भुञ्जीयात्तैलवर्जितं। विनायकस्य
प्रतिमां वस्त्रयुग्मसमन्वितां। तद्याद्विप्राय विदुषे सर्वविघ्नोपशान्तये। एवंकृते धर्मराज गणनाथस्य पूजनं। विजयस्ते भवेन्नूनं सत्यं सत्यं मयोदितं।
वैष्णवाद्येषु दीक्षासु आदौ पूज्यो गणाधिपः। तस्मिन् संपूजिते विष्णुरीशोभानुस्तथाम्बुमा। हव्यवाहमुखा देवाः पूजिताःस्युर्नसंशयः। चण्डिकाद्या मातृ
गणाः परितुष्टा भवन्ति च। तस्मिन् संपूजिते विप्रा भक्त्यासिद्धिविनायके। यइदं शृणुयान्नित्यं श्रावयेद्वा समाहितः। सिध्यन्ति सर्वकार्याणि सिद्धिदस्य
प्रसादतः॥ इति सिद्धिविनायकव्रतं॥ हेमाद्रौ भविष्योत्तरे। मासि भाद्रपदे शुक्ला शिवलोके प्रपूजिता। तस्यां स्नानं तथा दानं उपवासोर्चनं तथा
क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप। चतुर्थीत्यनुषङ्गः। अस्यामेव चन्द्रदर्शनदोषमाह पराशरः। कन्यादित्ये चतुर्थ्यान्तु शुक्ले चन्द्रस्य दर्शनं मिथ्या
भिदूषणं कुर्यात् तस्मात्पश्येन्नतं तदा। तद्दोषशान्तये विष्णुपुराणे। सिंहःप्रसेनमवधीत्सिंहोजाम्बवताहतः। सुकुमारकमारोदीस्तवह्येषःस्यमन्तकः।
अथ स्यमन्तकोपाख्यानं। नन्दिकेश्वर उवाच। शृणुष्वैकाग्रचित्तः सन् गणेश्वरव्रतं शुभं। चतुर्थ्यां शुक्लपक्षे तु सदा कार्यं प्रयत्नतः। सनत्कुमारयोगीन्द्र
यदीच्छेच्छुभमात्मनः। नारीवा पुरुषोवापि यः कुर्याद्व्रतमुत्तमं। मोचयत्याशुविप्रेन्द्र संकष्टाद्व्रतिनं नरं। अपवादहरश्चैव सर्वविघ्नप्रणाशनं। कान्तारेवि
षमेवापि गृहे राजकुले तथा। सर्वसिद्धिकरश्चैव व्रतानामुत्तमोत्तमं। गजाननं प्रियं नाथ त्रिषु लोकेषु विश्रुतं। अतो न विद्यते ब्रह्मन् सर्वसंकष्टनाशनं
सनत्कुमार उवाच॥ केन चादौ पुराचीर्णं मर्त्यलोके कथं गतं। एतत्समस्तं विस्तार्य ब्रूहि गाणेश्वरं व्रतं। नन्दिकेश्वर उवाच॥ चक्रे व्रतं जगन्नाथोवासु
देवः प्रतापवान्। आदिष्टं नारदेनैव हृथालांछनशांतये॥ सनत्कुमार उवाच॥ षड्गुणैश्वर्यसम्पन्नसृष्टिसंहारकारकः। वासुदेवो जगद्व्यापी प्राप्तवान् 
लांछनं कथं। एतदाश्चर्यमाख्यानं ब्रूहित्वं नन्दिकेश्वर॥ नन्दिकेश्वर उवाच॥ भुवोभारावतारार्थं वसुदेवसुतावुभौ। रामकृष्णौ समुत्पन्नौ पद्मनाभ हला

ययौ । जरासन्धभयात्कृष्णो द्वारकां समकल्पयत् । विश्वकर्माणमाहूय पुरीं हाटकनिर्मितां । तत्र षोडशसाहस्रं स्त्रीणां चैव वराधिकं । भवनानि मनो
ज्ञानि तेषां मध्ये व्यकल्पयत् । पारिजाततरुं चैव तासां भोगाय कल्पयत् । यादवानां गृहास्तत्र षट्पञ्चाशत्कोटयः । अन्येपि बहवो लोका वसन्ति विगत
ज्वराः यत्किञ्चित् त्रिषु लोकेषु सुन्दरं तत्र दृश्यते । सत्राजितप्रसेनाख्यौ पुत्रावुग्रस्य विश्रुतौ । अम्भोधितीरमासाद्य तन्मनस्कतयाच सः । सत्राजितस्त
पस्तेपे सूर्यमुद्दिश्य बुद्धिमान् । व्रतं निरशनं गृह्य सूर्यसंबद्धलोचनः । ततः प्रसन्नो भगवान् सत्राजितपुरस्थितः । सत्राजितोपि तुष्टाव दृष्ट्वादेवं दिवाकरं ।
तेजोराशे नमस्तेस्तु नमस्ते विश्वरूपिणे । काश्यपेय नमस्तेस्तु हरिदश्व नमोस्तुते । ग्रहराजनमस्तेस्तु नमस्ते चन्द्ररोचिषे । वेदत्रय नमस्तेस्तु सर्वदेव नमो
स्तुते प्रसीद पाहि देवेश सुदृष्ट्या मां दिवाकर । इत्थं संस्तूयमानोसौ देवदेवो दिवाकरः । स्निग्धगम्भीरमधुरं सत्राजितमुवाच ह । वरं ब्रूहि प्रसन्नोसि य
त्तेमनसि वर्त्तते । सत्राजितमहाभाग तुष्टोहं तवनिश्चयात् ॥ सत्राजितोवाच ॥ स्यमन्तकमणिं देहि परितुष्टोसि भास्कर । ददौ तस्यच तद्रत्नं स्वक
ण्ठादवतार्य्य सः ॥ सूर्यउवाच ॥ भाराष्टकं शातकुम्भं स्रवतेसौ महामणिः । शुचिष्मता सदा धार्य्यं रत्नमेतन्महोत्तमं । सत्राजित त्वयैनैतदशुचिं हन्ति मा
नवं । इत्युक्त्वान्तर्दधे देवो तेजोराशिर्दिवाकरः । तत्कण्ठरत्नज्वलमानरूपो पुरीं स कृष्णस्य विवेश सत्वरं । दृष्ट्वा तु लोका मनसा दिवाकरं सञ्चिन्तयन्तश्चि
ताव्यहृदयः । समागतोयं हरिदश्वदीधितिर्जनार्दनं द्रष्टुमसंशयेन । नायं सहस्रांशुरितीहलोकाः सत्राजितोयं मणिकण्ठभास्वन् । स्यमन्तकं महारत्नं
दृष्ट्वा तत्कण्ठमण्डले । स्पृहां चक्रे जगन्नाथो न जहार मणिं ततः । सत्राजितो जातभयो याचयिष्यति मां हरिः । प्रसेनाय ददौ भ्रात्रे धार्य्योयं शुचिना त्वया ।
एकदा कण्ठदेशेसौ बद्ध्वा तं मणिमुत्तमं । मृगयाक्रीडनार्थाय ययौ कृष्णेन संयुतः । अश्वारूढो शुचिस्त्वासौ हतःसिंहेन तत्क्षणात् । रत्नमादाय सिंहो
पि गच्छन् जाम्बवता हतः । नीत्वा स विवरे रत्नं ददौ पुत्राय जांबवान् । पुरीं विवेश कृष्णोपि स्वकैः सर्वैः समावृतः । प्रसेनोद्यापि नायाति हतःकृष्णेन
निश्चितं । मणिलोभेन हाकष्टं बान्धवः पापिना हतः । द्वारकावासिनः सर्वे जना ऊचुः परस्परं । इत्यापवादसन्तप्तः कृष्णोपि नगराच्छनैः । सहैव तैर्य

॥ व्र ॥ थारण्यं दृष्ट्वा सिंहेन पातितं। प्रसेनं वाहनयुतं तत्पादानुसरं यतः। ऋक्षेण निहतं दृष्ट्वा कृष्णस्य तद्बिलं गतः। विवेश योजनशतमन्धकारं स्वतेः
॥ ३४ ॥ निवारयन् ददर्शाग्रे प्रासादं बहुभूमिकं। कुमारं जांववतस्तस्य दोलायाममितद्युतिं। माणिक्यं लम्बमानं च ददर्श भगवान् हरिः। रूपयौवनस
कन्यां जांववतीं पुनः। दोलां दोलयमानां च ददर्श कमलेक्षणः। विस्मयं च महच्चक्रे दृष्ट्वा तां चारुहासिनीं। सिंहः प्रसेनमवधीत्सिंहो जांववता ह...
सुकुमारक मारोदीस्तवह्येषः स्यमन्तकः। मदनज्वरदाहार्त्ता दृष्ट्वातं कमलेक्षणं। उवाच ललितं वाक्यं गम्यतां गम्यतामिति। रत्नं गृहीत्वा वेगेन यावत्
क्षेते तु जांववान्। इत्याकर्ण्य हसन् शौरिः शङ्खं दध्मौ प्रतापवान्। आकर्ण्य सहसोत्थाय ऋक्षः संयुयुधे ततः। तयोर्युद्धमभूद्घोरं हरिजांववतोस्तदा।
द्वारकावासिनः सर्वे गतास्ते सप्तमे दिने। हतः कृष्णो रक्षितो वा निःसदिग्धं विचार्य्य च। परलोकक्रियां चक्रुः परेतस्य तु ते तदा एकविंशद्दिनं यावद्बाहु
प्रहरणो विभुः। सुयुधे तेन ऋक्षेण युद्धकर्मणि तोषितः। जांववान् प्राक्तनं स्मृत्वा दृष्ट्वा देववलं महत्॥ जांववानुवाच॥ अजेयोहं सुरैः सर्वैर्यक्षराक्ष
सदानवैः। त्वयाजितोहं देवेश देवस्त्वमसिनिश्चितं। जाने त्वां वैष्णवं तेजो नान्यथा बलमीदृशं। इति प्रसाद्य देवेशं ददौ माणिक्यमुत्तमं। सुतां जांब
वतीं चाथ भार्य्यार्थं वरवर्णिनीं। पाणिं च ग्राहयामास देवदेव च जांवबान्। मणिमादाय देवोपि जांववत्यापि संयुतः। तद्वृत्तान्तं समाचष्टे द्वारका
वासिनां ततः। सत्राजितस्य माणिक्यं दत्तवान् संसदि स्थितः। मिथ्याभिशापसंशुद्धिं प्राप्तवान्मधुसूदनः। सत्राजितोपि सन्त्रस्तः कृष्णाय प्रददौ सुतां।
सत्यभामां महावुद्धिर्ददौ सर्वगुणान्वितां। शतधन्वा क्रूरमुख्या यादवा दुष्टमानसाः। सत्राजितेन ते वैरं चक्रूरत्नाभिलाषिणः। दुरात्मा शतधन्वा
पि गते कृष्णोपि कुत्रचित्। सत्राजितं निहत्याशु मणिं जग्राह पापधीः। कृष्णस्य पुरतः सत्या समाचष्टे विचेष्टितं। अन्तरिक्षो वहिःकोपि कृष्णः
कपटनायकः। वलदेवः पुरो वाक्यमुवाच धरणीधरः। हत्वा सत्राजितं हृत्वा मणिमादाय गच्छति। निहत्य शतधन्वानं गृहीत्वा रत्नमावयोः। मम ३४
भाग्यश्च तद्रत्नं भविष्यति न संशयः। एतच्छ्रुत्वा भयत्रस्तो शतधन्वापि यादवः। आहूयाक्रूरनामानं माणिक्यं प्रददौ च सः। आरुह्य वडवां वेगान्निर्गते।

दक्षिणां दिशं। रथस्थावनुगच्छेतां तदा रामजनार्दनौ। शतयोजनमात्रेण ममार वडवा तदा। पलायमानो निहतः पदातिस्तु पदातिना। रथस्थे बलदे-
वे तु हरिणा रत्नलोभिना। अदृष्टं तत्र तद्रत्नं बलदेवः पुरावदत्। तदाकर्ण्य महारोषाद्वाच वचनं बली। कपटी त्वं सदा कृष्ण लोभी पापी सुनिश्चितं
अर्थाय स्वजनं हंसि कस्त्वां बन्धुः समाश्रयेत्। अनेकशपथैः कृष्णो बलदेवं प्रसादयत्। सोपि धिक्कष्टमित्युक्त्वा ययौ वैदर्भमण्डलम्। कृष्णोपि रथमारुह्य
द्वारकां प्रययौ पुनः। तथैवोचुर्जनाः सर्वे मत्साधीयानयं हरिः। निष्काशितो रत्नलोभात् ज्येष्ठो भ्राता बलो बली। तच्छ्रुत्वा दीनवदनः पापी नैवहि
भाति च। इत्याभिशापसन्तप्तो बभूव स जगत्पतिः। अक्रूरोपि विनिष्क्रम्य तीर्थयात्रामिषात्ततः। काशीं गत्वा सुखेनासौ यजेद्यज्ञपतिं प्रभुं।
तोषमुत्पादयामास तेन द्रव्येन बुद्धिमान्। सुरालयगृहैश्चित्रैर्नगरं समकल्पयत्। नदौर्भिक्षं न वैरोगा ईतयो नच विप्लवं। शुचिनाधार्यते तत्र मणिः
सूर्यस्य निश्चितं जानन्नपिहि सर्वज्ञो मानुषं भावमाश्रितः। लोकाचारं तथा मायां अज्ञानं च समाश्रितः। बन्धुवैरं समुत्पन्नं लाञ्छनं समुपस्थितं
इत्यापवादं बहुलं जायमानं कथं सहेत्। इतिचिन्तातुरं कृष्णं नारदः समुपस्थितः। गृहीत्वा तत्कृतां पूजां सुखासीनस्ततोब्रवीत्॥ नारद उवाच॥
किमर्थं खिद्यसे देव किंवा ते शोककारणं। यथावृत्तं समाचष्टे नारदाय च केशवः॥ नारद उवाच॥ जानामि कारणं देव यदर्थं लाञ्छनं तव। त्वया
भाद्रपदे शुक्लचतुर्थ्यां चन्द्रदर्शनं। कृतं तेन समुत्पन्नं लाञ्छनन्तु इत्थैवहि॥ श्रीकृष्ण उवाच॥ वद नारद मे शीघ्रं को दोषश्चन्द्रदर्शने। किमर्थं तु द्वितीया
यां तस्य कुर्वन्ति दर्शनं॥ नारद उवाच॥ गणनाथेन संशप्तश्चन्द्रमा रूपदर्पितः। तद्दर्शने नराणांहि इत्या निन्दा भविष्यति॥ श्रीकृष्ण उवाच॥ किमर्थं
गणनाथेन शप्तश्चन्द्रः सुधामयः। इदमाख्यानकं श्रेष्ठं यथावद्वक्तुमर्हसि॥ नारद उवाच॥ गणानामाधिपत्येन रुद्रेण ब्रह्मणा पुरा। अणिमा महिमा
चैव लघिमा गरिमा तथा। प्राकाम्यं श्री वशित्वं च अर्थकामस्य शापिताः। भार्यार्थं प्रददौ देवो गणेशस्य प्रजापतिः पूजयित्वा गणाध्यक्षं स्तुतिं कर्त्तुं प्रचक्रमे
ब्रह्मोवाच॥ गजवक्त्र गणाध्यक्ष लम्बोदर वरप्रद। विद्याधीशस्य देवेश सृष्टिसंहारकारक। संपूजयेद्गणाध्यक्षंमोदकाद्यैः प्रयत्नतः। तेषां प्रजायतेसि

॥ व्र ॥ द्विर्निर्विघ्नेन न संशयः । असंपूज्य गणाध्यक्षं ये वांछन्ति सुरासुराः । नतेषां जायते सिद्धिः कल्पकोटिशतैरपि । त्वद्भक्त्या तु गणाध्यक्ष विष्णुःपालयते सदा
॥ ३५ ॥ रुद्रोपि संहरत्याशु त्वत्कृत्यैवं करोम्यहं । इत्थं संस्तूयमानोसौ देवदेवो गजाननः । उवाच परमप्रीतो ब्रह्माणं जगतांपतिं ॥ श्रीगणेश उवाच ॥ वरं
ब्रूहि प्रदास्यामि यत्ते मनसि वर्त्तते ॥ ब्रह्मोवाच ॥ क्रियमाणस्य मे सृष्टिर्निर्विघ्नं जायतां प्रभो एवमस्त्विति देवोसौ गृहीत्वा मोदकान् करे । सत्य
लोकाद्व्रजमानश्चन् स्वेच्छया गगने शनैः । चन्द्रलोकं समासाद्य स्खलितो गणनायकः । अथ हासं महच्चक्रे सोमो रूपमदान्वितः । तंदृष्ट्वा कोपताम्राक्षो गण
नाथःशशापह । दर्शनीयः सुरूपोहं सुन्दरस्त्वाहमित्यथ गर्वितोसि शशांकस्त्वं फलं प्राप्स्यसि सत्वरं । अद्यप्रभृति लोकास्त्वां नहि पश्यन्ति पापिनं । ये प
श्यन्ति प्रमादेन त्वां नरा मृगलाञ्छनं । मिथ्याभिशापसंयुक्ता भविष्यन्ति क्षितेर्ध्रुवं । हाहाकारो महान् जातः श्रुत्वा शापञ्च भीषणं । अत्यन्तम्लानवदन
श्चन्द्रो वारि समाविशत् । कुमुदं कुमुदां नाथःस्थाप्यतत्र कृतालयः । ततोदेवर्षिगन्धर्वा निराशा दीनमानसाः । तुरासाहं पुरोधाय जग्मुस्ते तु पिता
महं । दृष्ट्वापितामहं देवं शशंसुस्तद्विचेष्टितं । दत्तः शापोगणेशेन कथयामासुरादरात् । विचार्य्य भगवान् ब्रह्मा तान् सुरानिदमब्रवीत् । गणेशशापो दे
वेन्द्राः शक्यते केन वान्यथा । कर्त्तुमिंद्रेश न मया विष्णुना वापिनिश्चितं । तमेव देवदेवेशं व्रजध्वं शरणं सुराः । सएव शापमोक्षं च करिष्यति न संशयः ॥
देवाऊचुः । केनोपायेन वरदो गजवक्त्रो गणेश्वरः । पितामह महाप्राज्ञ तदस्माकं वद प्रभो । पितामहोवाच । चतुर्थ्यां देवदेवोसौ पूजनीयः प्रयत्नतः ।
कृष्णापक्षे विशेषेण नक्तं कुर्याच्चतत्प्रियं । अपूपैर्घृतसंयुक्तै मोदकैः परितोषयेत् । मधुरान्नं हविष्यञ्च स्वयंभुंजीत कामतः । स्वर्णरूपं गणेशस्य दातव्यं द्विज
सत्तमे ॥ शक्त्याच दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत् । एवं समेत्य ते सर्वे प्रेषयामास गीष्पतिं । स गत्वा कथयामास वचो ब्रह्मोदितन्तुतत् । व्रतं चक्रे ततश्च
न्द्रोयथोक्तं ब्रह्मणा पुरा । आविर्बभूव भगवान् गणेशो व्रततोषितः । तं क्रीड़मानं गणनायकंच तुष्टाव दृष्ट्वातु कलानिधानः । त्वं कारणं कारण ३५
कारणानां वेत्तासि वेद्यंच विभो प्रसीद । प्रसीद देवेश जगन्निवास गणेश लम्बोदर वक्रतुण्ड । विरिञ्चि नारायण पूज्यमान क्षमस्वमेगर्वकृतंच हास्यं ।

ये त्वामसंपूज्य गणेश नूनं वाञ्छन्ति मूढाःविदितार्थसिद्धिं। ते देव नष्टा निश्चितञ्च लोके ज्ञातो मयाते सकलप्रभावः। ये चाप्युदासीन नरास्तु पापा ते यान्ति पापान्नरके सदैव। एवं संस्तूयमानोसौ चन्द्रेणाथ गजाननः। श्रीगणेशउवाच॥ तुष्टोहं तव दास्यामि वरं ब्रूहि निशाकर। चन्द्रउवाच। लोकानां दर्शनीयोहं भवामि पुनरेवहि विपापोहं विशापोहं त्वत्प्रसादाद्गणेश्वर॥ श्रीगणेशउवाच॥ वरमन्यत् प्रदास्यामि नैतद्देयं मया तव। विवापं कुरु देवेश प्रार्थयामो वयं तव विशापमकरोच्चन्द्रं कमलासनगौरवात्। शुक्ल पक्षे चतुर्थ्यांतु ये पश्यन्ति सदैवहि। मिथ्यापवादमायासं ते प्राप्स्यन्ति न संशयः। मासादौ पूर्वमेव त्वां ये पश्यन्ति सदा जनाः। भद्रायां शुक्लपक्षस्य तेषां दोषो न जायते। तदाप्रभृति लोकोयं द्वितीयायां कृतादरः। चन्द्रस्य दर्शनार्थाय गणनाथस्य भाषितं। भाद्रे शुक्लचतुर्थ्यांतु यस्त्वां पश्यति पापधीः। मिथ्यापवादमलिनमावर्षं तस्य जायते पुनरेवतु पप्रच्छ कलावान् गणनायकं। केनोपायेन देवेश तुष्टो भवसि तद्वद॥ श्रीगणेश उवाच॥ सदा कृष्णचतुर्थ्यांतु मोदकाद्यैः प्रपूज्यमां। रोहिणीसहितं मांच समभ्यर्च्य विधानतः। यथाशक्त्याच मद्रूपं स्वर्णेन परिकल्पितं। दत्वा द्विजाय भुक्ताथ कथां श्रुत्वा विधानतः। सदा तस्य करिष्यामि सङ्कष्टस्य निवारणं। भाद्रशुक्लचतुर्थ्यांतु मृन्मयी प्रतिमा शुभा। हेमाभावेतु कर्तव्या नाना पुष्पैः प्रपूज्यमां। ब्राह्मणान् भोजयेत्यस्याञ्जागरञ्च विशेषतः। स्थापयेदव्रण कुम्भं धान्यस्योपरिशोभितं। यथा शक्त्यातु मद्रूपं शातकुम्भेन निर्मितं। वस्त्रद्वयसमाच्छन्नं मोदकाद्यैः प्रपूज्यमां। रक्ताम्बरधरो मर्त्यो ब्रह्मचर्यरतः शुचिः। रोहिणीसहितं मांच पूजां प्रकाश्य मत्पुरः। रजतस्तु सूपन्ते यथा शक्त्या विनिर्मितं। वस्त्रं शिवप्रियायेति गणाधिप नमोस्तुते। गन्धं लम्बोदरायेति पुष्पं सिद्धिप्रदायच। धूपं गजमुखायेति दीपं मूषकवाहने। विघ्ननाशाय नैवेद्यं फलंसर्वार्थसिद्धिदे। तांबूलं कामरूपाय दक्षिणां धनदायच। इक्षुदण्डैस्सदा पूज्यं नाम्ना शोभाकरं शुभं। विसर्जनं समारम्भैः सर्वसिद्धिप्रदायकं। एवं सम्पूज्य विघ्नेशं कथां श्रुत्वा विधानतः। मंत्रेणानेन तत्सर्वं ब्राह्मणाय निवेदयेत्। दानेनानेन देवेश प्रीतोभव गणेश्वर॥ सर्वत्र सर्वदा देव निर्विघ्नं कुरु सर्वदा। मानोन्नतिश्च राज्यञ्च पुत्रपौत्रान् प्रदेहिमे। गावो धान्यञ्च वासांसि दद्यात्सर्वं स्वशक्ति

॥ व्र ॥ तः । दत्वा तु ब्राह्मणे सर्वं स्वयं भुञ्जीत कामतः । मोदकापूपमधुरं लवणक्षारवर्जितं । एवं करोति यश्चन्द्र तस्याहं सर्वदा जयं । सिद्धिश्च धनधान्यञ्च
॥ ३६ ॥ दूदामि विपुलां प्रजां । इत्युक्त्वांतर्दधे देवो गणनाथो विनायकः । तद्व्रतं कुरु कृष्ण त्वं ततः शुद्धिमवाप्स्यसि । नारदेनैवमुक्तश्च व्रतञ्चक्रे हरिः स्वयं ।
[illegible]शुद्धिंदितीयं कृष्णयाचितं । ये शृण्वन्ति तवाख्यानं स्यमंतकमणीयकं । चन्द्रस्य चरितं सर्वं तेषां दोषो न जायते । भाद्रे शुक्लचतुर्थ्यां तु चन्द्र
स्य दर्शनं [illegible] । जातं तत्परिहारार्थं श्रोतव्यं सर्वमेव तु । यदायदा मनःकष्टं सन्देह उपजायते । तदा तदा च श्रोतव्यमाख्यानं कष्टनाशनं । एव
मुक्त्वा गतो देवो गणेशः कृष्णतोषितः । यदा यदा पश्यति कार्यमुत्थितं नारी नरश्चाथ करोति सद्व्रतं । सिध्यन्ति कार्याणि समीप्सितानि किं दुर्लभं वि
घ्नहरे प्रसन्ने । श्रावणस्यासिते पक्षे चतुर्थ्यामेकभुग्व्रती । व्रतं कुर्याद्गणेशस्य यावन्मासचतुष्टयं । इति स्कन्दपुराणे स्यमंतकाख्यानं । अथ शुक्लचतुर्थ्यां
कपर्दीश्वरविनायकव्रतं । तद्विधिः । तिथ्यादिस्मृत्वा मम चतुर्विधपुरुषार्थसिध्यर्थं कपर्दीगणेशव्रतमहं करिष्ये । मूलमन्त्रेण षडंगन्यासः कृत्वा पूजां
समारभेत् । तत्रादौ पीठपूजा ॥ ओं नमो भगवते सकलगुणात्मशक्तियुक्तायानंताय योगपीठाय नमः । अष्टदलकेसरेषु । ओं तीव्रायै नमः । ओं ज्वा
लिन्यैः । ओं नन्दायै । ओं भोगायै । ओं कामरूपिण्यै ओं उग्रायै ओं तेजोवत्यै नमः । ओं सत्यायै मध्ये विघ्नविनाशिन्यै नमः । अथध्यानं । एकदन्तं
महाकायं लम्बोदरगजाननं । विघ्ननाशकरं देवं हेरम्बं प्रणमाम्यहं । इमां पूजां गृहाणेश कपर्दी गणनायक । आगच्छ इति चिवारं पठेत् । विनायक
नमस्तुभ्यं उमामलसमुद्भव । इमांमया कृतां पूजां गृह्णीष्व सुरसत्तम । सहस्रशीर्षेत्यावाहनं अलङ्कारसमायुक्तं मुक्तामणिविभूषितं । स्वर्णसिंहासनं चारु
प्रीत्यर्थं प्रतिगृह्यतां । पुरुषएवेदमित्यासनं । गौरीसुतो नमस्तेस्तु शङ्करप्रियकारक । भक्त्या पाद्यं मया दत्तं गृहाण प्रणतप्रिय । एतावानस्येतिपाद्यं
व्रतमुद्दिश्य विघ्नेश गन्धपुष्पादि संयुतं । गृहाणार्घं मया दत्तं सर्वसिद्धिप्रदायक । त्रिपादूर्ध्व इत्यर्घः । गणाधिप नमस्तुभ्यं गौरीसुत गजानन । ३६
गृहाणाचमनीयं त्वं सर्वसिद्धि प्रदायक । तस्माद्विराडित्याचमनीयं अनानाथ सर्वज्ञ गीर्वाणपतिपूजितं । स्नानं पञ्चामृतं देव गृहाण गणनायक ।

आप्यायस्व दधिक्राव्णो घृतंमिमिक्षे मधुवाता स्वादुःपवस्व इति पञ्चामृतस्नानं। गङ्गाजलसमायुक्तमानीतं कृपया मम। स्नानं स्वीकुरु विघ्नेश कपर्द्दी
गणनायक। यत्पुरुषेणेति स्नानं हरिद्रास्वदयं देव देवाङ्गवसनोपमं। भक्त्यादत्तं गृहाणेश लम्बोदर हरात्मज तं यज्ञमिति वस्त्रं नानालङ्कार संयुक्तं
नागाभरणविभूषितं। अनेकदिव्याभरणं प्रीत्यर्थं प्रतिगृह्यतां। इत्याभरणं राजतं ब्रह्मसूत्रञ्च कांचनं चोत्तरीयकं। भालचन्द्र नमस्तुभ्यं गृहाण वरदो
भव। तस्माद्यज्ञादितियज्ञोपवीतं। गन्धं कर्पूरसंयुक्तं दिव्यं चन्दनमुत्तमं। विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यतां। तस्माद्यज्ञात्सर्वहुतऋच इति गन्धं
अक्षतान् धवलान्देव सिद्धगन्धर्वपूजित। भक्त्यादत्तान् गृहाणेमान् सर्वसिद्धिप्रदायक। इत्यक्षताः। सुगन्धीनिच पुष्पाणि वरसिद्धिप्रदायक। कपर्द्दी गण
नाथस्य श्वेतपुष्पं ददाम्यहं। तस्मादश्वा अजायतेति पुष्पं अथांग पूजाः कपर्द्दी गणनाथाय नमः पादौ पूजयामि। गणेशाय नमः। जानुनी गणनाथाय
नमः। ऊरू पूजयामि। गणक्रीडाय कटिं वक्रतुण्डाय हृदयं लम्बोदराय कण्ठं। गजाननाय स्कन्धौ। हेरम्बाय हस्तौ विकटाय मुखं विघ्नराजाय नेत्रे
धूम्रवर्णाय नमः शिरः पूजयामि। कपर्दिने नमः सर्वांगं पूजयामि षडङ्गैः प्रथमावरणं। वक्रतुण्डाय एकदंष्ट्राय महोदराय गजाननाय विकटाय
विघ्नराजाय धूम्रवर्णाय नमः इति द्वितीयावरणं ब्राह्म्यै माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै इन्द्राण्यै चामुण्डायै महालक्ष्म्यै नमः इत्यष्टदलेषु तृतीयावरणं
इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे कुवेराय ईशानाय नमः निर्ऋतिवरुणयोर्मध्ये अनन्ताय इन्द्रेशानयोर्मध्ये ब्रह्मणे इति चतुर्थावरणं
वज्राय शक्तये दण्डाय खड्गाय पाशाय अङ्कुशाय गदायै त्रिशूलाय चक्राय। इति पञ्चमावरणं। दशाङ्गं गुग्गुलं धूपं चन्दनागरु संयुतं। उमासुत नम
स्तुभ्यं गृहाण वरदो भव। यत्पुरुषं व्यदधुरिति धूपं गृहाणमङ्गलं देव घृतवर्त्तिसमन्वितं। दीपं ज्ञानप्रदश्चारु रुद्रप्रिय नमोऽस्तु ते। ब्राह्मणोऽस्येति दीपं नै-
वेद्यं इदं फलं मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनिजन्मनि। इति फलं। पूगीफलसमायुक्तं नागवल्लीदलैर्युतं। चूर्णं कर्पूरसंयुक्तं
गृहाण गणनायक। नाभ्या आसीदितितांबूलं। हिरण्यगर्भ गर्भस्थं हेमवीजं विभावसो। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमे। सप्तास्यासन्निति द

। व्र । क्षिणा। गणाधिप नमस्तेस्तु नमस्तेस्तु गजानन लम्बोदर नमस्तेस्तु नमस्तेस्त्वंबिकासुत। एकदन्त नमस्तेस्तु नमस्तेस्तु भवप्रिय। स्कंदाग्रज नमस्तेस्तु नमस्तेस्त्वीप्सि
३७ तप्रद। कपर्द्दी गणनाथस्य सर्वं सम्पत्प्रदायिनः। यज्ञेनेतिपुष्पाञ्जलिः। प्रदक्षिणन्तु देवेश सर्वकार्येषु सर्वदा।. कपर्द्दी गणनाथस्त्वमीप्सितार्थप्रदायक।
इति प्रदक्षिणा नमस्करोमि देवेश सर्वविघ्नहरो भव। शीघ्रं मम वरं देहि परत्रचपरां गतिं॥ इति नमस्कारः। अथ ब्रह्मचारि पूजा। अक्षणान् मुष्टि
मर्षितान् तण्डुलान् सवराटकान्। विप्राय बटवे दद्यात् गन्धपुष्पार्चितायच। तण्डुला वैश्वदेवत्याः पाकेनान्नेन शोभनाः। कपर्द्दी गणनाथोसौ प्रीयतां
तंडुलैः सदा। कथां श्रुत्वा देवमुद्वासयेत्। अथ कथा। कदाचिदुपविष्टस्य पार्वत्या सह शङ्करः। इति प्राह प्रिया तां किं द्यूतेच्छारतिरक्षिते। दुरोदर
मिषात्रतुं वाञ्छितं प्रत्युवाचसा। ममाप्यस्मिन् सास्त्येव त्वयाचेह्रीयतेपणः। तव किं किमभिष्टन्तु दास्यामि परमेश्वरि। लोकत्रयं वा पृच्छस्व किमन्यैर्वच
नैर्वृथा। पृच्छामि पश्चादेतन्मे दातव्यमितिनोच्यते। यदि त्वया तदानींतु विश्वासो नास्ति मे त्वयि। वाक्यमेवंविधं श्रुत्वा शर्वसर्वात्मनांबिके। न विश्वास
यितुं केन शक्यते किं पुनर्वमः सौलुण्ठनेन का देवि द्यूतेच्छास्तिनवैवचेत्। पणः प्रकल्प्यक्रियतां पणे तिष्टाम्यहं सदा। भावं संचित्य पार्वत्या पणमाकल्प्य
यत्नतः। त्रिशूलं त्रिदशान् सर्वान् साच्ययं च दुरोदरे। तस्मिन् कर्मणि तज्जित्वा पणमप्यगृह्णीच्छि वा। एवं डमरुकादीनि तान्यन्यान्यजयत् पृथक्।
दीनोभूत्वा महादेवो भवानीमब्रवीदिति। शार्दूलं चर्म तन्मध्ये प्रयच्छगिरिजे मम। नचैवं वक्तुमुचितं किं देव प्रीतिमच्छिह। दास्यामि सति किं पृष्टे
पूर्वं स्मरसि किं नहि। अविचिन्त्य ब्रवीषि त्वं जगदीश कृपानिधे। इति कृत्वा कृतोयत्नो देव कोन्यो यथा भवा। आद्वादशदिन देवि न करिष्यामि
भाषणं। तथेत्युक्त्वा महादेवस्तत्क्षणं च तिरोदधे। रत्न रत्न क्व गच्छामि किञ्जीवनमतःपरं। इति संचिन्त्य सान्विष्टुमुद्यानं प्रत्यपद्यत। गिरिजा तत्र
वनिताबृन्दं दृष्ट्वा ब्रवीदिति। किमर्थमागताः सर्वाः किमेतत्क्रियतेधुना। कपर्द्दीगणनाथस्य व्रतं कर्त्तमिहागताः। पूजैषा तस्य चेदानीमस्माभिः ३७
क्रियते कथा। किमर्थं तद्व्रतं नार्यो युष्माभिः क्रियते वने। फलमप्यथवा नास्ति पार्वतीमाहतां प्रति। प्रष्टव्यं किं त्वया देवि नरैर्नारीभिरम्बिके।

अभीष्टसिद्धिरस्मात्तु लभ्यते भुवनत्रये मातः कुपित्वा गतवान्निकपस्तु महेश्वरः। तस्य संदर्शनायैव तत्करिष्ये व्रतोत्तमं। व्रतस्य तस्य किं दानं विधानं कीदृशं मम। सर्वं विचिन्त्य मनसा कथयन्तु सुराङ्गनाः। कालो विधानं दानञ्च व्रतस्यास्य फलानि च। तत्सर्वं सावधानेन वक्ष्यामः शृणु पार्वति। स्त्रियऊचुः॥ मूढादिदोषरहिते स चतुर्भानुवासरे। मासे कार्यं व्रतं सम्यग्गणेशार्पितमानसैः। तैलतांबूलभोगादीन् वर्जयित्वा शिवप्रिये। मन्दवारे तु भुञ्जीयादेकवारं मितं दथा। प्रातःकाले शुचिर्भूत्वा स्नानं कुर्याद्विधानतः। नद्यां तडागे कूपेवा मूर्द्धि शुक्लतिलैः सह। सन्ध्यादिकं यथान्यायं सर्वं नित्यंप्रयत्नतः। अर्चनागारमासाद्य गोमयेनोपलिप्य च। गोचर्ममात्रं तन्मध्ये कुर्याद्गन्धेन मण्डलं। तन्मध्येष्टदलं पद्मं तन्मध्ये गणनायकं। पूजयेत्सक्त कुसुमैर्हरिद्राभिश्रिताक्षतैः। गांगींगूंगैंगौंमस्य न्यासं कृत्वा ततःपरं। मन्त्रेणानेन कुसुमैर्देवमावाह्यनिक्षिपेत्। अथवा गणनाथस्य प्रतिमामथपूजयेत्। ततस्तद्गतचित्तः सन् ध्यानं कुर्याद्विधानतः। एकदन्तं महाकायं लम्बोदरगजाननं। विघ्ननाशकरं देवं हेरम्बं प्रणमाम्यहं। इमां पूजां गृहाणेश कपर्दिगणनायक आगच्छेति विसर्जार्थं कुर्यादावाहनादिकं। पुराणमन्त्रैरथवा वेदमन्त्रैश्च षोडश। पूजयेदुपचारैश्च मूलमन्त्रेण वा तथा। तत्तत् प्रकाशकैर्मन्त्रैर्गन्धपुष्पाक्षतादिभिः। इन्द्रादिलोकपालांश्च पूजयेद्देवसन्निधौ। लम्बोदर नमस्तेस्तु नमस्तेस्त्वंविकासुत। एकदन्त नमस्तेस्तु नमस्तेत्वीप्सितप्रद। कपर्दिगणनायस्य सर्वसम्पत्प्रदायिनः। पूजाप्रकारःकथितस्तवास्माभिःशुचिस्मिते। सकणानंजलिमितान् हविष्यव्रीहितण्डुलान्। स्वकान् यत्नेन संशोध्य चूर्णं कुर्यान्महेश्वरि। शिवेतुपूर्वप्रथमे भानुवारेऽर्द्धचन्द्रवत्। कुर्याद्द्वितीये संपूर्णं चन्द्रवत्पिष्टिकाष्टकं। तृतीयेपायसान्नं च दद्याद्दन्नं चतुर्थके। आनीयाष्टांशकं सम्यक् देवं संपूज्य भक्तितः। कल्पितान्यानिविधिवद्विद्यन्ते यानि यानि च। तेषां तेषामष्टमांशं तस्मै सम्यक् समर्पयेत्। ततः शुद्धाय बटवे दद्यादेकं वराटकं। भुक्त्वा मितान्तण्डुलांश्च भुञ्जीयाद्भागसप्तकं। याः कामयन्ते ये भक्त्या पूजास्ते प्राप्नुवन्तिहि। इत्युक्तां भवानीं तु स्त्रियो विगतकल्मषाः। तासां तद्वचनं श्रुत्वा तदानीमकरोद्व्रतं। तत्र स्थाणुः विश्वेशः प्रत्यक्षः समजायत। त्रिलोकनाथ देवेश करुणाकर शङ्कर। दीनामनन्यगतिकां भक्तां वत्सल पाहि मां।

तुष्टस्तु शङ्करः प्राह यदेतत्त्वया कृतं कपर्दीशव्रतं यस्य माहात्म्यात् किन्न सिध्यति। व्रतस्य तस्य माहात्म्यं ज्ञातुं वाञ्छितवान् स्वयं। उद्दिश्यागमनं विष्णो
स्मरणात्कृतं शिवः। तदा च गरुडारूढः समागत्यैनमब्रवीत्। मदागमननिमित्तं किं किं कृतं शङ्कर त्वया। ममापि ज्ञापनीयं तदित्युक्तो ज्ञापयच्छिवः। अथै
कृतमेतत् विष्णुरुद्दिश्यागमनं विधिः। आगतः सन् विधिः शीघ्रं ममाज्ञापय माधव। प्रयोजनं नास्ति विधे त्वदागमनकारणे। एकदन्तव्रतं किं तत्
भवत्येव न संशयः। इन्द्रागमनमुद्दिश्य तदानीं तेन तत्कृते। आगत्य सहसा सोपि ममाज्ञाय विश्वसृज। ईदृग्व्रतमाहात्म्यं दृष्टमेवं कृतं मया। ममापि
ज्ञापनीयं तदित्युक्ते विधिनोदितं। विक्रमादित्यमुद्दिश्य वज्री तदकरोच्च सः। आगत्याह मनुष्यस्त्वं इन्द्रो मत्तः किमीप्सितं। कपर्दीश इति वदन्व्रतमाहात्म्य
मीदृशं। इति ज्ञातुं ममाभीष्टमेतत्सत्यं तदाब्रवीत्। विधानं तस्य माहात्म्यं ज्ञापनीयं त्वयेति मे। पप्रच्छ विक्रमादित्य उत्सुकः सन् पुरन्दरं। पुरन्दरमु
खात् ज्ञात्वा तत्सर्वं स्वपुरीं प्रति। विबुध्य प्रययौ राजा पराक्रमपरायणः। कपर्दीशव्रतं कृत्वा महिष्याः पुरतोवदत्। जेष्यामि सकलान् शत्रून् प्राप्स्यामि
सम्पत्तिं। तस्य व्रतस्य किंदानमिति सा प्राह विक्रमं। प्रत्युवाच प्रियामर्को दद्यादेकं वराटकं। एवं चेत्तच्च कर्तव्यं महत्त्वे यत्र कुत्रचित्। इत्यादिदूषणा
द्रानु कुष्ठ्याधिमवाप सा। न स्नातव्यं त्वया चेति सर्वं राज्यं विनश्यति। अर्कस्य वचनं श्रुत्वा अरण्याश्रममवाप सा। परिचर्यां विधायानुष्ठास्यास्याः सर्वे मुनीश्व
राः। निश्चित्य योगमार्गेण सर्वे तेचाब्रुवन् सतीं। कपर्दीशव्रताक्षेपाद्देवं प्राप्तं त्वयेत्यतः। कुरुष्व तद्व्रतं सम्यक् सर्वसिद्धिं भविष्यति। तपोज्ञानमाज्ञया कृत्वा
कपर्दीशव्रतं सत्यत् तदानीं राजमहिषी दिव्यदेहमवाप सा। अस्मिन्नन्तरिते काले भवान्या सह शङ्करः द्रष्टुं ययौ वृषारूढो भुवनानि चतुर्दश। मध्यमार्गे
[illegible] रोदनं [illegible]। श्रुत्वा आश्चर्यमारोदीः किमर्थं तवरोदनं। नकिमप्यस्तिमे देवि दारिद्र्यादेव केवलात्॥ एवं यदि भवेद्विप्र कपर्दीशव्रतं
कुरु॥ कर्तुं व्रतं देवि सामर्थ्यं नास्तिमेधुना॥ विक्रमार्कपुरे सर्वं वैश्यो दास्यति तत्कुरु॥ कपर्दीशव्रतेनैवमन्त्रितं प्राप्स्यसि ध्रुवं। दारिद्र्यमोचनं 
तत्क्षणात् भविष्यति न संशयः। अर्कं प्रति समागम्य गृहीत्वा तण्डुलान् द्विजः। वैश्यात् गृहीत्वा तत्सर्वं तदानीमकरोद्व्रतं। तस्मिन्नर्कपुरे विप्रस्सम्भक्तितम

वाप सः । आज्ञापयत्कपर्दीशव्रतं वैश्यस्य तत्क्षणात् । अकरोत्स्वसुतायाश्च विक्रमः पतिरस्त्विति व्रतप्रभावादादित्यमुपयेमे विप्रः सुता । अनेनैव विधा
नेन परां प्रीतिमवाप सा । एवमन्तरिते काले मृगयार्थं प्रविष्टः सः । गहनं क्षुत्तृषार्त्तः सन् ययौ मुनिवराश्रमं । उपचारैः समानीता तेषामर्को मनोरमां । रम
णीयमाश्रमे तस्मिन् दर्शयामास विक्रमः । इत्यष्टषष्टिघोन् सर्वान् दातव्यैषा ममांगना । तवेयं महिषीत्युक्त्वा नयेनास्मै समर्पयत् । समं महिष्या स्वपुरीं दिव्य
नारीभिरावृतां । हृष्टः सन् विक्रमादित्यः आजगाम स भूपतिः कपर्दीगणनायस्य व्रतं कृत्वा स्त्रिया सह । अजयद्विक्रमादित्यः सकलान् शत्रुमण्डलान् ।
[illegible] तेनैव पुत्रपौत्रादिकस्तथा सः । धनधान्यादि संपद्भिः सुखेन न्यवसद्भुवि । एतद्व्रतं ये कुर्वंति यास्य कल्पविधानतः । चत्वारः पुरुषार्थाश्च तस्मात्प्राप्नु
वन्तीति । अश्वमेधस्य विघ्नेतु संजातः सगरः पुरा । एतदेव व्रतं कृत्वा पुनरश्वं स लब्धवान् । इमां कथां पञ्चवारं प्रथमे भानुवासरे । द्वितीयेच तृतीयेच
षोढा [illegible] मेतद्देकोनाशीति श्लोकप्रकाशितं । प्रचिन्तैरन्यथा कृत्वा क्षिप्रं यांति यथेप्सितं ॥ इति स्कान्दे कपर्दीविनायक व्रतं ॥ अथ कार्त्तिक
कृष्णचतुर्थ्यां करकचतुर्थी व्रतं ॥ अत्र स्त्रीणामेवाधिकारः तासामेव फलश्रुतेः । अथ व्रतविधिः । आचम्य मासपक्षाद्युल्लिख्य सौभाग्य पुत्रपौत्रादि सुस्थिरश्री
प्राप्तये करकचतुर्थी व्रतं करिष्ये । वटं विलिख्य तदधस्ताच्छिवं षण्मुखयुक्तां गौरीं । लिखित्वा षोडशोपचारैः पूजयेत् पूजामन्त्रः । नमः शिवायै शर्वाण्यै सौभाग्यं
संततिं शुभां । प्रयच्छ भक्तियुक्तानां नारीणां हरिवल्लभे । इति । ततो नमोंतनाममंत्रेण शिवषण्मुखयोः । पूजा कार्या । ततः पक्वान्नपूर्णदीपयुतान् करक
न् दश ब्राह्मणेभ्यो दद्यात् । ततः पिष्टकनैवेद्यं भोज्यं सर्वं निवेदयेत् । ततश्चन्द्रोदयोत्तरं चन्द्रायार्घं दद्यात् । अथ कथा । मांधातोवाच । अर्जुने तु गते तु मुनि
[illegible] सुभ्रू द्रौपदी समचिन्तयत् । अहो किरीटिना कर्म समारब्धं सुदुष्करं । विघ्नप्रवणमेतद्धि बहवः परिपन्थिनः । चिन्तयित्वेति सा
देवी [illegible] । अर्जुनप्रियं चिकीर्षन्ती सा पृच्छद्विघ्नवारणं । द्रौपद्युवाच ॥ कथयस्व जगन्नाथ व्रतमेकं सुदुर्लभं । यत्कृत्वा यांति विघ्नानि विलयं शी
घ्रमच्युत । श्रीकृष्ण उवाच । एतदेव महाभागे प्रभुः पृष्टः किलोमया । एतत्पृष्टः कृष्णा पूर्वं पार्वत्या शङ्करं । प्रति । तस्मात्तद्वचनं श्रुत्वा प्राह देवो महेश्वरः

॥ व्र ॥ शृणु देवि प्रवक्ष्यामि वरारोहे महेश्वरि। पतिविघ्नहरीत्याहुः कारकाख्या चतुर्थिका। पार्वत्युवाच ॥ भगवन् कीदृशं प्रोक्तं केनेयञ्च पुराकृता ॥ ईश्वरउवाच ॥
३८ ब्रह्मकपुरे रम्ये विद्वज्जनसमाकुले ॥ स्वर्णवप्रसमाकीर्णे रत्नप्राकारशोभिते। दिव्यनारीजनालोकवशीकृतजगत्त्रये। वेदध्वनिसमायुक्ते स्वर्गादपि मनोह
रे। वेदधर्मा द्विजस्तत्र वसन्देशे विदांवरः। पत्नीतस्यैव विप्रस्य नाम्ना नीलावतीशुभा सातु संजनयामास पुत्रान् सप्तामितौजसः। कन्यां वीरवती नाम्नी
सर्वलक्षणसंयुतां। नीलोत्पलाभनयनां पूर्णेन्दुसदृशाननां। ततःकाले शुभदिने विधिवद्द्विजोत्तमः। ददौवेदांगविदुषे विप्राय विधिपूर्वकं। अथांतरेषु या
तेषु चक्रे गौर्याः शुभं व्रतं। चतुर्थ्यां कार्त्तिकस्याथ कृष्णायांतु विशेषतः। स्नाता सायंतने काले सर्वांस्तान् भक्तिभावतः। विलिख्य वटवृक्षञ्च गौरीं तस्य त
लेलिखेत्। शिवेन विघ्ननाथेन षण्मुखेन समन्वितां। गन्धपुष्पाक्षतैर्गौरीं मन्त्रेणानेन पूजयेत्। नमः शिवायै सर्वाण्यै सौभाग्यं सन्ततिं शुभां। प्रयच्छभ
क्तियुक्तानां नारीणां हरवल्लभे। तस्याः पार्श्वे महादेवं विघ्ननाथं षडाननं। पुनःपुष्पाक्षतैर्धूपैरर्चयेच्च पृथक् पृथक्। पक्वान्नाक्षतसंपन्नान् सदीपान् करका
न्दश। तथा पिष्टकनैवेद्यं भोज्यं सर्वन्यवेदयेत्। प्रतीक्षन्तीस्त्रियः सर्वाश्चन्द्रमर्घपराश्रिताः। सा बाला विकला दीना क्षुत्तृषा परिपीडिता। निपपात म
हीपृष्ठे बन्धुवर्गाश्च बान्धवास्तदा। समाश्वास्य च वातैस्तु मुखमभ्युक्ष्यवारिणा। तद्भ्राता चिन्तयत्त्वैवमारुरोह महावटं। हस्तेचोल्कां समादाय ज्वलन्तीं ''''
तः भगिन्यै दर्शयामास चन्द्रं व्यालोदितं तदा। तंदृष्ट्वा चार्तिमुत्सृज्य बुभुजेसुमना तदा। चन्द्रोदयं समाज्ञाय अर्घं दत्वा विधानतः। तद्दोषेण हतस्तस्याः
पतिःसर्वदूषितः। पतिं तथाविधं दृष्ट्वा शिवमभ्यर्च्य सा पुनः। व्रतं निरशनञ्चक्रे यावत्संवत्सरोगतः। चक्रुःसंवत्सरेतीतेव्रतं तद्भ्रातृयोषितः। पूर्वोक्तेन विधानेन
साऽपि चक्रे शुभानना। तदा याता शची देवी कन्याभिः परिवारिता। एतदेव व्रतं कर्त्तुमागता स्वर्गलोकतः। वीरावती तदा भ्यासमगमद्भाग्यतः स्वयं
दृष्ट्वा तां मानुषीं देवीं पप्रच्छ सकलं शची। वीरावती तदा दृष्ट्वा प्रोवाच विनयान्विता। अहं पितृगृहं प्राप्ता हतोयं मेपतिः प्रभुः। न जाने कर्मणा कस्य
फलम्प्राप्तं मयाधुना। मम भाग्यवशाद्देवि आगतासि महेश्वरि। अनुग्रहकीत्वमां मातर्जीवयाशु पतिं मम ॥ इन्द्राण्युवाच। त्वया पितृगृहे पूर्वं कुर्वन्त्या कर ३८

कव्रतं। तथैवार्घस्त्वयादत्तो विनाचन्द्रोदयं शुभे। तेन ते व्रतदोषेण स्वामी लोकान्तरं गतः। इदानीं कुरु यत्नेन करकव्रतमुत्तमं। पतिं ते जीवयिष्यामि व्र
तस्यास्य प्रभावतः॥ व्यास उवाच॥ तस्यास्तद्वचनं श्रुत्वा व्रतंचक्रे विधानतः। प्रसन्ना साभवद्देवी शक्रस्य प्राणवल्लभा। तया व्रते कृते देवि जलेनाभ्युक्ष्य त
त्पतिं जीवयामास चैन्द्राणी देववच्च बभूव सः। ततस्त्वागात् गृहं स्वीयं रेमे सा पतिना सह। धनं धान्यंच पुत्रांश्च दीर्घमायुश्च लब्धवान्। तस्मात्त्वयापि यत्ने
न व्रतमेतद्विधीयतां॥ सूतउवाच॥ द्वैपायनवचः श्रुत्वा चकार द्रौपदी व्रतं। तद्व्रतस्य प्रभावेण जित्वा तान् कौरवान् रणेलेभिरे राज्यमतुलं सधर्मं विपुलं
यशः। करकं क्षीरसम्पूर्णं तोयपूर्णमथापिवा। ददामि रत्नसंयुक्तं चिरञ्जीवतु मे पतिः। इति मन्त्रेण करकान्प्रदद्यात् द्विजसत्तमे। सुवासिनीभ्यो दद्याच्च
आदद्यात्ताभ्य एववा। एवं व्रतं या कुरुते नारी सौभाग्यकाम्यया। सौभाग्यं पुत्रपौत्रादि लभते सुस्थिरां श्रियं॥ इति श्रीवामनपुराणे करकभाद्रचतुर्थीव्रतं
अथ माघशुक्लचतुर्थ्यांश्चगौरीचतुर्थीव्रतं हेमाद्रौ ब्राह्मे उमाचतुर्थ्यां माघेतु शुक्लायां योगिनीगणैः। प्रागभ्यर्चयित्वा तुष्टाच भूयस्त्वां सात्त्विकैर्गुणैः। तस्मात्सा
तत्र संपूज्या नरैःस्त्रीभिर्विशेषतः। कुन्दपुष्पैः प्रयत्नेन सम्यक् भक्त्या समाहितैः। कुङ्कुमालक्तकाभ्यांच रक्तसूत्रैःसकङ्कणैः। रक्तैःपुष्पैस्तथा धूपैर्दीपैर्बलिभि
रेवच॥ गुडार्द्रकाभ्यां पयसा लवणेनाथपालकैः। पालकं स्वङ्गाण्डमितिहेमाद्रिः। पूज्याःस्त्रियश्चविविधास्तथा विप्राश्च शोभनाः। सौभाग्यवृद्धये देयं
भोक्तव्यं बन्धुभिः सह॥ इति गौरीव्रतं। इति व्रतार्के चतुर्थीव्रतानि॥ अथ पञ्चमी व्रतानि। तत्र भाद्रशुक्लपञ्चम्यांऋषिपञ्चमीव्रतं। तत्र मध्याह्न
व्यापिन्यां कार्य्यं। तथाच माधवीये हारीतः। पूजा व्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरितिदिनद्वये तद्व्याप्तावव्याप्तौवा पूर्वविद्धायां कार्यं युग्मवाक्यात्।
मदनरत्ने ब्राह्मे। नभस्य शुक्लपक्षे तु या वै भवति पञ्चमी। नद्यादिके तदा स्नात्वा कृत्वा नियममेवच। ब्राह्मणी क्षत्रिया वैश्या शूद्रा वापि वरानने।
कृत्वा नैमित्तिकं कर्म गत्वा निजगृहं पुनः। वेदीं सम्यक् प्रकुर्वीत गोमयेनोपलेपितां। रङ्गवल्लीसमायुक्तां श्वेतपुष्पोपशोभितां। तत्र सप्तऋषीन्दिव्यान्भक्ति
युक्तान् प्रपूजयेत्। गन्धैश्च विविधैः पुष्पैर्धूपदीपैः सुशोभनैः। ततो नैवेद्यसम्पन्नमर्घं दद्यात्कुभैः फलैः। अर्घमन्त्रः॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोथ

॥ व्र ॥ गौतमः। जमदग्नि वसिष्ठस्य सप्तैते ऋषयः स्मृताः। गृहाण त्वं अर्घं मया दत्तं तुष्टा भवन्तु मे सदेति। एवं पूजां विनिर्वर्त्य ऋषीन् ध्यात्वा समाहितः। अक्षुष्ट
॥ ४० ॥ श्रीसंजातशाकाहारं प्रकल्पयेत्। शयीत ब्रह्मचर्येण ऋषीन् ध्यात्वा समाहितः। अनेन विधिना सप्तवर्षाणि व्रतमाचरेत्। आदौ मध्ये तथा चांते कुर्याद्
उद्यापनं बुधः। आचार्यान् वरयेत् सप्त वेदवेदाङ्गपारगान्। प्रतिमाः सप्त कुर्वीत सुवर्णेन स्वशक्तितः। जटिलाः साक्षसूत्राश्च कमण्डलुसमन्विताः। संस्थाप्य
कलशेष्वेता मृन्मयेष्वव्रणेषु च। स्नापयेद्विधिवद्भक्त्या पञ्चामृतैर्यथा विधि। एवं पूजां विनिर्वर्त्य अर्घं दद्यात् यतव्रतः। ततो होमं प्रकुर्वीत तिलव्रीहियवैः
क्रमात्। सप्तस्तोमाः सप्त वाथ नाममंत्रैस्तु वा पृथक्। सप्तगाश्चैव दातव्या वस्त्रालङ्कारसंयुताः। आचार्यान् पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः। अनुज्ञया गु
रोः पश्चाद्ब्राह्मणेभ्यो निवेदयेत्। प्रीतिभावसमायुक्तो भोजयित्वा यथा विधि। अनेन विधिना सम्यक् व्रतमेतत् समाचरेत्। सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु
यत्फलं। सर्वदानेषु दत्तेषु तदेतद्व्रतचारिणां। अथ कथा। हेमाद्रौ ब्रह्मांडे सिताश्वउवाच॥ श्रुतानि देवदेवेश व्रतानि सुबहूनि च। सांप्रतं मे समा
चक्ष्व व्रतं पापप्रणाशनं॥ ब्रह्मोवाच॥ शृणु राजन् प्रवक्ष्यामि व्रतानामुत्तमं व्रतं। ऋषिपञ्चमीति विख्यात सर्वपापहरं परं येन चीर्णेन राजेंद्र नरकं नैव
पश्यति। अत्रैवोदाहरन्तीममितिहासं पुरातनं। विदर्भभूद्विजवर उत्तंको नाम नामतः। तस्य भार्या सुशीलेति पतिव्रतपरायणा। तस्या अपत्ययुगलं
पुत्रोऽपि सु विभीषणः। अधीतवान् सुतस्तस्य वेदान् सांगपदक्रमात्। समानेन कुलीनेन सुता चापि विवाहिता॥ विवाहितैव सा दैवाद्वैधव्यं प्राप्य
सत्तमा। सतीत्वं पालयन्ती सा आस्ते निज पितुर्गृहे। तस्या दुःखेन सन्तप्तः सुतं संस्थाप्य वेश्मनि। गङ्गातीरवनं प्राप्तः सकलत्रस्तया सह। स तत्राध्याप
यामास शिष्यान्वेदं द्विजोत्तमः। सुता च कुरुते तत्र पितुः शुश्रूषणं परं॥ पितुः शुश्रूषणं कृत्वा परिश्रांता कदाचन। निशीथे किल संसुप्ता कृमिराशिर
जायत। ते तां तथाविधां दृष्ट्वा विषण्णां प्रस्तरस्थितां। शिष्या निवेदयामासुस्तन्मातुः करुणाः स्थितां। नजानीमो वयं किञ्चित् देवि साध्वी तथा ४०
विधा। कृमिराशिमयी जाता मातः संप्रति दृश्यते। वज्रपातसदृशं तत् श्रुत्वा शिष्यैरुदीरितं। सम्भ्रान्तमानसा शीघ्रं तत्समीपमुपागता। सातां तथा

विधां दृष्ट्वा विललाप सुदुःखिता। उरश्च ताडयामास सुतरां मोहमाप च। क्षणेन प्राप्य चैतन्यमुत्थाप्य प्रतिबुध्य च। समालभ्य च बाहुभ्यां निन्ये तत्। पितुरं तिकं। स्वामिन् कथय मे साध्वी केन दुःकृतकर्मणा। निशीथे संप्रसुप्तेयं जायते कृमिसङ्कुला। एतत् श्रुत्वा ततो वाक्यमृषिर्ध्यानपरायणः। ज्ञात्वा निवेदयामास तस्याः प्राग्जन्मचेष्टितं। ऋषिरुवाच॥ प्रागियं सप्तमेऽतीते जन्मनि ब्राह्मणी ह्यभूत्। नोत्ससार स्वभांडेभ्यः संजाता च रजस्वला॥ आस्यास्तु पाप्मना तेन जायते कृमिवद्वपुः। रजस्वलायाः पापेन युक्ता भवति सानघे। प्रथमे ऽहनि चण्डाली द्वितीये ग्रामसूकरी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति। तथानया सखीसंगाद्व्रतं दृष्ट्वा वमानितं। दृष्टव्रतप्रभावेण जाता द्विजकुलेऽमले। अवमानाद्व्रतस्यास्य कृमिराशिमयी धुना। एतत्ते कथितं सर्वं कारणं दुष्कृतस्य च॥ सुशीलोवाच॥ दर्शनादपि यस्य स्याद्विप्राणां निर्मले कुले। जन्म युष्मद्विधानं हि जायते ब्रह्मतेजसां। अवज्ञायाः प्रजायन्ते विग्रहे कृमिराशयः। महाश्चर्यकरं नाथ तद्व्रतं कथयस्व मे। ऋषिरुवाच॥ सुशीले शृणु तत् सम्यग्व्रतानामुत्तमं व्रतं। येन चीर्णेन सहसा पापादस्मात् प्रमुच्यते। दुःखचयाभिघातश्च जायते नाथ संशयः। कल्याणानि विवर्धन्ते सम्पदश्च निरापदः। नभस्य शुक्लपक्षे तु यदा भवति पञ्चमी। नद्यादिषु तदा स्नानं कृत्वा नियममेव च। विधाय नित्यकर्माणि मत्वा द्वारवतीमृषीन्। स्नापयेद्विधिवद्भक्त्या पञ्चामृतरसैः शुभैः। द्वारवत्यग्निशौचशाला चन्दनागरुकर्पूरैर्विलिप्य च सुगन्धिभिः। पूजयेद्विविधैः पुष्पैर्गन्धधूपादिदीपकैः। समाच्छाद्य शुभैर्वस्त्रैः सोपवीतैर्यथाविधि। ततो नैवेद्यसंपन्नमर्घं दद्यात्कुम्भैः फलैः। अर्घमन्त्रः प्रागुक्तएव। श्रोतव्यमिदमाख्यानं ग्राकाचारं प्रकल्पयेत्। स्थातव्यं ब्रह्मचर्येण ऋषिध्यानपरायणैः। अनेन विधिना सम्यग्व्रतमेतत् समाचरेत्। तस्य यज्जायते पुण्यं तत् शृणुष्व समाहितः। सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं। सर्वदानेषु दत्तेषु तदस्य व्रतपारणात्। कुरुते या व्रतञ्चैतत् सा नारी सुखभागिनी। रूपलावण्यसंयुक्ता पुत्रपौत्रादिसंयुता। इहलोके सदैव स्यात परत्राप्यचया गतिः। व्रतस्यास्य प्रभावेण जातिं स्मरति पौर्विकीं॥ इति हेमाद्रौ ब्रह्माण्डे ऋषिपञ्चमी व्रतं॥ अथ शिष्टाचारप्राप्तपञ्चमी व्रतं करिष्ये॥ इति संकल्प्यारुन्धतीसहितान्सप्तर्षीन् पूजयेत्। तत्र पूजाविधिः। आगच्छन्तु

महाभागाश्चतुर्वेदस्वरूपिणः । यावद्व्रतमहं कुर्वे कृपया भवतां प्रभो ॥ आवाहनं ॥ मूर्त्तं ब्रह्मण्यदेवस्य ब्रह्मणस्तेज उत्तमं ॥ सूर्यकोटिप्रतीकाशं ऋषिवृन्दं विचिन्तयेत् । ध्यान ॥ ऋग्यजुःसामवेदानां स्वरूपेभ्यो नमोनमः । पुराणपुरुषेभ्योहि देवर्षिभ्यो नमोनमः ॥ आसनं ॥ गन्धपुष्पाक्षतैर्युक्तं पाद्यं गृह्णन्तु भोद्विजाः । प्रसादं कुरुत प्रीता स्तुष्टाःसन्तु सदा मम पाद्यं ॥ नभस्ये शुक्लपञ्चम्यामर्चिता ऋषिसत्तमाः । दहन्तु पापं मे सर्वं अर्घं गृह्णन्तु वैनमः । अर्घं लोकानां तुष्टिकर्त्तारो यूयं सर्वे तपोधनाः । नमो वो धर्मविज्ञेभ्यो महर्षिभ्यो नमोनमः । आचमनं ॥ मन्दाकिनी गौतमीच यमुनाच सरस्वती । कृष्णाच नर्मदा तापी ताभ्यः स्नानीयमाहृतं । स्नानं । सर्वे नित्यं तपोनिष्ठा ब्रह्मज्ञाः सत्यवादिनः । वस्त्राणि प्रतिगृह्णन्तु भक्तिदाः सन्तु मे सदा ॥ वस्त्रं नाना मन्त्रैः समुद्भूतं निर्वर्त्य ब्रह्मसूचकं प्रत्येकञ्च प्रयच्छामि ऋषयः प्रतिगृह्यतां उपवीतं चन्दनं ॥ रञ्जिताः कुङ्कुमौघेन अक्षतास्तु सुशोभनाः । गृह्णन्तु मम संतुष्टाः प्रसन्ना ऋषिसत्तमाः ॥ अक्षताः । मालतीचम्पकादीनि मालत्यादीनिवै प्रभो । मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां ॥ पुष्पं ॥ वनस्पतिरसो धूपो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां । धूपं ॥ आज्यञ्च वर्त्तिसंयुक्तं वह्निना योजितं मयादीपं गृहाण देवेश त्रैलोक्यतिमिरापहं ॥ दीपं ॥ नाना पक्वान्नसंयुक्तं रसैः षड्भिः समन्वितं । नैवेद्यमृषयः सर्वे गृह्णन्तु वसुदायकाः । नैवेद्यं । लोकानामित्याचमनं चन्दनेन करोद्वर्त्तनं । पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं । कर्पूरादिसमायुक्तं तांवूलं प्रतिगृह्यतां । तांवूलं ॥ इदं फलमिति फलं । हिरण्यगर्भभस्थमिति दक्षिणा । यानिकानीति प्रदक्षिणा । वायणं फलसंयुक्तं सघृतं दक्षिणान्वितं । द्विजवर्य्याय दास्यामि व्रतसम्पूर्त्तिहेतवे । भवन्तः प्रतिगृह्णन्तु ज्योतिरूपा स्तपोधनाः । वायणं ॥ न्यूनातिरिक्तकर्माणि मया यानि कृतानिच । क्षमध्वंतानि सर्वाणि यूयं सर्वे तपोधनाः । विसर्जनं ॥ अथ कथा ॥ युधिरउवाच । श्रुतानि देवदेवेश व्रतानि सुवहूनि च । सांप्रतं मेन्यदाचक्ष्व व्रतं पापप्रणाशनं । श्रीकृष्ण उवाच ॥ अथान्यदपि राजेन्द्र पञ्चमी ऋषिसंज्ञिता कथयिष्यामि 
यत्कृत्वा नारी पापात्प्रमुच्यते । युधिष्ठिर उवाच ॥ कीदृशी पञ्चमी कृष्ण कथञ्च ऋषिसंज्ञिता । पातकान्मुच्यते कस्मान्नारी यदुकुलोद्भव पापानि

च बहुन्यत्र विद्यन्ते किल केशव। श्रीकृष्णउवाच। अज्ञानात् ज्ञानतो वापि या स्त्री जाता रजस्वला। दृष्टा स्पृशति भाण्डानि गृहकर्मणि संस्थिता। प्राप्नोति सा महापापं सर्वं नारी रजस्वला। शृणुष्व कारणं यस्मात् वर्जनीया रजस्वला। प्रोत्सार्य्य गृहान्तस्थापि चातुर्वर्ण्येन भारत। ब्रह्महत्यां पुरा शक्रो वृत्रं हत्वा समाप्तवान्। तया वै राजशार्दूल क्रीडितो वृत्रसूदनः। ब्रह्माणं समुपागच्छदात्मनः शुद्धिकारणात्। शुद्धिं शक्रस्य राजेन्द्र प्रहृष्टेनान्तरात्मना। विभज्य ब्रह्महत्यां तु चतुर्धा च चतुर्मुखः। प्राक्षिपत् राजशार्दूल चतुःस्थानेषु वै तदा। वह्नौ प्रथमजातासु ज्वालासु च नदीषु च। पर्वतेषु च राजेन्द्र नारी रजसि पार्थिव। अतो रजस्वला नारी प्रोत्सार्य्या च प्रयत्नतः। ब्रह्मणः शासनात्पार्थ चातुर्वर्ण्येन सर्वदा। प्रथमेऽहनि चांडाली द्वितीये ब्रह्मघातकी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति। अज्ञानात् ज्ञानतो वापि जातं संसर्गपातकं। तत्पापसंक्षयार्थं हि कार्य्यं य ऋषिपञ्चमी। सर्वपापप्रशमनी सर्वोपद्रवनाशिनी। ब्रह्म क्षत्रिय विट्शूद्रैः। स्त्रीभिः कार्य्या विशेषतः॥ श्रीकृष्ण उवाच॥ अथान्यदपि राजेन्द्र प्रवक्ष्यामि कथानकं। पुरा कृते युगे राजन् विदर्भायां बभूव ह। श्येनजिन्नाम राजर्षिस्तुर्वर्ण्ये नृपालकः। तस्य देशे वसद्विप्रो वेदवेदांगपारगः। सुमित्रो नाम राजेन्द्रः सर्वभूतहिते रतः। कृषी कृत्या समासीनः कुटुम्बपरिपालकः। तस्य भार्या सुसाध्वी च पतिशुश्रूषणे रता। जयश्रीनामविख्याता बहुभृत्यसुहृज्जना। क्षेत्रादिषु रता साध्वी व्याकुली कृतमानसा। एकदा सात्मनः प्राप्तमृतुकालं व्यलोकयत्। रजस्वलापि सा राजन् गृहकर्म चकार ह। भांडानि सास्पृशद्राजन् ऋतौ प्राप्तेऽपि भामिनी। कालेन बहुना साध्वी पञ्चत्वमगमदा। तस्या भर्त्तापि विप्रोसौ कालधर्मामुपेयिवान्। एवं तौ दम्पती राजन् स्वकर्म वशगौ तदा। भार्या तस्य जयश्री सा साक्षात् सम्पर्कदोषतः। शुनीयोनिमनुप्राप्ता सुमित्रोपि नरेश्वरः। तस्याः सम्पर्कदोषेण बलीवर्दो बभूव ह। तद्दोषेण महाराज दुर्गतिं तौ गतौ तदा। सुमित्रस्य च पुत्रोभूत् पितृशुश्रूषणे रतः। सुमतिर्नाम धर्मज्ञो देवतातिथिपूजकः। तस्य तौ पितरौ पार्थ ऋतुसम्पर्कदोषतः। तिर्यग्योनिमनुप्राप्तौ उभौ जातिस्मरौ नृप। उच्छिष्टभोजिनी साभूत् स्मरन्ती पूर्वपातकं। सुमित्रोपि पिता तस्य बलीवर्दो बभूव ह। अथ क्षयाहे संप्राप्ते पितृशुश्रूषणे

॥ अ ॥ रतः । भार्यां चक्रवर्तीं प्राह सुमतिः श्रद्धयान्वितः । अद्य सांवत्सरदिनं पितुर्मे चारुहासिनि । भोजनीया मया विप्राः पाकशुद्धिर्विधीयतां । तथा कृ
॥ ४२ ॥ पाकशुद्धिः सुमतेर्भर्तुराज्ञया । मुक्तं पायसभांडस्याः सर्पेण गरलं ततः । दृष्ट्वा ब्रह्मवधाद्भीता शुनी भांडानि सा स्पृशत् । द्विजभार्याच तां दृष्ट्वा उलूखे
जघान तां । भोजिता ब्राह्मणास्तत्र श्राद्धं कृत्वा प्रयत्नतः । ततो भुक्तेषु विप्रेषु नोच्छिष्टंतु ददौवह्निः । द्वारस्थायास्तदा शुन्या उपवासस्तदाभवत् । तते
रात्र्यां प्रवृत्तायां सा शुनीक्षुधिता नृप । बलीवर्दमुपागत्य भर्त्तारमिदमब्रवीत् । बुभुक्षिताद्य नाथाहं न दत्तं भोजनं तु मे । ग्रासादिकं च न लभे क्षुधा म
बाधते बलात् । अन्यस्मिन् दिवसे पुत्रो ममलेह्यं ददात्यसौ । अद्यमह्यं किमप्येष उच्छिष्टमपि नो ददौ । पायसान्ने पपाताद्य गरलं सर्पसम्भवं । मया विचि
न्त्य मनसा मरिष्यंति द्विजोत्तमाः । संस्पृष्टं पायसं रोषाद्वध्वाहं ताडिता भृशं । दुःखितं तेन गात्रं मे कटिर्भग्ना करोमि किं । ततः प्राह स वै भर्त्ता भद्रे
ते पापसंग्रहात् । किङ्करोमि ह्यशक्तस्तु भारवाहत्वमागतः । अद्याहमात्मजक्षेत्रे वाहितः सकलं दिनं । मारितस्त्वात्मजेनाहं मुखं बध्वा बुभुक्षितः । हृथा
श्राद्धं कृतन्तेन जाताद्य मम कष्टता ॥ कृष्णउवाच ॥ तयोः संवदतोरेवं मातापित्रोश्च भारत । श्रुत्वा पुत्रस्तदा वाक्यं यदुक्तंच तदोभयोः । ततो रज
न्यां तत्कालं ददौ तस्यैव भोजनं । पितरौतौ विदित्वा तु दत्तवान् सुमतिस्तदा । तदासौदुःखितः पुत्रो ज्ञात्वावस्थां तदा तयोः । मातापित्रोस्तु राजेन्द्र
तदा सौ प्रस्थितो वनं । ज्ञातुमिच्छामि कष्टं वै मातापित्रोश्च भारत । तत्र गत्वा ज्ञानदृष्टान् ऋषीन् सप्त वनाश्रितान् । प्रणिपत्य ब्रवीद्वाक्यं हितंचैव तदा
तयोः । सुमतिरुवाच । कथयध्वं ब्रह्मर्षयः प्रश्नमेतं समाहिताः । केन कर्म विपाकेन पितरौ मे तपोधनाः । इमामवस्थां संप्राप्तौ मोचिते पातकात् कथं ।
ऋषयऊचुः । तव माता पुरा विप्र स्वगृहे बालभावतः । प्राप्तं ऋतुं विदित्वा तु सम्यक्र्रमकरो द्विज । तेन कर्मविपाकेन शुनीयोनिमुपागता । पितास्याश्चर्य
दोषेण बलीवर्दो बभूवह । एतयोर्मुक्तिकामार्थं कुरु त्वऋषिपञ्चमी । भार्य्यया सह विप्रेन्द्र ऋषीन् संपूज्य यत्नतः । आचरस्व व्रतं तत्र सप्त वर्षं द्विजोत्तम । ४२
अन्ते चोद्यापनं कुर्याद्वित्तशाठ्यं विवर्जितः । शाकाहारस्तु कर्त्तव्यः श्यामाकाहारएववा । नीवारैर्वापिकर्त्तव्यं कृष्टपच्यं न भक्षयेत् । प्राप्य भाद्रपदे मासि शुक्लप

चैव पञ्चमी । तस्यां मध्याह्नसमये नद्यादौ विमले जले । कृत्वापामार्गवृक्षेण दन्तधावनमादितः । आयुर्बलं यशोवर्चः प्रजाः पशुवसूनिच । ब्रह्मप्रज्ञां च मेधाञ्च त्वन्नोदेहि वनस्पते । संप्रार्थ्य तेन मन्त्रेण कुर्याद्धि दन्तधावनं । मुखदुर्गन्धिनाशाय रदनानां विशुद्धये । ष्ठीवनायच मासानां कुर्वेहं दन्तधावनं । अनेन दन्तान् संशोध्य स्नायान्मृत्स्नानपूर्वकं । तिलामलककल्केन केशान् संशोध्य यत्नतः । परिधाय नवे शुद्धे वाससी सुसमाहितः । पूजयस्व ऋषीन् दिव्यानरुन्धत्या समन्वितान् । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती । मन्त्रेणानेन सप्तर्षीन् पूजयेत् सुसमाहितः । व्रतेन ऋषिपञ्चम्याः कृतेनैवं द्विजोत्तम । ऋतुसम्पर्कजो दोषः क्षयं याति न संशयः । श्रीकृष्ण उवाच ॥ तच्छ्रुत्वा सुमतिर्वाक्यं परमं ऋषिभाषितं । गृहमेत्य व्रतं चक्रे सभार्यः श्रद्धयान्वितः । व्रतन्तु ऋषिपञ्चम्याः सर्वपापप्रनाशनं । कृत्वा सर्वं यथोक्तञ्च मातापित्रोः फलं ददौ । व्रतपुण्यप्रभावेण माता तस्य श्वयोनितः । मुक्ता नृपतिशार्दूल विमानवरसंस्थिता । दिव्यांबरधरा भूत्वा गता स्वर्गंच भारत । पितापि मोक्षतो गच्छत्सुमतेः पशुयोनितः । स्वर्गं प्राप्तो महाराज व्रतस्यास्य प्रभावतः । कायिकं वाचिकं वापि मानसं यच्च दुष्कृतं । तत्सर्वं विलयं याति व्रतस्यास्य प्रभावतः । यस्य यज्जायते पुण्यं तच्छृणुष्व द्विजोत्तम । सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं । सर्वदानेषु दत्तेषु तदेतद्व्रतपारणात् । कुरुते या व्रतं नारी साभवत्सुखभोगिनी । रूपलावण्ययुक्ताच पुत्रपौत्रादिसंयुता । इह लोके सदैवस्यात्परत्रैव च परां गतिं । एतत्ते कथितं राजन् व्रतानामुत्तमं व्रतं । सर्वसम्पत्प्रदञ्चैव नारीणां पापनाशनं । धनं यशश्च स्वर्गंच पुत्रानपि युधिष्ठिर । पठतां शृण्वतां वापि सर्वपापप्रणाशनं । इति श्रीभविष्योत्तर पुराणे ऋषिपञ्चमीव्रतकथा ॥ अथोद्यापनं ॥ युधिष्ठिरउवाच ॥ किमस्योद्यापनं प्रोक्तं व्रतपूर्णफलप्रदं । सुमतिः केन विधिना चकार वद तत्वतः ॥ श्रीकृष्णउवाच ॥ पूर्वस्मिन् दिवसे कुर्यादेकभक्तं समाहितः । शुचौ देशे समालिप्य सर्वतोभद्रमण्डले अव्रणं सजलं कुम्भं ताम्रं मृन्मयमेव वा । संस्थाप्य वस्त्रसंवीतकण्ठदेशे सुशोभनं । पञ्चरत्नसमायुक्तं फलगन्धाक्षतैर्युतं । सहिरण्यं समाच्छाद्य ताम्रेण

॥ व्र ॥ पटलेन वै। वंशच्छन्नमयपात्रेण यवपूर्णेन चैव हि। आच्छादयेत्तच्चैलेन लिखेदष्टदलं ततः। सौवर्णाः प्रतिमाः कार्याः ऋषीणां भावितात्मनां। प

॥ ४२ ॥ वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः। शक्त्या वा कारयेत्तत्र वित्तशाठ्यविवर्जितः। वितानं पञ्चवर्णंच फलपुष्पसमन्वितं। बध्नीयादुपरि श्रीमत् संभा

[illegible]। मध्याह्ने पूजयेद्भक्त्या ऋषीन् श्रद्धासमन्वितः। कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। यमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती। भ

[illegible] राजेन्द्र कृत्वा पूजां समाहितः। रात्रौ जागरणं कुर्यात् पुराणश्रवणादिभिः। कृतनित्यक्रियः प्रातर्जुहुयात्तिलसर्पिषा। वैदिकान् चापि

राघवान् अधिकारानुसारतः। अष्टोत्तरसहस्रम्वा शतमष्टोत्तरन्तुवा। पुनः पूजां ततः कृत्वा गुरुं सम्पूजयेद्व्रती। स्वर्णांगुलीयवासोभिः कुण्डलाद्यैस्तथै

र्धनैः। दद्यादेकां सवत्सांच गुरवे गां पयस्विनीं। पूजयेदृत्विजः सम्यक् वासोभिर्दक्षिणादिभिः। कलशांश्च पवित्रांश्च दद्यात्तेभ्यः सुभक्तितः। आचार्यञ्च

सपत्नीकं प्रणिपत्य क्षमापयेत्। भोजयेद्ब्राह्मणान् भक्त्यादीनानथांश्च तर्थैच। सोपस्करां ता प्रतिमामाचार्याय निवेदयेत्। लब्धानुज्ञान्तु भुंजीत इष्टैर्बन्धु

जनैःसह। उद्यापनविधिः प्रोक्तः सर्वचार्य फलार्थिनां। एवं यः कुरुते भूप उद्यापन विधिंपरं। सर्व पापविनिर्मुक्तो स्वर्गलोके महीयते। इह लोके चिरं

कालं भर्त्रा सह सुचिस्मिता। पुत्रपौत्रैः परिवृता भुक्ता भोगान् मनोहरान्। निःपापा सुभगा नित्यं लभते चाक्षयां गतिं। इति सोद्यापनऋषिपञ्चमी

व्रतं। अथास्यामेव नागपञ्चमी व्रतं हेमाद्रौ प्रभासखण्डे ईश्वर उवाच मासिभाद्रपदे वापि शुक्लपक्षेतु पंचमी सा तु पुण्यतमा प्रोक्ता देवानामपि

दुर्लभा। कार्या द्वादशवर्षैस्तु पञ्चमीच वरानने। चतुर्थ्यामेकभक्तंतु तस्यां नक्तं प्रकीर्त्तितं। भूरिचन्द्रमयं नागमथवा कलधौतजं। कलधौतजं सुवर्णजं।

कृत्वा दारुमयं वापि अथवा मृन्मयं प्रिये। पञ्चम्यामर्चयेद्भक्त्या नागं पञ्चफणं स्मृतं। करवीरैः शत पत्रैश्च जातीपुष्पैश्च पद्मकैः। तथागन्धैश्च

धूपैश्च पूजयेन्नागपञ्चकं। ब्राह्मणान् भोजयेत्पश्चात् घृतपायसमोदकैः। अनन्तं वासुकिं शेषं पद्मं कमलमेवच। तथा कर्कोटकं नागं

नागमश्वतरन्तथा। धृतराष्ट्रं शंखपालं कालियं तक्षकं तथा। पिङ्गलञ्च महानागं मासि मासि प्रकीर्त्तिताः। व्रतस्यांते पारणं स्यात् 

क्षीरैर्ब्राह्मणभोजनं। सुवर्णभारनिष्पन्नं नागं दद्याच्च गांतथा। तथा वस्त्राणि देयानि व्यासायामिततेजसे। एवं संपूजयेन्नागान् सदा भक्त्या समन्वितः। विशेषतस्तु पञ्चम्यां पयसा पायसेन चेति॥ इति प्रभासखण्डनागपञ्चमी व्रतं। अत्रैव नागदष्टव्रतं। हेमाद्रौ भविष्योत्तरे। सुमन्तउवाच। नागदष्टो नरोराजन् प्राप्य मृत्युं व्रजत्यधः। अधोगत्वा भवेत्सर्पो निर्विषो नात्र संशयः। शतानिकउवाच। नागदष्टः पिता यस्य भ्राता वा दुहितापि च। माता पुत्रोथवा भार्या कर्त्तव्यं तद्वदस्वमे। मोक्षाय तस्य विप्रेन्द्र दानव्रतमुपोषणं। ब्रूहि मे द्विज शार्दूल येन तद्वैकरोम्यहं। सुमन्तउवाच। उपोष्या पञ्चमी सम्यक् नागानां बलवर्धिनी। सुमेकमेकं यावच्च विधानं शृणु भारत। उपोष्येति दिवाभोजनाभावः तस्यां नक्तमित्यग्रेनक्तोक्तेः सुमेकः संवत्सरः। मासि भाद्रपदे राजन् शुक्लपक्षेतु पञ्चमी। सापि पुण्यतमा प्रोक्ता ग्राह्या सौगतिकाम्यया। चतुर्थ्यामेकभक्तंच तस्यां नक्तं प्रकीर्त्तितं। तस्यां पञ्चम्यां कुर्याच्चान्द्रमसं नागमथवा कलधौतजं। हैमंरौप्यंचेत्यर्थः। अथ दारुमयं भव्यं मृन्मयं वाथ शक्तितः। पञ्चम्यामर्चयेद्भक्त्या नागं पञ्चफणं तथा। करवीरैः शतपत्रैः जातीपुष्पैः सुगन्धिभिः। गन्धपुष्पैःसनैवेद्यैः क्षाज्य क्षीरादिभिर्नृप। ब्राह्मणान् भोजयेत्पश्चात् घृतपायसमोदकैः। अनन्तं वासुकिं शङ्खं पद्मं कंबलमेवच। तथा कर्कोटकं नागं नागमश्वतरं नृप। धृतराष्ट्रं शङ्खपालं कालियं तक्षकं तथा। पिङ्गलंच तथा नागं मासि मासि क्रमाद्यजेत्। पूजयित्वा अनेन पंचम्यां नक्तभुग्भवेत्। एवं द्वादश कृत्वावै मासि भाद्रपदे नृप। वत्सरांते यथा शक्त्या महाभोज्यन्तु कारयेत्। ब्राह्मणानां यतीनांच नागमनुद्दिश्य भक्तितः। इतिहासविदे नागं कांचनं रत्नचित्रितं। गांच दद्यात् सवत्सां वै सर्वोपस्करसंयुतां। दानकाले पठेदेतत् स्मरन्नारायणं विभुं। सर्वगं सर्वधातारमनन्तमपराजितं। येकेचिन्मकुले सर्पैर्दष्टाः प्राप्ताह्यधोगतिं। व्रतदानेन गोविंद मुक्तिभाजो भवन्तुते। इत्युच्चार्यार्चतैर्युक्तं सितचन्दनमिश्रितं। वासुदेवाग्रतो भूप तोयं तोयेथ निक्षिपेत्। अनेन विधिना सर्वे ये मरिष्यंति वान्धवाः। सर्पतस्तेभियास्यन्ति स्वर्गतिं नृपसत्तम। कृत्वा सर्वान् समुद्धृत्य कुलजान् कुलनन्दन। प्रयाति विष्णुसान्निध्यं सेव्यमानोप्सरोगणैः। वित्तशाठ्यविहीनोयः सर्वमेतत् फलं लभेत्। नक्तस्य भक्ति

॥ व्र ॥ सहिताः सितपञ्चमीषु ये पूजयन्ति सुभगान् कुसुमोपहारैः । तेषां गृहेष्वभयदाश्च भवन्ति सर्पाः दर्पान्विता मणिमयूखविभासितांगाः इति नागपञ्च
४४ म्मीव्रतम् । अथाश्विनशुक्लपंचम्यामुपांगललिताव्रतं । तच्च दाक्षिणात्यशिष्टाचार एवमानं । अत्र पूजैव प्रधानं । तत्पूजयन्निजगृहे परावृद्धि
[illegible] कथायां पूजयाः फलसन्धानात् । फलवत्सन्निधावफलं तदंगमितिन्यायेन जागरणवायणदानवटकादिभक्षणादेस्तदंगत्वं तद्वपूजनं मध्याह्न
व्यापिन्यां कार्यं पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति माधवीये हारीतोक्तेः । दिनद्वयेतद्व्याप्तावव्याप्तौ वा पूर्वा युगभूतानामिति वाक्यात् एतेन जाग
रणमङ्गं भुक्ता जागरणंनक्तं चन्द्रार्घ्यवर्षस्वव्रते तथा ताराव्रतेषु सर्वेषु रात्रियोगो विशिष्यत इति हेमाद्रिलिखितवचनाद्रात्रिव्यापिनी ग्राह्येति कस्यचिदुक्ति
रुपेक्षणीया अङ्गानुरोधेन निर्णयस्य क्वाप्यदृष्टत्वात् । वचस्तु जागरणप्रधानके सावकाशमिति । अथ व्रतविधिः आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य
पुत्रधनविद्यारोगनिर्मुक्तिसुखगोविजयपुष्ट्यादिकामः स्त्रीत्ववैधव्यकामा उपाङ्गललिताप्रीत्यर्थं यथामिलितोपचारैः उपांगललितापूजनमहंकरिष्ये । इति
सङ्कल्प्य पूजां कुर्यात् । अथ पूजाविधानं च कुर्यादेकाग्रमानसः । सौवर्णीं प्रतिमां कृत्वा शक्त्या मन्त्रैः प्रपूजयेत् । नीलकौशेयवसनां हेमाभां कमलासनां ।
भक्तानां वरदां नित्यं ललितां चिन्तयाम्यहम् ॥ ध्यानं ॥ निजाशनेस्व पुत्रैस्व सहिते भक्तवत्सले । उपाङ्ग ललिते मातरेह्निमे व्रतकर्मणि । आगच्छ ललिते
देवि सर्वसम्पत्तिदायिनि । यावद्व्रतं समाप्येत तावत्त्वं सन्निधौ भवेत्यावाहनं । कार्तस्वरमयं देवि नानामणिगणाहितं । अनेकशक्तिसंयुक्तं आसनं प्रति
गृह्यतां । तामावहइत्यासनं । गङ्गादि सर्वतीर्थेभ्यो मया प्रार्थनया हृतं । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां । अश्वपूर्णामितिपाद्यं । निधानं
सर्वरत्नानां त्वमनर्घ्यगुणाह्यसि । तथापि भक्त्या ललिते गृहाणार्घं नमोऽस्तुते । कासोस्मितामित्यर्घं । पाटलोशीरकर्पूरसुरभिः स्वादुशीतलं । तोयमाचमनी
यार्थं ललिते प्रतिगृह्यतां । चन्द्रप्रभासामित्याचमनं । पञ्चामृतं मयानीतं पयोदधिघृतं चवै । शर्करामधुसंयुक्तं स्नानार्थं प्रतिगृह्यतां पञ्चामृतं । मन्दा ४४
किन्याः समानीतं हेमांभोरुहवासितं । स्नानाय ते मया भक्त्या गाङ्गं स्वीक्रियतां जलं । आदित्यवर्णामितिस्नानं । सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।

मयोपपादिते तुभ्यं वाससी प्रतिगृह्यतां। उपैतुमामितिवस्त्रं। मलयाचलसम्भूतं घनसारं मनोहरं। हृदयानन्दनं चारु चन्दनं प्रतिगृह्यतां। क्षुत्पिपासेति चन्दनं। अक्षता विमलाः शुभ्राः मुक्तामणिसमप्रभाः। भूषणार्थं मया दत्ता देहि मे निर्मलां धियं। गन्धद्वारामित्यक्षताः। मालती केतकी जाती तुलसी चम्प कानिच॥ मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां। मनसः काममेतिपुष्पं। अथ पुष्पैः प्रत्यङ्गपूजा। ओं उपाङ्गललितायै नमः। पादौपूजयामि। भवान्यै गुल्फौ सिद्धेश्वर्यै जंघे भद्रकाल्यै जानुनी श्रियै उरू विश्वरूपिण्यै कटिं देव्यै नाभिं वरदायै। कुक्षिं शिवायै हृदयं वागीश्वर्यै स्कन्धौ महा दिव्यै बाहू प्रकृतिभद्रायै करौ पद्मिन्यै कंठं सरस्वत्यै मुखं पद्मकेसरवासिन्यै नासिकां महिषमर्दिन्यै नेत्रे लक्ष्म्यै कर्णौ भवान्यै ललाटं विंध्य वासिन्यै शिरः सिंहवाहिन्यै सर्वांगानि। इत्यङ्गपूजा। देवद्रुमरसोद्भूतकालागरुसमन्वितः। आघ्रीयतामयं धूपो भवानि प्रणतर्पणः कर्दमेने तिधूपं। चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणं। आर्त्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि। आपस्सृजन्त्वितिदीपं। मोदकापूपलड्डुकावटकोदुम्बरादिभिः सघृतं पायसेनान्नं नैवेद्यं प्रतिगृह्यतां। आर्द्रांपुष्करिणीमिति नैवेद्यं आचमनं। मलयाचलसम्भूतं कर्पूरेण समन्वितं। करोद्वर्त्तनकं चारु गृहाण पर मेश्वरि। कर्पूरैलालवङ्गादि तांबूलीदलसंयुतं। क्रमुकस्य फलं तुभ्यं तांवूलं प्रतिगृह्यतां। आर्द्रांपुष्करिणीयष्टीति तांवूलं इदं फलमिति फलं। हिरण्य गर्भमिति दक्षिणा। चन्द्रादित्यौच धरणी विद्युदग्निस्तथैवच। त्वमेव सर्वज्योतींषि आर्त्तिक्यं प्रतिगृह्यतां। नीराजनं उपांगललिते मातर्नमस्ते विन्ध्यवासिनि। दुर्गे देवि नमस्तुभ्यं नमस्ते विश्वरूपिणि। पुष्पाञ्जलिः। अथ दूर्वांकुरान्साग्रान् चत्वारिंशत्तथाष्टभिः। अधिकान्हस्त आदाय मन्त्र मेतं जपेद्बुधः। बहुप्ररोहसततमक्षताहरितालता। यथेयं ललिते मातस्तथा मेस्युर्मनोरथाः। इति दूर्वामन्त्रः। इत्युक्त्वा पूजयेद्देवं देवीमेवं विधानतः। मन्त्रेणानेनाष्टचत्वारिंशत्ततः समाचरेत्। ततः प्रदक्षिणा नमस्कारः अथ वायनमादाय वटकोदुम्बरादिभिः। कइत्यादिक मन्त्रेण आचार्याय निवेद येत्। पक्वान्नं फलसंयुक्तं सघृतं दक्षिणान्वितं। द्विजवर्याय दास्यामि व्रतसम्पूर्णहेतवे। उपांगललितादेव्या व्रतसम्पूर्णहेतवे। वायनं द्विजवर्या

॥ व्र ॥ य सचिरस्थं ददाम्यहं। इति वायन मन्त्रः। ततः कथां समाकर्ण्य वायकान्नस्य संख्या। स्वयमेव तद्देवान्न वाग्यतः सहवान्धवैः। रात्रौ जागर
४५ कुर्यान्नृत्यगीतादि मङ्गलैः। प्रभाते पूजयेद्देवीं ततः कुर्याद्विसर्जनं। सवाहना शक्ति युता वरदा पूजिता मया। मातर्मामनुगृह्याथ गम्यतां निजमन्दि
इति पूजाः ॥ अथ कथा ॥ पुराकैलासशिखरे सुखासीनं षड़ाननं ॥ कथयन्तं कथां दिव्यामिदमूचुर्महर्षयः ॥ ऋषयऊचुः ॥ महासेन महादेवनन्दनानन्
विक्रम। आख्यानानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः। कथास्त्वद्वदनाद्देव प्रसूता भूरिभूतयः। न तृप्तिमधिगच्छामः पायं पायं सुधामिव। शुश्रूषवो
देव्या व्रतं तत्कथयस्वनः। मनोभिलषितार्थानां सिद्धिर्यस्मिन्कृते भवेत्। स्कन्दउवाच॥ साधु पृष्टं महादेव्या माहात्म्यं मुनिपुङ्गवाः। वच्मि सर्वविधानेन
तच्छृणुध्वं जगद्धितं। भृगुक्षेत्रे किल पुरा विप्रोभूद्गौतमाभिधः। श्रुतिस्मृतिपुराणज्ञो धनीच बहुबांधवः। अनपत्यस्य तस्याथ जज्ञाते जरतः सुतौ श्रीपति
र्गोपतिश्चैव नामनी विदधे तयोः। अचिरेणैव कालेन सपञ्चत्वमगाद्विजः। तौ तु बालौ धनं बन्धून्हित्वा सा धर्मचारिणी। सतीविवेश दहनं स्वर्यातुं पतिना
सह। अथ तद्बान्धवाः सर्वेहाकष्टमिति चुक्रुशुः। निदन्तोदुःखितास्चक्रुस्तक्रियां पारलौकिकीं। अथ तस्य सपत्नोभूभ्राता स जगृहे धनं। आक्रोशन्तौ च तौ
गेहं निजमानीयदुर्मनाः। नास्ति चक्रे धनं सर्वन्ताभ्यां किंचिन्नवैददौ। ततो मौंजीधरौ बालौ बन्धुभिः कथितं वसु। ययाचतुः पितृव्यं तन्देहिनो द्रविणं हि
तत्। सतावूचे गतं द्रव्यं युवां केन प्रतारितौ निर्गच्छतां मम गृहादित्यादिपरुषंवचः। तौ तद्वचोभिर्निर्विण्णौबालौश्रीपतिगोपती। बभाषतुर्मिथः कष्टन्हि
गर्हा पितृहीनता। यावोद्देशांतरं यत्रस्वजनो नास्तिकश्चन। अनाभाष्यैव सुहृदो जग्मतुर्दिशमुत्तरां। भिक्षाचारौ बहून् देशान् वनादिसरितोगिरीन्
समतिक्रम्य ययतुर्विशालां नामतः पुरीं। कासारभिक्षां चक्राते ततोस्याः सन्निवेशिभं। पुण्डरीकवनाकीर्णं रक्तसंध्याविभूषितं। संध्याभ्रकषिशं चारु यथा
तारकितं नभः। श्रान्तौ पथिगतौ बालौ क्षणं विश्राम्यतत्तटे। आचम्य शिशिरं तोयं सस्नतुश्च यथाविधि। गताध्वखेदौ विप्राग्रौ पुरीं प्राविशतां ततः। ४५
वीक्षांचक्रतुः पश्यन्तं चारुगोपुरमण्डितं। देवतागाररुचिरं सौधराजिविराजितं। नानावीथीरतिक्रम्य विप्रौ वासमवापतुः। कस्यचित्त्वथ विप्रस्य क्षुत्पि

पाण्डवर्जितौ युवं। ईयतुर्वै द्विकायां तावुपविष्टौ श्रमातुरौ। स्वामी ततोऽस्य गेहस्य विवेक इतिविश्रुतः। आयातौ वैश्वदेवान्ते स ददर्शातिथी द्विजा। धना ढ्यन्तथा देशं तथाचकुलनामनी। ऋषिवत्पूजयामास स्मरन् धर्मं सनातनं। अतिथीभोजयामास सदन्नं स्वच्छचात्मना। तौ ब्रह्मचारिणौ विप्रौ सपर्यांतां वि लोक्य च देशबन्धुपरित्यागखेदमुक्तौ बभूवतुः। अथापृच्छत्कृपालुस्तौ कौ युवां कुतआगतौ। किमर्थमल्पवयसौ निर्गतौ स्वगृहादिति। तद्विवेकस्य वचनमाकर्ण्य श्रीपतिस्तदा। आनुपूर्व्येण सकलं वृत्तान्तं समभाषत। पितृहीनौच तौ ज्ञात्वा त्यक्तौ बन्धुजनेन च। आश्वास्य स्थापयामास स्वगृहे बहुवासरं। प्रचक्रमेथ शि ष्यैश्च सहाध्यापयितुंश्रुतिं। बभूवतुश्च तौ बालौ गुरुशुश्रूषणे रतौ। गुरोर्गेहेथ वसतो रागता निर्मला शरत्। फुल्लपद्मविशालाक्षी प्रसन्नेन्दुशुभानना। तस्यां सहिष्यमाचार्यं चरंतं व्रतमुत्तमं। पप्रच्छतुर्भोकिमिदमावाभ्यामपि कथ्यतां। ताभ्यामेवं कृतेप्रश्ने विवेक इदमब्रवीत्। विवेकउवाच। उपांगललितादेव्या व्रतन्देवर्षिपूजितं। सर्वकामकरन्नृणामस्माभिः समुपास्यते। विद्याकामेन कर्त्तव्यं तथैव धनकाम्यया॥ सुतार्थिनाच कर्त्तव्यं व्रतमेतदनुत्तमं। विद्याकामौ च तौ बालौ व्रतमाचरतुर्मुदा। भक्तितो गुर्वनुज्ञातौ यथाशक्ति यथाविधि। तौ तत्प्रसादात्सकलं शास्त्रवेदानवापतुः। अन्यस्मिन् हायने भक्त्या विवाहार्थं प्रचक्रतुः। श्रीपतिर्गोपतिश्चैव व्रतमेतत्तपोधनाः। अचिरेणैव कालेन मासि माघे तयोर्गुरुः। स्वांविवाहोचितां कन्यां नाम्ना गुणवतीमिति। विनीता च सुतवते पूतेश्रीपतये तदा। विचार्य बान्धवैः साकं ददौ पुण्यर्क्षवासरे। पारिवर्हं बहुमुदा प्रादाद्दुहितृवत्सलः। विवेकोपि मुदं लेभे सानुरागौ विलो क्य तौ। अन्याब्दे पुनरेतत्तु व्रतन्देव्याश्च चक्रतुः। भ्रातरौ तौ निजन्देशमिच्छन्तौ च धनादिकं। अथान्येह्नि कस्मिंश्चित्तावुपाध्यायमूचतुः। स्वामिन्युष्म त्प्रसादेन लब्धाविद्या तथा वसु। अनुजानीहि गच्छावो निजन्देशमितः पुनः। इत्याकर्ण्य समालोक्य शुभवासरमादृतः। स्वयं प्रापयितुं तातो बिप्र कन्याच निर्ययौ। अथदेव्याः प्रसादेन पितृव्यस्य तयोःकिल। अन्वेषणे मतिर्जाता कुतःश्रीपतिगोपती। निर्गतौ क्व गतौ देशं वसतः क्वेत्यचिंतयत्। किञ्चित्स नगरं प्रापद्द्विजो बालौ गवेषयत्। तदेवं नगरं प्राप्तो विवेकाख्यो द्विजोत्तमः। सशिष्यःकन्यया सार्द्धं क्रमम्मार्गं शनैः शनैः। तत्र तेषां समज

नि संगमे मुनिपुङ्गवाः । विदांचकार तौ कच्छान्मध्यमे वयसि स्थितौ । तौ मूर्ध्न्याघ्राय परमां मुदं लेभे परां ततः । नमस्कुर्वान्मुर्दवकु प्रेमगद्गदया गिरा
पादानतौ गुणवतीं विवेकेन प्रणोदितां । आशिर्वादैर्वहुविधैस्तां सुषां समयोजयत । विवेकस्तु तदा तत्र संविभाष्य परस्परं । सुतावेतौ मया विप्र पालि
पाठितौ तव ..... संप्रापयितुं प्रयातोस्मि भवतां ग्राममुत्तमं । इति संभाषमाणास्ते भृगुक्षेत्रं ययुर्मुदा । ज्ञातिभिःसह सङ्गम्य शृण्वद्भिस्तद्विचेष्टितं । स्वपि
श्वगृहे कांश्चिदुषित्वा दिवसांस्तथा । लब्ध्वा पितृधनं गेहं सर्वं श्रीपतिगोपती ॥ इयनुस्तदनुज्ञातो विवेकस्त्वां पुरीं ययौ । श्रीपतिर्गोपतेस्तत्र विवाहमकरो
त्तदा । तावेकचेतसौ तत्र चक्रतुर्द्विजतर्पणं । श्रीपतिःश्रद्धया युक्तः कनीयान् व्ययशङ्कितः । विचार्य भार्यया साकं विभक्तः श्रीपतेरभूत् । स भोगान् वि
विधान्भुञ्जन् प्रमदो वहुसम्पदा । नदेव्याराधनञ्चक्रे गोपतिः सुखलंपटः । अथ स्वल्पेन कालेन नष्टं तस्य शनैर्धनं । अकिञ्चनो;गतश्चिंतां भार्ययाश्वा
सितस्तदा । तव भ्रातृगृहे विप्रा भुञ्जते वहवः सदा । गच्छावोनुदिनं कांत तत्र भोक्तुमुभावपि । एवं भोजनवेलायामागत्यागत्य तद्गृहं । भुञ्जन् भुञ्जन्नि
जगृहं गतौतौ वहुवासरं । कदाचिदागतो यावद्गोपतिर्भार्यया सह । उपविष्टेषु विप्रेषु भोक्तुन्नोविन्ददासनं । अथान्नराशेरभ्यासे भोजनाय क्षुधातुरः ।
उपविष्टः श्रीपतेस्तु,भार्यया स निवारितः । अस्मादुत्तिष्ठ वै तूर्णं त्वमुच्छिष्टं करिष्यसि तिष्ठ तिष्ठ क्षणं चैवं पश्चाद्भुङ्क्ष्वेति सा ब्रवीत् । गोपतिः कांतया
हष्टस्ततो विमनसावुभौ । अभुक्तावेव निःक्रान्तौ जग्मतुर्निजमन्दिरं । ततः स्वजायां प्रोवाच निजमार्गं विचिन्तयन् । भ्राता मया समं वित्तं सविभक्त
ममप्रिये । दुर्गतोहं धर्मोन्मत्तः श्रूयतामत्र कारणं । पुरावाभ्यां गुरुकुले व्रतमाचरितं शुभं । उपांगललितादेव्या विद्यादि सकलन्ततः ॥ प्राप्तं मया तत्स
कलं परित्यक्तं प्रमादतः । जेष्ठ आचरते नित्यं तस्माच्छ्रीस्तन्तु वर्त्तते । तस्मादहं तदाभोक्ष्ये यदा इक्ष्यामि तां शिवां । इत्युक्त्वा निर्गतस्तस्माद्गृहादकृत
भोजनः । तद्भार्या चिन्तयाविष्टा सापि तस्थावनश्नती । भुक्तवत्सु ब्राह्मणेषु श्रीपतिः पर्यपृच्छत् । क्व गतो गोपतिरिति तच्छ्रुत्वा सोपिदुःखितः । गोपति ४६
स्तु सरिद्दुर्गवनानि वहुशो भ्रमन् । पृच्छंश्च पथिकान्मार्गं स देव्याः पदमभ्यागात् । पञ्चमे वासरे प्राप्ते क्षुत्पिपासार्दितो वने । अलब्धदर्शनो देव्या दुःखि

तो निपपातह । ततस्तच्छगतमालोक्य भवानी भक्तवत्सला । कृतापराधमपितमनुजग्राह वैतदा । गतमूर्छः समुत्थाय दिङ्गन्तान् प्राविलोकयत् । ददर्श दूरतो गोपश्चारयन्तं गवां गणं । तं दृष्ट्वा किञ्चिदाश्वस्तो ययौ तस्यांतिकं शनैः । अपृच्छत् क भवान्यातः कुत्रत्यः कुत आगतः कोयं देशः क भूपालः किं पुरन्नाम तद्वद । निशम्य वचनं तस्य वक्तुङ्गोपः प्रचक्रमे । गोपउवाच । उपांङ्गंनाम नगरं उपांगो नाम भूपतिः । तत्रत्योहं समायातः पुनस्तत्र व्रजाम्यहं । उपांगललिता देव्या विद्यते तत्र मन्दिरं । इत्याकर्ण्य वचस्तस्य विप्रः समुदितोभवत् । स गोपसहितः सायं विवरं प्रविवेशह । दूराद्ददर्श भवनं पुरमध्ये तपोधनाः । उपांगललिता देव्याः स्फाटिकं गगनं लिहं । सौवर्णेन विचित्रेण कलशेनोपशोभितं । यथोदयाचलः शैलो दधानो भानुमण्डलं । त्वरितो गोपमामन्त्र्य प्रासादं स ययौ मुदा । प्रणम्य दण्डवद्भूमौ वद्धांजलिपुटस्तदा । उपांगललितादेवीमथस्तोतुं प्रचक्रमे । गोपतिरुवाच । नमस्तुभ्यं जगद्धात्रि भक्तानां हितकारिणि । जगद्धोति विनाशिन्यै सर्वमङ्गलमूर्त्तये । हत्वा निशुम्भमहिषप्रभृतीन् सुरारीन्निन्द्रादयो निजपदेषु यथाभिषिक्ता लोकत्रयार्चनकृतीतमहावतारे मातः प्रसीद सततं कुरु मेनुकंपां । त्वां मुक्तये मुनिजनाः कुटिलीकृतांगीं गौरीं निजेवपुषि कुण्डलिनीं भजन्ति । मुक्त्यैच देवमनुजाः कनकारविन्दवद्धासनामविरतं कमलां स्तुवन्ति सापराधोस्मि शरणं प्राप्तस्त्वां जगदम्बिके । इदानीमनुकंप्योहं यद्वाञ्छसि कुरुष्व तत् । इतिस्तुत्वाथ शर्वाणीं प्रणिपत्य पुनः पुनः । कृतसंध्याविधिस्तत्र शेतेस्माकृतभोजनं । स्वप्नेमूर्तिमयी देवी विप्रमेवं समादिशत् । गोपतेवत्स तुष्टास्मि गच्छोपांगमहीपतिं । मत्पूजनककरण्डस्य प्रार्थयस्व पिधानकं तत्पूजयन्निजगृहे परामृद्धिमवाप्स्यसि । स्वप्नइत्याप्तातिदेशो प्रभाते गोपतिस्तदा । राजदर्शनवेलायां नृपद्वारं समभ्ययात् । प्रविष्टोसौ नृपसभां प्रतिहारनिवेदितः । राज्ञा सम्मानितस्तत्र निषसादासने शुभे । पृष्टागामनहेतुस्स बभाषे नृपपुङ्गवं । देव्यर्चनकरण्डस्य पिधानं देहि मे नृप । इत्यर्थितः स विप्रेण जातादेशो नृपो ददौ । पिधानकं नमस्कृत्य तस्मै चाभ्यर्चनादिकं आशीर्भिरभिनंद्याथतमामन्त्र्य च भूपतिं । उपांगललितादेव्याः प्रासादं पुनरागतः । प्रणिपत्यांबिकां विप्रास्त्वरितो निर्ययौ पुरात् । पूजयित्वा

॥ क ॥ पिधानन्तद्विदधे पारणं ततः । एवमाराध्यमानस्तु ससन्तुष्टोभवत् पुनः । सोपि सर्वं समारेभे द्विजाग्र्यो बहुवासरं । अथैकाचाभवत्कन्या ललि
४७ तानाम सुन्दरी । सा पिधानकमादाय विहर्त्तुं याति सर्वदा । प्रमत्तत्वात्प्रियत्वाच्च पितृभ्यामनिवारिता । कदाचित्स्ववयस्याभिः स्नातुं गङ्गाजल
शुभे । क्रीडन्त्या ददृशे तोये नीयमानं कलेवरं । पिधानहस्ता सासिञ्चदन्यास्त्वांजलिभिस्तदा । स सर्पदष्ट उत्तस्थौ ततो देव्याः प्रसादतः । साति
कान्तं द्विजं दृष्ट्वा मनसाचिन्तयत्पतिं । जुहावाभ्यवहाराय जनकस्य निवेशने । मार्गे च परिपप्रच्छ कुलं शीलं च तस्य सा । सोपि सर्वं समाचख्यौ गु
णराशीति नाम च । ललितां मन्त्रयामास गुणराशिमितिद्विजं । परिविष्टेषु चान्नेषु पितृवेश्मनि मे द्विज । गृहीतपोशणो भूत्वा भार्यार्थं मां त्वम
र्थय । मयानुमोदितस्तातः स मां तुभ्यं प्रदास्यति । यथोक्तो गुणराशिस्तु तथासर्वं चकारह । गोपतिर्भार्यया सार्जन् समालोक्य स्वबान्धवैः । परीक्षि
ताव विप्रत्व विद्यायां कुलशीलयोः । प्रतिजज्ञे ततः कन्यां ललितां गुणशालिने । शुभे मूहूर्त्ते च तिथौ विवाहं कृतवान् प्रभुः । वराय ब्राह्मणेभ्यश्च
ददौ वंऊधनं तदा । बिदधे च तयोर्गेहं नातिदूरं स्वमेश्मनः । तत्रोषतुः सानुरागौ मिथस्तौ दम्पती चिरं । पिधानकं तया नीतं निजंललितया गृहं । शनैरथ
धनं सर्वं गोपतेरगमद्गृहात् । गुणराशिर्धनीयातो महादेव्याः प्रसादतः । करण्डस्य पिधानं तज्जनन्या बऊवासरं । याचितापि नवैप्रादाल्ललिता पू
जितं गृहे । अथ सा गोपतेर्जाता तस्यैबानर्चनाद्गतं । इत्थं विचिन्त्य चायाता जामातरमघातयत् । समिदर्थं वनं यातं स्वयन्तद्गेहमाययौ । शोचन्तीं
किल तां कन्यां सतु देव्याः प्रसादतः । उत्थाय विपिनादेत्य भुक्ता शेते सुखं गृहे । पादसंवाहनं तस्य कुरुते ललितानघे । तद्दृष्ट्वा दुःखिता भूमौ प्रक्षि
पत्य पुनः पुनः। लज्जिता कृष्णतः पृष्टा निजमाहस्म पातकं । गुणराशिरदात्तस्याः प्रायश्चित्तं तदा वऊ । सात्मानं वहुकालेन पूतं कृच्छ्रैश्चकारच । श्रीप
तेस्त्वचलां लक्ष्मीं समालोक्य तपोधनाः । गोपतिस्तमथापृच्छद्भ्रातस्त्वं वर्त्तसेकथं । किमाचरसि कल्याण येन श्रीरनपायिनी । इति तस्य वचःश्रुत्वा ४७
श्रीपतिर्विस्मितः पुनः । अस्माभिस्तद्व्रतं देव्या यत्कृतं गुरुमन्दिरे । तद्व्रतस्य प्रभावेण मयि श्रीरनपायिनी ॥ सोपि भक्त्या पुनश्चक्रे व्रतं श्रावोपदेशि

तं। लेभे स परमामृद्धिं पुत्रांश्चमुदितोभवत्। उपांगललितादेव्याः प्रसादेनाभवत्सुखी। एवमेतत्पुरावृत्तं माहात्म्यं कथितं मया। कृतमन्यैश्च बहुभि
र्येपि लब्धमनोरथाः। विधानं तस्य वक्ष्यामि तच्छृणुध्वं तपोधनाः। शुक्लपक्षे तु पञ्चम्यामीषे मासि चरेद्व्रतं। गर्जितं सन्ध्ययोस्त्याज्यं दिनवृद्धिक्षये
तथा। निर्वर्त्यावश्यकं कर्म शुचीरागविवर्जितः। चत्वारिंशत्तथाष्टौच कल्पितानि विधानतः॥ दन्तकाष्टान्युपादाय तडागं वा नदीं व्रजेत्। आयुर्बलं
यशोवर्चः प्रजाः पशुधनानि च। ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते। दन्तधावनपूर्वाणि मज्जनानि समाचरेत्। ततो यथाविधि स्नात्वा
शुक्लवासा गृहं व्रजेत्। उपचारैः षोडशभिरेभिर्मन्त्रैः समाहितः। कुर्यात् पूजां प्रयत्नेन दूर्वाभिश्च विशेषतः। शुचौदेशे मण्डपं तु कृत्वातीव मनोहरं
सौवर्णीं प्रतिमां शक्त्या कल्पयेन्मन्त्रपूर्वकं। द्विजायावायनकं दद्याद्विंशत्यावटकादिभिः। ततः कथां समाकर्ण्य वायनकान्नस्यसंख्यया। स्वयमद्यात्तदेवान्नं
वाग्यतः सह बान्धवैः। रात्रौ जागरणं कुर्यान्नृत्यगीतादिमङ्गलैः। प्रभाते पूजयेद्देवीं ततःकुर्याद्विसर्जनं। सर्वार्चना भक्तियुता वरदा पूजिता मया
मातर्मामनुगृह्याशु गम्यतां निजमन्दिरं। तामर्चां गुरवे दद्यान्निशि वास्याद्विसर्जनं। व्रतमेवंचयःकुर्यात्पुत्रवान् धनवान् भवेत्। विद्यावान् रोगनिर्मुक्तः
सुखी गोमांश्च जायते। अवैधव्यञ्च लभते स्त्रीकन्यावरमुत्तमं॥ विजयः पुष्टिमायुष्यं यच्चान्यदपि वांछितं। इत्येतच्च समाख्यातं इतिहासं महर्षयः।
कृत्वापि नरोभक्त्या सुखमाप्नोति निश्चितं॥ इति स्कान्दे उपाङ्गललिताव्रतं पूर्णं॥ इति श्रीभट्टनीलकण्ठात्मज शङ्करकृतौ व्रतार्के पञ्चमी व्रतानि॥
अथ षष्ठीव्रतानि॥ तत्र भाद्रशुक्लषष्ठ्यां ललिताव्रतं हेमाद्रौ भविष्ये। श्रीकृष्णउवाच॥ भद्रे भाद्रपदे मासि शुक्ले षष्ठ्यां सुसंयुतां। नारी स्नात्वा प्रभा
ते तु शुक्लमाल्यांबरप्रिया॥ सुवेषाभरणोपेता भूत्वा संगृह्यवालुकां। आनीय वंशपात्रे तु पञ्चपिण्डाकृतिं शुभां। ध्यात्वा तु ललितां देवीं तपोवननिवा
सिनीं। पङ्कजं करवीरं च नेपालीं मालतीं तथा। गृहीत्वा पूजयेदितिशेषः। नीलोत्पलकेतकीं च संगृह्य तगरं तथा। एकैकाष्टशतं ग्राह्यमष्टाविंशति
रेव वा। अक्षताःकलिकागृह्य ताभिर्देवीं समर्चयेत्। प्रार्थयेदग्रतो भूत्वा देवीं तां गिरिशप्रियां। गङ्गाद्वारिकुशावर्त्ते विल्वके नीलपर्वते। स्नात्वा कन

॥ व्र ॥ सर्वेऽतीर्थे सार्वभौमं चक्रवर्ती पतिं । ललिते ललिते देवि सौख्यसौभाग्यदायिनी । अनन्तं देहि सौभाग्यं भगवत्यवरं परं । मन्त्रेणानेन कुसुमैस्संपकस्य
४८ प्रोक्षवैः । एवमभ्यर्च्य विधिना नैवेद्यं पुरतोऽन्यसेत् । त्रपुसैरपि कूष्माण्डनालिकेरैः सुदाडिमैः । बीजपूरैः सतुण्डीरैः कारवेल्लैः सचिर्भिटैः । फलैस्तत्काल
भूतैः कृत्वा शोभां तदग्रतः । विरूढैर्धान्यसंभूतैः दीपालीभिः समन्ततः । सार्धं सगुणकैर्धूपैः सोहालककरंजकैः । गुडपुष्पैः कर्णवेष्टैः मोदकैरुपमोद
कसंज्ञकारैरन्यैर्नैवेद्यैर्यथाविभवसारतः । एवमभ्यर्च्य विधिवद्रात्रौ जागरणोत्सवं । गीतवाद्यनटैर्नृत्यैः प्रेक्षणीयैरनेकधा । सखीभिः सहिता साध्वी तां रात्रिं
प्रसन्नं नयेत् । यावत्संमीलयन्नेत्रं नारी यामचतुष्टयं । दुर्भगा दुर्गता वन्ध्या नेत्रैः सम्मीलनाद्भवेत् ॥ एवं जागरणं कृत्वा सप्तम्यां सरितं नयेत् । गन्धपुष्पै
रभ्यर्च्य गीतवाद्यपुरःसरं । तद्दद्याद्द्विजेन्द्राय नैवेद्यादि नरोत्तम । स्नात्वा गृहं समागत्य हुत्वा वैश्वानरं क्रमात् । देवान् पितॄन् मनुष्यांश्च पूजयित्वा
सुवासिनीः । कन्यकाश्चैव सम्भोज्य ब्राह्मणो दशपञ्च च । भक्ष्यभोज्यैर्बहुविधैर्दत्वा दानानि भूरिशः । ललिता मेऽस्तु सुप्रीता इत्युक्त्वा तु विसर्जयेत् । यः
कश्चिदाचरेदेतद्व्रतं सौभाग्यदं परं ललिता षष्ठिसंज्ञं च सर्वपापनिवारणं । नरो वा यदि वा नारी तस्य पुण्यफलं शृणु । यत्सल्लभ्यं व्रतैश्चान्यैर्दानैर्वान्नृप
सत्तम । तपोभिर्नियमैर्वापि तदेतेन हि लभ्यते । इहचैवातुलां सम्पत् सौभाग्यमनुभूयते । कृत्वा मूर्ध्नि पदं पार्थ सपत्नीनां यशस्विनी । मृता शिवपुरं
प्राप्य देवैरसुरपन्नगैः । प्राप्नोति दर्शनं देव्यास्तयातु सहमोदते । पुण्यशेषादिहागत्य पुन्यसौख्यैकभाजनं । शास्त्रा चेतायुगेनारी सीतेव प्रियवल्लभा ।
इदंचः शृणुयान्मर्त्यो पठेद्वा साधुसंसदि । सोपि पापविनिर्मुक्तः शक्रलोके महीयते । षष्ठ्यांजलान्तरगताम्बरवंशपात्रे संगृह्य पूजयितया सिकतां क्रमेण । नक्त
ञ्च जागरणमुत्सवपेशलंवा कुर्यादसौ त्रिभुवने ललितेव भाति ॥ इति हेमाद्रौ ललिताषष्ठी इदं च गुर्जरेकृष्णादिर्भाद्रपदासितषष्ठ्यामनुष्टीयते । अथ शुक्ला
दिभाद्रकृष्णषष्ठ्यां कपिलाषष्ठी व्रतं ॥ तच्च योगविशेषेण पूर्वयुतायां परयुतायांवा कार्य्यं । ते च योगाः पुराणसमुच्चये दर्शिताः । भाद्रमास्यासिते पक्षे
भानौ चैव करे स्थिते । पातेकुजे च रोहिण्यां सा षष्ठी कपिलास्मृता । संयोगेतु चतुर्णांच निर्दिष्टा परमेष्ठिनेतिवाराहपुराणेपि । नभस्ये कृष्णपक्षेतु रोहि ४८

तीपातभूसुतैः। युक्ता षष्ठी पुराविद्भिः कपिला परिकीर्त्तिता। व्रतोपवासनियमैर्भास्करन्तत्र पूजयेत्। कपिलाञ्च द्विजाग्र्याय दत्वा क्रतुफलं लभेत्॥
यत्तु कालादर्शेनैव शुक्ला या षष्ठी रोहिणीपातभूसुतैःयुक्ता सा कपिला षष्ठी व्रतैस्तत्रार्चयेद्रविमितिस्वकारिकां लिखित्वा तत्रैव भाद्रपदे मासे इति
व्याख्यातं तत्र प्रमाणं वराहं॥ नभस्ये शुक्लपक्षइति लिखितं तत्सर्वं प्रामादिकमेव॥ भाद्रशुक्लषष्ठ्यां रोहिणीव्यतीपातयोः सर्वथा बाधात्॥ अथकथा
हेमाद्रौ स्कान्दे॥ विक्रान्त उवाच॥ रूपसम्पदमारोग्यं सन्ततिं चापि पुष्कलां। प्राप्नुवन्ति नरा येन नियतं तद्वदस्व मे॥ अगस्त्य उवाच॥ साधु साधु
महाप्राज्ञ यत्पृष्टोहं त्वयानघ। तत्सर्वं कथयिष्यामि तव श्रेयो भविष्यति। शृणु पार्थ प्रवक्ष्यामि स्वर्गमोक्षप्रदं शृणां। यच्च गुप्तं पुराराजन् ब्रह्मरुद्रेन्द्रदे
वतैः। असुराणाञ्च सर्वेषां राक्षसानां तथैवच। शङ्करेण पुरा चैव षण्मुखाय निवेदितं। षण्मुखेन ममाख्यातं महापातकनाशनं। यच्छ्रुत्वा ब्रह्महा गो
घ्नः सुरापो गुरुतल्पगः। आगारदाही गरदः सर्वपापरतोपिवा। मुच्यते सर्वपापेभ्यः स्वर्गलोकञ्च गच्छति। यच्च पुण्यं पवित्रञ्च नृणामघुत नाशनं।
उपकाराय लोकानां तथा तव नृपोत्तम। शृणु भूप महापुण्यं षष्ठीमाहात्म्यमुत्तमं। प्रौष्ठपद्यसिते पक्षे षष्ठी भौमेन संयुता। व्यतीपातेन रोहिण्यां
सा षष्ठी कपिला स्मृता। प्रौष्ठपदो भाद्रपदः सचात्र दर्शांतोऽसौग्राह्यः। रोहिणीयोगस्य तत्रैव सम्भवात् द्वितीयातु महापुण्या दुर्लभा व्रतिना क्वचित्
षष्ठी संवत्सरस्यांते सा पुनस्तेन संयुता। चैत्रवैशाखयोर्मध्ये सिते पक्षे शुभोदये। वैशाखेपिच राजेन्द्र द्वारवत्यां परास्मृता। तस्यां चैव कृतं दत्तं यत्
किञ्चित्प्रतिपादितं। तस्य सर्वस्य पुण्यस्य संख्यां वक्तुं न शक्यते। यस्मिन् काले भवेदेतैर्गुणैः षष्ठीयुता सदा। पञ्चम्यामेकभक्तञ्च कुर्यात्तत्र विचक्षणः।
षष्ठ्यां प्रातः समुत्थाय कृत्वादौ दन्तधावनं। जलपूर्णाञ्जलिं कृत्वा इमं मन्त्रमुदीरयेत्। निराहारोद्यदेवेश त्वद्भक्त स्त्वत्परायणः। पूजयिष्याम्यहं भ
क्त्या शरणं भव भास्कर। अर्घं दत्वेति सङ्कल्पं कृत्वा यताच्छुचिस्मितः। स्नानं कृत्वा प्रयत्नेन नद्यां तीर्थोद्भवेजले। तड़ागे दीर्घिकायां वा गृहे वा नियता
त्मवान्। देवदारु तथोशीर कुङ्कुमैलामनःशिलं। पद्मकं पत्रकं यष्टिमधुगव्येन पेषयेत्। क्षीरेणालोड्यकल्केन स्नानं कुर्यात् समन्त्रकं। आपस्त्व

॥ ब ॥ मसि देवेश ज्योतिषां पतिरेवच। पापं नाशय मे देव मनोवाक्कायकर्मजं। पञ्चगव्यकृतस्नानः पञ्चभङ्गैस्तुमार्जयेत्। पञ्चभङ्गैः पञ्चवल्कवैः आनयेन्मृ
॥ ४८ ॥ शुद्धां स्नानार्थैवै प्रयत्नतः। मृत्तिके ब्रह्मपूतासि कश्यपेनाभिमन्त्रिता। पविचं कुरु मां नित्यं सर्वपापात्समुद्धर। मन्त्रेणानेन वरुणं पूजयेद्भक्तिमान् नः
पाशहस्त वरुण सर्ववारीश्वरप्रभो। अद्याहं प्रार्थयामि त्वां व्रतं कुरु सुरेश्वर। आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः। प्रभाकरः सविता वि
देवः सर्वेश्वरो हरिः। गोमयेनोपलिप्तायां भूम्यां वै कुङ्कुमेन तु। मण्डलं सर्वतोभद्रमालिखेद्बुद्धिमान्नरः। तच मध्ये लिखेत् पद्ममष्टपचं सकर्णि
कं। पूर्वपचे न्यसेत्सूर्यमाग्नेये भास्करंन्यसेत्। सुवर्णरेतसं याम्ये नैरृतेच न्यसेद्रविं। आदित्यं वारुणे पचे वायव्येच दिवाकरं। सौमे प्रभाकरं तच सूर्य
मीशानपचके। तीव्ररश्मिधरं देवं ब्रह्माणं चैव विन्यसेत्। आधाररूपिणं देवं मध्यैवै वारुणं न्यसेत्। सहस्ररश्मिं सूर्यञ्च सूक्ष्मस्थूलगुणान्वितं। सर्वगं
सर्वरूपञ्च मध्येभास्करमेवच। सप्ताश्वरथमारूढं पद्महस्तं दिवाकरं। पद्मसूचधनुःपाणिं कुण्डलैर्मुकुटेन च। रत्नैर्नानाविधैर्युक्तं सौवर्णं तच कार
येत्। शक्तितस्तुपलादूर्ध्वं तदर्धं कर्षतोपिवा। सौवर्णमरुणं कुर्यात् नौकांचैव तथापरं। सप्ताश्वैर्भूषितं कृत्वा रथं तस्याग्रतः स्थितं। अरुणं विनतापुत्रं
सुशीताश्वमनूरुकं। एव रूपं रथं कृत्वा पद्मस्योपरि विन्यसेत् तस्योपरिन्यसेद्देवं रक्तवस्त्रविभूषितं। रक्तचन्दनमाल्यादिमण्डितं चातिशोभितं। अग्रतः
सारथिं कृत्वा पूजयेदरुणं शुचिः। रक्तपुष्पैः सुगन्धैश्च तथान्यैरपि शक्तितः। विनतातनयो देवः कर्मसाक्षी तमोनुदः। सप्ताश्वः सप्तरज्जुश्च अरुणोमे प्रसी
दतु। मन्त्रेणानेन संपूज्य सारथिं तदनन्तरं। देवस्यशंसनं कल्प्य प्रभूतादिकपञ्चकं। प्रभूतविमलं सारं आराध्यं परमं शुभं। दीप्तादि शक्तिभिश्चैव ततो
भानुं प्रपूजयेत्। दीप्ता सूक्ष्मा तथा भद्रा विंविनी विमलानघा। प्रमोघा वैद्युता चेति नवमा सर्वतोमुखी। अपविचः पविचोवा सर्वावस्थां गतोपिवा।
यःस्मरेत् भास्करं देव सबाह्याभ्यातरः शुचिः। शिखायां भास्करं न्यस्य ललाटे सूर्यमेवच। चक्षुर्मध्ये न्यसेत् भानुं मुखे तच रविं न्यसेत्। कंठेन्यसेत् ४८
भानुमंतं पद्मगर्भं द्विहस्तयोः तिमिरक्षयकद्देवं स्तनयोरेव विन्यसेत्। जातवेदाभिधं नाभ्यां कट्यां भानुं तथ न्यसेत्। उग्ररूपं गुह्यदेशे तेजोरूपं क्षिप्र

ह्णोमोः। पादयोः सर्वरूपन्तु सूक्ष्मस्थूलगुणान्वितं। एवं यथोक्तं विन्यस्य पाद्यंगृह्य ततोर्चयेत्। करवीरार्ककुसुमै रक्तचन्दनचम्पकैः। पुष्पैः सुगन्धैर्धूपश्च
कुङ्कुमैश्चपशोभितं। मार्त्तण्डं भानुमादित्यं भास्करं तपनं रविं। हंसं दिवाकरं चेति पादतोमुकुटावधि पूजयेद्भास्करं देवं सर्वाङ्गेषु प्रयत्नतः आनयेदर्घपा
त्रञ्च सौवर्णं रौप्यमेववा ताम्रञ्चदैवतं पार्थ जलेन परिपूरयेत् पूजयेच्चाथप्रागादिदेवतास्ताः समाहितः प्राग्देवतास्ततः पूज्या गन्धपुष्पानुलेपनैः
पार्थे तोयं समादाय सपुष्पफलसंयुतं जानुभ्यामवनीं गत्वा सूर्यायार्घं निवेदयेत्। वेदगर्भ नमस्तुभ्यं वेदगर्भ नमोस्तुते। अव्यक्तमूर्त्तये तुभ्यमर्घं
ब्रह्मा नमोस्तुते। ब्रह्ममूर्त्तिधराय च चतुर्वक्त्र सनातन। सृष्टिस्थितौ संस्थिताय गृहाणार्घं नमोस्तुते। विष्णुरूपधरो देव पीतवस्त्र चतुर्भुजः। प्रभवः
सर्वलोकानामार्घं गृहाणनमोस्तुते। कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः। जन्ममृत्युजराशोकसंसारभयनाशनः। दारिद्र्यव्यसनध्वंसी श्रीमान
देवो दिवाकरः। सुवर्णस्फाटिकाभानुः स्वर्णरेता दिवाकरः। हरिदश्वांशुमालीच अर्घं गृहाणनमोस्तुते। चतुर्भिर्मूर्त्तिभिः संख्यामष्टाभिः परिगी
यते। सामध्वनिसु यो यज्ञे अर्घं गृहाणनमोस्तुते। अथ गन्धञ्चपुष्पञ्च तथा धूपं प्रदीपकं। नैवेद्यञ्च यथा शक्त्या प्रार्थयेत् सूर्यदेवतां। अग्निमीले
नमस्तुभ्यं नमस्ते जातवेदसे। इषेत्त्वैव नमस्तुभ्यमग्नये च नमो नमः। आत्मरूपिन्नमस्तुभ्यं विश्वमूर्त्ते नमोनमः त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं धाता त्वं
हुताशनः। मुक्तिकाम अभीप्सामि प्रार्थयामि सुरेश्वर। विश्वतश्चक्षुराख्यातो विश्वतश्चरणाननः। विश्वात्मा सर्वतो देवः प्रार्थयामि सुरेश्वर
स्तुति नत्वा समुत्थाय नमस्कुर्वीत भास्करं। शंवर्चसेति पाणिभ्यां तोयेन विसृजेत्सुखं। हंसःशुचिषदित्यृचा सूर्यस्यैवावलोकनं। उदुत्यंचित्रमि
त्येतत्सूक्तं देवाग्रतो जपेत्। प्रथमे रवेश्चैव कोणे फलकं चैव कारयेत्। फलैः पुष्पैरक्षतैश्चभक्ष्यैर्नानाविधैरपि शय्यां तत्रच देवस्य शुभे देशे
प्रकल्पयेत्। षडधाय्यं षड्रूपं देवं रौप्यं चैव महाप्रभुं। पुरुषं खड्गहस्तंच कारयेच्चैव बुद्धिमान्। वस्त्रयुग्मेन संच्छन्नं लवणोपरिविन्यसेत्। अनेनैव
तु मन्त्रेण स्नानमर्घार्चनं ततः। नमस्ते क्रोधरूपाय खड्गहस्तजिघांसवे। जिघांसकालं त्वां दृष्ट्वा दुद्रुवुः सर्वदेवताः। त्वया व्याप्तं मे स्पष्टं चण्डभास्कर

सुप्रभे । अतस्त्वां पूजयिष्यामि अर्घं गृह्णन्नमोऽस्तु ते । क्षपयित्वा तु तां रात्रिं गीतवादित्रनिस्वनैः । ततस्त्वभ्युदिते सूर्ये होमं कुर्यात् स्वशक्तितः


पूजयेत्तच्च भक्त्या च देवांश्च विधिवत् गुरुः । होमोऽर्कस्य समिद्भिश्च घृतमिश्रैस्तिलैस्तथा । संसिद्धं च चरुद्रव्यं घृतञ्च जुहुयाद्द्विजः । आकृष्णेनेति मन्त्रेण
शतमष्टोत्तरं क्रमात् । होमो व्याहृतिभिर्वाथ स्विष्टकृत्तदनन्तरं । कपिलां पूजयेद्देवीं सवत्सां पापनाशिनीं । वस्त्रयुग्मं सघंटां च स्वर्णशृङ्गविभूषिता
सुवर्णशृङ्गीं रौप्यखुरां कांस्यदोहनकान्वितां । मन्त्रेणानेन तां दद्यात् ब्राह्मणायेति शक्तितः । कपिले सर्वदेवानां पूजनीयासि रोहिणि । सर्वतीर्थमयी
यस्मात् अतः शांतिं प्रयच्छ मे आचार्यस्य ततो भक्त्या सर्वं पाणौ विनिक्षिपेत् गोभूहिरण्यवासांसि व्रीहयो लवणं तिलाः एतत्सर्वं प्रदत्वा च कपिलां
प्रार्थयेत्ततः । कपिले पुण्यकर्मासि निष्पापे पुण्यकर्मणि । मां समुद्धर दीनञ्च ददतो ह्यक्षयं कुरु । दिविवादित्रशब्दैश्च सेव्यसे कपिले सदा ।
तदा विद्याधराः सिद्धा भूतनागगणग्रहाः । कपिलारोमसंख्यातास्तत्र देवाः प्रतिष्ठिताः । पुष्पवृष्टिं प्रमुंचति नित्यमाकाशमास्थिताः । ब्रह्मणो
त्यादिता देवी अग्निकुंडात्सुप्रभा । नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते । जय नित्यं महासत्वे सर्वतीर्थादिमङ्गले । दातारं स्वजनोपेतं ब्रह्मलोकं
नयाशु वै । ततः प्रदक्षिणां कृत्वा नत्वा ब्राह्मणपुङ्गवान् । आशीर्वादान् वदेयुस्ते पुत्रपौत्रधनागमान् । आरोग्यं रूपसौभाग्यं सर्वदुःख
विवर्जितः । अन्ते गोलोकमासाद्य चिरायुः सुखभाग्भवेत् । यदा स्वर्गात्प्रपतति राजा भवति धार्मिकः । सप्तद्वीपावर्ती भुंक्ते भुक्ता राज्य
मकण्टकं । अहोव्रतमिदं पुण्यं सर्वदुःखप्रणाशनं । अतःपरं प्रवक्ष्यामि दानस्य फलमुत्तमं । तदा देवमये पात्रे सद्वृत्ते चाक्षयं भवेत् । व्रतं सर्वव्रत
श्रेष्ठमिदमग्र्यं महाफलं । उद्धरिष्यति दातारं नूनमक्षयमव्ययं । एवं देवगणाः सर्वे भूमिसंघातहर्षिताः । आकाशस्थाः प्रव्रजन्ति पुण्येऽस्मिन् दिवसागमे ।
पात्रभूताय क्षपये श्रोत्रियाय कुटुम्बिने । एवं यः कपिलां दद्यात् विधिदृष्टेन कर्मणा । स याति परमं स्थानं यावन्न च्यवते पुनः । स्कांदे प्रभासखण्डे तु
विशेषः । उपलिप्ते शुभे देशे पुष्पाक्षतविभूषिते । स्थापयेद्व्रणं कुम्भं चन्दनोदकपूरितं । पञ्चरत्नसमायुक्तं दूर्वापुष्पाक्षतान्वितं । रक्तवस्त्रयुगच्छन्नं

ताम्रपात्रेण संयुतं। रथो रौप्यपलस्यैव चतुष्कः सुविचित्रितः। सौवर्णपलसंयुक्तां मूर्तिं सूर्यस्य कारयेत्। कुम्भस्योपरि संस्थाप्य गन्धपुष्पैस्तथार्च
येत् आदित्यं पूजयेद्देवं नामभिःस्वैर्यथोदितैः। आदित्य भास्कर रवे भानो सूर्य दिवाकर प्रभाकर नमस्तुभ्यं संसारात् मां समुद्धर भुक्तिमुक्तिप्रदो यस्मात्।
तस्माच्छान्तिं प्रयच्छ मे। प्रार्थना मन्त्रः। नमो नमस्ते वरद ऋक्सामयजुषां पते। नमोऽस्तु विश्वरूपाय विश्वधाम्ने नमोऽस्तु ते। एवं संपूज्य विधिवद्देवदे
वं दिवाकरं। पूजयेत्कपिलां धेनुं वस्त्रमाल्यानुलेपनैः। दानमन्त्रः। दिव्यमूर्त्तिर्जगच्चक्षुर्द्वादशात्मा दिवाकरः। कपिलासहितो देवो मम मुक्तिं
प्रयच्छतु। तस्मात्त्वं कपिले पुण्या सर्वलोकस्य पावनी। प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव। इति हेमाद्रौ स्कान्दे कपिलाषष्ठिव्रतम्। अथ सर्वासु
षष्ठीषु स्कन्दषष्ठीव्रतं हेमाद्रौ भविष्ये। श्रीकृष्ण उवाच॥ षष्ठ्यां फलाशनो राजन्। विशेषात्कार्त्तिके नृप। राज्यच्युतो विशेषेण स्वराज्यं लभतेऽ
चिरात्। षष्ठीतिथिर्महाराज सर्वदा सर्वकामदा। उपोष्या सा प्रयत्नेन सर्वकालं जयार्थिना कार्त्तिकेयस्य दयिता एषा षष्ठी महातिथिः। देवसेनाधिपत्यं
हि प्राप्तमस्यां महात्मना। अस्यां हि श्रीसमायुक्तो यस्मात्स्कन्दोऽभवत्पुरा तस्मात्षष्ठ्यां न भुञ्जीत प्राप्नुयाद्भार्गवीं सदा। भार्गवीं लक्ष्मीं। दत्त्वार्घं कार्त्ति
केयाय स्थित्वा वै दक्षिणामुखः। दध्ना घृतोदकैः पुष्पैः मन्त्रेणानेन सुव्रत सप्तर्षिदारजस्कन्द सेनाधिप महाबल। रुद्रोमाग्निज षडवक्त्र गङ्गागर्भ नमोऽस्तु ते।
प्रीयतां देव सेनानी सम्पादयतु हृद्गतं। दत्त्वा विप्राय चामान्नं यच्चान्यदपि वर्त्तते। पश्चाद्भुङ्क्ते त्वसौ रात्रावभूमिं कृत्वा तु भाजनं। एवं षष्ठीव्रतस्यास्य
उक्तं स्कन्देन यत्फलं। तन्निबोध महाराज प्रोच्यमानं मयाखिलं। षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति। शुक्लायामथ कृष्णायां ब्रह्मचारी समाहितः।
तस्य सिद्धिर्धृतिः पुष्टिराज्यमायुरनामयः। पारत्रिकं चैहिकञ्च दद्यात्स्कन्दो न संशयः। यः शक्तो नोपवासस्य स नक्तो न व्रती भवेत्। तैलं षष्ठ्यां न भुञ्जीत
न दिवा कुरुनन्दन। यस्तु षष्ठ्यां नरो नक्तं कुर्याद्भरतसत्तम। सर्वपापैर्विनिर्मुक्तो गाङ्गेयस्य प्रसादतः। स्वर्गे च नियतं वासो लभते नात्र संशयः। इह चैत्य
कालान्ते यथोक्तफलभाग्भवेत्। देवानामपि वंद्यो सौ राजो राज भविष्यति। इति स्कन्दषष्ठीव्रतं। इति श्रीभट्टनीलकण्ठात्मज भट्टशङ्कर कृतौ व्रतार्के

॥ अ ॥ षष्ठीव्रतानि । अथ सप्तमी व्रतानि । तत्र माघशुक्लसप्तम्यां गङ्गोत्पत्तिस्तत्पूजा चोक्ता पृथ्वीचन्द्रोदये ब्राह्मे । वैशाखशुक्लसप्तम्यां गङ्गा ज
॥ ५१ ॥ ह्नवे । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् । तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलामिति हरिवंशे पुण्यव्रतान्ते अब्दे प्रातःस्नानमभि
गङ्गाख्यव्रतकं तथैवेयं यशस्करी । स्नानमभ्यधिकं कार्यं प्रत्यूषस्यमले जले । अन्यत्र वा जले स्नानं शुक्लपक्षे हरिप्रिये । एतद्गङ्गाव्रतं नाम सर्वका
शुभं । सप्त सप्त च सप्तार्थिकुलानि हरिवल्लभे । स्त्रीतारयति धर्मज्ञे गङ्गाव्रतकचारिणी । देयं कुम्भसहस्रन्तु गङ्गायाः व्रतके शुभ । तारणं पारणं चैव ।
सर्वकामिकमिति । इति गङ्गाव्रतं । अथ शुक्लादिश्रावणकृष्णसप्तम्यां शीतलाव्रतं । तच्च मध्याह्नव्यापिन्यां कार्यं । तथाच माधवीये हारीतः । पूजाव्रतेषु
सर्वेषु मध्याह्नव्यापिनी तिथिरिति । अथ तद्विधिः वामपत्याद्युल्लिख्य ममाऽवैधव्यदारिद्र्यमर्त्यवियोगपुत्रसौख्यधनधान्यप्राप्तये शीतलाव्रतं करिष्य इति
संकल्प्य यथामिलितोपचारैः शीतलां पूजयिष्ये इति संकल्प्य कं कलशं स्थाप्य तदुपरि शीतलां पूजयेत् । तत्र ध्यानं स्कान्दे । वन्देहं शीतलां देवीं रासभस्थां दि
गम्बरां । मार्जनीकलशोपेतां शूर्पालङ्कृतमस्तकामिति । कुम्भेसंस्थापयेद्देवीं पूजयेन्नाममन्त्रतः । शीतले दह मे पापं पुत्रसौख्यफलदे । धनधान्यप्रदे देवि पूजां
गृह्ण नमोऽस्तुते । इति प्रार्थनां विधाय शीतले शीतलाकारे अवैधव्यसुतप्रदे । श्रावणस्यासिते पक्षे अर्घं गृह्ण नमोऽस्तुते इत्यर्घं दद्यात् । शीतलेन्नानि पक्वानि
दध्नासमन्वितानिच । नैवेद्यं च प्रकुर्वीत घृतमिश्रं च सुन्दरि । गौरीणां भोजयेत्सप्त पूजनीया प्रयत्नतः । इति पूजाविधिः । अथ कथा । हेमाद्रौ भविष्य
त्पुराणे । कृष्ण उवाच । प्रसिद्धं श्रूयतां रम्यं नगरं हस्तिनापुरं । इन्द्रद्युम्नस्य राजाभूत् नृपतिर्लोकपालकः । धर्मशर्माभिधा नाम तस्य भार्या यशस्विनी । क्रिया
नाम्ना च साध्वी च दानशीला प्रियंवदा । बभूव प्रथमः पुत्रो महाधर्मेति नामतः । नन्दने पितृवात्सल्यात्कालेन्यस्मिन्ततोजनत । द्वितीया च तथा पुत्री
तस्य जाता गुणोत्तमा । पुत्री लक्षणसम्पन्ना शुभकारीति नामतः । ववृधे सा पितुर्गेहे सर्वाङ्गगुणसुन्दरी । नाम्ना रूपेण सा वाला सर्वासां सा गुणाधिका । ५१
सामुद्रीकगुणोपेता पद्महस्ता प्रियम्वदा । वरोहि देहमानेन लक्षीवान्रूपवान्गुणैः समाययौ च जग्राह पाणिग्रहणपूर्वकं । कदाचित्स पितुर्गेहं जामाता

नयनोत्सव। आजगामाथ स्वजनैः तत्पुत्र्यागमनोत्सुकः प्रणम्य च पितुःपादौ त्वरितं चारुहासिनी। तत्पुत्रीं मोचयामास जामाता ज्ञातविग्रहः। रथमारुह्य हे स्वामिन् यास्यामि स्वपुरे गृहं। तस्याःपितेत्युवाचेद् दम्पत्याः शुभहेतवे। पुत्रि त्वं सुस्थिरा भूत्वा वासरैकं क्षमस्व मे। शीतलासप्तमी नाम व्रतं वरकुले शुभे। सौभाग्यारोग्यजनकं सर्ववैधव्यप्रदं तथा। कन्योवाच। तात तत्र परिज्ञातं यदुक्तं पद्मयोनिना। पातिव्रत्यसमो धर्मो नास्तीह भुवनत्रये। ततस्तां कारयामास शीतलाव्रतमुत्तमं। तां पुत्रीं प्रेषयामास ब्राह्मणो ब्रह्मपारगः। व्रतोपकरणं पुत्रि मार्गे पूज्या सरोवरे। मार्गे पथानि संगृह्य व्रतोपकरणं शुभा। शीतलापूजनार्थञ्च गत्वा साध्वी सरोवरं। न दृष्टं च तया मोहात्तडागं विधिसाधनं। बभ्राम सा वने शून्ये स्मरन्ती शीतलाव्रतं। अतिश्रान्ता ययौ मोहात् भयेन करुणा बहु। स्मरन्ती शीतलां दृष्ट्वा नारीरूपं ददर्श सा। स्ववासरे विजानीहि साध्वी सा वरवर्णिनी भविष्यति च चिरञ्जीवी भर्त्तेति भक्तवत्सले। आगच्छ पूजनार्थाय दर्शयामि सरोवरं। तया सह गता साध्वी तडागं विधिपूर्वकं। पूजयामास शर्वाणीं तोषयामास शीतलां। पूजयित्वा च तां देवीं स्वपथं गन्तुमुद्यतां। शीतलाया वरं गृह्य सह सख्या च प्रस्थिता। ययाच दृष्टमरण्ये स्वभर्त्ता किं नु वक्ष्यति। सरोवरे समायातोऽन्वेषयन् शान्तविग्रहः। ब्राह्मणो निद्रया सुप्तः पूर्वकर्मप्रभावतः। दष्टो भुजङ्गरूपेण संयुक्तः पूर्वकर्मणा। विषाहतं पतिं दृष्ट्वा शीतलायाः पतिव्रता। वरं संगृह्य शालायां रुरोद करुणं बहु तयोस्तरुणदम्पत्योर्योग्यसौभाग्यदर्शनात्। रुदन्ती करुणं बाला शोचयामास तद्गतं। यावन्न परलोकस्थं जनं संगत्य तत्कृते कुशलेन सहैवाथ अनुगच्छामि वह्निना। तस्मात्तु साधयिष्यामि पावकं पतिना सह। अर्जयिष्ये दिवं दिव्ये अक्षयञ्च भवान्तरं। शीतलोवाच। वत्से किमिदमित्युक्तं न युक्तं वरवर्णिनि। शीतलाव्रतचारिण्या वैधव्यं नैव जायते। स्वयमुत्थाय कल्याणि पतिं सुप्तं गृहे तदा। बोधयाशु त्वया चीर्णं व्रतं वैधव्यनाशनं। इत्युक्ता बोधयामास भर्त्तारं सा पतिव्रता। भर्त्तापि मुदितो दृष्ट्वा स्वां प्रियां प्रीतिकर्मणा। दृष्ट्वा सुमहदाश्चर्यं तद्ग्रामसंस्थायिनो जनाः। सर्वे ते विस्मयं जग्मु ब्राह्मणोपतिरक्षणात्। ब्राह्मणीं हर्षितां दृष्ट्वा प्रणिपत्य पतिव्रता। याचे मातर्न भूयो नो वैधव्यञ्च वियोगता। अद्यापि शीतलायास्तु व्रतं नारी क

॥ व्र ॥ करिष्यति । अवैधव्यमदारिद्र्यमवियोगं सभर्तृता । इत्युक्त्वांतर्दधे देवी शीतला कामरूपिणी । शीतलाया वरं लब्ध्वा जगामात्मीय वेश्म ।
॥ ५२ ॥ पद्मानिवासप्रभुभिश्चवंद्यसमर्द्धैः साधितसर्वमङ्गला । प्रसादमासाद्य च शीतलायाः नित्योत्सवा पार्वतिवद्बभूव इति हेमाद्रौ भविष्ये शीतलायाव्र
अथ भाद्रशुक्लसप्तम्याम् मुक्ताभरणव्रतपूजा देव देव महेशान परमात्मन् जगद्गुरो । प्रतिपादितया सोम पूजया पूजयाम्यहं । इत्यावाहः
अनेकरत्नखचितं सौवर्णमणिसंयुतं । मुक्तान्वितं महादेव गृहाणासनमुत्तमं इत्यासनं । पाद्यं गृहाण देवेश सर्वविद्यापरायण । ध्यानगम्य स
शंभो सर्वेश्वर नमोस्तुते । इति पाद्यं ॥ इदमर्घ्यमनर्घत्वममराधीश शङ्कर । किं करीभूतया सोम मया दत्तं गृहाण वै । इत्यर्घं ॥ गङ्गादिसर्वतीर्थेभ्यस
मानीतं सुशीतलं । जलमाचमनीयार्थं गृहाणेशोमया सह आचमनं । मध्वाज्यशर्कराभिश्च सुधया परिकल्पितं । शङ्कर प्रीतये तेहं मधुपर्कं निवेदये । मधु
पर्कः । आदौ पञ्चामृतस्नानं पश्चात्शुद्धेन वारिणा । स्नानं कुरु महादेव निजया कांतया सह । यत्पुरुषेणेति स्नानं । स्नानादूर्ध्वं महादेव प्रीत्या
पापप्रणाशनं वस्त्रयुग्मं मया दत्तं महन्ते प्रतिगृह्यतां । तं यज्ञमिति वस्त्रं । उपवीतं सोत्तरीयं नानाभूषणभूषितं । गृहाण सोम विमल मया दत्तमिदं
शुभं । तस्माद्यज्ञात्सर्वहुतः यज्ञोपवीतं मलयाचलसंभूतं सुगन्धि घनसारयुक् । चन्दन पञ्चवदन गृहाण वनितायुत ॥ इतिगन्धं ॥ जातीचम्पकपु
न्नागवकुलैः पारिजातकैः । शतपत्रैश्च कल्हारै रर्चयेहमुमापतिं । तस्मादश्वाः पुष्पाणि त्रैलोक्यपावनानन्त परमात्मन् जगद्गुरो । चन्दनागरुकर्पूरैर्धूपं
दास्यामि शङ्कर ॥ धूपं ॥ शुभ्रवर्त्तियुतं सर्पिर्लोलितं वह्निना युतं । दीपमेकमनेकार्कं प्रतिमाकार्यमुत्तममिति ॥ दीपं पायसापूपकृशरं दुग्धान्नं सुगु
डोदनं दिव्यान्नं षड्रसोपेतं सुधारससमन्वितं समर्पयामि देवेश किङ्करः शङ्करायते नैवेद्यं । पुनराचमन । शुद्धं कुरु महादेवमुखं सोमांबुनामुना ।
मुखशुद्धिकरं पूर्णं कृपया त्वं गृहाण वै । कस्तूरिका समायुक्तं मलयाचलसम्भवं । गृहाण चन्दनं सोम करोद्वर्त्तनहेतवे ॥ करोद्वर्त्तनं । नारिकेल ५२
फलं जंबूफलं नारङ्गमुत्तमं । कूष्मांडं पुरतो भक्त्या कल्पितं प्रतिगृह्यतामितिफलं पुङ्गीफलं महद्दिव्यमिति तांबूलं । सप्तास्यासन् हिरण्यगर्भेति

दक्षिणा। भक्त्या दीपमिति नीराजनं पुष्पांजलिः। यानि कानि चेति प्रदक्षिणा महादेव महाराज प्रीत्या पापप्रणाशन। अस्माकं कुर्वतां पूजा
साधु वा साधुयोजितां। ज्ञानतोऽज्ञानतोवापि भवतो विहितं च यां। संपूर्णयतु विश्वेशो विमलःकोमलस्तुतां। पापोऽहमिति प्रार्थना। देवदेव
जगन्नाथ सर्वसौभाग्यदायक। गृह्णीयां दोररूपं त्वां पुत्रपौत्रप्रवर्द्धनं। दोरकरकग्रहणं। सप्तसामोपगीतं त्वां धारयामि जगद्गुरो। सूत्रग्रंथिस्थितं
नित्यं धारयामि स्थिरो भव। हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे। प्रसन्नःसन्नुमाकान्त दीर्घायुः पुत्रदोभव। इति जीर्णदोरकोत्तारणं। अथ वा
यनं। मण्डकान्वटकान्वाथ सहृतान्दक्षिणायुतान्। एकादश सत्कृतान् ब्राह्मणाय कुटुंबिने। वेदशास्त्रप्रवीणाय दद्यात्सोमस्य तुष्टये। शङ्करः प्रतिगृह्णाति
शङ्करो वै ददातिच। शङ्करस्तारको स्माकं शङ्कराय नमोनमः। इति वायणं। एवं या पूजनं कुर्यात् सोमस्य सुखदस्यच। सर्वान्कामानवाप्नोति पुत्रपौत्रैश्च
मोदते इति पूजनं। अथ कथा हेमाद्रौ भविष्योत्तरे। कृष्णउवाच॥ मुनीन्द्रो लोमशोनाम मथुरायां गतःपुरा। सोर्चितो वसुदेवेन देवक्याच युधि
ष्ठिर। उपविष्टः कथाः पुण्याः कथयित्वा मनोरमाः ततः कथयितुं भूयःकथामेतां प्रचक्रमे। कंसेन ते हताः पुत्रा जाताः जाताः पुनः पुनः। हतव
त्सा देवकि त्वं पुत्र दुःखेन दुःखिता। यथा चन्द्र मुखीदीना वभूव नहुषप्रिया। पश्चाच्चीर्णव्रता चैव वभूवाहतवत्सका। त्वमपि देवकि तथा भवि
ष्यसि न संशयः। देवक्युवाच॥ का सा चन्द्रमुखी ब्रह्मन् वभूव नहुषप्रिया। किञ्चीर्णंहि व्रतं दिव्यं तया सन्ततिवर्द्धनं। सपत्नीदर्पदमनं सौभाग्या
रोग्यदं विभो। लोमशउवाच॥ अयोध्यायां पुरा राजा नहुषो नाम विश्रुतः। तस्यासी द्रूपसम्पन्ना देवी चन्द्रमुखी प्रिया। तथा तत्रैव नगरे विष्णुगु
प्तो भवद्द्विजः। आसीद्गुणवती तस्य पत्नी भद्रमुखी तथा। तयोरासीदतिप्रीतिःस्पृहणीया परस्परं। अथ ते द्वे पि सख्यौ वै स्नानार्थं शरयूजले। प्राप्ताप्राप्ता
स्य तत्रैव वाह्या वै नगरांगनाः। ताः स्नात्वा मण्डलं चक्रुस्तन्मध्ये व्यक्तरूपिणं। लेखयित्वा शिवं शांतमुमया सह शङ्करं। गन्धपुष्पाद्यतैर्भक्त्या पूज
यित्वा यथाविधि। प्रणम्य गन्तुकामास्ते पप्रच्छुर्वरस्त्रियः। ताऊचुः शङ्करोस्माभिः पार्वत्या सह पूजितः। बध्वा सूत्रमयं तन्तुं शिवस्यात्मा नि

॥ व्र ॥ वेष्टितः । धारणीयमिदं तावद्यावत्प्राणावधारणं । तासां तद्वचनं श्रुत्वा सख्यौ चैतेपि देवकि । कृत्वातु समयं तत्र बध्वा दोर्भ्यां सुदोरकं । ततस्ताः
॥ ५१ ॥ एवं [illegible] स्वसखीभिः समाहृताः । कालेन महता तस्यास्तद्व्रतं विस्मृतं शुभं । चन्द्रमुख्याः प्रमत्तायाः विस्मृतः सुदोरकः । भद्रमुख्यास्तथा भद्रे
स्मृतं सर्व[illegible] तत् । मृता कैश्चिदहोरात्रैः सा बभूव प्लवंगमी । भद्राख्या कुक्कुटीजाता व्रतभङ्गाच्छुभानने । संभूय भयसमयं प्राग्वृतं चक्रतुः सदा । काले
पञ्चत्वं प्राप्ते सखीभावात्स्नेहवते । यदैव मातृके देशे जातेपि कुलसंयुते ब्राह्मणो ब्राह्मणी जाता यासीच्चंद्रमुखी पुरा । नाम्ना भद्रमुखी यासीत् भूषण
नामसा भवत् । अग्निमीलस्य सा दत्ता पित्रा तस्य पुरोधसः । अतीव वल्लभा चासीत् भूषणा भूषणप्रिया । भूषिता भूषणवरैः रूपेणालङ्कृता स्वयं ।
तस्या बभूवुरष्टौच पुत्राः सर्वगुणान्विताः । मातृवद्रूपसंपन्नाः पितृवद्धर्मशीलिनः । सख्यौते तेन तद्वत्र जाते जातिस्मरे किल । पुनर्निरन्तरा प्रीतिस्तयो
रासीत्तथा पुरा । काले बहुतिथे जाते त्यक्ताशा त्यक्तयौवना मध्ये वयसि राज्ञीच पुत्रमेकमजीजनत् । ईश्वरी रोगिणं मूकं प्रज्ञाहीनञ्च विस्वरं । ताद्
शोपि महाभागे हतोसौ नववार्षिकः । ततस्तां भूषणा द्रष्टु मीश्वरीं पुत्र दुःखितां । सखीभावादतिस्नेहात् पुत्रैःस्वैःपरिवारिता । अमुक्ताभरणा भद्राख्य
रूपेणैव भूषिता । साहि भद्राद्विजस्याभूद्भार्या भूषणनामिका । पुराहितस्य कालेन कुक्कुटी बहु पुत्रिणी । तां दृष्ट्वा तादृशीं भव्यां प्रजज्वालेश्वरीरुषा
ततो दूतं प्रेषयित्वा ब्राह्मणीं तीव्रमत्सरा । चिन्तयामास सा शीघ्रं तस्याः पुत्रवधं प्रति । निश्चित्य चेतसा क्रूरा घातयामास तत्सुतान् । हतास्तताश्च
ते पुत्राः पुनर्जीवंन्त्यनामयाः । तत्तद्भूततरं दृष्ट्वा सखीमाहूय भूषणां उपविश्यासने श्रेष्ठे बहुमानपुरःसरं । अपृच्छद्विस्मयाविष्टा राज्ञी सा नृप
वल्लभा । ब्रूहि तथ्यं महाभागे किं त्वया सुकृतं कृतं । दानं व्रतं तपो वापि शुश्रूषणमुपोषणं । येन ते निहताः पुत्राः पुनर्जीवन्त्यनामयाः । तथाहि
बहु पुत्राच जीवदत्सा शुभानाना । अमुक्ता भरणा नित्यं भर्त्तुश्चेतस्यवस्थिता । अतीव शोभसेभद्रे विद्युद्धर्मात्यये यथा ॥ भूषणोवाच ॥ शृणु देवि प्रव ५३
क्ष्यामि जन्मांतरविचेष्टितं । किंच तद्विस्मृतं सर्वमयोध्यायां कृतंहि यत् । आवाभ्यां व्रतवैकल्पं प्रमत्ताभ्यां वरानने । येन त्वं प्लवगीजाता जाताहं

कुक्कुटी तथा। तथापि व्रतवैकल्यं त्वया चापयतः कृतं। मया तु सर्वभावेन चेतसा ध्याय शङ्करं। तिर्य्यग्योन्यनुसारेण मनोवृत्त्या ह्यनुष्ठितं। एतद्धि कारणं भद्रे नान्यत् किञ्चित्करोम्यहं। लोमश उवाच॥ इत्याकर्ण्य वचस्तस्या पूर्वजन्म विचेष्टितं। ईश्वरी च तया सार्द्धं पुनः सम्यक् चकार ह। व्रतस्यास्य प्रभावेण पुत्रपौत्रादि सम्भवं। भुक्त्वा च सौख्यमतुलं गता शिवपुरङ्गता। तस्मा त्वमपि कल्याणि व्रतमेतत्समाचर। आरब्धेऽस्मिन् व्रते दिव्ये जीवत्पुत्रा भविष्यसि॥ देवक्युवाच॥ व्रतमाख्याहि मे सम्यक् व्रतमेतत्सुखप्रदं। सन्तानवृद्धिकरणं शिवलोकस्थितिप्रदं॥ लोमश उवाच॥ भद्रे भाद्रपदे मासि सप्तम्यां सलिलाशये स्नात्वा शिवं मण्डलके लेखयित्वा महाविकं। तत्र संपूज्य समयं कुर्याद्बध्वा करे गुणं। यावज्जीवं मयात्मा तु शिवस्य विनिवेदितः। इत्येवं समयं कृत्वा ततः प्रभृति दोरकं। सौवर्णं राजतं चापि सौत्रं वा धारयेत्करे। मण्डकान्घटकांन्द्द्यात मासे पश्चैव वाहिके। स्वयं तावेव भोक्तव्या व्रतभङ्गभयात्क्षुभे। प्रतिमासन्तु सप्तम्यां शुक्लपक्षे विशेषतः। कुर्यादेवं व्रतं भद्रे वर्षान्तेपि तु देवकि। कारिता मुद्रिका शाक्तौहेमी रौप्याखशक्तितः। ताम्रपात्रोपरिस्थाप्य ब्राह्मणेभ्यो निवेदयेत्। आचार्याय विशेषेण सुवर्णस्यांगुलीयकं। पुष्पकुङ्कुमसंयुक्तैस्तांबूलाञ्जनसूचकैः। सक्षार्थे वृतीया एवं तत्त्वारयित्वा तु व्रतं सन्ततिवर्द्धनं। सर्वपापविनिर्मुक्ता भुक्त्वा सौख्यमनामय सन्तान वर्धयित्वा च शिवलोके महीयते। एतत्ते सर्वमाख्यातमाख्यानं व्रतमुत्तमं। कुरु देवकि यत्नेन जीवत्पुत्रा भविष्यसि। श्रीकृष्ण उवाच॥ इत्युक्त्वा तु मुनिश्रेष्ठस्तत्रैवान्तरधीयत। चकार सर्वं यत्नेन अदुक्तं तेन धीमता। व्रतस्यास्य प्रभावेण देवकी मामजीजनत्। तस्मात्पार्थ नरैः कार्यं स्त्रीभिः कार्यं विशेषतः। व्रतं पाप प्रशमनं सुखसन्ततिवर्द्धनं। एवं यः शृणुयाद्भक्त्या यश्चैतत् प्रतिपादयेत्। व्रतमाख्यानसहितं सोपि पापैः प्रमुच्यते। साख्यानकं व्रतमिदं सुतसौख्यकामा या स्त्री करिष्यति शिवं हृदये निधाय। दुःखं विहाय बहुशोककृतकल्मषौघान् सा स्त्री व्रताद्भवति शोभनजीववत्सा इति हेमाद्रौ भविष्योत्तरे अभुक्ता भरणा सप्तमी व्रतं।

अथ माघ शुक्ल सप्तमी व्रतं। हेमाद्रौ भविष्ये युधिष्ठिर उवाच॥ कथं सा क्रियते कृष्ण मनुष्यैरथ सप्तमी। चक्रवर्त्तित्वफलदा या विख्याता त्वया

॥ भ्र ॥ मम ॥ श्रीकृष्ण उवाच ॥ आसीत्कांबोजविषये यशोवर्मा नराधिपः। वृद्धे वयसि तस्यासीत्सर्वव्याधियुतः सुतः। तत्कर्मपाकं सो पृच्छत् विनीतं हि
५४ पुङ्गवं। सचाह राजन्वैश्योयं कृपणः पूर्वजान्मनि। ददर्श रथ सप्तम्याः क्रियमाणं व्रतं नृप। व्रतदर्शनमाहात्म्यादुत्पन्नो जठरे तव। अदाता हि
वे तस्मात्तेनच व्याधितो भवत्। ततः स राजा पप्रच्छ किमेतस्य विधीयतां। यस्य सन्दर्शनात्प्राप्तो लोभी तवनिकेतनं। तदेव क्रियतां राज
रथ सप्तमिसंज्ञितं। व्रतं पापहरं येन चक्रवर्त्तित्व माप्यते। राजोवाच। ब्रूहि विप्र व्रतं कृत्स्नं सविधानं समन्त्रकं। ईश्वराणां दरिद्राणां सर्व
पत्प्रदायकं। द्विज उवाच ॥ शुक्ल पक्षेतु माघस्य षष्ठ्यामामन्त्रयेद्गृही स्नानं शुक्लतिलैः कार्य्यं नद्यभावेतु कुत्रचित्। विमले सलिले राजन् विधिवद्दर्श
धर्मतः। देवादीन् पूजयित्वा तु गत्वा सूर्य्यालयं ततः। सूर्य्यं सम्यक् नमस्कृत्य पुष्पधूपाक्षतैः शुभैः। आगत्य भवनं पश्चात् पञ्चयज्ञांश्च निर्व्वपेत्।
सम्भोज्यातिथिभृत्यांश्च वालभृत्याश्रितान् स्वयं। विद्यमाने दिने श्रीमान् वाग्यतस्तैलवर्जितं। रात्रौ विप्रं समाहूय विधिज्ञं वेदपारगं। संपूज्य
नियमं कुर्यात्सूर्य्यमाधाय चेतसि। सप्तम्यां तु निराहारो भूत्वा भोगविवर्जितः। भोक्ष्ये ष्टम्यां जगन्नाथ निर्विघ्नं तत्र मे कुरु। इत्युच्चार्य्य नृपश्रेष्ठ
तोयं तोयेषु निक्षिपेत्। ततो विसृज्य तं विप्रं स्वपेद्भूमौ जितेन्द्रियः। तत प्रातः समुत्थाय कृत्वावश्यः शुचिर्नरः। कारयित्वा रथं दिव्यं किङ्किणी
जालमालिनं। सर्वोपस्कारसंयुक्तं रत्नैः सर्वांग चित्रितं। कांचनं राजतं चाथ हयसारथि संयुतं। ततो मध्याह्नसमये कृतस्नानादिको व्रती। अनिर्य
न्वीक्ष्यमाणस्तु पाखण्डालापवर्जितः। सौरसूक्तं जपन्प्राज्ञ आगच्छेत स्वमालयं। निर्वृत्तनित्यकार्य्यस्तु कृत्वा ब्राह्मण वाचनं। वस्त्रमण्डपिकामध्ये
स्थापयेत्तं रथोत्तमं। कुङ्कुमेन सुगन्धेन चार्चयित्वा समन्ततः। मालाभिः पुष्पदीपानां समन्तात्परिवेष्टयेत् धूपेनागुरुमिश्रेण धूपयित्वा तथोपरि।
रथे संस्थापयेद्भानुं सर्वसम्पूर्णलक्षणं। बित्तानुरूपं हैमंच वित्तशाठ्यविवर्जितः। शाठ्याद्व्रजति वैकल्यं वैकल्याद्विकलं फलं। ततोदेवं समभ्यर्च्य सरथं ५४
सहसारथिं। पुष्पैर्धूपैस्तथा गन्धैर्वस्त्रालङ्कारभूषणैः। फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपाचितैः। पूजयेद्भास्करं भक्त्या मन्त्रैरेभिस्त्रिभिः क्रमात्।

भानो दिवाकरादित्य मार्त्तण्ड जगतां पते । अपांनिधे जगद्रच भूतभावन भास्कर । प्रणतार्त्तिहराचिंत्य विश्व चिन्तामणे विभो । विष्णो हंसादिभूते च आदिमध्यांतकारक । भक्तिहीनं क्रियाहीनं मन्त्रहीनं जगत्पते । प्रसादात्तव संपूर्णमर्चनं यदिहास्तु मे । एवं संपूज्य देवेशं प्रार्थयेत्सुमनोगतं । ददाति प्रार्थितो भानुर्भक्त्या सन्तोषितो नरैः । वित्तहीनोपि विधिना सर्वमेतत्प्रकल्पयेत् । रथं ससारथिं साश्वं वर्णकैर्भिन्नलेखितं । सौवर्णं च तथा भानुं यथा शक्त्या विनिर्मितं । प्रागुक्तेन विधानेन पूजयित्वा सुविस्तरं । जागरं कारयेद्रात्रौ गीतवादित्रनिस्वनैः । प्रेक्षणीयैर्विचित्रैश्च पुंण्याख्यानकथादिभिः । रथयात्रां प्रपश्येत भानोरायतनं श्रिया अनिमीलितनेत्रस्तु नयेत् तां रजनीं बुधः । प्रभाते विमले स्नातः कृतकृत्यस्ततो द्विजान् । तर्पयेद्विविधैः कामैर्दानैर्वासोविभूषणैः । अश्वमेधेन तुल्यं तदिदं ब्रह्मविदो विदुः । अतो देयानि दानानि यथा शक्त्या विचक्षणैः । रथं तु गुरवे देयं सर्वोपस्करसंयुतं । रक्तवस्त्रस्य युगलं रक्तधेनुसमन्वितं एवं चीर्णव्रतो राजन् किंनाप्नोति जगत्त्रये । तस्मात्सर्वप्रयत्नेन कुरु त्वं रथसप्तमीं । येनारोग्यो भवेत्पुत्रस्त्वदीयो नृपसत्तम । व्रतस्यास्य प्रभावेण प्रभावाद्भास्करस्य च । भविष्यति महातेजा महाबलपराक्रमैः । भोगान् सुविमलान् कृत्वा भुक्त्वा राज्यमकण्टकं । दत्वासौ रथसप्तम्यां हते त्वयि महाभुज । उत्पाद्य पुत्रान्पौत्रांश्च सूर्य्यलोकं स यास्यति । तत्र स्थित्वा कल्पमेकं चक्रवर्त्ती भविष्यति श्रीकृष्ण उवाच ॥ इति सर्वं समाख्याय विपरीतो द्विजोत्तमः । यथागतं जगामासौ नृपः सर्वं चकार ह । यथादिष्टं द्विजेन्द्रेण तत्तत्सर्वं बभूव ह । एवं स चक्रवर्त्तित्वं प्राप्तवान्नृपनन्दन । श्रूयते यस्तु मांधाता पुराणेषु परंतप । य इदं शृणुयाद्भक्त्या यो वापि परिकीर्त्तयेत् । तस्यैव तुष्यते भानुर्यच्छत्येवाभयं सदा एवंविधं रथवरं रथवाजियुक्तं हैमं च हेमशतदीधितिना समेतं दद्याच्च माघसितसप्तमवासरे यः सोसंगचक्रगतिरेव महीं भुनक्ति । इति रथसप्तमी व्रतं अथास्यामेव स्नानविधिः । तत्रारुणोदयव्यापिन्यां स्नानं कार्य्यं । तदुक्तं मदनरत्ने स्मृतिसंग्रहे । सूर्य्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तस्यां स्नानं महत् फलम् । माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । कुर्यात्स्नानार्घदानाभ्यामायुरारोग्यसम्पद इति । सप्तार्कपर्णानि सप्त

बदरीपत्राणि च शिरसि निधाय कर्त्तव्यमिति मदनः । तत्र मन्त्रः । यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु । तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमि
स्नानानन्तरमर्घदानञ्च कर्त्तव्यं । तन्मन्त्रश्च सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन । सप्तम्यासहितो देव गृहाणार्घं दिवाकरेति ततः प्रार्थना । जननी
सर्वभूतानां सप्तमी सप्तसप्तिके तिथि । सप्तव्याहृतिके देवि नमस्ते सूर्यमण्डले इति । इति भविष्योत्तरोक्तः स्नानादिविधिः । अथाचैवाचला सप्तमि
तं । युधिष्ठिर उवाच ॥ कथं स्त्रियः सुरूपाःस्युः सुभगाः सुप्रजास्तथा । पुण्याश्च महतश्चाच सर्वमेतत् फलं यतः । अल्पायासेन सुमहद्येन पुण्यमवा
ते । स्त्रीभिर्यत्ते मम ब्रूहि स्नानमेकं जगद्गुरो । श्रीकृष्ण उवाच ॥ श्रूयतां भरतश्रेष्ठ गृहस्थं मुनि भाषितं । यन्मया कस्यचिन्नोक्तमचलासप्तमीव्रतं ।
वेश्या चेंदुमती नाम रूपौदार्य्यगुणान्विता । आसीत्कुरुकुलश्रेष्ठ सगरस्य विलासिनी । सा वसिष्ठाश्रमं पुण्यं जगाम गजगामिनी । वसिष्ठमृषिमा
सीनं प्रणम्यानतकन्धरा । कृताञ्जलिपुटा भूत्वा प्राहेदं जगतो हितं । मया न दत्तं न हुतं नोपवासं कृतं व्रतं । न भक्त्या पूजितः शम्भुः स्वामिन्
शार्ङ्गधरो नच । सांप्रतं तप्यमानाया व्रतं किञ्चिद्वदस्व मे । येन दुःखात्तु पङ्कौघादुत्तरामि भवार्णवं । एतत्तस्याःसुवहुशःश्रुत्वातिकरुणं वचः । का
रुण्यात्कथयामास वसिष्ठो मुनिपुङ्गवः । माघस्य सित सप्तम्यां सर्वकामफलप्रदं । रूपसौभाग्यजननं स्नानं कुरु वरानने । कृत्वा षष्ठ्यामेकभक्तं सप्त
म्यां निश्चलं जलं । राचंयते चालयेथास्त्वं दत्वा शिरसि दीपकं माघस्य सितसप्तम्यां अचलं चालितं चयत् । जलं मलानां सर्व्वेषां स्नातं प्रक्षालनन्ततः ।
वसिष्ठवचनं श्रुत्वा तस्मिन्नहनि भारत । चकारेंदुमती स्नानं दानं सम्यग्यथाविधि । स्नानस्यास्य प्रभावेण भुक्त्वा भोगान् यथेप्सितान् । इन्द्रलोके स
रोमध्ये नायकत्वमवाप सा । अचलासप्तमीस्नानं कथितं ते विशांपते । सर्वपापप्रशमनं सुखसौभाग्यवर्द्धनं । युधिष्ठिर उवाच ॥ सप्तमीस्नानमा
हात्म्यं श्रुतं निरवशेषतः । सांप्रतं श्रोतुमिच्छामि विधिमन्त्रसमन्वितं । श्रीकृष्ण उवाच ॥ एकभक्तेन संतिष्ठेत् षष्ठ्यां संपूज्य भास्करं । सप्तम्यां ५५
तु व्रती प्रातः सुगम्भीरं जलाशयम् । सरित्सरस्तडागं वा देवखातमथापि वा । सुखावगाहसत्वेष्टं दुष्टसत्वैरदूषितं । व्यालांवुपक्षिभिश्चैव जलगैर्मत्स्य

कल्कपैः । न केन चाल्यते यावत्तावत् स्नानं समाचरेत् । सौवर्णे राजते पात्रे भक्त्या लौहमये यवा। तैलस्य वर्त्तिर्दातव्या महारञ्जन रंजिता । महा रंजनं कुसुंभं समाहितमना भूत्वा दत्वा शिरसि दीपकं। भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् । नमस्ते रुद्ररूपाय रसानां पतये नमः । वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तुते। जले परिहरेद्दीपं स्नात्वा संतर्प्य देवताः। चन्दनेन लिखेत्पद्ममष्टपत्रं सकर्णिकं । मध्ये शिवं सपत्नीकं प्रणवेनच संयुतं। शाक्रे दले रविः पूज्यो भानुश्चैवानले तथा । याम्ये विवस्वान्नैरृत्ये पूजयेत् भास्करं ततः । पश्चिमे सविता पूज्यः पूज्योऽर्कश्चानिलेदले । सौम्ये सहस्रकिरणं शैवे सर्वात्मने नृप । पूज्याः प्रणवपूर्वासु नमस्कारांतयोजिताः।पुष्पैः सुगन्धधूपैश्च पृथक्त्वेन युधिष्ठिर । विसर्ज्य वस्त्रसंवीतं स्वस्थानं गम्यतामिति विसर्जिते सहस्रांशौ समागम्य स्वमालयं । ताम्रपात्रे यथा शक्त्या मृन्मये वाथ भक्तिमान् । स्थापयेत्तिलपिष्टञ्च सघृतं सगुडं तथा । कांचनं तालकं कृत्वा अशक्तस्तिलपिष्टजं । संच्छाद्य रक्तवस्त्रेण पुष्पैर्धूपैरथार्चयेत् । ततस्तंचालयेद्विप्रैर्दद्यान्मंत्रेण तालकं। आदित्यस्य प्रसादेन प्रातःस्नान फलेनच ।दुष्टदौर्भाग्य दुःस्वप्नं मया दत्तं तु तालकं तालकं तालपत्रं। पूजयित्वोपदेष्टारं विप्रानन्यांश्च पूजयेत् । ततो दिनं समग्रंच भास्करध्यानतत्परः । शृण्वन्नथ कथाः शृण्वन्नन्या वाधर्मसंहिताः । पाखण्डादिभिरालापदर्शनस्पर्शनादिकं । वर्ज्जयेत् क्षपयेत्प्राज्ञस्ततोवधुजनैःसह । एतत्ते कथितं पार्थ रूप सौभाग्यकारकं । अचलासप्तमीस्नानं सर्वकामफलप्रदं । इति पठति यइत्थं यः शृणोति प्रसंगात् कलिकलुषविनाशं सप्तमीस्नानमेतत् । मतिमपि च जनानां योददाति प्रयत्नात्सुरसदनगतोसौ सेव्यते चाप्सरोभिः । इत्यचलासप्तमी व्रतं ॥ अथास्यामेव पुत्रसप्तमी व्रतं । मदनरत्ने आदित्यपुराणे । आदित्य उवाच ॥ माघमासे तु शुक्लायां सप्तम्यां समुपोषितः । यः पूजयेत मां भक्त्या तस्याहं पुत्रतां व्रजेत् । एवं चोभयसप्तम्यां मासि मासि सुरोत्तम । यस्तु मां पूजयेद्भक्त्या सुमेकमेकमादरात् ॥ सुमेकः संवत्सरः । प्रयच्छामि सुतं तस्य ह्यात्मनोह्यङ्गसम्भवं । वित्तं यशस्तथा पुत्रमारोग्यं परमं सदा । माघमासे तु यो ब्रह्मन् शुक्लपक्षे जितेन्द्रियः । पाखण्डान्यतितानंत्यान् अजल्पन्विजितेन्द्रियः । उपोष्य विधिवत्षष्ठ्यां श्वेतमाल्यविलेपनैः । पूजयित्वा तु मां भक्त्या निशिभूमौ स्वपेद्बुधः ।

स्नात्वा ददौ पुत्रं विवाचकं । स्वमातुः श्यामला तुष्टा तेन मोहं जगाम सा । उर्मिला रूपसम्पन्ना दिव्यदेवांवरांशुका । विमानवरमारूढा दिव्यमाल्यांबरान्विता । भर्तुः समीपे संस्था दृश्यतेद्यापि सा शनैः । बुधस्य पार्श्वेनभसि निमिराजं समीपगा विस्फुरंती महाराज बुधाष्टम्याः प्रभावतः । युधिष्ठिरउवाच ॥ यद्येवं प्रवरा कृष्ण तिथिर्वैतु बुधाष्टमी तस्यामेव विधिं ब्रूहि यदितुष्टोसिमाधव ॥ श्रीकृष्णउवाच ॥ शृणुपाण्डव यत्नेन बुधाष्टम्या विधिं शुभं । यदा यदा सिताष्टम्यां बुधवारो भवेद्यदि । तदा तदा हि सा ग्राह्या एकभक्त्या शनैर्नृभिः । स्नात्वा नद्यां तु पूर्वाह्णे गृहीत्वा करकं नवं । जलपूर्णं सवस्त्रं कृत्वा नद्यैः समन्वितं । पूजयित्वा गृहं नीत्वा बुधमेवं क्रमेण तु । माषकेन सुवर्णेन तदर्द्धार्द्धेन वा पुनः । कारयेद्बुधरूपं तु स्वशक्त्या वा प्रयत्नतः । अङ्गुष्ठमात्रं पुरुषं चतुर्बाहुं सुलक्षणं पद्ममध्ये व्रणं कुम्भं पूरयेत् सिततण्डुलैः । हेमपात्रेण संछाद्य पीतवस्त्रयुगेनच वस्त्रोपरि स्थितं देवं पीतवस्त्राद्यर्चनादिभिः । पश्चाद्घृतेन संस्नाप्य तत्तन्मन्त्रैः क्रमेणतु । नैवेद्यं गुग्गुलं धूपं दशाङ्गेन सुगन्धकं । पायसैर्घृत पूरैश्च मोदकाशोक वर्त्तिभिः । फलैश्च विविधैश्चैव शर्कराभिर्गुडैः शुभैः । ततः पुष्पार्चितैः पीतैः वक्ष्यमाणैश्च नामभिः । नमो बुधाय पादौ तु सोमपुत्राय जानुनी । तारकाय कटिं चैव राजपुत्राय चोदरं । इलाप्रियाय हृदयं कुमारायेति वक्षसि । वाक्ष्पूरूरवःपित्रे अंसौ सोमसुताय च । मुखंतु पीतवर्णाय ज्ञानाय नयनद्वयं । मूर्द्धानञ्च बुधायेति एषु स्थानेषु पूजयेत् । सौवर्णं राजतं ताम्रं पात्रमादाय शोभनं । गन्धपुष्पार्चितैः पीतैर्गुडमिश्राम्बु पूरितैः । जानुभ्यामवनीं गत्वा ते नचार्घं निवेदयेत् । उर्वश्यास्य गुरुर्यस्तु यः पुरूरव सः पिता । यो ग्रहाणामधिपतिर्बुधो नः सम्प्रसीदतु । वराश्च विष्णुना दत्ताः सकला नः प्रसीदतः । वन्त्वेषा येन दत्तार्घं यस्यास्तस्य विलं पुनः । प्रथमे मोदकान्दद्याद्द्वितीये फेणिकांस्तथा । तृतीये घृतपूरांश्च चतुर्थे वटपत्रिकान् । पञ्चमे शुभकारांश्च षष्ठे कोशालिकास्तथा । अशोकवर्त्तिकाश्चैव सप्तमेकार्यमेवच । अष्टमे शर्करामिश्रैः खाण्डवैश्च युधिष्ठिर । विप्राय वायनं दद्यात् व्रती भोजनमाचरेत् । एवं क्रमेणकर्त्तव्यं बुधाष्टम्यां युधिष्ठिर । बान्धवैः सह मित्रैश्च भोक्तव्यं प्रीतिपूर्व्वकं सौम्यमाख्यायनं शृण्वन्नरकेभ्योऽपिमुच्यते । सोमात्मजात्मकमष्टमस्य

॥ व ॥ प्रदं तं सम्पूजयेत्सफलनीरयुतं च कुम्भं । पक्वान्नपात्रसहितं सहिरण्यवस्त्रं पश्यत्ययौवमपुरीं न कदाचिदेव ॥ इति श्रीभविष्योत्तरपुराणे कृष्णयुधि
॥ ५८ ॥ ष्ठिरसंवादे बुधाष्टमीव्रतं । अथोद्यापनं । युधिष्ठिरउवाच । उद्यापनविधिं ब्रूहि कृपया भक्तवत्सल । कस्मिन् काले च किं द्रव्यं कथं स फलभाग्भवेत् ॥ श्रीकृष्ण
उवाच ॥ आदौ मध्ये तथा चान्ते कुर्यादुद्यापनक्रियां । सप्तम्यां प्रयतो मर्त्यः कुर्यात् वै दन्तधावनं । आचम्य कुर्यात्सङ्कल्पं दश विप्रांश्चिमन्त्रयेत् । अष्ट
म्यां प्रातरुत्थाय शुचिर्भूत्वा व्रती ततः । गङ्गाद्यादि महातीर्थे स्नात्वा नित्यकृतक्रियः गृहमध्ये शुचौ देशे रङ्गवल्लीविराजिते । पुण्याहवाचनं कृत्वा कुर्यात्
मातृकाविधानकं । प्राणानायम्य विधिवत्कृत्वा सङ्कल्पनादिकं । तिथ्याद्युल्लेखनान्ते च व्रतनाम प्रकीर्त्तयेत । मया कृतं बुधाष्टम्याव्रतं साङ्गफलाप्तये । उद्यापनं
करिष्येऽहमित्यक्षतकुशोदकं । त्यक्त्वाचार्यादि वरणं कुर्याद्वाक्यादिभिः फलं । ब्राह्मणं दद्यात्तच वस्त्रतांबूलभूषणैः । ततः पूजादिकं कुर्याद्गृह यज्ञपुरःसरं ।
ततस्त्वष्टदलं कुर्यान्मध्ये कर्णिकयासह । पञ्चवर्णैः समापूर्य दलाग्राणि च केसरान् । कर्णिकायां न्यसेद्वासं पञ्चप्रस्थप्रमाणतः । दलेषु चन्दनाग्रेषु यथाशक्त्या
विनिक्षिपेत् । तत्रैव स्थापयेत्कुम्भान्मध्ये पूर्वादिदिक्षु च ॥ गङ्गाजलेन सपूज्य वस्त्रादिभिरलंकृतान् । पञ्चत्वकपल्लवोपेतान्नव कुम्भान्यथाविधि । तदनन्तरं
ग्रहान् सर्वान्मण्डले स्थापयेत्ततः । तत्पूर्वं स्थापयेत्कुम्भं वारुणं च विशेषतः । वस्त्रत्वकपल्लवफलैः पञ्चरत्नैः स काञ्चनैः । ततस्मन्त्रैः प्रतिष्ठाप्य पूजयेच्च
यथाविधि । सप्तजन्मार्जितं चौर्यं पातकादि च यत्कृतं । तद्दोषपरिहाराय बुधाष्टम्याव्रतं कृतं तस्य साङ्गफलप्राप्त्यै पूजाहोमं करोम्यहं । बुधप्रीत्यर्थं तत्सर्वं
मितिसङ्कल्प्य पूजयेत् । कर्षमात्रेण राजेन्द्र तदर्द्धार्द्धेन वा पुनः बुधस्य प्रतिमां कुर्यात् सुवर्णेन विचक्षणः । कर्णिकायां मध्यकुम्भे ताम्रपात्रे बुधं न्य
सेत् । पञ्चामृतेन संस्नाप्य वस्त्रयुग्मेन वेष्टयेत् । ध्यायेन्नारायणं देवं बुधवासरमाकृतिं चतुर्भुजं शङ्खचक्रगदाशार्ङ्गधरं यजेत् । आचेयं पीतवस्त्रं च पीतपुष्पा
क्षतादिभिः । उपचारैः षोडशभिः पुरुषसूक्तविधानतः । तद्दक्षिणे विष्णुमिदं विष्णुरित्यधिदैवतं । सहस्रशीर्षापुरुषं वामे प्रत्यधिदैवतं । दलेषु ५८
विन्यसेद्देवान् प्रागारभ्य प्रदक्षिणं । रविसोमकुजगुरुः । शुक्रार्कीराहुकेतवः । अनन्तं वामनं विष्णुं सौरिं मत्स्यजनार्दन । हंसन्नारायणं चाष्टौ दलाग्रेषु

च पूजयेत् । धूपैर्दीपैस्तु नैवेद्यैः फलैश्च विविधैर्यजेत् । वह्निरिन्द्रादयः पूज्या दशदिक्पालकास्तथा । पञ्चमं चित्रगुप्तं च श्यामलं दक्षिणे यजेत् । कुम्भवंशपात्रे, अष्टाविंशौ च लड्डुकान् । सयज्ञोपवीतान्सफलान् दक्षिणासहितान्यजेत् । पूजयित्वा ततो होमं शाखोक्तविधिना सुधीः । मण्डलाच्च पश्चिमे भागे स्थण्डिलं चतुरस्रकं । कृत्वा तूल्लेखनादीनि कृत्वाग्निं स्थापयेत्सुधीः । इध्माद्दर्भं परिस्तीर्य पात्रमादरमाचरेत् । पूर्णपात्रनिधानान्तं ब्रह्मासनमतः परं । इध्माधानमुखप्रान्तं प्रधानाहुतिवाहनं । अपामार्गं समिद्भिश्च यवव्रीहितिलैर्घृतैः । गोधूमैः सतिलैर्होमे पृथक् पृथगतन्द्रितः । उद्बुध्यस्वेति मन्त्रेण होममष्टोत्तरं शतं । मन्त्रेण विष्णुं जुहुयात्तथा नारायणं यजेत् । आधिपत्यधिदेवौ च मन्त्राभ्यां जुहुयात्तयोः । ग्रहादिभ्यश्च जुहुयात्प्रायश्चित्तादिकं तथा । पूर्णाहुतिं च जुहुयात्कुर्याद्ब्रह्मविसर्जनं । पूर्णपात्रोद्वासनं च बलिदानमतःपरं । वस्त्रादिपूजनं कृत्वा दैवतोद्वासनं ततः । अभिषिच्याथ तिलकं रक्षाबन्धनमेव च । आचार्यं च सपत्नीकं पूजयित्वा यथाविधि । प्रतिमावस्त्रकलशान् गोदानं दक्षिणां तथा । दत्त्वा ब्रह्मादि विप्रेभ्यः कलशांश्च स दक्षिणान् । ब्राह्मणान् भोजयेत्पश्चादाशिषो वाचयेत्तथा ॥ इति श्रीभविष्योत्तरपुराणे बुधाष्टमी व्रतोद्यापनं ॥ अथ शुक्लादिश्रावणकृष्णाष्टम्यां दशाफल व्रतं । तत्र पूजाविधिः ॥ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधं । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगं ॥ महार्हवैदूर्यकिरीटकुण्डलत्विषापरिष्वक्तसहस्रकुन्तलं । उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ श्रीगोपालकृष्णाय नमः ॥ ध्यायामि । वासुदेवाय आवाहयामि शेषशायिने आसनं तीर्थपादाय पाद्यं । गङ्गाजनकाय अर्घ्यं यमुनावेगसंहारिणे नमः । आचमनं विप्रमुक्ताय पञ्चामृतं कृष्णाय शुद्धोदकस्नानं पीतवासिने वस्त्रं यज्ञप्रियाय यज्ञोपवीतं सुरेश्वराय गन्धं अधोक्षजाय अक्षतान् । कमलप्रियाय पुष्पाणि तुलसीदलसमर्पणं कृष्णाय नमः । विष्णवे नमः हरये नमः शेषशायिने गोविन्दाय गरुडध्वजाय दामोदराय हृषीकेशाय पद्मनाभाय उपेन्द्राय संसारार्णवमग्नानां नराणां पापकर्मणां । इदं मोक्षफलावाप्तिं कुरुष्व पुरुषोत्तम । दोरकबन्धनं । पारिजातापहारकाय नमः । वनस्पतीति धूपं । ज्ञानप्रदाय दीपं चक्रिणे नमः नैवेद्यं

॥ व्र ॥ पद्मनाभाय नीराजनं देवदेव नमस्तेस्तु भक्तप्रिय कृपानिधे। गृहाणार्घं मयादत्तं देवक्या सहितप्रभो। अर्घं त्रिलोकनाथो देवेशः सर्वभूतदयानिधिः
॥ ५८ ॥ दानेनानेन सुप्रीतो भवत्विह सदा मम। वायनं श्रीकृष्णः प्रतिगृह्णाति श्रीकृष्णो वै ददाति च। श्रीकृष्णस्तारकोभाभ्यां श्रीकृष्णाय नमोनमः। इ
पूजा ॥ अथकथा ॥ सूत उवाच। शृणुध्वमृषयः सर्वे नैमिषारण्यवासिनः। पुराकृतयुगस्यादौ कृष्णदेवेन भाषितं। तद्व्रतं वः प्रवक्ष्यामि सांगोपा
ङ्गं मुनीश्वराः। पुरा वै द्वापरस्यान्ते पाण्डवाः कौरवास्तथा॥ द्यूतं प्रचक्रिरे सर्वे धनमानेन मोहिताः। निर्जिताः पांडवा दुःखात् वनं प्रापुर्मुनीश्वराः।
कुन्तीविदुरगेहे तु संस्थिता तु महायशा। तच्छ्रुत्वा कृष्णदेवोपि कृपया परया युतः। आययौ गरुडारूढः विदुरस्य गृहं प्रति। तत्रापश्यन्महातेजा
कुन्तीं परमहर्षितां। विदुरेणार्चितः कृष्णः कुन्तीमेवाह भक्तितः। नत्वाह कुन्तीं तां देवीं घनश्यामं विडम्बयन्। त्वत्पुत्रास्तु महादुःखात्प्रापुस्ते गहनं
वनं। तथापि सुमहद्दुःखं सर्वदातन्ममाप्रियं। कुन्त्युवाच हृषीकेश महाबाहोदुःखेन कर्षिता मुहुः। कृपया परयादेव रक्षितावयमीदृशाः। ममचैव महत्
दुःखं त्वयिजामातरि स्थिते। मत्पुत्रास्ते महादुःखात्प्रविष्टा गहनं वनं। सुप्रया विदुरोमह्यं कौरव्यं प्रस्थसंमितं। ददाति प्रीतिदः सत्यं जीवनाय महा
मतिः। गृहस्य पश्चिमे भागे वासोमेवै जनार्दन। दर्शिता कौरवाणां हि सर्वेषां कुमतिस्तथा॥ इति तस्या वचःश्रुत्वा कृष्णः परमधर्मवित्। आश्वैनां
वासुदेवो भक्तप्रियतमस्तदा। व्रतं ते कथयिष्यामि येन दुःखात्प्रमुच्यते। पुत्रपौत्रैः परिवृता स्वराज्यं प्राप्स्यसे पुनः। दशाफलमितिख्यातं तद्व्रतं कुरु सुव्र
ते ॥ कुन्त्युवाच ॥ कस्मिन् काले तु कर्त्तव्यं तद्व्रतं केशवप्रभो। वद मांप्रति इत्युक्तो जगाद जादवेश्वरः। श्रावणस्यासिते पक्षे कृष्णाष्टम्यां निशीथके।
देवक्यां वासुदेवस्य प्रादुर्भवति केशवः। तदग्रे दशगुणितं सूत्रं स्थाप्य प्रपूजयेत्। हस्ते बध्वा तु तत्सूत्रं दशाहं व्रतमाचरेत्। संसारार्णवमग्नानां न
राणां पापकर्मणां। दुःखामुत्रफलावाप्तिं कुरुष्व पुरुषोत्तम। अनेन दोरकं बध्वा दशवर्षव्रतं चरेत्। देवस्य पुरतोनित्यं दशपद्मानि कारयेत्। तत ५८
स्य कृतयात्पुण्यां कथामेतां शुभावहां। तुलस्याः कृष्णवर्णाया दलैर्दशभिरर्चयेत्। कृष्णं विष्णुं तथानन्तं गोविन्दं गरुडध्वजं। दामोदरं हृषीकेशं पद्म

नाभं हरिप्रभुं एतैश्च नामभिर्नित्यं कृष्णदेवं समर्चयेत्। नमस्कारं ततः कुर्यात् प्रदक्षिणसमन्वितं। एवं दशदिनं कुर्यात् व्रतानामुत्तमं व्रतं। आदौ मध्ये तथा चान्ते होमं कुर्याद्विधानतः। कृष्णमन्त्रेण जुहुयाच्चरुणाष्टोत्तरं शतं। ततो होमान्ते विधिना आचार्यं पूजयेत्सुधीः। सुवर्णताम्रपात्रे वा मृण्मये वेणुपात्रके। तुलसीदलं सुवर्णेन कारयित्वा सुलक्षणं। प्रतिमां च तथा कृत्वा अर्चयित्वा विधानतः। निधाय प्रतिमां तत्र आचार्याय निवेदयेत्। दातव्या गौः सवत्सा च वस्त्रालङ्कारभूषिता। दशचैवेतु कृष्णाय पूरिकादशकार्चयेत्। दापयेत्तु ब्राह्मणाय स्वयं भुक्त्वा तथैव च। उपायनं गृहीष्व त्वं सर्वोपस्कारसंयुतं। संसारार्णवमग्नानां पाहि देवकिनन्दन। अनेनोपायनं दत्वा नत्वा चैव क्षमापयेत्। एवं व्रतं त्वया देवि कर्तव्यं कृष्णसन्निधौ। एवमुक्ता तु कृष्णेन कुन्ती श्रुत्वा मुदान्विता। उवाच कृष्णदेवं तं मम वित्तं न विद्यते। प्रत्युवाच हृषीकेशस्तव वित्तं भविष्यति। एवमुक्त्वा ययौ कृष्णः कर्णं द्रष्टुं मुदान्वितः। कर्णोपि च महात्मानं कृष्णं दृष्ट्वा प्रहर्षितः। सिंहासनं ददौ तस्मै पाद्यमर्घं तथैव च। कर्णोप्युवाच देवेशं किमर्थं च तवागमः। इत्युक्तः कृष्णदेवोऽथ तव माताऽतिदुःखिता। भूरिभूरिभयात् कृष्ण मातरं याम्यहं कथं। कथं वा दुःखिता मे सा प्रमुच्येत वदस्व मे॥ श्रीकृष्ण उवाच॥ सुवर्णपात्रे संपूर्णं पायसं क्षीरसंयुतं॥ सहस्रं शतनिष्कन्तु दातव्यं विप्रहस्तके। तव माता तथा प्रीता भविष्यति न संशयः। एवमुक्त्वा तथा कृष्णो द्वारकां संजगाम ह। सः कृष्णभाषितं श्रुत्वा शतनिष्कं सुवाक्यतः। ततः श्रुत्वा तु कर्णस्य सर्वं चक्रे महायशाः। पञ्चभक्ष्यसमायुक्तं पात्रं स्वर्णेन कारितं। शतनिष्कसमायुक्तं ब्राह्मणे प्रददाय सः। जगाम वै तथा कुन्ती पात्रं दृष्ट्वाथ हर्षिता। देवस्य सन्निधौ कुन्ती व्रतं चक्रेऽथ भक्तितः। कृष्णेन कारितं सर्वं मम भाग्याय वै ध्रुवं। कृष्णपूजां ततः कृत्वा कथां श्रुत्वाथ पूर्ववत्। उपायनं ददौ यत्र ब्राह्मणेभ्यो यथाक्रमं। तुलसीदलं सुवर्णेन कारयित्वा सुलक्षणं। प्रतिमां विष्णुभक्ताय स्वर्णपात्रे निधाय च। गोदानेन समायुक्ता आचार्याय महामते। कुन्ती ददौ महादेवी विष्णुर्नः प्रीयतामिति। व्रतं दशसु वर्षेषु चकारोद्यापनं ततः। तद्व्रतस्य प्रभावेण तनूजांस्त्वागतान् ततः। हत्वा शत्रून् मृधे सर्वान् कृष्णस्यैव प्रसादतः युधिष्ठिरोऽपि धर्मात्मा स्वराज्यं प्राप्तवान् सुधीः। श्रीशावेदं व्रतं

॥ व्र ॥ कुन्ती द्रौपदीं च पतिव्रतां । दशाफलमिति ख्यातं कृष्णदेवेन भाषितं । वयं सर्वे महादुःखान्निस्तीर्य्य स्वपुरीं गताः । व्रतस्यास्य प्रभावेण कृष्णस्यैव प्र
॥ ६० ॥ दतः त्वमप्येवं व्रतं भद्रे कुरुष्व सुसमाहिता । पुत्रपौत्रैः परिवृता सर्वान् कामानवाप्स्यसि । आचख्यौ च व्रतं तस्यै कुन्ती परमहर्षिता । सा च चक्रे
महाभागा द्रौपदी व्रतमुत्तमं । तस्मात्सर्वप्रयत्नेन कर्त्तव्यं सुजनैः सदा । सङ्कल्या कुरुते नारी व्रतानामुत्तमं व्रतं । सर्वान् कामानवाप्नोति विष्णुलोके
महीयते इदं व्रतं महापुण्यं व्रतानामुत्तमं व्रतं । वदतां शृण्वतां चैव विष्णुलोको भवेत् ध्रुवं ॥ इति श्रीभविष्योत्तरे दशाफलव्रतं ॥ अत्रमूलं चिन्त्य ।
अथ कृष्णादिमासेन भाद्रकृष्णाष्टम्यां जन्माष्टमी व्रतं । तच्चार्द्धरात्रव्यापिन्यां कार्य्यं । रोहिणी सहिता कृष्णा मासि भाद्रपदेऽष्टमी । अर्द्धरात्रे तु योगोऽ
यन्तारापत्युदये तथा नियतात्मा शुचिः सम्यक् पूजां तत्र प्रवर्त्तयेदिति विष्णुधर्मोत्तरे तस्य कालत्वोक्तेः दिनद्वये अर्द्धरात्रव्याप्तावव्याप्तौ वा परैव ।
प्रातः संकल्पकालसत्वाद्दिवारात्रियोगात् वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमीति ब्रह्मवैवर्त्ते सप्तमीयुक्तानिषेधाच्च । यदा पूर्व्वेद्युर्निशीथे केवलाष्टमी
उत्तरेद्युर्निशीथास्पर्शिन्यष्टमी रोहिणीयुक्ता तदा पूर्व्वैव ग्राह्या कर्मकाले सत्वात । रोहिणी योगस्तु केवलं फलातिशयार्थो नवमीबुधादि योगवत् ।
नतु निर्णयोपयोगी इतरथा । प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता । किं पुनर्बुधवारेण सोमेनापि
विशेषतः । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदेति पाद्मवचसा सरोहिणीमप्यष्टमीं विहाय बुधनवमीयुता कार्या यद्येतत् सोमः सोमवार इति
केचित् । तारापत्युदये तथेति विष्णुधर्मोत्तरैकमलकल्पनालाघवाच्चन्द्रोदय इति तातचरणाः । उदयेवाष्टमी किञ्चिन्नवमी सकला यदि भवेत्तु बुध
संयुक्ता प्राजापत्यर्क्षसंयुता । अपिवर्षशतेनापिलभ्यते यदिवानवेति । तत्रोदयशब्दश्चन्द्रोदय परः सूर्योदयपरत्वेतु यदापूर्व्वेद्युर्निशीथे केवलाष्टमी उत्तरे
द्युश्च निशीथास्पर्शिन्यष्टमी रोहिणी युक्ता सप्तमी बुधयुक्ता तदैवोत्तरास्यात् तदभावेयाद्वचनं वाचनिकमिति न्यायात् यदितु बुधाभावेपि रोहिणीयोगमा ६०
त्रादेवोत्तरोच्यते तदा रोहिणीयोगाभावेपि बुधमात्र सङ्गावादुत्तरास्यादन्यतरायाप्येतद्वचनद्दष्टत्तेरङ्गीकारात् ऋक्षयोगवद्वारयोगस्यापि प्राशस्त्य हेतु

त्वाच्च। अतोऽह्नि नरतीयं स्यात्। किञ्च यथा पूर्वेद्युर्निशीथेऽष्टमीमात्रसत्त्वे उत्तरेद्युश्च निशीथात्पूर्वं ऋक्षयोगे बुधसत्त्वे चैतद्वचनादुत्तरेद्युर्व्रतं एवं पूर्वेद्युर्निशीथे च ऋक्षाष्टमीसत्त्वे बुधाधिक्यादुत्तरेद्युर्व्रतापत्तिरिति यच्च विष्णुरहस्ये प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफलेत्यत्रापि मुहूर्त्तपदं निशीथाख्यमुहूर्त्तपरमिति पितामहचरणाः। यत्त्विदमत्यन्ताशुद्धं तथात्वे वाक्यस्यैवानर्थक्यप्रसङ्गात्। यदा हि शुद्धाप्यष्टम्यहोरात्रे वर्त्तमाना प्राप्ता तदा रोहिणी सहिता सुतरामिति वचनेन। किं मुहूर्त्तमप्यहोरात्रे यास्मिन्युक्ता हि लभ्यते। अष्टम्यां रोहिणीऋक्षचन्द्रां सुपुण्यामुपावसेदिति विष्णुरहस्यस्यस्याष्टम्यहोरात्रसम्बन्धियत्किञ्चिन्मुहूर्तप्रतीतिरिति कालतत्त्वविवेचने तद्विपरीतं ऋक्षयोगस्य तावकत्वेन प्राशस्त्यबोधकत्वस्यैवोचितत्वादिति। यत्पुनस्तत्रोक्तं कर्मकालव्याप्तिशास्त्रादेव प्रधानभूताया अष्टम्या एवार्द्धरात्रसत्त्वेन प्राप्तं ग्राह्यत्वं। दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला। रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुतामिति वचनेन रोहिणी योगाभावविषयं क्रियते। एवं तस्यार्थः। दिवावच्छेदेन रात्र्यवच्छेदेन वा कलामात्रापि चेद्रोहिण्यष्टम्यां नास्ति तदैव चन्द्रोदयसंयुतामर्द्धरात्रव्यापिनीमिति यावत्। दिनद्वयेऽपि तादृश्या अभावे वक्तरात्रिसंयुतामुत्तरां प्रकुर्वीतेति। तन्नेति तातचरणाः नेदं कर्मकालशास्त्रबाधकमन्यथाप्यर्थसम्भवात्तथाहि। दिनद्वये वैषम्येण निशीथस्पर्शे अहोरात्रावच्छेदेन रोहिणी योगाभावे च विशेषणाधिक्यं न इन्दुसंयुतामधिकनिशीथव्यापिनीमपि विहाय स्वल्पनिशीथयोगिनी रोहिणीयुतैव ग्राह्येति अत्र क्षिपन्ति केचित् वैषम्येण निशीथस्पर्शस्याशब्दार्थस्य न वाक्यार्थान्तर्गतत्वकल्पनमुचितं। नापि रात्रियुक्तां प्रकुर्वीतेति तृतीयपादवैयर्थ्यञ्च स्वीकर्त्तुमुचितं। रोहिणी योगानुरोधेनाधिकनिशीथव्यापिनीं विहायस्वल्पनिशीथगायाग्रहणे कर्मकशास्त्रस्य पक्षे बाधावश्यंभावेन वचनस्यास्याप्रतीयमानसर्वदैव बाधः स्वीकर्तुमुचित इति सर्वथैवनेदं वाक्यं कर्मकालशास्त्रबाधमन्तरेणान्यथासिद्धा। उदयेचाष्टमीत्यत्रोदयपदस्य चन्द्रोदयपरत्वे सकला नवमीत्यस्यानन्वयापत्तेः नहि निशीथोत्तर प्रवृत्तान्नवमीं केचिदपि सकलत्वेन व्यवहरेयुः। बुधवारस्य तु न रोहिणी तुल्यत्वं रोहिणीप्रापकदिवावेत्यादिवाक्यबुध

॥ व्र ॥ ज्ञापकानन्यथासिद्ध वचनाभावात् ॥ वह्निपुराण विष्णुरहस्य वचनयोर्मुहूर्तपदस्य तदितिकलापरत्वे वचनयोरानर्थक्यं मूहूर्तमपीत्यपि शब्दानन्वयश्च
६१ मुख्यकालस्य तत्र सम्बन्धेहि सत्युचितकालयोगाभावात् द्योतकोशब्दोऽसंगतः दिनद्वये निशीथव्याप्तावव्याप्तौ वा एतद्वचनद्वयस्य सावकाशत्वे मुहूर्तपदस्य
स्वोक्तनिशीथपरत्वत्यागप्रसंग एकदिनेच रोहिणीपरदिने च बुधस्तदा निर्णयाभावएवापद्येत तस्मात् षष्टिदण्डामपि केवलाष्टमीं विहाय घटिकादिमात्रा
पि रोहिणी सहिता परैवेत्याहुः तन्न। विशेष पदस्याधिक्यार्थकस्येन्दुशब्दार्थार्द्धरात्रपदार्थेऽन्वयेन वैषम्यस्यैव शब्दार्थत्वात्। तृतीयपादस्यानुवादक
त्वमेव यत्तु विशेषयतु विशेषपदस्य रात्रिपदेनान्वयं कृत्वा रोहिणी योगाभावेधिकरात्रिव्यापिनी ग्राह्येति सार्थक्यमुक्तं तद्दिनद्वये निशीथाव्याप्तौ पूर्वे
द्युरधिकरात्रिव्यापित्वेन पूर्वे द्युर्व्रतापत्तेर्माधवादि सर्वनिबन्धकारीणामनिष्टत्वादयुक्तं तेनानुवादकत्वमसमाधानं विना न निस्तारः। यत्वल्पनिशीथ
गाग्रहणे कर्मकालशास्त्रबाधोस्त्वेवेति तन्न। बाधोह्यनन्यगतिका गतिर्यावता बाधं विना शास्त्रमनन्यगतिकं भवति तावतैव बाधस्यांगीकर्तुमुचित
त्वात् नहि व्रीहिशास्त्रेण यवशास्त्रस्य सार्वत्रिकोबाधोभ्युपगम्यतेनवा तस्येति। यत्तु बुधपदस्य चन्द्रोदयपरत्वे सकलेत्यस्यानन्वय इति। तन्न।
भवन्मतेपि मुख्यस्यासम्भवेनाष्टमी प्रतियोगिकाधिक्यरूपस्यैव वक्ष्यमाणस्य ग्रहणौचित्यात्। तथाच उदयेचाष्टमी किञ्चिदिति वचनं तातचरणव्या
ख्यातं दिवावेत्यादिवत् दिनद्वये वैषम्येण निशीथस्पर्श एवबोध्यं उदये चन्द्रोदये निशीथाख्यमुहूर्त्तेति यावत्। किञ्चित् स्वल्पा तदुत्तरं नवमी
सकला निशीथादुत्तरकालव्याप्ता किञ्चित्पदसकलपदयोरर्थवत्वाय एवं च दिनद्वये वैषम्येण निशीथस्पर्शोलभ्यते तथाच स्वल्पनिशीथयुक्ताप्य
ष्टमी बुधरोहिणीयुक्ता ग्राह्या नत्वधिकनिशीथव्यापिनी तद्रहितेति उदयशब्दस्य सूर्योदयपरत्वे तु उदयव्यापिनी ग्राह्येत्येव बद्येत् न तु
किञ्चिन्नवमी सकलेति। नच नवमीदिन एवास्य निशीथस्पर्शो किञ्चित्पदसकलपदयोरर्थवत्वेन दिनद्वये वैषम्येणस्पर्शे एतद्वचनप्रवृत्तिः कथ ६२
मिति वाच्यं तथात्वे कर्मकालशास्त्रादेव पराप्राप्तेरेतद्वचनवैयर्थ्यापत्तेः तस्मादीदृश एवै तद्वचनस्य विषयो वाच्य इति। किंचैतद्वचनोपात्तसकल

त्वं दुर्वच तथाहि किं षष्टिघटिकाव्यापित्वं तत। उताष्टम्युत्तरमासूर्योदयमात्रव्यापित्वं उतपचान्यतमत्वं नाद्यः सूर्योदये किञ्चिदष्टमीसत्त्वे तादृशनवम्याश्चदहोरात्रेऽसम्भवात्। दिनान्तरमादाय षष्टिदण्डायाः सत्त्वेपि तत्र सकलव्यवहाराभावात्। उदयमारभ्य द्वितीयोदयव्यापितिथ्यावेव सकलत्वव्यवहारात् तस्मात्सकलत्वमष्टमीप्रतियोगिकाधिकत्वरूपं पारिभाषिकमेव वाच्यं तच्च सूर्योदये चन्द्रोदये वा किञ्चिदष्टमीसत्त्वे सम्भवत्येवेति। यत्तु बुधवारप्रापकवचनान्तरविरहान्नरोहिणीतुल्यतेत्युक्तं तत्र नहि सर्वत्र वचनान्तरप्राप्तस्यैव रोहिणीतुल्यतेति नियमः। भवद्भिरेव नवमीयोगस्यैतद्वचनमात्रोपात्तस्यापि निर्णायकत्वस्यासकृदुक्तत्वात्। यदुक्तं एकदिने रोहिणी परदिने च बुधस्तदानिर्णया भाव एवापद्येत तदपि न। अहोरात्रसम्बन्धस्य नवमीयोगस्य च निर्णायकत्वात्। अत्रैवं वक्तव्यं यदि दिवा वा मुहूर्तमप्यहोरात्रे प्राजापत्यर्क्षसंयुतेत्यादीनां निशीथाख्यकर्मकालबाधकत्वे यथा पूर्वेद्युरोहिणीरहितां षष्टिदण्डामप्यष्टमीं त्यक्त्वा दण्डादिमात्रावशिष्टायां रोहिणी युतायामुत्तरैव व्रतमित्युच्यते एवं दिनद्वये निशीथव्यापिनी पूर्वेद्युरेव निशीथात्पूर्वरोहिणीयुता तथा पूर्वतरैव सूर्योदयमारभ्य प्रवृत्तरोहिणीयुतां निशीथोत्तर प्रवृत्तां उत्तरेद्यूरोहिणीरहितां निशीथगामप्यष्टमीन्त्यक्त्वा कथं न पूर्वेद्युर्व्रतानुष्ठानमिति सुधियएवं विवेचयन्तु॥ यत्त्वचोक्तं॥ संकल्पात्मकव्रतस्य प्रधानत्वेन प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकमिति प्रातःकालस्य प्रधानकालत्वेन तद्व्यापिन्येव ग्राह्येति तदयुक्तं। रोहिणीसहितनिशीथगाया अपित्यागापत्तेः मुख्यकालःसविज्ञेय इत्यादेस्तदपवादकत्वे तु दिवावेत्यादिना अर्द्धरात्रव्यापिन्याबाध इव प्रातःकालस्य सामान्यशास्त्रार्थत्वेन बाधापत्तिर्दुर्वारैवेति एतेन मूहूर्तकलापदयोरर्द्धरात्रवर्तिकलापरत्वे वचनानर्थक्यपादनमपि शब्दानन्वयापत्तिश्चेत्यपास्तं। ननु निशीथोत्तरवृत्ताष्टमी दिने पूर्वरोहिणीयोगो न परेद्युरित्युदाहरणस्यासम्भवान्न पूर्वेद्युर्व्रतानुष्ठानाभावापत्तिरिति चेन्न। सप्तमीसंयुताष्टम्या भूत्वा ऋक्षं द्विजोत्तमाः प्राजापत्यं द्वितीयेह्नि मुहूर्त्तार्द्धं भवेद्यदेति वचनेन यदि मूहूर्त्तार्द्धं भवेदिति मूहूर्त्तार्द्धसम्भावनया कदाचित्तदभावस्यापि सम्भवेनोदाहरणासम्भवात्। पारणातिथिभान्ते कार्या

॥ व्र ॥ तदाह भृगुः । जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणं । निषेधोपि ब्रह्मवैवर्त्ते अष्टम्यामथ रोहिण्यां न कु
६२ र्यात्पारणं क्वचित् । हन्यात्पुराकृतं कर्म उपवासार्जितं फलं । तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणं । तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणमि
तिमुख्याः । पक्ष एकतरांतस्त्वनुकल्पः । यदा तु तिथिनक्षत्रयोरन्यतरस्यैव दिनोंतस्तदा रात्रौ पारणानिषेधादन्यतरांते पारणाभ्यनुज्ञानाद्दिनाचैवान्यत
रांते कार्यं । अतएव वह्निपुराणे ॥ भान्ते कुर्यात्तिथेर्वापि शस्तं भारतपारणमिति । अथ जन्माष्टमी व्रत प्रयोगः । व्रतपूर्व्वदिने दन्तधावनं कृत्वोपवा
सदिने । प्रातः सूर्यः सोमोयमः कालः संधिभूतान्यहः । क्षपाः पवनदिक्पतिभूमिराकाशखचरानराः । ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिरित्युक्त्वा
सफलपुष्पाक्षतं जलपूर्णं ताम्रपात्रमादाय मासाद्युल्लिख्याभुकफलकामो वा पापक्षयकामो वा कृष्णप्रीतये कृष्णजन्माष्टमी व्रतं करिष्ये । वासुदेवं समुद्दिश्य
सर्व्वपाप प्रशान्तये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहं । अद्य कृष्णाष्टमीं देवीं नमश्चन्द्रसहितां रोहिणीं । अर्चयित्वोपवासेन भोक्ष्येहमपरेहनि ।
एनसो मोक्षकामोस्मि यद्गोविन्दन्नियोनिजं । तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे । आजन्ममरणं यावद्यन्मया दुष्कृतं कृतं । तत्प्रणाशय गोविन्द
प्रसीद पुरुषोत्तमेत्युक्त्वा पात्रस्थं जलं निक्षिपेत् । ततः कदलीस्तम्भवासोभिराम्रपल्लवसंयुतं । जलपूर्णकलशै र्दीपैः पुष्पमालादिभिर्युतमगरुधूपितं अग्नि
खड्गकृष्णच्छागरक्षामणिद्वारं न्यस्तमुसलादियुतं मङ्गलोपेतं षष्ठ्यादेव्याधिष्ठितं देवक्याः सूतिकागृहं विधाय तस्य समन्ताद्भित्तिषु सकुसुमांजलीन् देवगन्ध
र्वादीन् वद्धचर्मधर वसुदेव देवकी नन्द यशोदा गर्ग गोपी गोपान् कंसनियुक्तान् गोधेनुकुञ्जरान्यमुनां तन्मध्ये कालीयं अन्यच्च तत्कालीनं कुलाचरितं
यथासम्भवंल्लिखित्वा सूतिकागृहमध्ये पुरटपठाहतंमञ्चकं स्थापयित्वा मध्याह्ने नद्यजले तिलैः स्नात्वाऽर्द्धरात्रे सपरिवारः कृष्णपूजां करिष्य इति सङ्कल्प्य
काञ्चनी राजती ताम्री पैत्तली मृण्मयी तथा वार्क्षी मणिमयी चैव वर्णकैर्लिखिता थवेत्युक्तान्यतमेन प्रतिमां विधाय अग्न्युत्तारणं कृत्वा प्रतिमाकपोलौ स्पृष्ट्वा ६२
तद्देवतानाममूलमन्त्रैः प्रणवादि चतुर्थ्यन्तं नाम वा अस्मै देवत्व संख्याय स्वाहेति च मन्त्रान्तं पठन् प्राणप्रतिष्ठां कुर्यात् । असाइत्यस्य स्थाने तत्तद्देवता

नाम ग्राह्यं। गायद्भिः किन्नराद्यैः सततपरिगता वेणु वीणा निनादैः शृङ्गारादर्शकुम्भप्रचुरतरकरैः किन्नरैः सेव्यमाना। पर्यङ्के स्वाधिरूढामुदिततरमुखी पुत्रि
णी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा इति देवकीं स्मृत्वा बालकंसुप्तसंसुप्तं पर्यङ्के स्तनपायिनं। श्रीवत्सवक्षसं शान्तं नीलोत्पलदल
च्छविमिति श्रीकृष्णं ध्यात्वा ओं नमो देव्यै श्रियै इति श्रियं। देवकी सहितं वसुदेवं यशोदा सहितं नन्दं। श्रीकृष्णसहितं बलदेवं चण्डिकां च नमोऽन्ते
र्नाममन्त्रैः पूजयेत्। तत्रमन्त्राः योगेश्वराय देवाय योगानां पतये विभो। योगोद्भवाय नित्याय गोविन्दाय नमो नमः॥ स्नानं॥ यज्ञेश्वराय देवाय
तथा यज्ञोद्भवाय च। योगानां पतये नाथ गोविन्दाय नमोनमः॥ धूपं॥ विश्वेश्वराय देवाय तथा विश्वोद्भवाय च। विश्वस्य पतये तुभ्यं गोविन्दाय
नमोनमः॥ नैवेद्यं॥ गारुडे तु। यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञाङ्गाय गोविन्दाय नमोनम इत्यादौ सर्वेषां यज्ञपदानां स्थाने योगपदान्युक्त्वायमेव
मन्त्रः स्नाने विश्वेश्वरायेत्युक्त्वा नैवेद्यं धर्माय धर्मेश्वरायेत्यादिः स्वाहान्तस्तिलहोमे॥ विश्वाय विश्वेश्वरायेत्यादि शयने। सोमाय सोमेश्वरायेत्यादिश्चन्द्र
पूजायामिति मन्त्रा उक्ताः ततो गच्छते नाग्नौ वसोर्द्धारां क्वचिद्गुडघृतेनेति। ततो जातकर्मनालच्छेदषष्ठीपूजानामकर्माणि। ततश्चन्द्रोदये रोहिणी
युतं चन्द्रं स्थण्डिले प्रतिमायां वा मन्त्रैः संपूज्य शङ्खे तोयं समादाय सपुष्पकुशचन्दनं। जानुभ्यां धरणीं गत्वा चन्द्रायार्घं निवेदयेत्। क्षीरोदार्णवसम्भूत
अत्रिगोत्र समुद्भव। गृहाणार्घं शशाङ्केमं रोहिण्या सहितो ममेति। ततो ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः। नमस्ते रोहिणीकान्त सुधा
वास नमोऽस्तु ते। नमो मण्डलदीपाय शिरोरत्नाय धूर्जटेः। कलाभिर्वर्द्धमानाय नमश्चन्द्राय खेचर इति प्रणमेत्। ततः अनघं वामनं शौरिं वैकुण्ठं
पुरुषोत्तमं। वासुदेवं हृषीकेशं माधवं मधुसूदनं। वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनं। दामोदरं पद्मनाभं केशवं गरुडध्वजं। गोविन्दमच्युतं कृष्णं
अनन्तमपराजितं। अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारिणं। अनादि निधनं विष्णुं लोकेशं च त्रिविक्रमं। नारायणं चतुर्बाहुं शङ्खचक्रगदाधरं। पी
ताम्बरधरं नित्यं वनमालाविभूषितं। श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिं। शरणं तु प्रपद्येऽहं सर्वकामार्थसिद्धये। प्रणमामि महादेवं वामदेवं

व्र ॥ जगत्पतिमिति मन्त्रैः प्रणम्य त्राहि मां सर्वग श्रीश हरे संसार सागरात्। त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो। सर्वलोकेश्वर त्राहि पतितं म
६३ भवार्णवे। देवकीनन्दन श्रीश हरे संसारसागरात्। त्राहि मां सर्वरोगघ्न रोगशोकार्णवाद्धरे। दुर्गतेस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत्। सोहं दे
वातिदुष्टस्त्राहि मां शोकसागरात्। पुष्कराक्ष निमग्नोहं मायाविज्ञानमत्सरात्। त्राहि मां देव देवेश त्वत्तो नान्योस्ति रक्षिता। यद्वाल्ये यच्च कौ
मारे यौवने यच्च वार्द्धके। तत्पुण्यं वृद्धिमाप्नोति पापं हर हलायुधेति मन्त्रैः प्रार्थयेत्। ततः स्तोत्रपठनपुराणश्रवणादिना जागरणं कृत्वा द्वितीयेऽह्नि
प्रातःकालीनं नित्यं कृत्वा पूर्ववच्च देवं पूजयित्वा ब्राह्मणान् भोजयित्वा तेभ्यः सुवर्णधेनुवस्त्रादि कृष्णो मे प्रीयतामिति दत्वा। यदेवं देवकी देवं वसुदे
वादजीजनत्। भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः। सुजन्मवासुदेवाय गोब्राह्मणहिताय च। शान्तिरस्तु शिवं चास्त्वित्युक्त्वा प्रतिमामुद्वा
स्यतां ब्राह्मणाय दत्वा पारणं कृत्वा व्रतं समापयेत्। सर्व्वाय सर्व्वपतये सर्व्वसम्भवाय गोविन्दाय नमोनम इति पारणायां। भूताय भूतपतय इत्यादि
समापनञ्च मन्त्रैः॥ इति जन्माष्टमी व्रत पद्धतिः। अथ जन्माष्टमी व्रतं। युधिष्ठिर उवाच॥ जन्माष्टमी व्रतं ब्रूहि विस्तरेण ममाच्युत। कस्मिन् काले
समुत्पन्नं किं पुण्यं कोविधिः स्मृतः। श्रीकृष्ण उवाच॥ मल्लयुद्धे पुरावृत्ते शमिते कुक्कुरांधके। स्वजनैर्बन्धुभिः स्त्रीभिः समं स्निग्धैः समावृते। हते कंसा
सुरे दुष्टे मथुरायां युधिष्ठिर। देवकी मां परिष्वज्य कृत्वोत्सङ्गे रुरोद ह। वसुदेवोपि तत्रैव वात्सल्यात्प्ररुरोद ह। समालिंग्याश्रुवदनः पुत्रपुत्रेत्युवाच
ह। स गद्गदस्वरो दीनो बाष्पपर्याकुलेक्षणः। बलभद्रं च मांचैव परिष्वज्य मुदा पुनः। अद्य मे सफलं जन्म जीवितञ्च सुजीवितं। उभाभ्यामद्यपुत्रा
भ्यां समुद्भूतं समागतः। एवं हर्षेण दांपत्यं हृष्टपुष्टं तदाह्यभूत्। प्रणिपत्य जनाः सर्वे बभूवुस्ते प्रहर्षिताः। एवं महोत्सवं दृष्ट्वा समाजे मधुसूदन।
प्रसादः क्रियतामस्य लोकस्यार्तस्य दुःखतः। यस्मिन् दिने प्रसूतेयं देवकी त्वां जनार्द्दन। तद्दिनं देहि वैकुण्ठ कुर्मस्तत्र महोत्सवं। एवंस्तुते जनौ ६३
घेन वसुदेवो मयेक्षितः। विलोक्य बलभद्रञ्च मां च हृष्टतनूरुहः। उवाच स ममादेशाल्लोकान् जन्माष्टमी व्रतं। मथुरायां ततः पश्चात्तथावान्यत्मका

षितं ॥ कुर्वन्तु ब्राह्मणाः सर्वे व्रतं जन्माष्टमी दिने । क्षत्रिया वैश्यजातीयाः शूद्रा येन्येपि धर्मिणः ॥ युधिष्ठिर उवाच ॥ कीदृशं तद्व्रतं देव देवैः सर्वैरनुष्ठितं । जन्माष्टमीति संज्ञं च पवित्रं पापनाशनं । येन त्वं तुष्टिमायासि कार्त्स्न्येन प्रभुरव्ययः । एतन्मे तत्त्वतो ब्रूहि सविधानं सविस्तरं । श्रीकृष्ण उवाच ॥ मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षके । शशांके वृषराशिस्थे ऋक्षे रोहिणि संज्ञिते । योगेस्मिन्वसुदेवाच्च देवकी मामजीजनत् । भगवत्या तत्रचैवं क्रियते सुमहोत्सवः । योगेस्मिन् कथितेऽष्टम्यां सिंहराशिगते रवौ । सप्तम्यां लघुभुक्कुर्याद्दन्तधावनपूर्वकं । उपवासस्य नियमं रात्रौ स्वास्थ्याज्जितेन्द्रियः । केवलेनोपवासेन तस्मिन् जन्मदिने मम । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले सुदेशे शोभनं कुर्याद्देवक्याः सूतिकागृहं सित पीतैस्तथा रक्तैः कर्पूरैर्विचित्रैरपि वासोभिः शोभितं कृत्वा समंतात्कलशैर्नवैः पुष्पैः फलैरनेकैश्च दीपालीभिरितस्ततः । पुष्पमालाविचित्रं च चन्दनागरुभूषितं । अतिरम्यमनौपम्यं रत्नमणि विभूषितं । हरिवंशस्य चरितं गोकुलंच विलेखयेत् । ततो वादित्रनिनदैर्वीणावेणुरवाकुलं । नृत्यगीत क्रमोपेतं मङ्गलैश्च समन्ततः । वेष्टकारी लोहखड्गं कृत्वा नादश्च यत्नतः । द्वारे विन्यस्य मुसलं रचितं रक्षपालकैः । षष्ठ्यादेव्याधिष्ठितंच तद्गृहं चोत्सवैस्तथा । एवं विभवसारेण कृत्वा तु सूतिकागृहं । तन्मध्ये प्रतिमा स्थाप्य सा चाप्यष्टविधा स्मृता । काञ्चनी राजती ताम्री पैत्तली मृन्मयी तथा । वार्क्षी मणिमयी चैव वर्णकैर्लिखिता तथा । सर्वलक्षणसंपूर्णां पर्यंके चाष्टशल्यके । प्रतप्तकांचनाभासां महार्हां स्तनपयस्विनीं । प्रसुतांच प्रसुप्तांच स्थापयेन्मंचकोपरि । मां तत्र बालकं सुप्तं पर्यंके स्तनपायिनं । श्रीवत्सवक्षसं शांतं नीलोत्पलदलच्छविं । यशोदां तत्र चैकस्मिन् प्रदेशे सूतिकागृहे । तद्वच्च कल्पयेत्पार्थ प्रसूतां वरकन्यकां । तथैव मम पार्श्वस्थान् कृताञ्जलिपुटान्नृप । देवान् ग्रहांस्तथा नागान्यक्षविद्याधरामराः । प्रणताः पुष्पमाल्याग्रचारुहस्ताः सुरासुराः । संचरंत इवाकाशे प्रकारैरदितोदितैः । वसुदेवोपि तत्रैव खड्गचर्मधरः स्थितः । कश्यपो वसुदेवोयमदितिश्चैव देवकी । शेषो वै बलदेवोयं यशोदादितिरप्यभूत् । नन्दप्र

॥ व ॥ आपतिहंसो गर्गस्त्वापि चतुर्मुखः । गोप्यस्त्वाप्सरसः सर्वाः गोपास्त्वापि दिवौकसः । एषोवतारो राजेन्द्र कंसोयं कालनेमिजः । तत्र कंसनियुक्तार
॥ ६४ ॥ मोहिता योगनिद्रया । गोधेनुकं खरास्त्वैव दानवाः शस्त्रपाणयः । नृत्यंतस्त्वाप्सरोभिस्ते गन्धर्वा गीततत्पराः । लेखनीयस्त्व तत्रैव कालियो यमुनाह्रदे
इत्येवमादियत्किंचित् क्रियते चरितं मम । लेखयित्वा प्रयत्नेन पूजयेद्भक्तितत्परः । रम्याभैर्बीजपूरैस्त्वलकुचैस्त्रपुसैस्तथा । कालदेशोद्भवैः पुष्पैः फलैस्त्वापि
युधिष्ठिर । पाद्यार्घैः पूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः । मन्त्रेणानेन कौंतेय देवकीं पूजयेन्नरः । गायद्भिःकिन्नराद्यैः सततपरिगता वेणुवीणानिनादैः
र्भृङ्गारादर्शकुम्भप्रमरकृतकरैः किन्नरैः सेव्यमाना पर्य्यंके स्वास्थिता या मुदिततरमुखी पुत्रिणी सम्यगास्ते । सा देवी देवमाता जनयतु सुमता देवकी कांत
रूपा । दानमभ्याजयंती श्रीदेव्यास्त्व रणांतिके । सर्वोपचारैः संपूज्य दिव्यगन्धानुलेपनैः । पङ्कजैः पूजयेद्देवीं नमो देव्यैश्रिये इति । देववत्से नम
स्तेस्तु कृष्णोत्पादनतत्परा । पापक्षयकरी देवी तुष्टिं यातु ममार्चिता । प्रणवादिनमोतत्र पृथक् नामानुकीर्त्तनं कुर्यात्पूजां विधिज्ञस्त्व सर्वपापापनुत्तये
देवक्यै वसुदेवाय इन्द्रादिभ्यो पित्रैवहि । वलदेवाय नन्दाय यशोदायै पृथक् पृथक् । क्षीरादिस्नपनं कृत्वा चन्दनानुविलेपयेत् । विध्यंतरमपीच्छंति केचि
दत्रैवसूरयः चन्द्रोदये शशांकाय अर्घं दद्याद्धरिं स्मरन् । अनघं वामन शौरिं वैकुण्ठं पुरुषोत्तमं । वासुदेवं हृषीकेशं माधवं मधुसूदनं । वाराहं पुण्डरीकाक्षं
नृसिंहं ब्रह्मणः प्रियं । गोपीशं देवकीपुत्रं सर्गस्य स्थितिकारणं । अनादिनिधन विष्णु त्रैलोक्येशं त्रिविक्रमं । नारायण चतुर्वाङ्कं शङ्खचक्रगदाधरं । पीतां
वरधरं नित्यं वनमालाविभूषितं । श्रीवत्सांकं जगत्सेतुं श्रीपतिं श्रीधरं हरिं । स्मरन्नर्घं दद्यादिति पूर्वेणान्वयः । योगेश्वराय देवाय योगिनां पतये नमः ।
विश्वेश्वराय विश्वाय तथा विश्वंभरायच । विश्वेश्वराय देवाय तथा जलशयायच । यज्ञानां पतये नाथ गोविन्दाय नमोनमः । पूजामन्त्रः । जगन्नाथ
नमस्तुभ्यं संसारभयनाशन । जगदीशाय देवाय भूताना पतये नमः । इति नैवेद्यं । धर्मेश्वराय धर्माय संभवाय जगत्पते । धर्मज्ञाय च यज्ञाय गोविन्दाय ६४
नमोनमः । शयनं । मन्त्रेणानेन नैवेद्यं दद्याच्चन्द्रमसे नरः । तथैवार्घंच मन्त्रेण अनेनैव तु दापयेत् । क्षीरोदार्णवसम्भूत अत्रिगोत्रसमुद्भव । गृहाणार्घं

शशांकेदं रोहिण्या सहितो मम। ज्योत्स्नापते नमस्तुभ्यं ज्योतिषां पतये नमः। नमस्ते रोहिणी कांत अर्घंनः प्रतिगृह्यतां। स्थापयेद्देवदेवेशं शशांकं रोहिणीयुतं। देवक्या वसुदेवच नंदं चैव यशोदया। वलदेवं मया सार्द्धं भद्रया परया नृप। संपूज्य विधिवद्देवी किंनप्रोत्यतिदुर्लभं। एका दशीनां विंशत्यः कोटयोयाः प्रकीर्त्तिताः। ताभिः कृष्णाष्टमी तुल्या ततोनंतचतुर्द्दशी। अर्द्धरात्रे वसोर्द्धारा पातयेद्घृतसर्पिषा। ततो वर्द्धापयेन्नाम षष्टीनामादिकं मम। कर्त्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने। यथा मम तथा कार्य्यं भगवत्या महोत्सवं। ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणां। हिरण्यं मेदिनीं गावो वासांसि कुसुमानिच। यद्यदिष्टतमं तत्तत्कृष्णोमे प्रीयतामिति। यदेवं देवकी देवं वसुदेवादजीजनत्। भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः। नमस्ते वासुदेवाय गोब्राह्मणहितायच। शांतिरस्तु शिवंचास्तु इत्युक्त्वा मां विसर्जयेत्। ततो बन्धुजनौघंच दीनानां भोजनं बहु। भोजयित्वा सुशीलः सन् स्वयं भुञ्जीतवाग्यतः। एवं यः कुरुते देव्या देवक्याः सुमहोत्सवं। प्रति वर्षं विधानेन मद्भक्तो धर्म नन्दन। नरो वा यदि वा नारी यथोक्तं लभते फलं। पुत्रं सन्तानमारोग्यं सौभाग्यमतुलं लभेत्। इह धर्मरतिर्भूत्वा मृतौ वैकुण्ठ माप्नुयात्। तत्रदेव विधानेन वर्षलक्षं युधिष्ठिर। भोगान्नाना विधान् भुक्त्वा पुण्यशेषादि हागतः। सर्वकामसमृद्धे तु सर्वाशुभविवर्ज्जिते। कुले नृपतिशीलानां जायते हृच्छयोपमः। यस्मिन् सदैव देशेतु लिखितं तु पटार्पितं। मात्हजन्मदिनं यत्र सर्वालङ्कार भूषितं। पूजयेत्पांडवश्रेष्ट व्रतैरुत्सवसंयुतैः। परचक्रभयं तत्र न कदाचिद्भवेत् पुनः। पर्ज्जन्यः कामवर्षीस्यादीतिभ्यो नभयं भवेत। गृहेवा पूज्यते यस्मिन् देवक्याश्चरितं मम। तत्र सर्वसमृद्धं स्यान्नोपसर्गादिकं भवेत्। पशुतोनकुलव्यालाद्दुरात् पापरोगाच्च पातकात्। राजतश्चौरतो वापि न कदाचिद्भयं भवेत्। संसर्गेणापि यो भक्त्या व्रतं पश्यदनाकुलं। सोपि पापविनिर्मुक्तः प्रयाति हरिमन्दिरं। जन्माष्टमी जनमतो नयनाभिरामा पापापहा सुगतिनं विदधाति गोपं। यो देवकीसुतसुताङ्घ्रि भजेद्धिभक्त्या पुत्रानवाप्य समुपैतिपदं हि विष्णोः। इति हेमाद्रौ भविष्योत्तरे जन्माष्टमी व्रतं॥ अथ शिष्टाचार प्राप्ता कथा॥ व्यास उवाच॥ निवृत्ते भारते युद्धे कृत कार्य्ये युधि

॥ ब्र ॥ ष्ठिरः । उवाच वाक्यं धर्मात्मा कृष्णं देवकीनन्दनं । युधिष्ठिर उवाच । त्वत्प्रसादेन गोविन्द निहताः शत्रवो रणे । कर्णश्च निहतः सोपि त्वत्प्र
॥ ६५ ॥ सादात्किरीटिना । जेता को युधि भीष्मस्य यस्य मृत्युर्नविद्यते । अजेयोपि जितः सोपि त्वत्प्रसादाज्जनार्दन । प्राप्तं निष्कण्टकं राज्यं कृत्वा कर्मसुदुष्कर
माचारो दण्डनीतिश्च राज्यधर्माः क्रियान्विताः । अधुना श्रोतुमिच्छामि व्रतं जन्माष्टमीव्रतं । जन्माष्टमीव्रतं ब्रूहि विस्तरेण ममाच्युत । कुतःकाले कु
त्पन्नं किंपुण्यं कोविधिः स्मृतः । श्रीकृष्ण उवाच ॥ शृणु राजन् प्रवक्ष्यामि व्रतानामुत्तमं व्रतं । यतः प्रभृति विख्यातं फलेन विधिनान्वितं । राजवंशसमु
त्पन्नैर्दैत्यैःकैश्चित् सुपीडिता । धरा भारसमाक्रान्ता ब्राह्मणं शरणं ययौ । ज्ञात्वा तदा प्रभुर्ब्रह्मा भूमेर्भारं समाहितं । श्वेतद्वीपं समागत्य सर्वदेवैः सम
न्वितः । समाहितमतिर्ब्रह्मा मां तुष्टाव विशांपते । स्तुत्या तयाहं सम्प्रीतस्तेषां दृग्गोचरोभवं । दृष्ट्वा मां प्रणिपत्याशु भक्तिभावसमन्विताः । ब्रह्माणमग्रतः
कृत्वा तुष्टाः सर्वे दिवौकसः । विजिज्ञापुर्महाभूमेस्तस्या भारापनुत्तये । उपधार्य तदालेखावचनं चार्वचिन्तयं । केनोपायेन हन्तव्या दानवाः क्षत्रियो
द्भवाः । स्वधर्मनिरताः सर्वे महाबलपराक्रमाः । ततोनिश्चित्य मनसा ब्रह्माणं चाहमब्रुवं । वसुदेवो देवकी च प्रजाकामौ पुरा नृप । भक्त्या मां मज
मानौ तौ तप्तवन्तौ महत्तपः । तयोः प्रसन्नः सुप्रीतो याचतं वरमुत्तमं । अब्रुवन्तावपि ततो वरयामासतुः किल । यदि देव प्रसन्नोसि त्वादृशो नौ
भवेत्सुतः । तथेति च मया ताभ्यामुक्तं प्रीतेन सेवया । तत्कामपूरणार्थाय सम्भविष्याम्यहं तयोः । दिवौकसोपि स्वांशेन सम्भवन्तु सुरस्त्रियः । योगमा
या च नन्दस्य यशोदायां भविष्यति । देवक्या जठरे गर्भमनन्तं धाम मामकं । तन्निःकास्य ततस्तूर्णं रोहिण्याजठरे कुरु । इति सन्दिश्य तान् सर्वानन्तर्हितो भव । ततो देवैःसमं ब्रह्मा तां दिशं प्रणिपत्य च । आश्वास्य च महीं देवीं वरधाम्नि जगाम ह । ततोहं देवकीगर्भमविशं न तेजसा । हतेषु
षट्सु बालेषु देवक्या औग्रसेनिना । कारागृहस्थितायाश्च वसुदेवेन वै सह । गतेर्द्धरात्रसमये सुप्ते सर्वजने निशि । भाद्रमास्यसिते पक्षेऽष्टम्यां ब्रह्म ६५
र्क्षसंयुजि । सर्वग्रहशुभे काले प्रसन्नहृदयाशये । आविरासन्निजेनैव स्वरूपेणावनीपते । वसुदेवोपि मां दृष्ट्वा हर्षशोकपरिप्लुतः । भीतः कंसादनितरा

तुष्टाव च कृताञ्जलिः वसुदेव उवाच। अत्यद्भुतमिदं रूपं दुर्दर्शं योगिनामपि। त्वत्तेजसा रिष्टगृहमभवत्संप्रकाशितं। उद्विजे भगवन् कंसाद्यो मे बालान् घातयत्। उपसंहर तस्मात्त्वमेतद्रूपमलौकिकं। शंखचक्रगदापद्मलसत्कौस्तुभमालिनं। किरीटहारमुकुटकेयूरवलयाङ्कितं। तडिद्वसनसम्वीतं काञ्चनमेखलं। स्फुरद्राजीवताम्राक्षं स्निग्धांजनचयप्रभं। महामरकतस्वच्छं कोटिसूर्यसमप्रभं॥ श्रीकृष्ण उवाच॥ एवं संप्रार्थितो राजन्वसुदेवेन वै तदा। तेनैव निजरूपेण भूत्वाहं प्राकृतः शिशुः। नय मां गोकुलमिति वसुदेवमचोदयं। समादायागमत्सोपि नन्दगोकुलमंजसा। द्वाराण्युपाकृतान्यासन् स्वप्रभावात्स्वयं विभो। ददौ मार्गं च कालिन्दी जलकल्लोलमालिनी। ततो यशोदाशयने न्यस्य चानकदुन्दुभिः। तत्पर्यंकस्थितां गृह्य दारिकामागमत्पुनः द्वाराणिपिहितान्यासन् पूर्ववन्निगडं ततः। विन्यस्य पादयोरास्ते शयने न्यस्य दारिकां। ततो रुरोद महता स्वरेणापूर्य सा दिशः। तस्या रुदित शब्देन उत्थिता यामिका गृहात्। कंसमागत्य चाचख्युः प्रसूता देवकीति च। सोपि तल्पात्समुत्थाय भयेनातीव विह्वलः। जगाम सूतिकागेहं देवक्याः प्रस्खलन् पथि। दारिकां शयनाद्गृह्य रुदन्त्याश्चैव सः रुषुः। अपोथयच्छिलापृष्ठे सापि तस्य करात्च्युता। उवाच कंसमाभाष्य देवीत्याकाशगा सती। किं मया हतया मन्द जातः क्वापि ते रिपुः। इत्युक्तः सोप्यभूत्कंसः परमोद्विग्नमानसः। आज्ञापयामास ततो बालानां कदनाय वै। दानवा अपि बालानां कदनं चक्रु रुद्यताः। वनेषूपवनेष्वेव पुरग्रामव्रजेष्वपि। अहं च गोकुलेस्थित्वा पूतनां बालघातिनीं। स्तन दातुं प्रवृत्तां च प्राणैः सममशोषयत्। तृणावर्त्तं वकारिष्टं धेनुकं केशिनं तथा। अन्यानपि खलान् हत्वा स्वप्रभावमदर्शयन्। ततश्च मथुरां गत्वा हत्वा कंसादि दानवान्। ज्ञातीनां परमं हर्षं कृतवानस्मि मादरं। देवकी वसुदेवश्च परिष्वज्य मुदा मम। आनन्दजैर्जलैर्मूर्द्धि सेचयामासतुर्नृप। तस्मिन् रंगवरे मल्लान् हत्वा चाणूरमुख्यकान्। गजं कुवलयापीडं कंसभ्रातॄननेकशः। एवं हते सुरे कंसे सर्वलोकैककण्टके। अन्येषु दुष्टदैत्येषु सर्वलोकमहोत्सवः। लोकाः समुत्सुकाः सर्वे मामभेत्यूचुरा हताः। कृष्णकृष्ण महायोगिन् भक्तानामभयप्रद। प्रलयात्पाहि नो देव शरणागतवत्सल। अनाथनाथ सर्वज्ञ सर्वभूतहिते रत।

॥ अ ॥ किञ्चिद्विज्ञामहे देव तन्नोवक्तुं त्वमर्हसि। तवजन्मदिनं लोकेनज्ञातं केनचित् क्वचित्। ज्ञात्वा च तद्दिनं सर्वे कुर्मोवर्द्धापनोत्सवं। तेषां दृष्टा तु तां भक्तिः
॥ ६६ ॥ श्रद्धामपि सुसौहृदं। मया जन्मदिनं तेभ्यः ख्यातं निर्मलचेतसां। श्रुत्वा तेपि तथा चक्रुर्विधिना येन तत् शृणु। पार्थ तद्दिवसे प्राप्ते दन्तधावन
पूर्व्वकं। स्नात्वा पुण्यजलेशुद्धे वाससी परिधाय च। निर्व्वर्त्यावश्यकं कार्य्यं व्रतसङ्कल्पमारभेत्। अद्यस्थित्वा निराहारःश्वोभूते तु परेहनि। भोक्ष्या
मि पुण्डरीकाक्ष शरणं मे भवाव्यय। गृहीत्वा नियमं चैव सन्ध्याद्यार्चनसाधनं। मण्डपं शोभनं कृत्वा फलपुष्पादि संयुतं। तस्मिन् मां पूजयेद्भक्त्या गन्ध
पुष्पादिभिः पृथक्। उपचारैः षोडशभि द्वादशाचरविद्यया। सद्यःप्रसूतां जननीं वसुदेवं च मारिषं। वलदेवसमायुक्तां रोहिणीं गुणमोहिनीं
नन्दं यशोदां गोपीं च गोपान् गाश्चैवसर्वशः। गोकुलं यमुनांचैव योगमायां च दारिकां। यशोदा शयने सुप्तां सद्योजातां वरप्रभां। एवं संपूजयेत्सम्यक्
नाममन्त्रैः पृथक् पृथक्। सुवर्णरूप्यताम्रारक्तरत्नादिभिरलं कृताः। प्रतिमाःकतिधा प्रोक्तास्तासुचान्यतरां यजेत्। रात्रौ जागरणं कुर्याद्गीतनृत्या
दिभिः सह। पुराणैस्तोत्र पाठैश्च जातनामादिपूत्सवैः। श्वोभूते पारणं कुर्यात् द्विजान् संभोजयेत्ततः। एवं कृते महाराज व्रतानामुत्तमोत्तमं।
सर्वान् कामानवाप्नोति विष्णुलोके महीयते। मोहान्नकुरुते यस्तु याति संसार गह्वरे। तस्मात् कुर्व्वन् प्रयत्नेन निष्पापो जायते नरः। अत्रैवोदाहरण
मितिहास पुरातनं। अङ्गदेशोद्भवोराजा मित्रजिन्नामतः क्रमात्। तस्य पुत्रोमहासेनः सत्यजित्सत्यथेस्थितः। पालयामास धर्मज्ञो विधिवद्रञ्जयन् प्रजाः।
तस्यैवं वर्त्तमानस्य कदाचिद्दैव योगतः। पाखण्डैः सहसंवासो बभूव बहुवासरं। तत्संसर्गात्स नृपतिरधर्मनिरतो भवेत्। वेदशास्त्र पुराणानि विनिन्द्य
वहुशोनृप। ब्राह्मणेषु तथा धर्मे विद्वेषं परमं गतः। एवं वहुतिथे कालेगते भरतसत्तम। कालेन निधनं प्राप्तो यमदूतवशंगतः। वद्धा पाशैर्नीय
मानो यमदूतैर्यमान्तिकं। पीडितस्ताड्यमानोसौ दुष्टसंगवशन्ततः। नरके पतितः पापी यातनां वहुवत्सरं। भुक्त्वा पापस्य शेषेण पैशाचीं योनिमाश्रितः। ६६
तृष्णाक्षुधासमाक्रान्तो भ्रमन् समरुधन्वसु। कस्यचित्त्वथवैश्यस्य देहमाविश्य संस्थितः। सहतेनैव संयातो मथुरां पुण्यदां पुरीं। सामीपे रक्षकैः सोऽथ

तस्माद्देशाद्बहिष्कृतः । बभ्राम विपिने सोऽपि ऋषीणामाश्रमेषु च । कदाचिद्दैवयोगेन मम जन्माष्टमी दिने । क्रियमाणां यथापूजां व्रतिभिर्मुनिभिर्द्विजैः
रात्रौ जागरणेनैव नाम सङ्कीर्त्तनादिभिः । ददर्श सर्वं विधिवच्छुश्राव च हरेः कथाः । निष्पापदर्शनादेव शुद्धं निर्मलमानसः । प्रेतदेहं समुत्सृज्य वि
ष्णुलोकं विमानगः । मम दूतैः समानीतो दिव्यभोगसमन्वितः । ममसान्निध्यमापन्नो व्रतस्यास्य प्रभावतः । नित्यमेव व्रतञ्चैतत्पुराणे सार्वकालिकं ।
गीयते विधिवत्सम्यक् मुनिभिस्तत्वदर्शिभिः । सर्वकामिक मेवैतत् कृत्वा कामानवाप्नुयात् । एतत्ते सर्वमाख्यातं व्रतानामुत्तमं व्रतं । मम सान्निध्यकृद्रा
जन् किं भूयः श्रोतुमिच्छसि ॥ इति श्रीभविष्योत्तर पुराणे जन्माष्टमीव्रतकथा समाप्ता । देशकालौ संकीर्त्य मम अखिलपापक्षयपूर्वकधर्मकाममोक्ष
चतुर्विधपुरुषार्थसिद्धिद्वारा अमुक कामनया वा आचरितजन्माष्टमीव्रतोद्यापन करिष्ये इति संकल्प्य ॥ युधिष्ठिर उवाच ॥ उद्यापन विधिं ब्रूहि देव
देव दयानिधे । येन संपूर्णतां याति व्रतमेतदनुत्तमं । श्रीकृष्णउवाच ॥ पूर्णांतिथिमनुप्राप्य वित्तचित्तादिसंयुतः । पूर्वेद्युरेकभक्ताशी हृषीकेशं संस्मरन्
हृदि । प्रातरुत्थाय संस्मृत्य पुण्यश्लोकान् समाहितः । निर्वर्त्यावश्यकं कर्म ब्राह्मणान् स्वस्तिवाचयेत् । गुरुमानीय धर्मज्ञं वेदवेदांगपारग । वृणुयाद्द
त्विजश्चैव वस्त्रालङ्करणादिभिः । पलेन वातदर्द्धेन तदर्द्धार्द्धेन वापुनः । शक्त्या वाकारयेत्तच्च वित्तशाठ्यविवर्ज्जितः । सौवर्णी प्रतिमा कार्या पाद्यार्घ्या
चमनीयकं । पत्नीः संपाद्य विधिवत्पूजोपकरणं तथा । गोचर्म मात्रं संलिप्य मध्ये मण्डलमाचरेत् । ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् । मण्डपं र
चयेत्तत्र कदलीस्तम्भमण्डितं । चतुर्द्वारसमोपेतं फल पुष्पादि संयुतं । वितानं तत्र बध्नीयाद्विचित्रचैव शोभितं । मण्डपे स्थापयेत् कुम्भं ताम्रं वा मृन्मयं
शुचि । तस्योपरिन्यसेत्पात्रं राजतं वैणवं तुवा । वाससाच्छाद्य कौन्तेय पूजयेत्तत्र मां बुधः । उपचारैः षोडशभिर्मन्त्रैरेभिः समाहितः ।
ध्यात्वा चतुर्भुजं देवं शङ्खचक्रगदाधर । पीतांबरयुगोपेतं लक्ष्मीयुक्तं विभूषितं । लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनं ॥ ध्यानं ॥ आ
गच्छ देवदेवेश जगद्योने रमापते । युद्धे ह्यस्मिन्नधिष्ठाने सन्निधेहि कृपां कुरु ॥ आवाहनं ॥ देवदेव जगन्नाथ गरुडासन संस्थित

। अ । गृहाणमासनं दिव्यं जगद्धात्रनमोऽस्तुते । आसनं । नाना तीर्थाहृतं शुद्धं निर्मलं पुष्पमिश्रितं । पाद्यं गृहाण दैत्यारे विश्वरूप नमोऽस्तु

। ६७ । पाद्यं । गङ्गादिसर्वतीर्थेभ्यो मयानीतं सुशीतलं । गृहाणाचमनं कृष्ण विश्वकाय नमोऽस्तुते । आचमनीयं । गन्धपुष्पाक्षतोपेतं फलेनच समन्वितं ।

गृहाण देवेश मद्दत्तं हि भक्तितः । अर्घं । दधि क्षौद्रं घृतं शुद्धं कपिलायाः सुगन्धि यत् । सुस्वादु मधुरं शौरे मधुपर्कं गृहाणमे । मधुपर्कं । पुनरा ।

मनं ॥ पञ्चामृतेन स्नापनं करिष्यामि सुरोत्तम । क्षीरोदधिनिवासाय लक्ष्मीकांताय ते नमः । पञ्चामृतस्नानं ॥ मन्दाकिनी गौतमीच यमुनाच सरस्वती ।

ताभ्यः स्नानार्थमानीतं गृहाणशिशिरं जलं ॥ स्नानं ॥ पुनराचमनं शुद्धजांबूनदप्रख्यं तडिद्भासुररोचिषी । मयोपपादिते तुभ्यं वाससी प्रतिगृह्य

तां । वस्त्रं ॥ पुनराचमनीयं । यज्ञोपवीतं । किरीट कुण्डलादीनि कांचीवलय युग्मकं । कौस्तुभं वनमालांच भूषणानि भजस्वभो । भूषणानि । मलयाचल

संभूतं गन्धसारं मनोहरं । हृदयानन्दनं चारु चन्दनं प्रतिगृह्यतां । चन्दनं । मालतीचम्पकादीनि यूथिका वकुलानिच । तुलसीपत्रमिश्राणि गृहा

ण सुरसत्तम । पुष्पाणि । अथ परिवार देव पूजा । देवकीं वसुदेवञ्च रोहिणीं सबलां तथा । सात्यकिश्चोद्धवाक्रूरान् उग्रसेनादियादवान् ।

नन्दं यशोदां तत्कालप्रसूतां गोपिकास्तथा । कालिन्दीं कालियंचैव पूजयेन्नाम मन्त्रतः । वनस्पतिरसोद्भूतं कालागरुसमन्वितं । धूपं गृहाण गोविन्द

गुणसागर गोपते ॥ धूपं ॥ आज्यञ्चवर्त्तिसंयुक्तमिति दीपं । नैवेद्यं शाल्यौदनं पायसंच सिताघृतविमिश्रितं । नानापक्वान्नसंयुक्तं नैवेद्यं प्रतिगृह्यतां नैवेद्य

पुनराचमनीयं ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं । कर्पूरादि समायुक्तं ताम्बूलं प्रतिगृह्यतां । ताम्बूलं ॥ इदं फलमितिफलं हिरण्यगर्भगर्भस्थ

मिति दक्षिणा । नीराजयेत्ततो भक्त्या मङ्गलं समुदीरयन् जयमङ्गलनिर्घोषैर्द्दैवदेवं समर्च्चेत् । दत्वा पुष्पाञ्जलिं त्वग्र दक्षिणाच पुरःसरं । प्रणमेद्दं

डवद्भूमौ भक्ति प्रह्वः पुनः पुनः । स्तुत्वा नानाविधैस्तोत्रैः प्रार्थयीत जगत्पतिं । नमस्तुभ्य जगन्नाथ देवकीतनय प्रभो । वसुदेवात्मजानंत यशोदा ६७

नन्दवर्द्धन गोविन्द गोकुलाधार गोपीकान्त नमोऽस्तुते । ततस्तु दापयेदर्घं इन्दोरुदयतः शुचिः कृष्णाय प्रथमं दद्याद्देवकीसहितायच । नारिके

शेन शुद्धेन दद्यादर्घं विचक्षणः। कृष्णाय परया भक्त्या शङ्खे कृत्वा विधानतः। जातः कंसवधार्थाय भूभारोत्तारणाय च। कौरवाणां विनाशाय दैत्यानां निधनाय च। गृहाणार्घं मया दत्तं देवकीसहितो हरे। कृष्णार्घमन्त्रः। शङ्खे कृत्वा ततस्तोयं सपुष्पफलचन्दनं। जानुभ्यामवनिं गत्वा चन्द्रायार्घं निवेदयेत्। क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव। गृहाणार्घं मया दत्तं रोहिणीसहितः शशिन्। ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते। नमस्ते रोहिणीकान्त गृहाणार्घं नमोऽस्तु ते। चन्द्रार्घमन्त्रः॥ इत्थं संप्रार्थ्य देवेशं रात्रौ जागरणं चरेत्। गीतनृत्यादिना चैव पुराणश्रवणादिभिः। प्रत्यूषे विमले स्नात्वा पूजयित्वा जगद्गुरुं। पायसेन तिलाज्यैश्च मूलमन्त्रेण भक्तितः। अष्टोत्तरशतं हुत्वा ततः पुरुषसूक्ततः। इदं विष्णुरिति प्रोक्ता जुहुयाद्धै घृताहुतीः। होमशेषं समाप्याथ पूर्णाहुति पुरःसरं आचार्यं पूजयेद्भक्त्या भूषणाच्छादनादिभिः। गामेकां कपिलां दद्याद्व्रतसंपूर्तिहेतवे। पयस्विनीं सुशीलाञ्च सवत्सां सगुणां तथा। स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनिकायुतां। रत्नपुच्छां ताम्रपृष्ठां स्वर्णघण्टासमन्वितां। वस्त्रच्छन्नां दक्षिणाढ्यामेवं संपूर्णतां व्रजेत्। कपिलाया अभावेऽपि गौरन्यापि प्रदीयते। ततो दद्याच्च ऋत्विग्भ्योऽन्येभ्यश्च यथार्हतः। ब्राह्मणान् भोजयेत्पश्चादष्टौ तेभ्यश्च दक्षिणां कलशान् तत्र संपूर्णान्दद्याच्चैव समाहितः। प्राप्यानुज्ञां तथा तेभ्यो भुञ्जीत सह बन्धुभिः। एवं कृते महाराज व्रतोद्यापनकर्मणि निःपापस्तत्क्षणादेव जायते विबुधोत्तमः। पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः। भुक्त्वा भोगान् चिरकालमन्ते मम पुरं व्रजेत्॥ इति श्रीभविष्योत्तरपुराणे युधिष्ठिर कृष्णसंवादे सोद्यापनं जन्माष्टमी व्रतं॥ अथ भाद्रशुक्लाष्टम्यां ज्येष्ठर्क्षे ज्येष्ठाव्रतं। इदं च ज्येष्ठायोगवशेन पूर्वविद्धायां वा कार्य्यं। दिनद्वये तद्योगे परैव। पूर्वेद्युरात्रौ तद्योगे तु पूर्वैव ज्येष्ठापूजनं लैंगे कन्यास्थार्केऽष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत् कन्यार्कयोगोऽत्र केवलं स्तावक एव मासस्तु भाद्रपदश्चान्द्र एव ग्राह्यः। मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुता। शक्तिर्यस्मिन् दिने कुर्यात् ज्येष्ठायाः परिपूजनमिति माधवीयेऽस्कान्दोक्तेः। अस्यापवादः तत्रैव। यस्मिन्दिने भवेत् ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः तस्मिन् हविष्यं पूजा च न्यूना चेत्पूर्ववासरे इति विपरीत

॥ व्र ॥ पूजादिनात्पूर्वदिनेऽनुराधायामावाहनमुत्तरदिने मूले च विसर्ज्जनं। तथाचस्कांदे ॥ मंत्रेणावाहयेद्देवीं ज्येष्टायांतु प्रपूजयेत्। मूले विसर्जयेद्देवीं जेष्टाय
॥ ६८ ॥ तु प्रपूजयेत्। मूले विसर्ज्जयेद्देवीं त्रिदिनं व्रतमुत्तमनिति हेमाद्रौ भविष्योत्तरे ॥ युधिष्टिर उवाच ॥ म्रतवंध्यातु या नारी काकवंध्या तथा परा। ग
र्भस्रवा तृतीयाच नानादोषैस्र दूषिता। निर्द्धनाश्च नरा येच दारिद्र्ये महति स्थिता। कर्मणाकेन मुच्यंते तन्मे ब्रूहि जनार्द्दन ॥ श्रीकृष्ण उवाच ॥ मासि
भाद्रपदे शुक्लपक्षे ज्येष्टा यदा भवेत् रात्रौ जागरणं कुर्यात् गीतवादित्रनिस्वनैः। एवंविधविधानेन एभिर्मन्त्रैश्च पूजयेत्। एह्येहित्वं महाभागे सुरासुर
नमस्कृते। ज्येष्टेत्वं सर्वदेवानां मत्समीपगता भव। आवाहनं। श्वेतसिंहासनस्थातु नानावस्त्रैरलंकृता वरदं पुस्तकं पाशं बिभ्रत्यैते नमोनमः। आसन। ज्ये
ष्टेश्रेष्टतपोनिष्ठे ब्रह्मिष्टे सत्यवादिनि। क्षीरार्णवातु समुद्भूते अर्घं ज्येष्टे नमोस्तुते ॥ अर्घं ॥ शार्ङ्गबाणांश्च खङ्गंच प्रासतोमर दर्पणैः। अन्यैरप्यायुधैर्युक्तां
ज्येष्टे त्वामर्चयाम्यहं। सुरासुरैर्नरैर्वंद्या यक्ष किंनर पूजिता। पूजितासि मया देवि ज्येष्टेत्वामर्च्चयाम्यहं। विप्रप्रिये महामाये सुरासुरसुपूजिते। स्थूल
सूक्ष्ममये देवि ज्येष्टेत्वामर्च्चयाम्यहं ॥ पूजा मन्त्रः ॥ त्वं लक्ष्मीस्त्वमुमादेवी त्वं ज्येष्ठे सर्वचामरैः। पूजितासि मया देवि वरदा भव मे सदा। प्रार्थना।
पुत्रदार निवृत्त्यर्थं लक्ष्म्यांश्चैवविवृद्धये। अलक्ष्म्याश्च विनाशाय सर्वकालं द्विजोत्तम। गुरुं सुम्पूजयेत् भक्त्या वस्त्रैराभरणादिभिः। द्वादशैवतु वर्णानि
पूजनीया प्रयत्नतः। यावज्जन्म तथा पूर्वं विधिनानेन मानवैः। ददाति वित्तं पुत्रांश्च अर्चनीया सदा स्त्रिया। अनेन विधिना युक्तो योहि
पूजयते नरः। नारी वा पूजयत्येतां तस्याः लक्ष्मीर्विवर्द्धते। वन्ध्या तु लभते पुत्रान् दुर्भगा सुभगा भवेत्। एवंविधविधेनेन ज्येष्ठायास्त्वर्चयेत्तदा
विघ्नास्तस्य प्रणश्यन्ति यथासुलवणं तथा। यथा ग्राह्यं कुरुश्रेष्ट ज्येष्टायाः शोभनं व्रतं। नीराजने कृतेचैव दीपोग्राह्यः सुभक्तितः। नैवेद्यसहितं प्राश्य
व्रतीत्वग्रे युधिष्टिर। गुरुहस्तात् सदा ग्राह्यो दीपः प्रज्वलितो महान्। व्रतस्थो भक्तियुतस्तु शुचिः प्रयतमानसः। अनेन विधिना चैव व्रतं ग्राह्यं ६८
युधिष्टिर। ज्येष्टानाम परा देवी भुक्ति मुक्ति फल प्रदा। यस्तु पूजयते राजन् तस्मैस्वर्गं प्रयच्छति। तथैवस्कांदे। मासि भाद्रपदे पक्षे शुक्ले जेष्टर्क्षे

संयुते यस्मिन् कुर्यात् शिवासम्यक् ज्येष्ठायाः परिपूजनं। तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेवच। नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी। कृतस्नानो नरः कुर्यात् तस्यामन्यच वादिने। भक्ति युक्तः शुचिः कुर्याज्ज्येष्ठादेव्यास्तु पूजनं। नद्याः पूर्वेद्युराहृत्य सिकताः शुद्धदेशजाः। देवीरूपन्तु तत्रैव कृत्वाथ ब्राह्मणैः सह। मण्डपेतां तु संस्थाप्य देवीं हेममयीं ततः। स्थापयेद्राजतीं ताम्रीं लेख्यां वा पटकुड्ययोः। आवाहयेत्ततो देवीमथवा पुस्तके पिवा। त्रिलोचनां शुक्लदन्तीं बिभ्रन्तीं राजतीं तनुं। विरक्तां रक्तनयनां ज्येष्ठामावाहयाम्यहं। इति मन्त्रेण तां देवीमावाह्य सुव्रतव्रती। स्नानं नद्यास्तथा पाद्यं पादयोरुभयोर्द्विज। श्रीखण्ड कर्पूर युतं दद्यात् अर्घं तथार्चनं। भक्त्या मया प्रयत्नेन यदन्नं दीयते तव। तद्गृहाण सुरेशानि ज्येष्ठेश्रेष्ठे नमोनमः। इत्युच्चार्य्य सुवर्णादिपात्रेणांजलिना पिवा। अर्घंदत्वा स्मरेद्देवीं गन्धपुष्पैस्तथार्चयेत्। गोधूमयवशाल्यादि तद्द्रव्यैस्तु पारयेत्। ततः प्रहृतमार्चैस्तु पूरिकादीनि सर्पिषा निवेदयेत्तैरेव दद्याद्देव्यै प्रयत्नतः। ततः स्तुत्वा महादेवीं सर्वकामफलप्रदां। ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमोनमः। ज्येष्ठेश्रेष्ठे तपोनिष्ठे ब्रह्मिष्ठे सत्यवादिनि। एह्येहित्वं महामाये गृहाणा अर्घं सरस्वति। अर्घं॥ स्तुत्वोक्त्या स्तोत्रसंपत्या गीतानि पुरतस्तव। सौवीरैश्चैव संयुक्तां दद्याच्छूद्रेभ्य एवच। सुवासिनीभ्यः शक्त्याच दद्यात्वै सुकृते व्रती। तत्र देवीमनुज्ञाप्य ततो भुञ्जीत वाग्यतः। भक्षयित्वा तदाचम्य देवीं नत्वा पुनः पुनः। शयीत व्रतचर्येण कुर्यात् प्रातर्विसर्जनं। एवमेव प्रकुर्यात्वै व्रतन्तु प्रतिवत्सरं। विसर्ज्जनांतेतु ततः सिकतां वारिणि क्षिपेत्। अपूपवटकान् दद्याद्ब्राह्मणेभ्यस्ततोद्विजः। कुर्यादेवं प्रयत्नेन सायंवाथ विसर्जयेत्। विद्यार्थी प्राप्नुयात् विद्यां स्त्रीकामः स्त्रियमेवच। शिवस्मरणकारीतु दैव्यैदद्यादसौश्रिये। सौवर्णं राजतं ताम्रं कृतकृत्यो भवेत्तदा। व्रतं स्वयञ्च कृतवान् सिद्धञ्चाप्यकृतार्थयः। देव्या महत्त्वं कथितं तवेदं विधिस्समंत्रार्चनसंयुतस्तथा। मंत्रोपि सायुज्यकरो व्रतस्यतस्या मयाते कथितं सदैव उद्यापनमाह। ओंज्येष्ठायै नमः। श्रेष्ठायै नमः यस्याः सिंहो रथे युक्तो व्याघ्रश्चापि महाबलः। ज्येष्ठामहमिमां देवीं प्रपद्ये शरणं शुभां तामग्नि वर्णां तपसा ज्वलंतीमितिचावाह्यापोहिष्ठेति तिसृभिर्हिरण्य वर्णेतिच त

व्र ॥ स्नभिरभिषिंचेत्। नाम्नाथ विष्टरं दत्वा पाद्यमर्घमथासनं। स्नानमाचमनञ्चैव मधुपर्कोपवीतकं। गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेवच। पुनराचमनं
॥ ६८ ॥ कारयित्वा विसर्जयेत्। ज्येष्ठायै सत्यायै नमः कलिप्रियायै निद्रायै विनायकायै ताप्यै श्रियै त्रिकूणायै एभिर्नामभिस्तर्पणं। होमं दधिमधुक्षीरघृतैः कुर्यात्
सुसंयतः। हविष्यं स्वयमश्नीयात् ब्राह्मणांस्तेन भोजयेत्। अनेन विधिना यस्तु ब्राह्मणानां चतुष्टयं। व्रतान्ते प्रतिमां कुर्यात् सौवर्णां पलसंमितां। कृष्ण
स्त्रेण संयुक्तामाचार्याय निवेदयेत्। वस्त्राभरणमाल्यानुलेपनैः पूजितं द्विजं। प्रणिपत्य ततः पश्चात् तस्मै सर्वं निवेदयेत्। ब्राह्मणा भुक्तवंतस्ते प्रकु
र्युः स्वस्तिवाचनं। एवं कृते व्रते सम्यक् सर्वशांतिः प्रजायते। धनधान्यसमृद्धिश्च आरोग्यंच प्रजायते॥ इति भविष्योत्तरे ज्येष्ठाव्रतं। अथैव दूर्वा
ष्टमी व्रतं। इदं पूर्वविद्धायां कार्य्यं श्रावणीदुर्गानवमीदूर्वाविवह्नताशिनी। पूर्वविद्धातु कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति बृहद्यम वचनात्। शुक्लाष्टमी
तिथिर्यातु मासि भाद्रपदे भवेत्। दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयत इति हेमाद्रिमदनरत्नधृतपुराणसमुच्चयवचनाच्च मूहूर्त्ते रोहिण्यष्टम्यां पू
र्वा वा यदिवापरा। दूर्वाष्टमी तु सा कार्या ज्येष्ठां मूलञ्च वर्जयेत्। परेत्युक्तं तत्पूर्वेत्र ज्येष्ठामूल योगे कर्मकालव्याप्त्या भावेच द्रष्टव्यं दूर्वाष्टमी स
दा त्याज्या ज्येष्ठामूलर्क्षसंयुता। तथा प्राप्ते भाद्रपदे शुक्लाष्टम्यांच भारत। दूर्वामभ्यर्च्चयेद्भक्त्या ज्येष्ठां मूलञ्च वर्जयेत्। ऐन्द्रर्क्षे पूजिता दूर्वा
हन्त्यपत्यानि नान्यथा भर्त्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेदिति मदनरत्ने स्कांदे शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी। सिंहार्के एव कर्त्तव्या न कं
न्यार्के कदाचन। सिंहस्थे सोत्तमा सूर्ये नुदिते मुनिसत्तमे। तत्रैव अगस्त्य उदिते तात पूजयेद्धते दूर्वां। वैधव्यं पुत्रशोकञ्च दशजन्मानि पञ्चचेति। यदा
तु भाद्रशुक्लाष्टम्यामगस्त्योदयस्तदा तत्पूर्वं कृष्णाष्टम्यां कार्य्यं। शुक्लपक्षालाभेपि पूर्णिमांतमानेन भाद्रपदमासलाभात्। यदातु भाद्रपदोधिकस्तदा सिंहा
र्के एवेत्युदाहृतवचनादधिमासेतु संप्राप्ते नभस्येऽदये मुनेः। अर्वागेवव्रतं कार्य्यं परतोपि न कुत्रचिदिति निर्णयदीपे स्कांदाद्धाधिक एव कर्त्तव्यं इदं ६८
स्त्रीणां नित्यं। या न पूजयते दूर्वां मोहादिह यथाविधि त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः। तस्मात् संपूजनीया सा प्रतिवर्षं वधूजनै रितिपुराण

समुच्चयात्। यदा तु ज्येष्ठादिकं दिनं। सर्वथाष्टमी न लभ्यते। तदा कर्त्तव्यादिकं भर्त्तेन ज्येष्ठामूलं यदा भवेत्। दूर्वामभ्यर्चयेद्भक्त्या न वन्ध्यं दिवसं नयेदि
ति भविष्ये। तदादनकल्पेनानुष्ठानंतु सर्वथा व्रतलोपः। अथ व्रतं हेमाद्रौ भविष्ये। ब्रह्मन भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः। पूजयेच्छंकरं भक्त्या वो
नः श्रद्धयान्वितः। स याति परमं स्थानं यत्र देवः त्रिलोचनः। गणेशं पूजयेद्यस्तु दूर्वायाः सहितं मुने। गणेशः शिवः। फलानां शकलैर्दिव्यैर्गन्ध
पुष्पैर्विलेपनैः। दूर्वां पूज्य तथेशानं मुच्यते सर्वपातकैः। शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम स्थाप्य लिङ्गं ततो गन्धैः पुष्पैर्धूपैः समर्चयेत्। खर्जूरै
र्नारिकेलैश्च मातुलिङ्गफलैस्तथा। पूजयेच्छंकरं भक्त्या दूर्वायां विधिवद्द्विज। दध्यक्षतैर्द्विजश्रेष्ठ अर्घं दद्यात् त्रिलोचने। दूर्वाशमीभ्यां संपूज्य मानवः
श्रद्धयान्वितः सर्वैः सुकृतजन्मा स्यात् सर्वदेवैस्तु वन्दितः विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात्। धर्मार्थी धर्ममाप्नोति कन्यार्थी लभतेचतां।
मनसा यद्यदिच्छेत तत्तदाप्नोति मानवः। य एवं पूजयेद्दूर्वां भूतेश मानवः फलैः। स सप्तजन्मपापौघैर्मुच्यते नात्र संशयः। कृतोपवासः सप्तम्यां
अष्टम्यां पूजयेच्छिवं। दूर्वासमेतं विप्रेन्द्र दध्यक्षतशुभैः फलैः। त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरासुरैः। सौभाग्यं सन्ततिं देहि सर्वकार्यकरी
भव। यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले। तथा विस्तृतसन्तानं देहि त्वमजरामर। दूर्वामन्त्रः। तल्लिंगमर्चेदीशानमर्चयेत्प्रयतः शुचिः।
ततः संपूजयेद्विप्रान् फलैर्नानाविधैर्द्विज। अनग्निपक्वमश्नीयाद्दन्न दधि फलं तथा। अक्षारलवणं ब्रह्मन्नश्नीयान्मधुनान्वितं। दद्यात्फलानि वि
प्रेषु फलाहारः स्वयं भवेत्। प्रणम्य शिरसा दूर्वां शिवं शिवमुपाश्नुते। य एवं कुरुते भक्त्या महादेवस्य पूजनं। गणत्वं यात्यसौ ब्रह्मन् मुच्यते ब्रह्म
हत्यया। एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिता। चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः। आदित्यपुराणे श्रीपूजनमुक्तं शुक्लाष्टम्यां तु प्राप्तायां
मासि भाद्रपदे तथा। दूर्वाप्रतानमुस्वेतमुत्तराशाभिगामिनं। पूजयेद्गृहमानीय गन्धमाल्यानुलेपनैः। फलमूलैस्तथा चैव दीपधूपैर्विसर्जयेत्। अग्नि
पक्वं तथा सर्वं न निवेद्य कथञ्चन। भोक्तव्यञ्च तथा ब्रह्मन्नग्निपक्वविवर्जितं। दूर्वाङ्कुरस्थां संपूज्य विधिना यौवने स्त्रिय। यौवनं स्थिरमाप्नोति यस्

॥ व्र ॥ यत्राभि जायते। भविष्योत्तरेषु विशेषतः। अष्टम्यां फल पुष्पैश्च खर्जूरैर्नालिकेरकैः। द्राक्षामोदकपित्थैश्च बदरैर्लकुचैस्तथा। नारङ्गैर्जम्बुकैराम्रैर्वा
॥ ७० ॥ पूरैश्च दाडिमैः। दध्यक्षतैः स्रजोभिश्च धूपैर्नैवेद्यदीपकैः। मन्त्रेणानेन राजेन्द्र शृणुष्वावहिता मम। त्व दूर्वेऽमृतनामासीत्यादि मन्त्रः प्राग्वत्। द
पिष्टानि विप्रेभ्यः फलंचविविधं प्रभो। तिलपिष्टकगोधूमधान्यपिण्डानि पाण्डव। भोजयित्वा सुहृन्मित्रं सम्बन्धिस्वजनं तथा। ततो भुञ्जीत तच्छे
स्वयं श्रद्धासमन्वितः। कर्त्तव्याचैकभक्तेन ज्येष्ठामूलं यदा भवेत्। दूर्वामभ्यर्चयेद्भक्त्या न बन्ध्यं दिवस नयेत्। पक्षे भाद्रपदस्यैवं शुक्लाष्टम्यां युधिष्ठिर दूर्वा
ष्टमी व्रतं पुण्यं यः करोतीह मानवः न तस्य क्षयमाप्नोति सन्तानं साप्तपौरुष। नन्दते वर्धते नित्यं यथा दूर्वा तथा कुलं इति दूर्वाष्टमी। अथ भाद्र
शुक्लाष्टमीमारभ्य षोडशदिनपर्य्यन्तं महालक्ष्मी व्रतं। तच्चार्द्धराचातिक्रमवर्तिन्यामष्टम्यां कार्य्यं। तदुक्तं चन्द्रप्रकाशे स्मृत्यन्तरे। अर्द्धरात्रमतिक्रम्य
वर्त्ततेयोत्तरातिथिः। तदा तस्यां नरैः कार्य्यं महालक्ष्मीव्रतं सदेति प्रारम्भस्त्वस्यां ज्येष्ठायुतायां कार्य्यः। तथाच स्कान्दे। मासि भाद्रपदे शुक्ले पक्षे
ज्येष्ठायुताष्टमी। प्रारब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिरिति। तदभावे केवलायामपि। समापन तु यत्कृष्णाष्टम्यां तच्चन्द्रोदयव्यापिन्यां कार्य्यं। च
न्द्रोदयाते चैव तिथिस्तात्कालिकी स्मृतेत्युक्तेः। दिनद्वये चन्द्रोदयसत्वे वा कृष्णापक्षेष्टमीचवेत्यदिवाक्यात्पूर्वे वा परदिने चन्द्रोदयोत्तर त्रिमूहूर्त्ताचेत्य
रेव। तदुक्तं मदनरत्ने। पुराणसमुच्चये। पूर्व्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा। त्रिमूहूर्त्ता तु सा पूज्या परतश्चोर्द्धगामिनीति। अथ व्रत
विधिः। हेमाद्रौ मदनरत्ने च स्कान्दे। स्कन्द उवाच॥ सौभाग्यजननं स्त्रीणां दौर्भाग्यपरिकृन्तनं। परमैश्वर्यजननं तद्व्रत ब्रूहि शङ्कर॥ ईश्वर
उवाच॥ साधु साधु महाबाहो यत्पृष्टोऽहं त्वयानघ। तत्तेऽहं संप्रवक्ष्यामि व्रतानामुत्तमं व्रतं। येन चीर्णेन न नरा दुर्गतिं यान्ति कर्हिचित्। सुभ
गा दुर्भगा वापि स्त्रियो न विधवा गृह। अतिदेव्या व्रत पुण्यं महालक्ष्म्याः षडानन। नारीणां च नराणां च सर्वदुःखापहं तथा॥ स्कन्द उवाच॥
देव्याश्चरितमाहात्म्यं मर्त्यैकेन प्रकाशितं। विधान कीदृशं ब्रूहि व्रतस्यास्य महाविभो॥ शङ्कर उवाच॥ देवासुरमभूद्युद्धं पूर्णमब्दशत पुरा। ७०

इत्थे सुराणामधिपे देवानां च पुरन्दरे। तत्र देवैर्महावीर्यैर्नारायणबलाश्रयात्  अमरा निर्जिताः सर्व्वे पातालतलमाययुः। केचिल्लङ्कां गताः
केचित् प्रविष्टा वरुणालय। गिरिदुर्गं समाश्रित्य केचित्तस्थुर्महाबलाः  तत्र कोलासुरोनाम महावीर्यो महाबलः। गोमन्तं दुर्गमन्दुर्गं गिरिमाश्रित्य
निर्भयः। या राजकन्यका लोके रूपवत्यो महागुणाः। आनीय गिरिदुर्गस्थो रमयामास सर्वशः। रमयित्वाहिपत्तत्र कामरूपी विहंगमः। एतस्मिंने
व काले तु आगतौ मुनिसत्तमौ। श्रुतप्रभावसम्पन्नो पुलस्त्यो गौतमः सह। तीर्थयात्राप्रसङ्गेन श्रुत्वा वाक्यं जनस्य तं। कोलासुरेण जनितं कन्याह्वे
तोःशिखिध्वज। तावूचतुर्जनं सर्वमगस्त्योस्ति महामुनिः। येन तोयनिधिः पीतो विन्ध्याद्रिश्च निवारितः। वातापील्वलनामानौ दैत्यौ येन विनाशि
तौ। तं गच्छामो वयं सर्व्वे कोलासुरवधाप्तये। इत्यामन्त्र्य जनाः सर्व्वे गत्वा तमभिवाद्य च॥ ऊचुः सर्व्वे यथावृत्तं कोलासुरविचेष्टितं। तच्छ्रुत्वा भ
गवानाह मैत्रावरुणि रग्रधीः। सृष्टिस्थितिविनाशानां कारणं भक्तवत्सलः। रामस्याद्रौ तपस्यन्ति ब्रह्माविष्णुमहेश्वराः। तिस्रः सन्ध्या मूर्तिमत्य
स्तेषां शुश्रूषणे रताः। प्रविश्य ता महालक्ष्मी शक्तिरूपेण संस्थिता। सर्वशक्तियुता देवी लोकानां हितकाम्यया। इत्युक्त्वा त्वरितं गत्वा कोलासुरवधा
प्तये। निवेद्य निखिलं तेभ्यः तस्थुः प्राञ्जलयो जनाः। तच्छ्रुत्वा निखिलं तेभ्यो ब्रह्माविष्णुमहेश्वराः। सन्ध्यात्रयं समाहूय वाचं प्रोचुर्जनेश्वराः। वंदारु
सुरवृन्देन्दुमौलिमाणिक्य मण्डला। हनिष्यति महालक्ष्मी युद्धे कोलासुरं रिपुं। भगवत्या मूर्तिमत्या दण्डशूलादिभिर्वरैः। आयुधैर्व्विविधैः हत्वा जयमा
प्स्यथ संयुगे। युष्माकं च सहायोसौ युष्मत् क्रोधसमुद्भवः। भूतनाथो भूतमन्युर्वः सहायो भविष्यति। इत्युक्त्वा त्वरितं गत्वा रुरुधुः कोलराक्षसं। नि
रुध्य च पुरीं देव्यो जगर्ज्जुर्जलदस्वनाः। भिद्यन्त्यस्य दिशांइद्दं वर्धयन्त्यश्च तत् क्रुधां। कोलासुरोपि तच्छ्रुत्वा प्रत्यपात महासनात्। रोषणः क्रोधता
म्राक्षो मेरोरिव युगान्तकः। हस्त्यश्वरथपादातिचतुरङ्गबलान्वितः। निर्ययौ पृतना योद्धुं कालिकाया इवाशनिः। सकुण्डलशिरस्त्राण कवचीधृतवा
षधिः बद्धगोधांगुलित्राणः क्रुद्धोदत्र इवापरः। ततो राक्षस सैन्य तद्भूतनाथेन सङ्गत। देवनारामनोक्षासि युद्ध चक्रातिभीषण। महारके भीमघोषे

। श्र । वीणाक्रेंकारनिःस्वनैः । निस्वाननिनदैश्चैव लोकःशब्दमयो भवत् । जयभिंधीति वदतांधावतामितरेतर । वहृधे समरं घोरं मुष्टामुष्टिकचाकचि : :
। ७१ । राक्षसवले भूतनाथो महाबलः । ममर्द राक्षमानीकं शरवर्षैरतिदारुणैः । हतं दृष्ट्वाऽसुरवलं क्रुद्धःकोलासुरो रणे । अभिद्रुत्य गदापाणिः ताडय
भैरवं । ययौ मूर्च्छां महावीर्यस्तेनाभिहतमस्तकः । ततो देव्यातिवेगेन ह्यभिदद्रुव कक्षते । त्रिशूलैरभिजघ्नुस्ताः पट्टिशैश्च व्यदारयत् । मुष्टिभिस्ताडयः ।।
मुनैखरैश्चव्यदारयन् । पादाघातैः समाजघ्नुः सिंहः करिवरं यथा । सकुण्डलशिरस्त्राणो दष्टोष्ठो रक्तलोचनः । कृतभ्रूकुटिवक्त्रोसौ राक्षसस्तां मुहुर्मुहुः ।
गदया ताडयामास शिरःकण्ठांसकुक्षिषु । वभंजुस्तां गदां तास्तु हसंत्यः समदाकुलाः । ततो धनुर्धरो भूत्वा वाणजालमिवा किरत् । तासां शरीरमर्माणि
भिंदन् शरपुरोगमैः । ननाद वहुवैरोसौ हृदयं चाभिनत्क्रूरैः । ततःक्रुद्धतरास्तास्तु तं पादैर्जगृहुर्भृशं । आकाशे भ्रामयित्वा तं चिक्षिपुर्गगनेक्रुधा । कोला
सुरोपि पतितो यावदुत्थातुमिच्छति । तावन्निगत्य लक्ष्मीस्तं पादाभ्यां प्रत्य पीडयत् । तत्पाद पीडितं रक्षो विहत्य नयने भृशं । मुक्त कण्ठःस्वनं कृत्वा त
तो मोहमुपेयिवान् ।।ततो देवाः सगन्धर्वा मनुष्या ऋषयः स्तुवन् । देवनाथाश्च देव्यश्चननृतुःसमदा कुलाः । देवदुन्दुंदुभयो नेदुः पुष्पवृष्टिः पपातह
दिशः प्रसेदुर्मरुतो ववुर्मन्दरवज्जगत् सुरासुरशिरोरत्नवंद्यपादम्बुजस्ततः देव्योदिव्येन यानेन यांतिकोलापुरं प्रति । आयांतीं पद्मजां वीक्ष्य मुक्तपादा
..मृङ्गलः । तुष्टावपरया भक्त्या राजकन्या गणामुदा । राजकन्या ऊचुः ॥ वन्दारुवीरसुरवृन्दकिरीटकोटिरोचिर्घटानिकरकल्पितरत्नदीपं । देवि त्वदीयचरण
शरणं जनानां सेवामहे सकलमङ्गलवर्द्धनाय । उत्फुल्लकैरवदलायतलोचनायै गण्डोल्लसच्चटुल कुण्डलमण्डितायै । राकाशशि प्रतिभटाननकोमलायै तस्यै नमः
कमललोचनवल्लभायै । सङ्कल्पकल्पलतिकां हरिकंठभूषां केयूरहेमकटकोज्ज्वलकंकणांकां । संसारसागरसुखं पततो ममाद्य देहि त्वदीयकरदृष्टिमनंगमातः ।
दृष्टा देवि जनाजयाय विविधा ब्रह्माधिपत्य गता विष्णोर्वक्षसि या चकार तरलालीलाञ्जमालाभ्रमं । केशाग्रप्रच्छितं त्वदीयचरणद्वंद्वाञ्जसेवारतं कारुण्या ७१
मृत सारपूरितदृशामामद्य पश्येश्वरि । हेमर्णाप्रपुल्ल कुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकचित्रयरा । उत्तंसहैसनिकषोज्ज्वलकायकांतिर्लक्ष्मी र्जयं प्र

क्षमतां शिवमातनोतु। इति स्तुता महालक्ष्मीर्भक्तानामिष्टदायिनी। योगिन्योद्य भविष्यध्वमिति तासां वरं ददौ। दृष्टा तासु मुदा देवीः साक्ष्यञ्च प्रदापयेत्। ताभिर्निषेविता देवी वरं वर्यं ददौ मुदा। राजकन्यास्ततः सर्वा मुक्ताः स्वपुरमाययुः। ततः प्रभृति लोकेषु पूज्यास्ताः सर्वकामदाः। ताश्चतुःषष्टियोगिन्यो महालक्ष्मीपरिग्रहात्। नृत्यन्ति नित्यहैतत्र गीतवादित्रनिस्वनैः। पुरो देव्या महालक्ष्म्याः करहाटपुरे निशि। एवं प्रभावा सा देवी विगुणरामा षडान। व्रतस्यास्य विधानं च शृणु मत्तो विधानतः। मासि भाद्रपदे शुक्लपक्षे ज्येष्ठायुताष्टमी। प्रारब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः। करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः। तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः। इत्युच्चार्य ततो बध्वा दोरकं दक्षिणे करे षोडशग्रन्थिसहितं गुणैः षोडशभिर्युतं। ततोन्वहं महालक्ष्मीं पूजयेन्नियतात्मवान्। गन्धैः पुष्पैः सनैवेद्यैर्यावत् कृष्णाष्टमीदिनं। तस्मिन् दिने तु संप्राप्ते कुर्यादुद्यापनं व्रती। वस्त्रमण्डपिकां कृत्वा माल्यरत्नोपशोभितां। त्रिभूमिकांच सच्छन्नां नानादीपैश्च शोभितां। चतस्रः प्रतिमाः कृत्वा सौवर्णीस्तत्स्वरूपिणीः। स्नपनं कारयेत्तासां पञ्चामृतविधानतः। षोडशैरुपचारैश्च धूपदीपादिभिस्तथा। जागरं तत्र कर्त्तव्यं गीतवादित्रनिस्वनैः ततो निशीथे संप्राप्तेभ्युदितेस्तदीधितौ। कृत्वा तु स्थण्डिले पद्मं सषडङ्गं प्रपूजयेत्। दद्यादर्घं च रागेण व्रती तस्मै समाहितः। क्षीरोदार्णवसम्भूत चन्द्र लक्ष्मीसहोदर। पीयूषधाम रोहिण्या सहितार्घं गृहाण वै। क्षीरोदार्णवसंभूते कमले कमलालये प्रयच्छ सर्वकामान्मे विष्णुवक्षःस्थलालये। पुत्रान् देहि यशो देहि सौख्यं सौभाग्यमेव च॥ कालिकालि महाकालि विकरालि नमोस्तु ते। त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले। एकनाथे जगन्नाथे जमदग्निप्रियेव्यये। रेणुके त्राहि मां देवि राममातः शिवं कुरु। कुरुश्रिये महालक्ष्मि अश्रियं त्वाशु नाशय। मन्त्रैरेतै महालक्ष्मीः प्रार्थ्य श्रोत्रियषितां। श्रीसूक्तेन तथा वह्नौ पद्मानि जुयाच्छुचिः। पायसञ्चैव बिल्वानि तदलाभे तथा घृतं। ग्रहेभ्यश्चैव होतव्यं समिच्चरुतिलादिकं। चन्दनं तालपत्रञ्च पुष्पमालादिकं तथा॥ नेवे शूर्पेषु भक्ष्याणि चित्राणि बहुविधानि तु। प्रत्येकं षोडशैतानि पूगपर्णानि चैव हि। तान्यन्येन समाच्छाद्य

॥ व्र ॥ व्रती दद्यात्समन्त्रकं। क्षीरोदार्णवसंभूता लक्ष्मीश्चन्द्रसहोदरा। व्रतेनानेन संतुष्टा प्रीयतां विष्णुवल्लभा। इन्दिरा प्रतिगृह्णाति इन्दिरा वै ददाति
॥ ७२ ॥ इन्दिरा तारिणीभाभ्यां इन्दिरायै नमोनमः। दत्वार्घोपायनादींश्च श्रोत्रियाणांच योषितां। चतस्रः प्रतिमास्तास्तु ब्राह्मणाय निवेदयेत्। एवं
तु निर्वर्त्य व्रती भोजनमाचरेत। स्कंद उवाच॥ केनेदं स्वीकृतं पूर्वं कथमस्मिन् प्रकाशितं। ब्रूहि मे तत्वतो देव यद्यहं तव वल्लभः। शङ्कर उवाच॥
आसीद्राजा सार्वभौमो मङ्गलार्णं इति श्रुतः। कुण्डिने नगरे रम्ये तस्य पद्मावती प्रिया। तमागतः कश्चिदेकः सेवको ब्राह्मणोत्तमः। अज्ञातनाम्न
स्तस्यासौ नाम चक्रे नृपस्तदा। तवल्लक इति ख्यातो बभूव द्विजसत्तमः। कदाचिन्मृगयासक्तो भूपालो वनमाविशत्। तत्र विद्धा वराहादीन्मृगान्
हत्वा सहस्रशः। क्षुत्तृट्परिगतः श्रान्तो वृक्षमूलमुपाश्रितः। उदकान्वेषणे चारान् प्रेषयामास सर्वशः। वने जलन्तु नापश्यन् क्वचित् भ्रान्त्वा प्रयत्नतः
ते गत्वा नृपतिं प्रोचुर्नाम्बु भ इति दुःखिताः। तवल्लकोपि बभ्राम विपिनं तदतन्द्रितः। भ्रममाणस्तदापश्यत्कस्मिंश्चिद्गनगह्वरे। रम्यं सरोवरं दिव्यं
कुमुदोत्पलमण्डितं। तत्रापश्यद्देवकन्या दिव्यरूपा मनोरमा। चार्वंगीश्चारुनयनाः पीनोन्नत पयोधराः हारकंकण केयूर नूपुरालंकृताः शुभाः। पूज
यन्ती महालक्ष्मीं व्रतरूपेण सादरात्। तवल्लकोपि पप्रच्छ किमिदं कथ्यतामिति। स्त्रिय ऊचुः। महालक्ष्मीव्रतमिदं सर्वकामफलप्रदं। क्रियते
स्माभिरेकाग्रमनोभिस्तच्चभक्तितः। तवल्लकोपि तच्छ्रुत्वा व्रत जग्राह भक्तिमान्। तदनुज्ञां गृहीत्वास्य जलमादाय सत्वरः। आजगाम जलंतस्मैदत्वा
प्रांजलिना सह। जलं पीत्वा नृपस्तस्य दृष्टवान्दोरकं करे। किमिदन्दोरक विद्वन् किं व्रतं कृतवानसि। राज्ञा पृष्टस्तवल्लोपि कथयामास तद्व्रतं। तच्छ्रु
त्वा राजशार्दूलो व्रतं जग्राह भक्तिमान्। तवल्लकेन सहितो राजा स्वपुरमाययौ। पद्मावतीगृहङ्गत्वा तया रंतुं गतः सह। रममाणाथ सा देवी तेन रा
ज्ञा प्रियेणवै। तं दृष्ट्वा दोरकं हस्ते कुपितात्यंतकोपना। कया त्वं वंचितो ब्रूहि कया बद्धं सुदोरकं॥ मावादीरन्यथाचैतत लक्ष्मीव्रतमनुत्तमं। इत्युक्ता ७२
तु प्रियेणासौ हस्ते चिच्छेद दोरकं। ज्वालामालाकुले वह्नौचिक्षेपात्यतिकोपिता। हाहाकष्टमिदं पाप कृतं मूढतया त्वया। इतिनिर्भर्त्स्य तां रा

जा तत्याज वनगह्वरे। साच हानिं ययौ पश्चात्तच हानिं ययौ नृपः। महालक्ष्म्यपचारेण सारण्ये जलवर्जिते। भ्रममाणा वने तस्मिन्नकश्चिद्गतिमाश्रुयात्
विचरन्ती वने तत्र ऋषेः कस्यचिदाश्रमं। ददर्श मृगसंकीर्णं शांतं कृष्णमृगान्वितं। तत्रापश्यत् वने रम्ये वसिष्ठं मुनिपुङ्गवं। ववन्दे चरणौ तस्य विसंज्ञा
दुःखकर्षिता। चिरं ध्यात्वा मुनिस्तस्याः ज्ञातवान्दुःखकारणं। महालक्ष्म्यपचारेण ज्ञातं विज्ञान चक्षुषा तद्व्रतं कारयामास तस्या दुःखोपशान्तयेतद्दुः
खं तत्क्षणादेव विनष्टमभवत्तदा। पुनश्च मृगयाशक्तो भूपालो वनमाविशत्। कश्चिन्मृगं समाविद्ध्य बाणेनैकेन वाक्रमान्। अन्वगच्छन्मृगपदं तस्यां भुवि
दसागमः। वरं मुनिं ददर्शाग्रे वसिष्ठं वीतकल्मषं। कृतातिथ्यक्रियो दृष्ट्वा चरंतीं वह्निरंतिकात्। हावभावविभासाग्रे हरन्तीं हरिणेक्षणां। मन्दाग्नि
गत्य नृपतिः प्रोवाच मधुरं वचः बामोरू कासि कल्याणि किमर्थं चरसे वने किन्नरी मानुषी वा त्वं यक्षिणी चारुहासिनी। किमत्र वक्रनोक्तेन भजमानं
भजस्व मां। नृपेण तेन भक्त्योक्ता सस्मिता वाक्यमब्रवीत्। पुनर्भजामि चाहं त्वामवेहि महिषीं तव। महालक्ष्म्यपचारेण त्वयाहीना वसाम्यहं।
मुनींद्रस्याश्रमे रम्ये तरुगुल्मोपशोभिते। ममोपरि कृपाविष्टो महालक्ष्मीव्रतोत्तमं। कारयामास विधिवत्सर्वविघ्नोपशांतये। तयोक्तं वचनं
श्रुत्वा सचोत्फुल्लविलोचनः। ऋषेरनुज्ञा मादाय प्रियामादाय सत्वरः। हृष्टपुष्टजनैर्जुष्टं पताकाध्वजशोभितं। प्रविवेश तया सार्द्धं स पौरैरभिवन्दितः।
महालक्ष्म्या व्रतं भूपस्तया सह चाकारह भुक्तोरुभोगान् विपुलान् पुत्रैः पौत्रैः समावृतः। भूपालः सार्वभौमोऽभूत्तवल्लोमात्यतां ययौ। महालक्ष्मीप्रसादेन
सन्निधिः सर्वसम्पदां। एवं प्रभावा सा देवी नराणामिष्टदायिनी। सर्वपापहरा देवी सर्वदुःखापहारिणी। एवं षोडशवर्षं तु कर्त्तव्यं व्रतमुत्तमं
या करिष्यति तां भक्त्या स्वयं सिद्धिरुपासते। लोकपालाश्च पुष्णन्ति देशा इव मनोरथान्। नारी वा पुरुषः करिष्यति मुदा भक्त्या व्रतं यत्नतः। सेवां
ते हरिरुद्रपद्मजसुराः पुष्यन्ति तस्य प्रियं। तत्यादौ परिरंजयन्ति मनुजा मौलिप्रभामण्डलैस्तस्मिन्नेव कुटुविनी वसति सा लक्ष्मीः स्वयं विष्णुना सद्भक्त्या
वाप्यभक्त्यावा कुर्वंतं व्रतमुत्तमं। अन्तकाले स्वयं विष्णुः संसारात्परिरक्षति। य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः। न संत्यजति तं लक्ष्मीरलक्ष्मी

॥ व्र ॥ मच कामयेत् । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते । इतिस्कांदोक्तं महालक्ष्मीव्रतं ॥ युधिष्ठिर उवाच ॥ सखान लाभपुत्रायुः सर्वैश्वर्यसुखप्रद
॥ ७३ ॥ व्रतमेकं समाचक्ष्व विचार्य्य पुरुषोत्तम ॥ श्रीकृष्ण उवाच ॥ दुर्वारदृत्तदैत्येय परिव्याप्ते चिविष्टपे एतदेव हृतस्वादौ देवेन्द्रः प्राह नारदं । तस्य श्रुत्
ततो वाक्यं मनुनिः प्रत्यभाषत ॥ नारद उवाच ॥ पुरन्दर पुरा पूर्वं पुरमासीत्सुशोभनं । रत्नगर्भाऽभवद्भूमिर्यत्र रत्नाद्यभूधरा यत्रांगनाजनापांगवि
गलोचनसायकैः । चैलोक्यं स्ववशश्चक्रे देवः कुसुमसायकः । चतुर्वर्गजनिर्यत्र यत्र चित्रविभूषणं । विश्वकर्मापि यद्वीक्ष्य कंपयत्यनिशं शिरः । यत्रा
भवन्महीपालो मङ्गलो मङ्गलालयः । चिन्नदेवी प्रिया तस्य दुर्भगैका वभूवह । अन्यातु चोलदेवी या महिषी सा यशस्विनी । कदाचिन्मङ्गलो
राजा चोलदेवीसहायवान् । प्रासादशिखरारूढः स्थलीमेकामपश्यत । तामालोक्य महीपालः स्मरस्मेरमुखांवुजां । चोलदेवीं प्रतिप्राह दन्तद्यो
तितदिङ्मुखः । चस्थलाचि तवोद्यानं कीर्तिनंदितनन्दनं । कारयामि तवोद्दिष्टं तत्रोद्यानमकारयत् । सम्पन्नञ्च तदुद्यानं नानाद्रुमलतान्वितं ।
नानारत्नकसंयुक्तं नानाकृत्तिसमाकुलं । अथागत्य महाकोलः तनुन्यस्तनभस्तलः । पङ्कप्राहटघनश्यामस्वचुराचिन्नचस्थलः । दंष्ट्राविशिष्टचन्द्रार्द्धो
प्रलयांभोधरध्वनिः । तद्भुनक्रीति विज्ञाय समेत्योद्यानपालकाः । सभयास्तस्य हृत्तांतमूचुस्ते नृपतेः पुरः । तदाकर्ण्य ततो राजा क्रोधाकुलितलो
चनः । वधाय दंष्ट्रिणस्तस्य सन्दिदेशाखिलं वलं । ततश्चचाल भूपालस्त्रिगण्डगलितैर्गजैः । आशावयन्मही सर्वा वाजि हृन्दहतांवरां । चालयन्निखि
लान् शैलान् स्यन्दनौघ मरुद्भरैः । पत्तिव्रात महाध्वानैः पूरयन्निखिलादिशः । ततो गाठं समाहृत्य तदुद्यानं नरेश्वरः । उवाचोच्चैरिति स्वानैर्दिशो मु
खरयन्दश । पथि यस्य वराहोयं प्रयात्युपवनांतिकं । तस्यावश्यं शिरश्छेदं विदधामि रिपोरिव । तस्य भूपस्य तद्वाक्यं समाकर्ण्य स शूकरः । जगामास्यै
व मार्गेण प्राणिनश्चेष्टितं यथा । ततः क्रुधा महीपालः कशयाश्वं प्रताड्य च । क्रीडाकलङ्कितस्येन्दोर्मार्गे तस्यैव सोगमत् । गत्वाथ विपिनं घोरं ७३
सिंहशार्दूलसङ्कुलं । तमालतालहिंतालशालार्जुनसमाहृतं । तिल्लित्सकारसंभारवाचालितदिगन्तरं । तत्रैकस्त्वेत संपश्यन् वहु वभ्राम भूपतिः ।

कोलो वेलामवाप्याथ सोऽभवद्राजसम्मुखः । भक्तेन सोऽवधीत् कोलं वज्रेणाद्रिं यथा भवान् । अथ व्योम्नि विमानस्थः स्मरसुन्दरविग्रहः । कोलरूपं परित्य
ज्य सो ब्रवीन्मङ्गलं नृपं । गन्धर्व उवाच ॥ स्वस्तितेस्तु महीपाल त्वयामुक्तिः कृता मम । तथाकर्णय वृत्तान्तं येनाहं आतईदृशः । एकदा देवताहृष्टैः
संस्तुतः कमलासनः । चञ्चत्पुटादिभिस्तालैः षड्जाद्यैः सप्तभिः स्वरैः मन्द्रादिभिस्त्रिभिर्मानैर्गीयमानं मया नृप । नाना स्थानगुणोपेतमश्रौषीद्गीतमुत्तमं ।
गीयमानस्तुतः स्थानात्ततोऽहं कर्मणामुना । शप्तश्चित्ररथस्तेन ब्रह्मणा सृष्टिकर्मणा । ब्रह्मोवाच ॥ कोलोभवेतिमे दिव्यां मुक्तिस्तेतु यदातदा । निर्जिता
खिलभूपालो मङ्गलस्त्वां हनिष्यति । तदद्यघटितं सर्वं त्वत् प्रसादान्महीपते । तद्गृहाण वरं भूप देवस्यापि सुदुर्लभं ॥ महालक्ष्मीव्रतन्दिव्यं चतुर्वर्ग
फलप्रदं । लभस्व सार्वभौमत्वं गच्छराज्यं निजं द्रुतं ॥ नारद उवाच । चित्ररथोऽथ गन्धर्व उक्त्वेदं भूपतिं प्रति । अन्तर्धानं गतस्तुष्टः शरत्काल इवाम्बुदः ।
अथ मङ्गलभूपालः पार्श्वस्थं द्विजमाकुलं । विलोक्य वटुकं कश्चित् कक्षानिक्षिप्तसम्बलं । उवाच मधुरां वाचं स्मितपूर्वां शुचिस्मितां । देवस्त्वं दानव
स्त्वं वा गन्धर्वोवाथ राक्षसः । सत्यं वद वटो कस्मात् किमर्थं त्व मिहागतः । श्रुत्वेत्याशिष्य तं विप्रः प्राह त्वद्देशसंभवः । अहं सार्धं त्वया यातस्तदादि
श्य यथोचितं । राजाथ तमुवाचेदं त्वं वटो नूतनाश्रयक । अपल्याणं विधायाश्वं तूर्णं तोयञ्च पायय । अथविश्राम्य भूपालं वटुको वटपादपे । तथा कृत
तुरंगंच समारुह्य महामतिः । जगाम पक्षिघोषेण यत्रास्ते सुन्दरं सरः । कमलैकविलासेन रथांगाभरणे न च । वनमालालयत्वेन दधन्नारायणीं
तनुं । भग्नवायु सुतोद्योगमच्चारं विवर्जितं । नाङ्किताऽगस्त्यकृष्णार्त्ति प्रसन्नं सागराधिकं । पङ्क्तिमग्नोऽथ तत्राश्वः पृष्ठादुत्तीर्य्य तस्य सः । चतुर्दिशं निरीक्ष्या
थ तस्यैव सरसस्तटे । दिव्यवस्त्रपरीधानां दिव्याभरणभूषितां । कथयन्तं कथां दिव्यां स्त्रीणां सार्थमपश्यत । उपसृत्याथ तं सार्थं तद्वृत्तान्तं निवे
द्यच । कृतांजलिरिति प्राह वटुर्मधुरया गिरा ॥ वटुरुवाच ॥ एतत्किं क्रियते सार्थ त्वया भक्तिपरेणवै । कोविधिः किं फलं चास्य ब्रूहि तन्मे यथा तथं
,त्वाथ तमुवाचेदं सार्थं करुणाया गिरा । सार्थउवाच । शृणु विप्रैकचितेन श्रद्धाभक्ति समन्वितः । या माया प्रकृतिः शक्ति स्त्रैलोक्येष्वभिधीयते । व्रतमेत

॥ म ॥ महालक्ष्म्यास्तस्याः सर्व्वफलप्रदं। श्राकर्णय विधिं चास्य कथ्यमानं मया वटो। भाद्रे मासि सिताष्टम्यामारम्भोऽस्य विधीयते। प्रातः षोडशकत्वस्तु
॥ ७४ ॥ प्रक्षाल्यांघ्रिकरौ मुखं। तन्तु षोडशसयुक्तं ग्रन्थि षोडशसंयुतं। मालती पुष्पकर्पूरचन्दनागरुचर्चितं। लक्ष्म्यै नमोऽथ मन्त्रेण प्रतिग्रन्थ्याभिमन्त्रितं। धन
धान्यं धरांधर्मं कीर्त्तिमायुर्यशश्श्रियं। तुरगान् दन्तिनः पुत्रान् महालक्ष्मि प्रयच्छ मे। मन्त्रेणानेन बध्वाथ डोरकं दक्षिणे करे। काण्डानि षोडशादाय
दूर्वायास्त्वाक्षतानि च। एकचित्तः कथां श्रुत्वा पूजयेत्तैस्तु डोरकं। ततस्तु प्रातरारभ्य यावत्स्यादसिताष्टमी। तावत्प्रक्षाल्य हस्तौ तु पादादीनि कथां
तथा। शृणुयात्प्रत्यहं विप्र तत् संख्यैरक्षतादिभिः। अथ कृष्णाष्टमीं प्राप्य नक्तकाले जितेन्द्रियः। स्नातः शुक्लांबरधरो व्रती पूजागृहं विशेत्। तत्रोप
विश्य पूर्व्वास्यस्त्वाकधौतासनोपरि। श्वेतपत्रे लिखेदष्टदलं कमलमुज्वलं। ऐन्द्र्यादिशक्तिसंयुक्तं पार्श्वपत्रं सकेसरं। कर्णिकायां ततो लक्ष्मीं कर्पूरक्षोदपां
डुरां। शुभ्रवस्त्रपरीधानां मुक्ताभरणभूषितां। पङ्कजासनसंस्थानां स्मेराननसरोरुहां। शारदेन्दुकलाकान्तिस्निग्धनेत्रां चतुर्भुजां। पद्मयुग्माभयदां
करव्यग्रकरांवुजां। अभितो गजयुग्मेन सिच्यमानां घटांवुना। सञ्चिन्त्यैवं लिखेद्देवीं कर्पूरागरुचन्दनैः। ततस्त्वावाहनं कुर्यात् मन्त्रेणानेन सुव्रती।
महालक्ष्मि समागच्छ पद्मनाभपदादिह। पञ्चोपचारपूजेयं त्वदर्थं देवि सर्व्वदा। इत्यावाहनमन्त्रः। आलयस्तेहि कल्पितः कमलं कमलालये। कम
ले कमलेऽस्मिन् स्थितिं त्वं कृपया कुरु॥ स्थापनमन्त्रः॥ गङ्गादिसलिलाधारं तीर्थमन्त्राभिमन्त्रितं। दूरयात्राश्रमहरं पाद्यं मे प्रतिगृह्यतां॥ पाद्य
मन्त्रः॥ स्नानं तव महालक्ष्म्याः कर्पूरागरुवासितं। सुतीर्थेभ्यः समानीतं स्नानं तत् प्रतिगृह्यतां॥ स्नानं॥ मलयाचलसम्पन्नं नानापन्नगरक्षितं।
शीतलं बहुलामोदं चन्दनं प्रतिगृह्यतां॥ चन्दन मन्त्रः। मिलत्परिमलामोदं मत्तालिकुलसङ्कुलं। आनन्दिनन्दनोद्यानं पद्मायै कुसुमं नमः॥ पुष्प
मन्त्रः॥ गन्धसम्भारसन्नद्धं पृथुवस्तुसमुद्भवं। सुरासुरनरानन्दि धूपं देवि गृहाण मे। धूप मन्त्रः॥ श्रियं प्रजापतेः लक्ष्मीं वरदां विष्णु ७४
वल्लभां हिरण्यामां सुवर्णमालिनीं पद्मवासिनीं पद्मप्रियां मुक्तालङ्कारां। सूर्यां चन्द्रां विश्वमर्त्तिं विश्वभूतिं। ऋद्धिं समृद्धिं तुष्टिं धनेश्वरीं शुद्धांभोगि

नीं भोगदां धात्रीमिति ॥ मार्तण्डमण्डलाखण्ड चन्द्रविम्बाग्नितेजसा। निधानं देवि दीपोऽयं निर्मितस्तव भक्तितः ॥ दीप मन्त्रः ॥ देवतालयपाताल भूतलाधारधान्यजं। षोडशाकारसम्भारं नैवेद्यं ते नमः श्रिये ॥ नैवेद्य मन्त्रः ॥ स्नानादिकं विधायापि यतः शुद्धिरवाप्यते। तदेतदाचमनीयं महालक्ष्मी विधीयतां ॥ इत्याचमन मन्त्रः। पातालतलसम्भूतं वदनांभोजभूषणं। नानागुणसमाकीर्णं तांवूलं देवि ते नमः ॥ तांवूल मन्त्रः ॥ तन्तुसन्तानसंयुक्तं कलाकौशलनिर्मितं। सर्व्वाङ्गाभरणं श्रेष्ठं वसनं परिधीयतां ॥ वस्त्र मन्त्रः ॥ विष्णोर्वक्षसि पद्मे च शङ्खे चक्रे तथाम्बरे। लक्ष्मी देवी यथासि त्वं मयि नित्या तथाभव ॥ इति प्रार्थना ॥ उत्तार्य्य दोरकं बाह्वोर्लक्ष्मीपार्श्वे निवेदयेत्। लक्ष्मिदेवि गृहाणत्वं दोरकं यन्मयाधृतं। कथां श्रुत्वा सुवर्णञ्च दत्वाचार्याय दक्षिणां। एवं निर्वर्त्य विधिवत् पूजनं वटुक श्रियः। चातुर्वर्ण्याय देयाच यथा शक्त्या च दक्षिणा। दीपान् षोडशपिण्डींश्च गोधूमस्य द्विजातये। दत्वा तत् संख्यया भुक्ता रात्रौ जागरणं चरेत्। चन्द्रोदयेथ संजाते दद्यादर्घं ततोव्रती। मन्त्रेणानेन विप्रेन्द्र शङ्खेनांवु फलादिना। नमोस्तुते निशानाथ लक्ष्मीभ्रातर्नमोस्तुते। व्रतं संपूर्णतां यातु गृहाणार्घं विभो मम ॥ इति चन्द्रार्घः ॥ प्रातर्विसर्ज्जयेद्देवीं मंत्रेणानेन सुव्रती। पङ्कजं देवि सम्त्यज्य मम वेश्मनि संविश। यथा सपुत्रभृत्योऽहं सुखीस्यां त्वत्प्रसादतः ॥ इति विसर्जनं ॥ षोडशाब्दे तु सम्पूर्णे कुर्य्यादुद्यापनं व्रती ॥ विधिना येन विप्रेन्द्र शृणु श्रद्धासमन्वितः। दातव्या धेनुकाश्चैव स्वर्णशृङ्गादि संयुता। श्रोत्रियाय सुवर्णञ्च तथान्नवसनादिकं। यथा शक्त्या सुवर्णं च दत्वा पूर्णं भवेद्व्रतं। द्विजेभ्यः षोडशेभ्यश्च प्रदद्याद्वसनादिकं। सार्थ उवाच ॥ एतत्ते कथितं विप्र व्रतानां व्रतमुत्तमं। यद्विधानादनायासाल्लभते वांछितं फलं। कृत्वा व्रतं परं विप्रराजानन्तं च कारय। व्रतमेतत्त्वया विप्र देयं श्रद्धावते परं। नास्तिकानां पुरस्तात्तु न प्रकाश्यं कथञ्चन। नमस्कृत्वाथ तं सार्थं पङ्कादुत्थाप्य वाजिनं। संप्रीयांभस्तथादाय पद्मिनो पत्रयंचितं। आरुह्य तुरगं विप्रो राजान्तिकमुपागतः। निवेद्य तद्व्रतं विप्रो राजानमप्यकारयत्। नानाप्रकारसम्भारमाकुलं वटुकस्य च। व्रतानुभावादभवत् सभूभृत् भूभृतांवरः। अथारुह्य महीपालो वटुपर्याणितं हयं। तद्व्रतस्य प्रभावेण तूर्णं स्वपुर

॥ म ॥ मागतः। तमायान्तं समालोक्य राजानम्भू पुरन्दरं। उत्सवं चक्रिरे पौरास्तौर्यादिक पुरःसराः। चलत्पताकादेर्मालं लसत्कलशमौक्तिकं। पुरं नृत्यं दिवाभ
॥ ७५ ॥ ति कृत्स्नं घण्टौघघर्घरैः। अथोत्कलिकया काचिद्धावतिस्म वराङ्गना। चलन्मुक्तालताजालैस्तनुष्कमिव कुर्वती। काचिद्विमुक्तकेशैव कृतैकनयनाञ्जना
काचिन्नितंवभारार्त्ता काचित्पीनपयोधरा। अथाविशन्महीपालो वटुना सहितो गृहं। पौरनारीजनाक्षिप्तलाजैः पूरित विग्रहः। अथो तीर्थ्यं दयान्तस्स
इटुवाङ्कवलम्बितः। जगाम मङ्गलो राजा चोलदेवी तु यच वै दृष्वातु चोलदेवी सा दोरकं राजवाहुके विदृष्य मनसा क्रुद्धा शंकां चक्रे नृपेत्विमां। चास्ते
टकस्त्रव्याजेन गतोन्यां वल्लभां प्रति। सौभाग्याय तया बद्धो दोरको भूभुजोभुजे तथैव वटुकस्तार्यं द्रष्टुं मां प्रेषितो ध्रुवं। ततो दुर्देव दुष्टात्मा कोपादा
च्छिद्य दोरकं। चिक्षेप च महीपृष्ठे स्वसौभाग्यसुखैः सह। न ववोध च तां राजा चोटयन्तीं च दोरकं। सामन्त मन्त्रिभृत्याद्यैः कुर्वन्वार्त्तां वनोद्भवां। चि
ल्ल देव्या सदा काचिद्दासी द्रष्टुं समागता। तया दोरकमादाय वटुमापृच्छ्य तद्व्रतं। तद्व्रतस्य विधानार्थं स्वस्वामिन्यै निवेदितं। ततो नूतनमाहूय चिल्ल
देव्यकरोद्व्रतं। अथ संवत्सरेतीते लक्ष्मीपूजादिने नृप। तौर्यचिकस्य निस्वानं चिल्लदेव्या गृहेऽशृणोत्। तदाकर्ण्य महीपालो नूतनं वटुमब्रवीत्।
अद्य चाद्य दिनं लक्ष्म्याः स व्रतस्य क्व दोरकः। इति पृष्टो नृपं प्राह दोरकचोटनक्रमं। तच्छ्रुत्वा मङ्गलो राजा चोलदेव्यै प्रकुप्यच। मयाद्य पूजनं कार्यं
चिल्लदेवी गृहं प्रति। अथ मङ्गल भूपालो नूतन वाक्यवलंबितः चचाल कमलाचार्यैः चिल्लदेवी गृहं प्रति। अत्रान्तरे महालक्ष्मी वृद्धरूपं विधायच।
जिज्ञासार्थं गृहं तस्या चोलदेव्याः समागता। गच्छगच्छाति दुष्टस्त्वं किं गृहागमनेन च। तया दुराशयात्यर्थं लक्ष्मी साप्यव मानिता। ततः क्रुद्धा
महालक्ष्मी चोलदेवी मभाषत। शशापाथ महालक्ष्मी चोलदेवीं पुनः पुनः। कोलास्या भवदुष्टे त्वं यत्त्वया ह्यवमानिता। कोलापुरमितिख्यातं चितौ
नम्मङ्गलं पुरं। अथायाता महालक्ष्मीश्चिल्लदेवीनिकेतनं। वहुधा चिलदेव्या सा लक्ष्मी संमानितार्चिता। वृद्धरूपं परित्यज्य प्रत्यक्षा सा भवत्तदा। प ७५
ञ्चोपचार पूजाभिःश्रियं राज्ञी ततोर्चयेत्। अतितुष्टा ततो लक्ष्मी चिल्लदेवी मुवाचह। श्रीरुवाच। अर्चनात्ते प्रसन्नास्मि चिलदेवी वरं वृणु। वव्रे वरं

ततो राज्ञी चिल्लदेवी सुभाशया। ये करिष्यन्ति ते देवि व्रतमेतत्सुरेश्वरि। तद्गेहं न त्वया त्याज्यं यावच्चन्द्र दिवाकरौ। अथारभ्य कथा ह्येषा भूपसंव
न्धिनी तु या। ख्यातिं याति चितौ देवि भक्तिर्भवतु मे त्वयि। सद्भावेन कथामेतां ये शृण्वन्ति पठन्ति च। तेषांहि वांछितं सर्वं त्वया देयं सदैवहि।
तथेत्युक्ता महालक्ष्मीस्तत्रैवांतरधीयत। अथ मङ्गलभूपालस्तत्रागत्य श्रियोवनं। चक्रे परमया भक्त्या चिल्लदेव्या समन्वितः। अथेर्ष्यया दुराचारा चिल्लदेवी
गृहंप्रति। चोलदेवी समायाता द्वारस्थैर्वारिता जनैः। ततो जगाम विपिनं यत्रासीदङ्गिरा मुनिः। अथालोक्याद्भुताकारां ज्ञानदृष्ट्या विचिन्त्य तां।
समुनिः श्रीव्रतं दिव्यं चोलदेवीमकारयत्। व्रते कृतेथ संजाता चोलदेवी महायशा। दाक्षिण्य केलिलीलाभिर्लावण्यैक निकेतना। ततः कदाचिदाग
त्य वनमाखेटके नृपः। मुनेर्वेश्मनि राज्ञीं तां ददर्श वामलोचनां। अथ राजा मुनिं प्राह केय धन्येति कथ्यतां। तद्वृत्तान्तं समाख्याय राज्ञे तां प्रददौ
मुनिः। अथागत्य निजं राज्यं चोलदेवीसमन्वितः। चिलदेव्याच सहितो वुभुजे मङ्गलोनृपः। चिल्लदेवी बरं वव्रे चोलदेवीसमागमं। समुद्रस्य य
था गङ्गा यमुने सङ्गमे सदा तथा मङ्गल भूपस्य जाते ते वामलोचने परस्पराधिके ते तु प्रीते राज्ञो वभूवतुः। चिल्लदेव्याः समं सोथ चोलदेव्या
सहाखिलां। सप्त द्वीपवतीं पृथ्वीं वुभुजे मङ्गलो नृपः। व्रतस्यास्यैव सामर्थ्यात् वटुकः सोपि नूतनः। अभून्मङ्गलभूपस्य मन्त्री तव यथागुरुः। भुक्त्वा
थ सकलान् भोगान् मङ्गलो भूभुजांवरः। स पुनः स्वर्गमेत्याभून्नत्रं विष्णुदैवतं। नारद उवाच॥ एतत्ते कथितं शक्र व्रतानां व्रतमुत्तमं। यत्कथा
श्रवणेनापि लभते वांच्छितं फलं। प्रयागमिव तीर्थेषु देवेषु भगवानिव। नदीषु च यथा गङ्गा व्रतेष्वेतत्तथा व्रतं। धर्मं चार्थंच कामञ्च मोक्षञ्च
यदि वांच्छसि। तदेतच्च व्रतं शक्र कुरु श्रद्धा समन्वितः। श्रीकृष्ण उवाच॥ व्रतमिदमथचक्रे नारदेनोपदिष्टं सुरपति रपि यस्माद्वांच्छितार्थं सलेभे
त्वमपि कुरु तथैतद्धर्मसूनो यथास्यादभिमतफलसिद्धिः पुत्र पौत्रादिदृष्टिः धनं धान्यं धरां धर्मं कीर्त्तिमायुर्यशःश्रियं। तुरगान्दंतिनः पुत्रान्महालक्ष्मी
प्रयच्छमे। इति भविष्योत्तरे महालक्ष्मी व्रतं। अथ सर्वाष्टमीष्वाश्विन कृष्णाष्टम्यां चाशोकाष्टमीव्रतं। हेमाद्रावादित्य पुराणे॥ अष्टमीषुच सर्वासु

॥ व्र ॥ पूजनीयाप्यशोकका। गन्धमाल्य नमस्कार धूप दीपान्न संपदा। तस्मिन्नहनि या भुंक्ते नक्तमिद्विवर्जितं। भवत्यथ विशोका सा यत्र यत्राभिजायते।
॥ ७६ ॥ मीषुच सर्वासु न चेच्छक्नोति वै मुने। प्रौष्टपद्मामतीतायां या स्यात्कृष्णाष्टमी द्विज। तत्र कार्य्यं व्रतंत्वेतत् सर्वकामफलप्रदं॥ इत्यशोकाष्टमीव्रतं इति श्री
दृनीलकण्ठात्मजभट्टशङ्कर कृतौ व्रतार्के ष्टमी व्रतानि॥ अथ नवमीव्रतानि तत्र चैत्र शुक्ल नवम्यां रामनवमी व्रतं। तच्चपरविद्धायां मध्याह्नव्यापिन्यां का॰
तदुक्तमगस्त्यसंहितायां। चैत्रशुद्धातु नवमी पुनर्वसु युतायदि। सैव मध्याह्नयोगेन महापुण्यतमा भवेत दिनद्वये ऋक्षयुक्त तदयुक्त मध्याह्न व्याप्तावव्याप्ता
वेक देशव्याप्तौवा उत्तरा। तदुक्तं तत्रैव नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यां वैदशम्यां पारणं भवेदिति तत्रैव चैत्रमासे नवम्यां
तु जातो रामः स्वयं हरिः। पुनर्वस्वृक्ष संयुक्ता सा तिथिः सर्वकामदा। श्रीरामनवमी प्रोक्ता कोटि सूर्य्यग्रहाधिका। केवलापि सदोपोष्या नवमी
शब्दसंग्रहात्। तस्मात्सर्वात्मना सर्वैः कार्य्यं वै नवमीव्रतं। अगस्त्य संहितायां। चैत्रे नवम्यां प्राक् पक्षे दिवापुण्ये पुनर्वसौ। उदये गुरुगौरांशे उच्चस्थे
ग्रहपञ्चके। मेषे पूषणि संप्राप्ते लग्ने कर्कटकाह्वये। आविरासीत्सकलया कौशल्यायां परः पुमान्। प्राक् पक्षे शुक्लपक्षे उदये लग्ने गुरु गौरांशे गुरु नवांशे।
तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतं सदा। तत्र जागरणं कुर्याद्रघुनाथ परोभुवि। भूवीतिस्वहादिव्याहृत्यर्थं प्रातर्दशम्यां कृत्वातु सन्ध्यायाः कालिकीः
क्रियाः संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः। ब्राह्मणान् भोजयेद्भक्त्या दक्षिणाभिस्तु तोषयेत्। गोभूतिलहिरण्याद्यै र्वस्त्रालङ्करणैस्तथा। रामं
भक्त्या प्रयत्नेन पूजयेत्परया मुदा। एवं यः कुरुते भक्त्या श्रीरामनवमी व्रतं। अनेक जन्म सिद्धानि पातकानि वहून्यपि। भस्मीकृत्वा व्रजेदेव तद्विष्णोः
परमं पदं। सर्वेषामप्ययं धर्मो भुक्ति मुक्त्यैक साधनः। अशुद्धो वापि पापिष्टः कृत्वेदं व्रतमुत्तमं। पूज्यःस्यात्सर्व भूतानां यथा रामस्तथैव सः। यस्तु
रामनवम्यां तु भुंक्ते सच नराधमः। कुंभीपाकेषु घोरेषु पच्यते नात्र संशयः। अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमं। व्रतान्यन्यानि कुरुते न तेषां ७६
फलभाग्भवेत्। गृहस्य कृत पापानि ख्यातानि सुवहून्यपि। महांतिच प्रणश्यन्ति श्रीरामनवमी व्रतात्। एकामपि नरो भक्त्या श्रीरामनवमीं मुने।

उपोष्य कृतकृत्यःस्यात्सर्व पापैः प्रमुच्यते। नरो रामनवम्यांतु श्रीरामप्रतिमा प्रदः। विधानेन मुनिश्रेष्ट समुक्तो नात्र संशयः। विधानेन प्रतिमादान विधिना॥ सुतीक्ष्ण उवाच॥ श्रीराम प्रतिमादानं विधानं वा कथं मुने। कथय त्वयि रामेपि भक्त्यास्य मम विस्तरात्। अगस्त्यउवाच॥ कथयिष्यामि तद्दिव्यप्रतिमा दानमुत्तमं। विधानं वापि यत्नेन यत् व्रतं वैष्णवोत्तमं। विधिस्त तत्रैव अष्टम्यां चैत्रमासेतु शुक्लपक्षे जितेन्द्रिः। दन्तधावन पूर्वंतु प्रातःस्नायाद्यथाविधि। नद्यां तडागे कूपे वा ह्रदे प्रस्रवणेपिवा। ततः सन्ध्यादिकाः कार्याः संस्मरन् राघवं हृदि। गृहमासाद्य विप्रेन्द्र कुर्यादौपासनादिकाः। दांतं कुटुंबिनं विप्रं वेदशास्त्रपरं सदा। श्रीराम पूजानिरतं सुशीलं दम्भवर्जितं। विधिज्ञं राममन्त्राणां राम मन्त्रैक साधनं। आहूय भक्त्या संपूज्य शृणु यत् प्रार्थयन्निति। श्रीराम प्रतिमा दानं करिष्येहं द्विजोत्तम। भक्त्याचार्यो भवत्प्रीतः श्रीरामोसि त्वमेवच। इत्युक्त्वा पूज्य विप्रं तं स्नापयित्वा ततः परं। तैलेनाभ्यज्य च स्नायाचिन्तयन् राघवं हृदि। तैलेनाज्य स्नापयित्वेत्यन्वयः श्वेतांवरधरः श्वेतगन्धमाल्यानि धारयन्। अर्चितो भूषितस्त्वैवं कृत मध्याह्निक क्रियः। अर्चितः कृतार्चनः आचार्य्यं भोजयेद्भक्त्या सात्विकान्नैः सुविस्तरं। भुञ्जीत स्वयमप्येवं हृदि राममनुस्मरन्। एभक्तव्रती तत्र सहाचार्यो जितेन्द्रियः। शृण्वन् राम कथां दिव्यामहःशेषं नयेन्मुने। सायं सन्ध्यादिकाः कुर्यात् क्रिया राममनुस्मरन्। आचार्य्यसहितो रात्रावधः शायी जितेन्द्रियः। वसेत्स्वयं नचैकान्ते श्रीरामार्पित मानसः। ततः प्रातः समुत्थाय स्नात्वा सन्ध्यां यथाविधि प्रातः सर्वाणि कर्माणि शीघ्रमेव समापयेत्। ततः स्वस्थमना भूत्वा विद्वद्भिः सहितो नघ। स्वगृहे चोत्तरे देशे रामस्योत्तम मण्डपं। स्वगृहे स्वगृहसमीपे चतुर्द्वारं पताकाद्यं सुवितानं सुतोरणं मनोरमं महोत्सेधं पुष्पाद्यैः समलं कृतं। शङ्खचक्र हनूमद्भिःप्राग् द्वारे समलं कृतं। गरुत्मच्छार्ङ्गवाणैश्च दक्षिणे समलं कृतं। गदा खड्गांगदैश्चैव पश्चिमे सुविभूषितं। पद्मस्वस्तिक नीलैश्च कौवेरे समलं कृतं। मध्ये हस्त चतुष्काद्या वेदिका युक्तमायतं। प्रविश्य नृत्यगीतैश्च वाद्यैश्चापि सुसंयत। पुण्याहं वाचयेत्तत्र विद्वद्भिः प्रीत मानसः। ततः सङ्कल्प ये देवं राममेव स्मरन्मुने। अस्यां रामनवम्यांच रामाराधनतत्परः। उपोष्याष्ट

॥ व्र ॥ सु यामेषु पूजयित्वा यथा विधि इमां स्वर्णमयीं रामप्रतिमाञ्च प्रयत्नतः । श्रीरामप्रीतये दास्ये रामभक्ताय धीमते प्रीतो रामो हरत्य
॥ ७७ ॥ पापानि सुवह्ननिमे । अनेकजन्मसिद्धानि अभ्यस्तानि महान्तिच । विलिखेत्सर्वतोभद्रं वेदिकोपरि सुन्दरं । मध्ये तीर्थादिकैः
पात्रस्थं स्थाप्यचर्चितं । सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत् । ततः स्वर्णमयीं रामप्रतिमां पलमात्रतः । निर्मितां द्विभुजां दिव्यां वाम
कस्थितजानकीं । बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने । वामेनाधः करेणापिदेवीमालिंग्य संस्थितां । सिंहासने राजतेतत्र पलद्वयविनिर्मिते ।
पञ्चामृतस्नानपूर्वं संपूज्य विधिवत्ततः । मूलमन्त्रेण नियतो न्यासपूर्वमतंद्रितः । दिवैवं विधिवत्कृत्वा रात्रौ जागरणं ततः । दिव्यां राम कथां श्रुत्वा
रामभक्तैः समन्वितः । नृत्यगीतादिभिश्चैव रामस्तोत्रैरनेकधा । यामाष्टके तथा पूज्या गन्ध पुष्पाक्षतादिभिः । कर्पूरागुरुकस्तूरीकह्लाराद्यैरनेकधा ।
पूजयन् विधिवद्भक्त्या दिवारात्रं नयेद्बुधः । ततः प्रातः समुत्थाय स्नानसन्ध्यादिकाः क्रियाः । समाप्य विधिवद्रामं पूजयेद्विधिवन्मुने । ततो हो
मं प्रकुर्व्वीत मूलमन्त्रेण मन्त्रवित् । पूर्वोक्तपद्मकुण्डे वा स्थंडिलेवा समाहित । लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः । साज्येन पायसेनैव स्मरन्ना
म मनन्यधीः । ततो भक्त्या सुसन्तोष्य आचार्य्यं पूजयेन्मुने । कुण्डलाभ्यां सरत्नाभ्यामङ्गुलीयैरनेकधा । गन्ध पुष्पाक्षतै र्वस्त्रैर्विचित्रैः सुमनोहरैः ।
ततो रामं स्मरन् दद्यादेवं मन्त्र मुदीरयेत् । इमां स्वर्णमयीं रामप्रतिमां समलंकृतां । चित्रवस्त्रयुगच्छन्नां रामोहं राघवाय ते । श्रीराम प्रीतये
दास्ये तुष्टो भवतु राघवः । इति दत्वा विधानेन दद्याद्वैदक्षिणां भुवं । अन्येभ्यश्च यथान्यायं गोहिरण्यादि शक्तितः । दद्याद्वासोयुगन्धान्यं य
थाविभवमाहतः । ब्राह्मणै सह भुञ्जीत तेभ्योदद्याच्च दक्षिणां । ब्रह्महत्यादि पापेभ्यो मुच्यते नात्र संशय । तुलापुरुषदानादि फलं प्राप्नोति सु
व्रत । अनेक जन्म संसिद्ध पापेभ्यो मुच्यते ध्रुवम् । बहुनाकिमिहोक्तेन मुक्तिस्तस्य करेस्थिता । कुरुक्षेत्रे महा पुण्ये सूर्य्यपर्वण्य शेषतः । तुलापुरुषदा ७७
नाद्यैः कृतैर्य्यल्लभ्यते फलम् । तत्फलं लभते मर्त्यो दानेनानेन सुव्रत । इति राम प्रतिमा दान सहितं रामनवमी व्रतम् । अथ रामनवमीव्रत पूजाविधिः ।

आचम्य प्राणानायम्य मास पक्षाद्युल्लिख्य सकल पाप क्षयकामो वा श्रीरामप्रीतये श्रीरामनवमी व्रतमहं करिष्ये। इति सङ्कल्पः॥ फल पुष्पाक्षत सहितं जल पूर्णं ताम्रपात्रं गृहीत्वा। उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव। तेन प्रीतो भवत्वंभो संसारात्त्राहिमां हरे। इति मन्त्रेण पात्रस्थं जलं क्षिपेत्। ततः शक्तितो हैमीं राम प्रतिमां कृत्वाग्न्युत्तारणपूर्वकं कपोलौ स्पृष्ट्वा मूलमन्त्र प्रणवादि चतुर्थ्यं त नाम रामाय देवत्व संख्यायै स्वाहेति मन्त्रं पठन् प्राणप्रतिष्ठां कुर्यात्। ततः कोमलांगं विशालाक्षमिन्द्रनील सम प्रभाम्। दक्षिणांगे दशरथं पुत्रावेक्षणतत्परं। पृष्ठतोलक्ष्मणं देवं सक्षं कनक प्रभम्। पार्श्वेभरत शत्रुघ्नौ तालवृंत करावुभौ। अग्रे व्यग्रं हनूमन्तं रामानुग्रह कांक्षिणमिति ध्यात्वा षोडशोपचारैः पूजयेत। आवाहयामि विश्वेशं जानकीवल्लभं विभुम्। कौशल्यातनयं विष्णुं श्रीरामं प्रकृतेः पर। सहस्रशीर्षेत्यावाहनं। श्रीरामागच्छ भगवन् रघुवीर नृपोत्तम। जानक्या सह राजेन्द्र सुस्थिरो भव सर्वदा। रामभद्र महेष्वास रावणांतक राघव। यावत्पूजां समाप्येहं तावत्त्वं सन्निधौ भवेति संन्निधापनम्। रघुनायक राजर्षे नमो राजीव लोचन। रघुनन्दन मे देव श्रीरामाभिमुखो भवेति संमुखो करणम्। राजाधिराज राजेन्द्र रामचन्द्र महीपते। रत्न सिंहासनं तुभ्यं दस्यामि स्वीकुरु प्रभो। पुरुषएवेत्यासनं त्रैलोक्यपावनानन्त नमस्ते रघुनायक। पाद्यं गृहाण राजर्षे नमो राजीव लोचन। एतावानस्येति पाद्यं। परिपूर्ण परानन्द नमो रामाय वेधसे। गृहाणार्घं मया दत्तं कृष्ण विष्णो जनार्द्दन। त्रिपादूर्ध्वेति अर्घम्। नमः सत्याय शुद्धाय दिव्याय ज्ञानरूपिणे। गृहाणाचमन नाथ सर्व लोकैक नायक। तस्माद्विराडित्याचमनं। नमः श्रीवासुदेवाय तत्वज्ञानस्वरूपिणे। मधुपर्कं गृहाणेमं जानकी पतये नमः। मधुपर्कं। पञ्चामृतं मयानीतं पयो दधि घृतं मधु। सशर्करं मया दत्तं रामत्वं प्रतिगृह्यतामिति। पञ्चामृत स्नानम्। ब्रह्माण्डोदर मध्यस्थै स्तीर्थैश्च रघुनन्दन। स्नापयिष्याम्यहं भक्त्या संगृहाण जनार्द्दन। यत्पुरुषेणेति स्नानं। सन्तप्त कांचन प्रख्य पीतांबर मिदं हरे। संगृहाण जगन्नाथ रामचन्द्र नमोस्तुते। तं यज्ञमिति वस्त्रम्॥ श्रीरामाच्युत यज्ञेश श्रीधरानन्त राघव। ब्रह्म सूत्रं सोत्तरीयं गृहाण रघुनन्दन। तस्माद्यज्ञादिति य

 ज्ञोपवीतम्। कुङ्कुमा गरुकस्तूरी कर्पूरोन्मिश्र चन्दनं। तुभ्यं दास्यामि राजेन्द्र श्रीराम स्वी कुरु प्रभो। तस्माद्यज्ञात् ऋचइति चन्दनं। अक्षतान्। तुलसी
 कुन्दमन्दार जातीपुन्नाग चन्दनैः। कदम्ब करवीरैश्च कुसुमैः शतपत्रकैः। नीलांबुजै र्बिल्वपत्रैः पुष्पमाल्यैश्च राघव॥ पूजयिष्याम्यहं भक्त्या संगृहाण
जनार्द्दन। तस्मादश्वा इति पुष्पम्। अथांगपूजा॥ श्रीरामभद्राय नमः पादौ पूजयामि। राजीवलोचनाय गुल्फौ रावणांतकाय जानुनी विश्वामित्र
प्रियाय नाभिं परमात्मने नमः हृदयम् श्रीकण्ठाय कण्ठं सर्वास्त्र धारिणे वाहू रघूद्वहाय मुखं वाचस्पतये उरू विश्वरूपाय जङ्घे लक्ष्मणाग्रजाय कटिं विश्व
मूर्त्तये मेढ्रं पद्मनाभाय जिह्वां दामोदराय दन्तान् सीतापतये ललाटं ज्ञानगम्याय शिरः सर्वात्मने सर्वांगमित्यंग पूजा वनस्पति रसो धूपो गन्धा
ढ्यः सुमनोहरः। रामचन्द्र महीपाल धूपोयं प्रतिगृह्यतां। यत्पुरुषमिति धूपोयं प्रतिगृह्यतां ज्योतिषां पतये तुभ्यं नमः रामाय वेधसे। गृहाण दीपकञ्चै
व त्रैलोक्य तिमिरापहं। ब्राह्मणोस्येति दीपं। इदंदिव्यान्नममृतं रसैः षड्भिः समन्वितं। राम राजेन्द्र नैवेद्यं सीतेश प्रतिगृह्यतां। चन्द्रमा मनसेति नैवेद्यं
तत आचमनम्। इदं फलमिति फलं। नागवल्लीदलैर्युक्तं पूगीफल समन्वितं। तांबूलं गृह्यतां राम कर्पूरादि समन्वितं। नाभ्या आसीदिति तांबूलं।
हिरण्य गर्भ गर्भस्थं हेमवीजं विभावसो। अनन्त पुण्यफल दमतः शांतिं प्रयच्छमे। सप्तास्यासन्निति दक्षिणा। नृत्यगीतादि वाद्यादि पुराण पठनादि
भिः। पूजोपचारै रखिलैः सन्तुष्टो भव राघव। मङ्गलार्थं महीपाल नीराजनमिदं हरे। सङ्गृहाण जगन्नाथ रामचन्द्र नमोस्तुते। नमो देवाधिदे
वाय रघुनाथाय शार्ङ्गिणे। चिन्मायानंद रूपाय सीतायाः पतये नमः॥ इति नमस्कारं॥ सर्व लोक शरण्याय रामचन्द्राय वेधसे। ब्रह्मानन्दैक रूपाय
सीतायाः पतये नमः। इति पुष्पाञ्जलिः। यानिकानिच पापानि ब्रह्महत्या समानिच। तानितानिविनश्यन्तु प्रदक्षिण पदे पदे। इतिप्रदक्षिणा॥
अशोक कुसुमैर्युक्तं रामायार्घं निवेदयेत्। दशानन वधार्थाय धर्म संस्थापनायच। राक्षसानां विनाशाय दैत्यानां निधनायच। परित्राणाय साधूनां जा ७८
तो रामः स्वयं हरिः। गृहाणार्घं मया दत्तं भ्रातृभिः सहितो नघेत्यर्घं॥ अथकथा॥ अगस्त्य उवाच। रहस्यं कथयिष्यामि सुतीक्ष्ण मुनिसत्तम। चैत्रे

मासे नवम्यांतु शुक्लपक्षे रघूत्तमः। प्रादुरासीत्ततो ब्रम्हन् तत्र व्रत्मैव केवलं तत्र जागरणं कुर्याद्रामस्य पुरतो बुधः। प्रतिमायाः यथाशक्ति पूजा कार्य्या यथाविधि। प्रातर्दशम्यां स्नात्वैव कृत्वा संध्यादिकाः क्रियाः। संपूज्य विधिवद्रामं भक्तिवित्तानुसारतः। ब्राह्मणान् भोजयेत्सम्यग् दक्षिणाभिस्तु तोषयेत्। गोभूतिलहिरण्याद्यैर्वस्त्रालङ्कारभूषणैः। रामं भक्त्या प्रयत्नेन प्रीणयेत्परया मुदा। एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतं। अनेकजन्मराशीनि पापानि सुबहून्यपि। भस्मीभवन्त्यशेषेण याति विष्णोः परंपदं। सर्वेषामप्ययन्धर्म्मो भुक्ति मुक्त्यैक साधनं। अशुचिर्वापि पापिष्टः कृत्वेदं व्रतमुत्तमं। पूज्यःस्यात् सर्वभूतानां यथा रामस्तथैवसः। यस्तु रामनवम्यांतु भुंक्ते सतु नराधमः। कुम्भीपाकेषु घोरेषु पतत्येव नसंशयः। अकृत्वा रामनवमी व्रतं सर्वोत्तमोत्तमं। व्रतान्यन्यानि कुरुते न तेषां फलभाग भवेत्। महांत्यपि प्रणश्यन्ति पापानि नवमीव्रतात्। एकामपि ततो भक्त्या श्रीरामनवमी व्रतं। उपोष्य कृतकृत्यःस्यात् सर्वपापैः प्रमुच्यते। नरो रामनवम्यांतु श्रीरामप्रतिमापरः। विधानेन नरश्रेष्ट संयुक्तो नात्र संशयः। सुतीक्ष्ण उवाच। श्रीरामप्रतिमादानं विधानं वा कथं मुने। कथयस्व यथा रामभक्तस्य ममविस्तरात्॥ अगस्त्य उवाच॥ कथयिष्यामि ते भक्त्या प्रतिमादानमुत्तमं। विधानं वापि यत्नेन यतस्त्वं वैष्णवोत्तमः। अष्टम्यां चैत्रमासे तु शुक्लपक्षे जितेन्द्रियः। दन्तधावनपूर्वंतु प्रातःस्नात्वा यथाविधि। नद्यां तडागे कूपे वा ह्रदे प्रस्त्रवणे पिवा। सन्ध्यादिकाः क्रियाः कुर्य्यात् संस्मरन् राघवं हृदि। गृहमागत्य विप्रेन्द्र कुर्य्यादौपासनादिकं। दांतं कुटुम्बिनं विप्रं वेदशास्त्रविदं सदा। श्रीरामपूजानिरतं शुचिं दंभविवर्ज्जितं। सर्वज्ञं राममन्त्राणां राममन्त्रैकसाधनं। आहूय भक्त्या संपूज्य वृणुयात् प्रार्थयेद्व्रतं श्रीरामप्रतिमादानं करिष्येहं द्विजोत्तम। तत्राचार्यो भव प्रीतः श्रीरामोसि त्वमेवच। इत्युक्त्वा भोक्तुमायातं स्नापयित्वा ततः स्वयं। तदैवाभ्यज्यतु स्नायाच्चिंतयन् राघवं हृदि। श्वेतांवरधरं देवं गन्ध माल्यादि धारयेत्। अर्च्चितो भूषितश्चैव कृत्वा मध्याह्निकीं क्रियां। आचार्य्यं पूजयेत्यस्यात्स्वात्विकान्नैः सुविस्तरं। भुञ्जीयात्स्वयमप्येवं हृदि राममनुस्मरेत्। एक भक्तं व्रतं तत्र वहाचार्य्यो जितेन्द्रियः। शयीत भूतले सम्यक् श्रीरामार्प्पितमानसः।

 ततः प्रातः समुत्थाय स्नात्वा सन्ध्यां यथाविधि। प्रातः सर्वाणि कर्माणि शीघ्रमेव समापयेत्। ततः स्वच्छमना भूत्वा विद्वद्भिः सहितोऽनघ। स्वगृहे चोत्तर
 भागे मण्डपद्वयमुज्ज्वलं। मण्डपंच चतुर्द्वारं ध्वजाः कार्य्याः सुविस्तरैः। फलैर्नानाविधैर्युक्तं पुष्पमालासुशोभनं। कदलीस्तम्भसंयुक्तं पुङ्गीभिः समलङ्कृ
तं तोरणैर्मनोरम्यं पुष्पाद्यैः समलङ्कृतं। शङ्खचक्र हनूमद्भिः प्राग्द्वारं समलङ्कृतं गरुत्मच्छार्ङ्गपाणिंच दक्षिणे सुविभूषितं गदाखेटककादींश्च पश्चिमेन विभूषित।
पद्मस्वस्तिक नीलैश्चकौवेर्य्यां समलङ्कृतं। मध्येहस्तचतुः कार्य्यां वेदिकां हस्तमयतां। विप्रैश्च गीत नृत्यैश्च वाद्यैश्चापि समन्वितं। पुण्याहं वाचयेत्तच विद्वद्भिः
प्रीत मानसैः। ततः सङ्कल्पयेद्देवं राममेवमनुस्मरन्। अस्यां रामनवम्यांतु रामाराधनतत्परः। उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि। इमां स्वर्ण
मयीं रामप्रतिमांतु प्रयत्नतः। श्रीरामप्रीतये दास्ये रामभक्ताय धीमते। प्रीतो रामो दहत्याशु पापानि सुवहूनिमे। अनेकजन्मलग्नानि अ
भ्यस्तानि महान्तिच। विलिखेत् सर्वतोभद्रं वेदिकोपरि सुन्दरं। मध्ये तीर्थोदकैर्युक्तं पात्रं संस्थाप्य चर्चितं। सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत्
ततः स्वर्णमयींरामप्रतिमां पलमात्रतः। निर्म्मितां द्विभुजां रम्यां वामांकस्थितजानकीं। विभ्रन्तीं दक्षिणे हस्ते ज्ञानमुद्रां महामुने। वामेनाथक
रेणैनां देहमालिंग्य संस्थितां। सिंहासनं राजतं च पलद्वयविनिर्म्मितं। पञ्चामृतस्नानपूर्वं संपूज्य विधिवत्ततः। मूलमन्त्रेण नियतो दद्याच्चैवमतन्द्रितः
एवं संपूज्य विधिवद्रात्रौ जागरणं तथा। दिव्यां रामकथां शृण्वन् रामभक्तिसमन्वितः। नृत्यगीतादिभिश्चैव रामस्तोत्रैरनेकधा रामाष्टकेन संस्तुत्य
गन्धपुष्पाक्षतादिभिः। कर्पूरागरु कस्तुरी कह्लाराद्यै रलङ्कृतां। संपूज्य विधिवद्भक्त्या दिवारात्रौ नयेद्बुधः। ततः प्रातः समुत्थाय स्नानसन्ध्यादिकाः
क्रियाः। संस्थाप्य विधिवद्रामं पूजये द्विधिवन्मुने। ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित्। पूर्वोक्त कुण्डे गृह्योक्तेस्थंडिले वा समाहितः। लौकिका
ग्नौ विधानेन शतमष्टोत्तरं नृप। आज्येन पायसेनैव स्मरन्नाम मतन्द्रितः। ततो भक्त्या सदा तुष्टो आचार्य्यं प्रार्थयेन्मुने। कुण्डलाभ्यां सुवर्णाभ्या 
मङ्गुलीयैरनेकधा। गन्ध पुष्पाक्षतैर्वस्त्रैर्विचित्रैस्सु मनोहरैः। ततो रामः स्वयं दद्यादिमंमच मुदीरयेत्। इमां स्वर्णमयीं राम प्रतिमां समलंकृतां।

चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते। श्रीराम प्रीतये दास्ये प्रीतो भवतु राघव । इति प्रतिमादान मंत्रः। इति दत्वा विधानेन दद्याद्दैदक्षिणां भुवं। अन्येभ्यश्च यथान्यायं गोहिरण्यादि शक्तितः। दत्वावासो धनं धान्यं यथा लङ्करणानिच। अगस्त्यउवाच॥ एवं यः कुरुते राम प्रतिमादान मुत्तमं ब्रह्मह त्यादि पापेभ्यो मुच्यते नात्र संशयः। तुला पुरुष दानेन फलमाप्नोति सुव्रत। अनेकजन्मसंसिद्धपापेभ्यो मुच्यते ध्रुवं। वज्रनाचकि मुक्तेन मुक्तिस्तस्य करेस्थि ता। तुला पुरुष दानेन समंयल्लभते फलं। तत्फलं लभते मर्त्यो दानेनानेन सुव्रत। सुतीक्ष्णउवाच। प्रायेण हि नराः सर्वे दरिद्राः कृपणा मुने कथञ्च मह्तीं पूजां करिष्यन्तिवदस्वभो अगस्त्यउवाच। दरिद्रस्तु महाभाग स्वस्य वित्तानुसारतः। पलार्द्धेन तदर्द्धेन तदर्द्धार्द्धेन वापुनः। वित्तशाठ्यमकृत्वैव कुर्या देवं व्रतं मुने। यदिघोरतरं दुष्टं पातकं नेह तत्रचित्। अकिञ्चनोपि यत्नेन उपोष्य नवमी दिने। एकचित्तोपि विधिवत्सर्वपापैः प्रमुच्यते। प्रातः स्नात्वाचमनीयं कृत्वा सन्ध्यादिकाः क्रियाः। गोभूतिलहिरण्यादि दद्याद्वित्तानुसारतः। श्रीरामचन्द्र भक्तेभ्योविद्वद्भिः श्रद्धयान्वितः। पारणं त्वथ कुर्वीत ब्राह्मणैश्च स्वपंक्तितः। एवं यः कुरुते भक्तः सर्वपापैः प्रमुच्यते। प्राप्ते श्रीरामनवमी दिने मर्त्योविमूढधीः। उपोषणं न कुरुते कुम्भीपाकेषु पच्यते यत्किंचिद्राममुद्दिश्य क्रियते न स्वशक्तितः। रौरवे सतु मूढात्मा पच्यते नात्र संशयः। सुतीक्ष्ण उवाच। यामाष्टकेषु पूजा वै तत्र नोक्ता महामुने। मूल मंत्रेण संयुक्तं तत् कथं वद सुव्रत। अगस्त्य उवाच॥ सर्वेषां राममन्त्राणां मन्त्रराजः षडक्षरः। स्कांदे मोक्षखण्डे श्रीरामं प्रति रुद्रगीतायां रुद्रवाक्यं॥ मुमू र्षो मणिकर्ण्यान्तेरर्धोदकनिवासिनः। अहं दिशामिते मंत्रं तारकस्योपदेशतः। श्रीराम रामरामेति एतत्तारक मुच्यते। अतस्त्वं जानकीनाथ परं ब्रह्माभिधीयते इति। तारकं ब्रह्मचेत्युक्तं तेन पूजा प्रशस्यते। पीठाङ्गदेवतानांतु आहुतीनां तथैवच। आदावेव प्रकुर्वीत देवस्य प्रीतमानसः उपचारैः षोडशभिः पूजा कार्य्या यथाविधि। आवाहनं स्थापनञ्च सम्मुखीकरणं तथा। एवं मुद्रा प्रार्थनाच पूजा मुद्रा प्रयत्नतः। शङ्ख पूजां प्रकुर्वीत पूर्वो क्त विधिना ततः। कलशं वामभागेच पूजा द्रव्याणि चादरात्। पीठं संपूज्य यत्नेन आत्मानं मन्त्र मुच्चरन्। पाद्यासादनमर्घ्यं वं कुर्यात् यानेष्वतन्द्रितः

पीतांबरांणि देवाय प्रार्थयन्नर्चयेत्सुधीः। स्वर्णयज्ञोपवीतानि दद्याद्देवाय भक्तितः। नाना रत्नविचित्राणि दद्यादाभरणानिच। हिमोवृ्ष्टः
रं घनसारसमन्वितम्। क्रमात्तमूलमन्त्रेण उपचारान् प्रकल्पयेत्। कह्लारैः केतकैर्जात्यैः पुन्नागाद्यैः प्रपूजयेत्। चम्पकैः शतपत्रैश्च सुगन्धैः सुमनो।
पाद्य चन्दन धूपैश्च तत्तन्मन्त्रैः प्रपूजयेत्। भक्ष्यभोज्यादिकं भक्त्या देवाय विधिनार्पयेत्। येन सोपस्करं देवं दत्वा पापैः प्रमुच्यते। जन्मकोटि कृतै
र्घोरै र्नानारूपैश्च दारुणैः। वियुक्तस्तु क्षणादेव रामएव भवेन्मुने। श्रद्दधानस्य दातव्यं श्रीरामनवमी व्रतं। सर्व लोकहितार्थेदम्पवित्रं पापनाशनं
लौहेन निर्म्मितं वापि शिलया दारुणापिवा। एकेनैव प्रकारेण यस्मै कस्मैचवामुने। कृतं सर्वप्रयत्नेन यत्किञ्चिदपिभक्तितः। जपेदेकांत वासीनो
यावत्तद्दशमीदिनं। अनेनस्या त्पुनः पूजा दशम्यां भोजयेद्द्विजान्। भक्त्या भोज्यैर्बहुविधैर्दद्याद्भक्त्या सदक्षिणाम्। कृत कृत्यो भवेत्तेन सद्योरामः प्रसी
दति। तुष्णीं तिष्ठन्नरो याति पुनरावृत्तिवर्ज्जितः। द्वादशाब्द कृतेनापि पापेनापि विमुच्यते। बिलयं याति तत्सर्वं श्रीरामनवमी दिने। जपञ्चराम
मन्त्राणां यो न यानाति तस्यवै। उपोष्य संस्मरन्नाम न्यासपूर्वमन्यधीः। गुरुलब्धोथ मन्त्रस्तुन्यसेत् न्यास पुरःसरः। यामे यामेच विधिना कुर्य्या
त्पूजां समाहितः। मुमुक्षुरपि सदा कुर्यात् श्रीरामनवमीव्रतं। तस्मात्सर्वात्मना सर्वैं कर्त्तव्यं नवमीव्रतम्। मुच्यते सर्व पापेभ्यो याति ब्रह्मसनातनं।
इति श्रीस्कान्दपुराणे अगस्त्य संहितायां मगस्त्यसुतीक्ष्ण संवादे रामनवमी व्रतम्। अथ रामनामोद्यापन विधिः॥ पार्वत्युवाच॥ धन्यास्म्यनुगृहीता
स्मि कृतार्थास्मि जगत्प्रभो। विच्छिन्नमेति संदेहग्रन्थिर्भवदनुग्रहात्। त्वन्मुखाद्गलितं रामतत्वामृतरसायनं। पिबंत्यामे मनोदेव न तृप्तिमधि
गच्छति। श्रीरामस्यामृतं नाम श्रुतं संक्षेपतो मया इदानीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरं॥ श्रीमहादेव उवाच॥ शृणु देवि प्रबक्ष्यामि गुह्याद्गुह्यतरं।
महत्। प्राप्नोति परमां सिद्धिं दीर्घायुः पुत्र सम्पदां। रामनाम लिखेद्यस्तु लक्षकोटि शतावधि। एकैकमक्षरं पुंसां महापातकनाशनं। सका ८०
मोपि लिखेद्यस्तु निःकामेन तु वापुनः। इहैव सुखमाप्नोति अन्ते परपदं लभेत्। आदावन्तेच म॰ेच व्रतस्योद्यापनं यजेत्। उद्यापनं विना नैव

फलसिद्धिमवाप्नुयात्। तस्मात्सर्वप्रयत्नेन नाम्नउद्यापनं कुरु। पार्वत्युवाच। नतोऽस्मि देवदेवेश भक्त्यानुग्रहकारक। नाम्नउद्यापनं ब्रूहि विस्तरेण मम प्रभो। श्रीमहादेव उवाच। शृणु देवि प्रवक्ष्यामि विस्तरेण यथाविधि। नाम्नउद्यापनं चाद्य भक्त्या भवदनुग्रहात्। सुवर्णप्रतिमां कुर्यात्सीताराम सलक्ष्मणां। हनुमत्प्रतिमां तत्र चतुर्थांशेन कारयेत्। सुवर्णस्य प्रमाणन्तु पलाष्टक मुदीरितं। अशक्तश्चेत्पलेनैव तदर्द्धार्द्धेन वापुनः। श्रीरामस्य प्रतिकृतिं वित्तशाठ्यं न कारयेत्। रजतेनासनं कुर्यान्माषैः षोडश संमितैः। पीतवस्त्रेण संवेष्ट्य स्थापयेत्तंदुलोपरि। तन्दुलस्य प्रमाणन्तु भवेद्द्रोणचतुष्टयं। शुचौदेशे गृहेतीर्थे मण्डपं कारयेत्सुधीः। तोरणानि चतुर्द्वारे बन्धयेदाम्रपल्लवैः। भूमौ गोमयलिप्तायां सर्वतोभद्रसंज्ञकं। रचयेत्तत्प्रधान्येन नाना रङ्गैः सुशोभनं। कुम्भानष्टौच पूर्वादि स्थापयेद व्रणान् शुभान्। कुम्भमेकं मध्यदेशे स्थापयेत्तन्दुलोपरि। शुद्धोदकेन संपूर्य पञ्चरत्नैः सपल्लवैः नारिकेलफलान्यष्टौ एकं रामाय दापयेत्। आचार्य्यं बरयेत्तत्र वेदशास्त्रविशारदं। ब्रह्मादिक्र्त्विजानांतु वरणं कारयेत्ततः। मधुपर्केण संपूज्य वस्त्रालङ्कारभूषणैः। ऋत्विजान् षोडशानष्टौ वरयेद्वेदपारगान्। स्नात्वा नित्यं विधायादौ पूजयेद्गणनायकं। पुण्याहं वाचयित्वातु पूजयेद्रामचन्द्रकं। ततोऽग्निञ्च प्रतिष्ठाप्य स्वशाखोक्तविधानतः। विष्णु सूक्तेन होतव्यं मूलमन्त्रेण वापुनः। नवग्रहांश्च दिक्पालान् मन्त्रानुक्तांश्च होमयेत् पुरुषसूक्तेन होतव्यं समिदाज्यञ्चरुस्तिलान्। अष्टोत्तर सहस्रन्तु राममन्त्रेण हावयेत्। होमान्ते पूजनं कुर्य्याद्रामचन्द्रादि देवताः। पूजयित्वा ततो हुत्वा बलिं पूर्णाहुतिं तथा। श्रेयः संपाद्यदानञ्च अभिषेकं समाचरेत्। रामं नत्वाच नत्वाच प्रार्थयित्वा पुनः पुनः। आचार्य्यं पूजयेत्पश्चात् सुवर्णयुतधेनुना। प्रतिमादान मंत्रेण आचार्य्याय निवेदयेत्। दानमंत्रः॥ नतोऽस्मि देवदेवेश बहु बुद्धि महात्मभिः। यश्चिन्त्यते कर्मपाशाद्धातुं हृदि मुमुक्षुभिः। मायया गुणमय्यात्वं सृजस्यवसि लुंपसि। अतस्त्वत्पाद भक्तेषु त्वद्भक्तिस्तु श्रियोधिकी। भक्तिमेवाधिवांच्छंति त्वद्भक्ताः सारवेदिनः। अतस्त्वत्पादकमले भक्तिरेवसदास्तुमे। संसार भयतप्तानां भैषज्यं भक्तिरिवते। राम सीता सर्वौ मित्रि हनुमद्भक्ति तत्परः। दानेनानेन मे राम भुक्तिमुक्तिप्रदो

॥ व्र ॥ भव। प्रतिमादानविध्यर्थं शक्त्या स्वर्णन्तु दापयेत्। दक्षिणाहीनं यद्दानं तत्सर्वं निःफलं भवेत्। ब्राह्मणान् शत साहस्रं भोजयेन्मधुसर्पिषा।
॥ ८१ ॥ पक्वान्नैः पायसैः खाद्यैः कदली शर्करान्वितैः। ऋत्विग्भ्यो दक्षिणां दत्वा भूयसीं दक्षिणां यजेत्। तदन्ते घृतपात्रञ्च तिलपात्रञ्च दापयेत्। शय्यांच रत्न
दानानि दशदानानि शक्तितः। अशक्तः स्वेतस्वर्णमेकन्दत्वा रामं नमेत्पुनः। तिलकं कारयेत्पश्चाद् भिषिंचेत्सपल्लवैः। द्विजैस्तु चाशिषो देया नत्वा स्तुत्वा
विसर्जयेत्। उमा महेश्वरौ पूज्यौ भोजयेद्वटुकं तथा। कुमारीणां चयं भोज्यं योगिराजञ्च भोजयेत्। क्षेत्रपालबलिं दत्वा ध्यात्वा रामं सदा जपेत्।
ब्रह्मादिभि स्तुतत्पुण्यं वक्तुं शक्यं न किञ्चन अश्वमेध सहस्राणि वाजपेय शतानिच। एकेन रामनाम्नातु तत्फलं लभतेनरः। नारी वा पुरुषो वापि
शूद्रो वाप्यधमो नरः। रामनाम्नातु मुक्तास्ते सत्यं सत्यं वरानने। मूले कल्पद्रुमस्याऽखिलमणिबिलसद्रत्नसिंहासनस्थं कोदण्डद्वंद्वपाणिं ललितकरयुगेनार्पितं लक्ष्मणेन। वामांकन्यस्त सीताभरत धृत महामौक्तिकच्छत्र कांतिं शत्रुघ्नश्चामराभ्यां विलसितमनिशं रामचन्द्रं भजेहं॥ इति श्रीभविष्योत्तरपुराणे
उमामहेश्वरसम्वादे रामनामलेखनोद्यापनं सम्पूर्णं। अथ आश्विनशुक्लनवम्यां देवीपूजाहेमाद्रौ विष्णुधर्मोत्तरे। रामउवाच॥ विधि
नापूजयेत्केन भद्रकालीं नराधिप। नवम्यामाश्विने मासि शुक्लपक्षे नरोत्तम॥ पुष्कर उवाच। पूर्वोत्तरेतु दिग्भागे शिवे वास्तुमनोहरे। भद्रकाली
गृहं कुर्याच्चित्रवस्त्रैः स्वलङ्कृतं। भद्रकालीपदं कृत्वा तत्र सपूजयेद्द्विजं। पदं स्वरूपं साचोक्ता। तत्रैव अष्टादशभुजा कार्य्या भद्रकाली मनोहरा। आ
लीढस्थानसंस्थाना चतुः सिंह रथे स्थिता। अक्षमालां त्रिशूलञ्च खड्गं चंद्रञ्च यादव। वाणचापे च कर्त्तव्ये शङ्खं पद्मं तथैवच। स्त्रुकस्त्रुवौच तथा कार्य्यौ त
था वेदि कमण्डलू दण्ड शक्तीच कर्त्तव्ये तथाशक्तिहुताशनौ। हस्तानां भद्रकाल्यास्तु भवेत्कांतिकरः करः। एकचैव महाभाग रत्नपात्र धरोभवेदिति।
आश्विने शुक्लपक्षस्य अष्टम्यां प्रयतः शुचिः। तत्रैवायुध चर्माद्यंच्छत्रं वस्त्रञ्च पूजयेत्। पुष्पैर्मध्यैः फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः। वलिभिश्च विचित्रैश्च ८१
प्रेक्षा दानै स्तथैवच। रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिप। उपोषितो द्वितीयेह्नि पूजयेत्त्यं नरेव तां। आयुधाद्यञ्च सकलं पूजयेद्वसुधाधिप। एवं

संपूजयेद्देवीं वरदां भक्तवत्सलां। कात्यायनीं कामगमां बहुरूपां वरप्रदां। पूजिता सर्व्वकामैः सा युनक्ति वसुधाधिप। एवंहि संपूज्य जगत्प्रधानां
याचातु देया वसुधाधिपेन। प्राप्नोति सिद्धिं परमां महेशो जनस्तथान्योपिच वित्तशक्त्या तथैव देवीपुराणे॥ ब्रह्मोवाच॥ शृणु शक्र प्रवक्ष्यामि यथा त्वं
परिपृच्छसि। महासिद्धिप्रदं धन्यं सर्व्वशत्रुनिवर्हणम्। सर्व्व लोकोपकारार्थं विशेषादमिष्टत्तिषु। क्रत्वर्थे ब्राह्मणाद्यैस्च चत्रियै र्भूमिपालने। गोधनार्थं
विशां वत्स शूद्रैः पुत्रसुखार्थिभिः। सौभाग्यार्थं स्त्रिया कार्य्यमन्यैस्च धनकांक्षिभिः। महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितं। कर्त्तव्यं देवराजेन्द्र देव्या
भक्तिसमन्वितैः। कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम्। नन्दिका प्रतिपत्। अयाची त्वथचैकाशी नक्ताशीन्वथवाब्दः। पुनरप्येवं प्रातस्नायी त्रि
तद्दंद त्रिकालं शिवपूजकः शिवाच शिवस्य शिवौ जपहोमसदासक्तः कन्याकामो जयेत्सदा। अष्टम्यां नवमेऽहनि च दारुजानि शुभानिच। एकं वा वित्तभा
वेन कारयेत्सुरसत्तम। तस्मिन् देवी प्रकर्त्तव्या हैमीवा राजतीतुवा महची लक्षणोपेता खड्ग शूलेच पूजयेत। सर्व्वोपहार सम्पन्नं वस्त्ररत्नफलादिभिः।
कारयेद्रथदोलादि पूजांच वलिदैविकीं। वलिग्राहिणो देवा बिनायकादयः तत्संवधिनीं वलिंदैविकीं पुष्पैस्च द्रोणविल्वाम्रजातीपुन्नागचम्पकैः द्रोणः
कुरुवकः। विचित्रां रचयेत्पूजां षष्ट्यामुपवासयेत्। दुर्गाग्रतो जयेन्मन्त्रमेकचित्तः सुभावितः। तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तमः। पश्वा
द्दलचणोपेतं महिषाख्यं सुपूजितं विधिवत्कालिकालीति जपत्त्वा खड्गेन घातयेत्। तस्योत्थं रुधिरं मांसं गृहीत्वा पूजनादिषु। निर्ऋताय प्रदातव्यं
महाकौशिकमन्त्रितं। तस्याग्रतो नृपः स्नायाच्छत्रं कृत्वा तु पिष्टजं। खड्गेन घातयित्वा तु दद्यात् स्कन्दविशाखयोः। ततो देवीं पुनः प्रातः
क्षीरसर्प्पिर्ज्जलादिभिः। कुङ्कुमागरुकर्पूरैश्चन्दनैस्चापि धापयेत्। होमादि पुष्परत्नानि वासांसि ग्रहतानिच। नैवेद्यं सुप्रभूतन्तु देयं देव्याः सुभावितैः
देवीभक्तान्पूजयीत कन्यकाः प्रमदादि च। द्विजातीनन्धपाखण्डानन्नदानेन तोषयेत्। नन्दाभक्ता नरा ये तु महाव्रतपरास्च ये। पूजयेत्तान्विशेषेण
तद्रूपाचर्च्चिकायतः। मातृणां चवदेवीनां पूजा कार्या तदा निशि। ध्वजच्छत्रपताकादीनुच्छ्रयेच्चाम्बिकागृहे। रथयात्रा वलिचेपं पटुवाद्यरवाकुलं।

॥ व ॥ कारयेत्तुष्यते येन देवी शस्त्रनिपातनैः। अश्वमेधमवाप्नोति भक्तितः सुरसत्तम। महानवम्यां पूज्येयं सर्वकामप्रदायका। सर्वषु वत्स वर्णेषु तवभ
॥ ८२ ॥ प्रकीर्त्तिता। कृत्वाप्नोति यशोराज्यं पुत्रायुर्धनसम्पदः। इति देवीपुराणे महानवमी। तत्रैव सौरपुराणे। आश्वयुक्शुक्लपक्षस्य नवम्यां प्रय
त्नवान्। भक्त्या संपूजयित्वैवं देवीं संप्रार्थयेत्ततः। महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यविजयं देहि देवि नमोऽस्तुते। भूत
प्रेतपिशाचेभ्यो रक्षेभ्यश्च महेश्वरि। देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा। उमे ब्रह्माणि कौमारि विश्वरूपे प्रसीद मे। कुमारी
भोजयित्वा च दद्यादाच्छादनादिकं। नव सप्ताष्टकं चैव स्वस्य वित्तानुसारतः। शस्त्रं च यस्य यच्चैव सतद्यत्नेन पूजयेत्। यतः शस्त्रेषु सा
देवी निवसत्येव सन्ततं। शास्त्रमिति वा पाठः शास्त्रं तत्पुस्तकं स्नपनेविशेषः। शिवरहस्ये। ये मेरुमूर्धगणसंघकृताभिषेकां पश्चाद्धतैर्गिरि
सुतामभिषेचयन्ति। ते दिव्यकल्पमनुभूय सवेषरूपा राज्याभिषेकमतुलं पुनराप्नुवन्ति। अथोपचारः दुर्गाभक्तितरङ्गिण्यां देवीपुराणे। सुगन्धि
पुष्पतोयेन स्नापयित्वा नरः शिवाम्। नागलोकं समासाद्य क्रीडते पन्नगैः सह। द्रोणपुष्पं बिल्वपत्रं करवीरोत्पलानि च। स्नानकाले
प्रयोज्यानि देव्यै प्रीतिकराणि च। भगवत्यै नरो दत्वा विष्णुलोके महीयते। स्नापयित्वा नरो दुर्गां श्रद्धया हेमवारिणा। सौवर्णयानमा
रूढो वसुभिः सह मोदते। तिलोदकै विष्णुलोकं लभते बान्धवैः सह। घृतेन स्नपयेद्यस्तु तस्य पुण्यफलं शृणु। दशपूर्वान् दशपरानात्मानञ्च विशे
षतः। भवार्णवात्समुद्धृत्य दुर्गालोके महीयते। क्षीरेण स्नपयेद्यस्तु श्रद्धाभक्तिसमन्वितः। चण्डिकां विधिवद्वीर इन्द्रलोके महीयते। स्नापयेद्विधिना
वीर दध्ना दुर्गां महीयते। राजतेन विमानेन शिवलोके महीयते। पञ्चगव्येन यो दुर्गां तथाच कुशवारिणा स्नापयेद्विधिवन्मन्त्रैः ब्रह्मस्नानं हि तत्
स्मृतम्। एकाहेऽपि च यो दुर्गां पञ्चगव्येन चण्डिकां। स्नयेन्नृपशार्दूल सगच्छेत्सुरभी पुरम्। कपिलाः पंचगव्येन दधिक्षीरयुतेन च। स्नानं शत ८२
गुणं प्रोक्तमितरेभ्यो नराधिप। तच्च स्नपनं। षडक्षरेण मन्त्रेण पाद्यादीनथ षोडश। वितरेदुपचारांश्च पर्वप्रोक्तांस्तु भैरवेति वाराही तन्त्रात्। क्रीं दुर्गा

यै नम इति षडक्षरमन्त्रेण कार्यं भविष्ये। चण्डिकां स्नापयेद्यस्तु नरश्चेक्षुरसेन च। गारुडेन स यानेन विष्णुना सह मोदते। पितॄनुद्दिश्य यो दुर्गां मधु
ना पयसापि च। स्नापयेत्तस्य पितरस्तृप्ता वर्षशतद्वयं। पौर्णमास्यां नवम्यां वा अष्टम्यांच नराधिप। स्नापयित्वा तीर्थजलैर्वाजपेयफलं लभेत्। स्नापयित्वा
नदीतोये गन्धचन्दनवारिणा। चन्द्रांशु निर्मलः श्रीमान् चन्द्रलोके महीयते। स्नापयेद्यस्तु वै देवीं नरः कर्पूरवारिणा। स गच्छति परं स्थानं यत्र सा
चण्डिकास्थिता। चण्डिकां स्नापयित्वा तु अद्वयागुरुवारिणा। इन्द्रलोकं समासाद्य क्रीडते सह किन्नरैः। द्वादशाङ्गेन योगेन चण्डिकां पूजयेन्नरः।
दशपञ्च सहस्राणि वर्षाणां मोदतेदिवि। पयः क्षीर कुशाग्राणि अक्षतादधितण्डुलाः। सहा सिद्धार्थका दूर्वा कुंकुमं रोचना मधु। अर्घोयं कुरु शार्दूल
द्वादशांग उदाहृतः। सहा सहदेवो कुमारीं प्रक्रम्य अनेन पूजयेद्यस्तु सयाति परमं पदम्। अष्टांगार्घं समापूर्य्य देव्यै मूर्ध्नि निवेदयेत्। दशवर्षसह
स्राणि दुर्गालोके महीयते। आपः क्षीर कुशाग्राणि दधिसर्पिस्च तण्डुलाः। तिलासिद्धार्थकाश्चैव अष्टांगोर्धः प्रकीर्तितः। भविष्ये। रक्तविल्वाक्षतैः
पुष्पैर्दधिदूर्वांकुशैस्तिलैः। सामान्यःसर्वदेवानामर्घोयं परिकीर्तितः। मृत्पात्रेण नरोदत्वा वाजपेयफलं लभेत्। ताम्रपात्रार्घदानेन पौण्डरीकफलं भ
वेत्। पलाशपद्मपत्राभ्यां गोसहस्रफलंलभेत्। रौप्यपात्रेण दूर्गायै विष्णुयागफलं लभेत्। दत्वा सौवर्णपात्रेण लभेद्दक्ष सुवर्णकं। हेमपात्रेण सर्वा
णि ईप्सितानि लभेद्दक्ष। अर्घं दत्वा तु रौप्येण आयुराज्यं शुभं लभेत्। चन्दनेन सुगन्धेन आर्यां यस्तु समालभेत्। कुंकुमेन विलिप्यार्य्यां गोसहस्रफलं
लभेत्। विलिप्य कृष्णागुरुणा वाजपेयफलं लभेत्। मृगानुलेपनं कृत्वा ज्योतिष्टोमफलं लभेत्। मृगः कस्तूरी तथा चन्दनागरुकर्पूरैर्यस्तु दुर्गांविलेपयेत्
संवत्सरशतं दिव्य शक्रलोके महीयते। देवीपुराणे। चन्दनागरुकर्पूरैः सूक्ष्मपिष्टैः सकुंकुमैः। दुर्गामालिप्य विधिवत्कल्पकोटिं वसेद्दिवि। मदकर्पूर
काश्मीररोचनाच चतुष्टयं। एतेन लेपयेद्देवीं सर्वकामानवाप्नुयात्। पुष्पाणि देवी पुराणे मल्लिकामुत्पलं पद्मं शमीपुन्नाग चम्पकं। अशोकं कर्णिकारं च
द्रोणपुष्पं विशेषतः। करवीरंच शमीपुष्पं कुसुमं नागकेसरं। पुन्नागश्चम्पकः कुन्दो यूथिका नवमल्लिका। जपा च केतकी मल्ली वृहती शतपत्रिका। तथा

॥ व्र ॥ कुमुदकल्हार विल्वपाटल मालती। यवानि वकुलाशोक रक्तनीलोत्पलानि च। दमनं मरुवकं च शतधा पुण्यहृद्वये। तथा। केतकीचातिमुक्तं च व
॥ ८३ ॥ वकुलान्यपि। कुमुदं कर्णिकारं च सिन्दूराभंसहृद्वये। भविष्ये। प्रत्येकमुक्तपुष्पेषु दशनिष्कफलं लभेत्। स्रगिवद्धेषु तेष्वेव द्विगुणं कांचनस्य तु। करः
स्रजोभिस्र पूजयेद्यस्तु चण्डिकां। सोग्निष्टोमफलं लब्ध्वा सूर्यलोके महीयते। पूजयित्वा नरो भक्त्या चण्डिकां पद्ममालया। ज्योतिष्टोमफलं प्राप्यसूर्यलो
महीयते। शमीपुष्प स्रजोभिस्तु आर्यां संपूज्य यत्नतः। गोसहस्रफलं प्राप्यविष्णुलोके महीयते। पूजयित्वा तु राजेन्द्र श्रद्धया विधिवन्नरः। कुशपुष्पस्रजो
भिस्तु पितृलोके महीयते। सुगन्धयुत पुष्पैस्तु पूजयेद्यस्तु चण्डिकां। मालाभिर्मालया वापि सोश्वमेधफलं लभेत्। सुवर्णानां सुवर्णस्य शते दत्ते फलं लभेत्
मालाया विल्वपत्राणां नवम्यां गुग्गुलेन च। नीलोत्पलस्रजोभिस्र पूजयेद्यस्तु चण्डिकां। वाजपेय फलं प्राप्य रुद्रलोके महीयते। नीलोत्पलसहस्रेण
योवै मालां प्रच्छयति। वर्षकोटि सहस्राणि वर्षकोटि शतानिच। दुर्गानुचरतां यातो रुद्रलोके महीयते। तथा विलिप्तां पूजयेद्दुर्गां दिव्य पुष्पाधि वा
सितां। तालवृन्तेन संवीज्य महासच फलं लभेत्। भविष्ये सर्वेषामेव धूपानां दुर्गाया गुगुलुः प्रियः। मन्त्रस्तु धूपोयं देवदेवेशि घृतगुग्गुलुयोजितः।
गृहाण वरदे मातर्दुर्गेदेवि नमोस्तुते। शीत्यगुरुं नरोदत्त्वा गोसहस्रफलं लभेत्। शीत्यगुरुः कृष्णागुरुः महिषाख्यं घृताभ्यक्तं दत्त्वा विल्वमथापि वा
वाजपेय फलं प्राप्य सूर्य्यलोके महीयते। स कृष्णागुरु धूपेन माहिषाख्येन मङ्गलां। शोधयेत्यापकलितं यथाग्निरिव कांचनं। कृष्णागुरुं सकर्पूरं चन्दनं
सिल्हकं तथा। तथा शब्दः समुच्चये भगवत्यै नरोधूपमिमं दत्त्वा नराधिप। इच्छकामानवाप्यान्यान दुर्गालोके महीयते। भविष्ये घृतदीप प्रदानेन च
ण्डिकां पूजयेन्नरः। सोश्वमेध फलं प्राप्य दुर्गायास्तु गणोभवेत्। तैलदीप प्रदानेन पूजयित्वाच चण्डिकां वाजपेय फलं प्राप्य मोदते सहकिंन्नरैः
मन्त्रस्तु। अग्निर्ज्योती रविर्ज्योतिश्चन्द्रोज्योति स्तथैवच। ज्योतिषा मुत्तमे दुर्गे दीपोयं प्रतिगृह्यतां। शिवरहस्ये देदीप्यते स कनकोज्वल पद्मराग ८३
रत्नप्रभाभरणहेममये विमाने दिव्यांगनापरिवृतो नयनाभिरामं प्रज्वाल्य दीपममलम्भवने भवान्या। दीप प्रदानं यो दद्याद्देवेषु ब्राह्मणेषुच। तेन दी

प प्रदानेन अक्षयांगतिमाप्नुयात्। भविष्ये घृतेन कुरुशार्दूल ह्यमावास्यांतु कार्त्तिके। विशेषतो नवमांतु भक्त्या श्रद्धासमन्वितः। यावंतं दीपसंघा
तं घृतेनापूर्य्य वोधितं। तावत्कल्पसहस्राणि दुर्गालोके महीयते। भविष्ये गुडखण्डकृतान्नञ्च तथा शर्करयापिच। घृतेन परिपक्वान्नं दत्वा च ब्रह्म
णः पदंस्यादितिशेषः। शाल्योदनं रसालांच पानं वदरजं तथा। य प्रयच्छति दुर्गायै सगच्छति शिवालयं। शिवा दुर्गा रसाला सूपशास्ते ईषदम्लद
धिशर्करापयःसाधितेंदुसरिचं सुगालितं पित्तनाशमरुचिं निहन्ति वै मोदनञ्च कुरुते रसालया। पानकं वैद्यके। गौडमम्लमनम्लं वा पानकं सुरभी
कृतं। तदेव खण्ड म्द्वीका शर्करा सहितं पुनः। साम्लं सुतीक्ष्णमहितं पानकं स्यान्निरत्ययं। निरत्यय तत्कालं श्रद्धया पायसं युक्तं शर्करासहितं नरः।
य प्रयच्छति दुर्गायै तस्य राज्यं करेस्थितं। कालिकापुराणे आमिक्षां परमान्नञ्च दधिबापि सशर्करं। महादेव्यै निवेद्यैव वाजिमेधफलं लभेत्। दुर्गामुद्दि
श्य पानीयं केतकी शशिवासितं। यः प्रयच्छति राजेन्द्र सगणाधिपतिर्भवेत्। आम्रञ्च नालिकेरञ्चखर्जूरं वीजपूरकं। यः प्रयच्छति दुर्गायै स या
ति परमं पदं। फलं वितरयेत्सर्वं नाशुभ किञ्चिदाप्नुयात्। भक्ष्यादिपञ्चकैर्देवीं दत्तैरेवाभितुष्यति। भक्ष्यं भोज्यञ्चलेह्यञ्च पेयं चोष्यंच पञ्चमं। पर
मान्नं पिष्टकञ्च यावकं कृसरं तथा। मोदकं पृथुकादीनि देव्यै पक्वानि चोत्सृजेत्। दद्यादित्यर्थः। निवेदयेन्महादेव्यै सर्वाणि व्यंजनानि च। क्षीरादीनि
च गव्यानि माहिषानिच सर्वशः। तांवूलानि च दत्वातु गन्धर्वैःसह मोदते। विष्णुधर्मे तन्तु सन्तानसन्नद्धं रंजितं स्वगवस्तुना। दुर्गे देवि भजस्वेदं
वासस्ते परिधीयतां। भविष्ये। वस्त्राणि सुविचित्राणि सूक्ष्माणिच मृदूनिच। यः प्रयच्छति दुर्गायै स गच्छति शिवालयं। यावंतस्तंतवो वीर तेषु वस्त्रेषु
संस्थिताः तावद्वर्षसहस्राणि मोदते चण्डिकागृहे। अलङ्कारन्तु यो दद्यात् बिप्रायाथ सुराय वा। सगच्छेद्वारुणं लोकं नानाभरणभूषितः। जातः पृ
थिव्यां कालेन ततो द्वीपपतिर्भवेत्। विष्णुधर्मे विभूषणप्रदानेन राजा भवति भूतले। तत्रैव सुवर्णतिलकं यस्तु भगवत्यै प्रयच्छति। स गच्छति
परं स्थानं यत्र सा परमाकला। सौवर्णं राजते वापि अक्षिणी यः प्रयच्छति। गोसहस्रफलं प्राप्य सूर्य्यलोके महीयते। श्रोणिसूत्रप्रदानेन मही मा

॥ व्र ॥ गरमेखलाम्। प्रशास्ति निहिताभिचः शक्रवद्दिवि मोदते। हैमनूपुरदानेन स्थानं सर्वत्र विन्दति। शिवरहस्ये। देदीप्यते कनकदण्ड विराजितैश्च
॥ ८४ ॥ मरैः प्रचलकुण्डल सुन्दरीभिः। दिव्यांगनास्तनविराजित भूषितांगः कृत्वातु चामरयुतां वरवस्त्रपूजां। भविष्ये गौरिकस्तु पात्राणि दुर्गायै यः प्रय ः ।
तस्य पुण्यफलं प्रोक्तं तारागणपदं दिवि। गौरिकं सुवर्णं निष्ककोटि प्रदानाद्धि रजतस्य ततोधिकं। हेमपात्राणि यद्दत्वा पुण्यं स्याद्वेदपारगे। त
स्माच्छतगुणं प्रोक्तं दत्वा मृन्मयमादरात्। मृन्मयं घटकरकादि। उपस्कर प्रदानेन प्रियमाप्नोत्यनुत्तमम्। उपस्करः पूजार्थं धूप दीप पात्र घण्टादिः।
चन्द्रांशुनिर्मलं स्वच्छदर्पणं मणिभूषितं। पद्मोपशोभितं कृत्वा मालामाल्यानु लेपनैः। दुर्गायाः पुरतः कृत्वा विष्णोर्वा शङ्करस्यवा। राजसूयफलं प्राप्य
हंसलोके महीयते। हंसः सूर्यः शिवरहस्ये। दत्वातु यः परमभक्ति युतोभवान्याः घण्टां वितानमथचामरमातपत्रं केयूरहारमणिकुण्डलभूषितोसौ रत्नाधि
पोभवति भूतलचक्रवर्त्ती। भविष्ये। शङ्खकुन्देन्दुसङ्काशं प्रवालमणिभूषितं। हेमदण्डमयं छत्रं दुर्गायै यः प्रयच्छति। सछत्रेण विचित्रेण किङ्किणी जालमालिना.
धार्यमाणेन शिरसि शिवलोके महीयते। विष्णुधर्मे पानंशय्यामणिच्छत्रं पादुके चाप्युपानहौ। वाहनं गां गृहं वापि त्रिदशाय प्रयच्छति। एकैकस्मादवा
प्नोति वह्निष्टोम फलं भुवि। भविष्ये। ताम्रदण्ड विचित्रंवै दुर्गायै यः प्रयच्छति। स गच्छति परं स्थानं मातॄणां लोकपूजितं। हेमदण्डविचित्रं यश्चामरं
संप्रयच्छति वायुलोकं समासाद्य क्रीडते वायुना सह। आर्यायाश्चामरं दत्वा मणिदण्डविभूषितं। सुवर्णं रूपचित्रं वादुर्गालोके महीयते। मायूरपत्रव्यज
नं नानारत्नविभूषितं। भगवत्यै नरो दत्वा लभेद्बहु सुवर्णकं। तालवृन्तं महाबाहो चित्रकर्मोपशोभितं। भगवत्यै नरो दत्वा वैष्णवस्य फलं लभेत्। वैष्णावी
यज्ञः। घण्टां निवेदयेद्यस्तु लभते वांछितं फलं हिनस्ति दैत्यतेजांसि स्वनेनापूर्य्य या जगत् साद्यं संपातु नोदेवि पापेभ्योनःसुतानिवेति संपूज्य निवेदयेत्
अनः शकटमातरोतिकोशात् आदित्यपुराणे। यः शय्यांतु प्रयच्छेत देवेषु च गुरुष्विह ज्ञान वृद्धेषु विप्रेषु दत्वा न नरकं व्रजेत्॥ भविष्ये। रत्नोपकरणै ८४
र्युक्तां सारदारुमयीं शुभां शय्यां निवेदयेद्यस्तु भगवत्यै नराधिप दुकूलवस्त्रतंतूनां परिसंख्यातु यावती तावद्वर्षसहस्राणि दुर्गालोके महीयते विष्णुधर्मे

पादुकासन दानेन भगवत्यै कृतेन तु। वह्निष्टोम फलं प्राप्य विष्णुलोके महीयते। यो गां पयस्विनीं शुद्धां तरुणीं शीलमण्डनां। भगवत्यै नरो दद्या दश्वमेधफलं लभेत्। वृषभं परिपूर्णाङ्गमुदासीनं शशिप्रभं। यस्तु दद्यान्नरो भक्त्या भगवत्यै सकृन्नरः। यावन्ति रोमकूपानि वृषदेहस्थितानि तु। तावत्कल्पसहस्राणि रुद्रलोके महीयते। सुविनीतां स्त्रियं दासीं भृतकं वा नराधिप। यः प्रयच्छति दुर्गायै राजसूयाश्वमेधभाक्। विष्णुधर्मे। प्रतिपाद्य तथा भक्त्या ध्वजं चिदशवेश्मनि। निर्दहत्याशु पापानि महापातकजान्यपि। भविष्ये ध्वजं श्वेतपताकाद्यमथवा पञ्चरङ्गिकं। किङ्किणीजाल सम्वीतं श्वेतपद्मोपशोभितं। दत्वा देव्यै महावाहो शक्रलोके महीयते। ध्वजमालाकुलं यस्तु कुर्याद्दै चण्डिकालयं। महाध्वजाष्टकं चापि दिशासु विदिशासु च। कल्पानान्तु शतं साग्रं दुर्गालोके महीयते। यावद्धनुःप्रमाणेन पताका प्रतिपादिता। तावद्वर्षसहस्राणि दुर्गालोके महीयते। चतुर्हस्तं धनुः कालिकापुराणे। प्रभूतं वलिदानञ्च नवम्यां विधिवच्चरेत्। कुष्माण्डमिक्षुदण्डञ्च मद्यं मांसञ्च एव च। एते वलिसमाःप्रोक्ता तृप्तौ छागसमाः सदा। भविष्ये। तत्र देशे न दुर्भिक्षं नच दुःखं प्रवर्त्तते। नाकाले म्रियते कश्चित् पूज्यते यत्र चण्डिका। शरत्काले महाष्टम्यां चण्डिकां यस्तु पूजयेत्। विमानवरमारुह्य मोदते ब्रह्मणा सह। अथावरण पूजा। देवीदक्षिणे स्थापितसिंहं संपूज्य पूर्वादि। ओं ऱ्हीं जयन्त्यै नमः। एवं मङ्गलायै काल्यै भद्रकाल्यै कपालिन्यै दुर्गायै शिवायै क्षमायै धात्र्यै स्वधायै स्वाहायै ततः ऱ्हीं उग्रचण्डायै प्रचण्डायै चण्डवीरायै महाबद्धायै चंडवत्यै चंडरूपायै ऱ्हीं उग्रदंष्ट्रायै महादंष्ट्रायै दंष्ट्राकरालायै वज्ररूपिण्यै ग्रामण्यै भीमसेनायै [विशालाक्ष्यै मङ्गलायै मङ्गलदायै नन्दिन्यै भद्रायै लक्ष्म्यै कामदायै भोगदायै दृष्ट्यै मेधायै साध्व्यै यशोवत्यै शोभायै बहुरूपायै धृत्यै आनन्दायै सुनन्दायै नन्दायै [अथ चतुःषष्टि देव्यो द्वात्रिंशत् षोडश द्वादशाष्टौ वा पूज्याः॥ ओं विजया मङ्गला महाधृतिः शिवा क्षामा सिद्धिः तुष्टिः जया पुष्टिः प्रिया ऋद्धिः रतिः दीप्ता कान्तिः पद्मा लक्ष्मीः ईश्वरी वृद्धिः शक्तिः जयवती ब्राह्मी जयन्ती अपराजिता अजिता मानिनी श्वेता। दितिः माया महामाया मोहिनी रतिलालसा तारा विमला कौमारी शरणा

॥ व्र ॥ गोरूपा कामाक्षी मतिर्दुर्गा क्रिया अरुन्धती घण्टा कराला। कपालिनी रौद्री काली मायूरी त्रिनेत्रा सुरूपा वज्ररूपा रिपुहा अम्बिका चर्चिका
॥ ८५ ॥ पूजिता वैवस्वती कौमारी माहेश्वरी वैष्णवी महालक्ष्मी काकी कौशिकी शिवदूती चामुण्डा। शिवे प्रसीद चामुंडे दुर्गे महिषमर्दिनि।
ततः ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी चामुण्डा महालक्ष्मी मध्ये चंडिका। ततः ओं कालि कालि स्वाहा हृदयायनम इत्यादि
शान निर्ऋति वायव्येषु। ओं कालि कालि लौहदंडायै स्वाहा अस्त्राय पश्चात्। ओं कालिकालिलौहदंडायै नेत्रायपुरः॥ अथ पञ्चवक्त्राणि। ओं
ईशानाय नमः शिरसि। कालिकालि तत्पुरुषाय नमः मुखे ओं वज्रेश्वरि अघोराय नमः। ओं लौहदंडायै वामदेवाय नमः। पादयोः ओं स्वाहा
सद्योजाताय नमः सर्वांगे। अथायुधानि दक्षिणोर्ध्वकरादित्रिशूलं खड्गं चक्रं तीक्ष्णवाणं वामेखेटं पाशं अङ्कुशं घण्टां ततः ओं वज्रभैरवदंष्ट्रायुधाय
महासिंहासनाय ओं हुं फट् नम इति सिंहं महिषाय नमः। नागपाशाय नमः इति पूजा। भविष्ये। वर्षैः पद्मसहस्रैस्तु यत्पापं समुपार्जितं। तत्स
र्वं विलयं याति घृताभ्यङ्गेन वै नृप। घृतेन पयसा दध्ना स्नापयेच्चंडिकां नृप। निम्बपत्रैश्च गन्धाद्यैःघर्षयेद्यततस्तत इति दुर्गाभक्तितरङ्गिण्यां महाष्टमी
महानवम्योः पूजा॥ इति श्रीभट्टनीलकण्ठात्मज भट्टशङ्करकृतौ व्रतार्के नवमी व्रतानि। अथ दशमी व्रतानि॥ तत्र यस्यां कस्याञ्चिच्छुक्लदशम्यामा
शादशमीव्रतं। हेमाद्रौ भविष्योत्तरे। युधिष्ठिर उवाच॥ कथमाशादशम्येषा गोविन्द क्रियते कदा। दमयन्त्या नलस्यैव यया जातः समागमः। श्री
कृष्ण उवाच॥ राज्याशया राजपुत्रः कृष्यर्थं च कृषीवलः। वाणिज्यार्थी वणिक् पुत्रः पुत्रार्थं गुर्विणी तथा। धर्मकामार्थसंसिद्ध्यै लोकःकन्या वरार्थिनी यष्टु
कामो द्विजवरो रोगी श्रेयोर्थमेव च। चिरप्रवसिते कान्ते वाले दन्तनिपीडिते। एतेष्वन्येषु कर्तव्यमाशाव्रतमिदं तदा। यस्माघस्य भवेदार्तिः कर्यं
तेन तदा व्रतं। शुक्लपक्षे दशम्यां तु स्नात्वा संपूज्य देवताः। नक्तमाशा सुपूज्या वै पुष्पभक्तकचन्दनैः। गृहांगणे लेखयित्वा यवैः पिष्टातकेन वा। ८५
स्त्रीरूपास्त्वाधिदेवस्य शस्त्रवाहन चिह्निताः। अधिदेवस्य तत्तद्दिकपालस्येन्द्रादयस्ततः स्वैर्वाहनैश्च चिह्नितालेखयित्वेत्यर्थः दत्वा घृताक्तं नैवेद्यं पृथग्दीपां

स्य दापयेत् । फलानि कालजातानि ततः कार्य्ये निवेदयेत् । आशाः स्वाशाः सदा सन्तु सिद्धान्तां मे मनोरथाः। भवतीनां प्रसादेन सदा कल्याण मास्त्विति:।
एवं संपूज्य विधिवद्दत्वा विप्राय दक्षिणां । अनेन क्रमयोगेन मासि मासि समाचरेत् । वर्षमेकं कुरुश्रेष्ठ ततःपश्चात् समापयेत् । सौवर्णीः कारयेदाशाः
रौप्याः पिष्टातकेन वा । ज्ञातिबन्धुजनैः सार्द्धं स्नातः सम्यगलङ्कृत । पूज्याः प्रक्रमयोगेन मन्त्रैरेभिर्गृहाङ्गणे । त्वयि सन्निहितः शक्रः सुरासुर नमस्कृतः।
पूर्वात्वं भुवनस्या।स्य ऐन्द्री दिग्देवते नमः। अग्नेः परिग्रहादाशे त्वमाग्नेयीति पद्यसे। तेजोरूपा परा शक्ति राग्नेयि वरदाभव। धर्मराजं समाश्रित्य लोकान्
संयमयत्यसौ तेन संयमनी चासि याम्ये सत्कामदा भव । खड्गहस्तातिविकृता निर्ऋतिस्थानमाश्रिता तेन निर्ऋतिनामासि त्वमाशां पूरयस्वमे । त्वय्यास्ते भु
वनाधारो वरुणोयादसां पतिः। कर्मार्थं मम धर्मार्थं वारुणि प्रवणा भव। अधिष्ठितासि यस्मात्वं वायुना जगदायुना वायव्ये त्वमतः शांतिं नित्यं यच्छममा
लये धनदेनाधिष्ठितासि प्रख्याता त्वमिहोत्तरा । निरुत्तरा भवास्मासु दत्वा सद्योमनोरथं देशाभिजगदीशेन शंभुना त्वमलङ्कृता । पूरयस्वाशुमे देवि
वांच्छितानि नमोनमः । भुजङ्गाष्टकुलेन त्वं सेवितासि यतोह्यधः । नागांगनाभिः सहिता हिता भव ममाद्यवै । सर्वलोकोपरिगता सर्वदात्वं शिवा
यच । सनकाद्यैः परिवृता चाहिमांपाहि सर्वदा । नक्षत्राणिच सर्वाणि ग्रहास्तारागणस्तथा नक्षत्रमातरो याश्च भूत प्रेत विनायकाः । सर्वे ममेष्टसिद्ध्य
र्थं भवन्तु प्रवणाः सदा। एभिर्मंत्रैः समभ्यर्च्य पुष्पधूपादिना ततः । वासोभि रभिसंच्छाद्य फलानि विनिवेदयेत् । ततो बन्दिनिनादेन गीतवादित्रमङ्गलैः
नृत्यन्तीभिर्वरस्त्रीभिर्जाग्रतीव निशांनयेत् । कुङ्कुमाक्षततांबूलदान मानादिभिः सुखं । प्रभाते वेदविदुषे ब्राह्मणाय निवेदयेत् । अनेन विधिना सर्वं
क्षमाप्य प्रणिपत्यच । भुञ्जीत मित्रसहितः सुहृद्बन्धुजनेन च । य एवं कुरुते पार्थ दशमीव्रतमादरात् । सर्वान् कामानवाप्नोति मनसोभिमतान्न
रः । स्त्रीभिर्विशेषतः कार्य्यं व्रतमेतद्युधिष्ठिर । प्राणिवर्गे यतो नार्य्यः श्रद्धाकामपरायणाः । धन्यं यशस्यमायुष्यं सर्वकामफलप्रदं । कथितन्ते महारा
ज मया व्रतमनुत्तमं । येमानवा मनुजपुङ्गव कामकामाः संपूजयन्ति दशमीषु सदा दशाशाः । तेषां विशेष निहिता हृदयेपिकामानाशुः फलंत्यलमलं

॥ व्र ॥ वङ्कनोदितेन ॥ इति भविष्योत्तरे आशादशमीव्रतं ॥ अथ ज्येष्टशुक्ल दशम्यां दशहराख्यायां स्नानदानादिकं ॥ स्कांदे ज्येष्टशुक्लाच दशमो·संवः
॥ ८६ ॥ स्मृता । तस्यां स्नानं प्रकुर्वीत दानञ्चैव विशेषतः । यां कांचित्संरितं प्राप्य दद्यादर्घं तिलोदकं । मुच्यते दशभिः पापैः सुमहापातकोपमैरिति ।
शुक्लदशम्यांतु भवेद्भौमदिनंयदि । ज्ञेया हस्तर्चसंयुक्ता सर्वपापहरा तिथिरिति । वाराहपुराणे ॥ दशम्यां शुक्लपचेतु ष्टमासेतु जाह्नवी । अवतं ।ः
तः स्वर्गाद्र्त्तर्द्धे च सरिद्वरा हरते दशपापानि तस्मादशहरा स्मृता । इति स्कान्दे ॥ जेष्ठे मासि सितेपचे दशम्यां बुधहस्तयोः । गरानन्देव्यतीपाते कन्या
चन्द्रे हृषेरवौ । दशयोगे नरःस्नात्वा सर्वपापैः प्रमुच्यते । तथा तत्रैवोक्तं । तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजलेस्थितः । पठेत्तुदशकृत्वस्तु दरिद्रोवापि
वाच्चमः । सोपि तत्फलमाप्नोति गङ्गांसंपूज्य यत्नरः । इति दशहराविधिः ॥ अथ भाद्रशुक्लदशम्यां दशावतारव्रतं । भविष्ये । युधिष्ठिर उवाच । व्रतं
दशावतारारख्यं कृष्ण ब्रूहि सविस्तरं । समन्त्रं सरहस्यं च सर्वपापोपशान्तिदं । श्रीकृष्ण उवाच ॥ दशम्यां शुक्लपचस्य योसौ प्रौष्टपदे शुचिः । स्नात्वा
जलाशये स्वच्छे पितृदेवादितर्पणं । कृत्वा कुरुकुलश्रेष्ठ गृहमागत्य मानवः । गृह्क्रियाद्धान्यचूर्णास्य स्वहस्त प्रसृतिचयं । क्रमेणापाचयेतन्तु पुंसंज्ञं घृतसंयुतं
वर्षे वर्षे दिने तस्मिन्नेवं वर्षाणि वैदश । प्रथमेपूपकान्वर्षे द्वितीये घृतपूपकान् । तृतीयेपूपवासारास्तुर्थे मोदकान् शुभान् । सोहालकान् पञ्चमे वै
षष्टेवैषट्वेष्टकान् । सप्तमेव्दैकोकरसानर्कपुष्पांस्तथाष्टमे । नवमे कर्णवेष्टांस्व दशमे मण्डकान् शुभान् । दशात्मने दशहरे दशविप्राय दायबेत् । क्रमेण
भच्चयेद्दत्वा यथोक्तविधिना नृप अर्धार्धं विष्णवेदेयमर्धार्धंच द्विजातये । ततो परार्धमश्नीयाद्गत्वा रंम्ये जलाशये । दशावतारानभ्यर्च्य पुष्पधूपविलेपनैः ।
मन्त्रेणानेन मेधावी हरिमभुच्य वारिणा मत्स्यंत्र कूर्मं वराहञ्च नरसिंहं त्रिविक्रमं । रामं रामञ्च कृष्णञ्च बोद्धञ्चैव सकल्किनं । गतोस्मि शरणं देवं हरि
नारायणं विभुं प्राणतोस्मि जगन्नाथ समेविष्णुः प्रसीदतु । क्विनत्तु वैष्णावीं मायां भक्त्या प्रीतो जनार्दनः । श्वेतद्वीपं नयत्वस्मान्मयात्मासं निवेदितं । अच ८६
हैमीर्मत्स्यादिदशमूर्त्तीर्धरणी व्रतवत्कृत्वा पूज्याः यएवं कुरुते भक्त्या बिधिनानेन सुव्रतं । दशावतारनामाद्यन्तस्य पुण्यफलं शृणु । श्रूयते यास्त्विमा लोके पु

रूपाणां दशादशाःतांश्छिनति नसन्देहस्वचक्रप्रहरणो विभुः। संसारसागराद्घोरात्समुद्धृत्य जगत्पतिः। श्वेतद्वीपं नयत्याशु व्रतेनानेन तोषितः। किंतस्य नमवेल्लोके यस्य तुष्टो जनार्द्दनः। यद्दुर्लभं यदप्राप्यं मनसो यन्नगोचरं। तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः। सोहं जनार्दनः साक्षात्कालरूपध रोच्युतः। मर्त्ये लोके स्वयं पार्थ भूभारोत्तारकारणात्। या स्त्री व्रतमिदं पार्थ चरिष्यति मयोदितं। सा लक्ष्म्यायुक्तवलया पुत्र भर्त्तृ समन्विता। म र्त्त्ये लोके चिरंस्थित्वा विष्णुलोके महीयते। ये पूजयन्ति पुरुषाः पुरुषोत्तमस्यमत्स्यादिकांस्तु दशमीषु दशावतारान्। मन्ये दशस्वपि दशासु सुखंविहृत्य ते यांति यानमधिरुह्य मुरारिलोकं॥ इति भविष्ये दशावतारव्रतं॥ अथ आश्विन शुक्लदशमी विजयदशम्याख्या साच तारकोदयव्यापिनी ग्राह्या तदुक्तंचिं तामणौ॥ आश्विनस्य सिते पक्षे दशम्यां तारकोदये। स कालो विजयो नाम सर्व कार्य्यार्थसाधकः। रत्नकोशेपि ईषत् सन्ध्यामतिक्रांतः किञ्चिदुद्भिन्न तारकः। विजयोनाम कालोयं सर्वकार्य्यार्थसाधक इति दिनद्वये तद्व्याप्तावव्याप्तौवा अपराजिता पूजायां पूर्वैव तदुक्तं हेमाद्रौस्कांदे। दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता। ऐशानींदिशमाश्रित्य अपराह्ने प्रयत्नतः। यापूर्णा नवमी युक्ता तस्यां पूज्यापराजिता क्षेमार्थं विजयार्थंच पूर्वोक्तविधि ना नरैः। नवमीशेषसंयुक्ता या दशम्यापराजिता ददाति विजयं देवी पूजिता जयवर्धिनी तथा आश्विने शुक्लपक्षेतु शदम्यां पूजितानरः। एकादश्यां न कुर्वीत पूजनञ्चापराजित मिति। यात्रात्वेकादशमुहूर्त्ते कार्य्या। तथाच भृगुः। आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु सायं काले शुभा यात्रा दिवा वा विजयक्षणे एकादशमुहूर्त्तोयो विजयः सम्प्रकीर्त्तितः। तस्मिन् सर्वैर्विधातव्या यात्रा विजयकांक्षिभिरिति दिनद्वये एकादश मुहूर्त्तव्याप्तावव्याप्तौवा श्रवणयुता ग्राह्या तथाच हेमाद्रौ मदनरत्नेच कश्यपः। उदये दशमी किञ्चित् संपूर्णैकादशी यदि। श्रवणर्क्षोयदा काले सा तिथिर्विजयाभिधा। श्रव णर्क्षेतु पूर्णायां काकुत्स्थः प्रस्थितोयतः। उल्लंघयेयुः सीमांतं तद्दिनर्क्षे ततो नरा इति। अथ कृत्यं भविष्ये। शमी सुलक्षणोपेता ईशानाशाप्रतिष्ठिता। संप्रार्थ्य तांच संपूज्य त्वीशानीकुन्मुखो भवेत् मन्त्रः शमी शमयते पापं शमीलोहितकंटका। धारयित्र्यर्ज्जुनास्त्राणां रामसंवाददायिनी। करिष्यमाणाया

॥ व्र ॥ चायां यथा कालं सुखं मम। तत्र निर्विघ्नदा चोत्वं भव श्रीरामपूजिता। गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदं। गीतवादित्रनिर्घोषै रानये-
॥ ८७ ॥ गृहं प्रति। ततो भूषणवस्त्रादि धारयेत्स्वजनैः सहेति। अथापराजित दशम्यां पूर्वोक्ते विजयामुहूर्त्ते उक्तं प्रास्थानिकमित्युपक्रम्य तदग्निं स्व-
अलङ्कृतो भूषितभृत्यवर्गः परिष्कृतो तुङ्गतुरंगनागः। वादित्रनाद प्रतिनादिताशं सुमङ्गलाचारपर पराशी। राजा निर्गत्य सवनात्पुरोहित पुरोग-
प्रस्थानिकविधिं कृत्वा प्रतिष्ठेत्पूर्वतोदिशि। गत्वा नगरसीमांतं वास्तुपूजां समाचरेत्। संपूज्य वाथदिक्पालान् पूजयेत्पथि देवताः। मन्त्रैर्वैदिक-
पौराणैः पूजयेच्चशमीतरुं। अमङ्गलानां शमनीं शमनीं दुःकृतस्य च। दुःस्वप्नशमनीं धन्यां प्रपद्येहं शमीं शुभां ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमात्क्रा-
मेत्। रिपोः प्रतिकृतिं कृत्वा वामेन मनसा यतं। शरेण स्वर्णपुङ्खेन विद्ध्येद्धृदयमर्मणि दिशाविजयमन्त्राश्च पठितव्याः पुरोधसा। एवमेव विधिं
कृत्वा दक्षिणादि दिशास्वपि। पूज्यान्द्विजांश्च संपूज्य सांवत्सरपुरोहितौ राजवाजिपदातीनां प्रेक्षाकौतुक माचरेत्। जयमङ्गलशब्देन ततः स्वभवनं
विशेत्। नीराज्यमानः पुण्याभिर्गणिकाभिस्समङ्गलं। य एवं कुरुते राजा वर्षे वर्षे समङ्गलं। आयुरारोग्यमैश्वर्यं विजयञ्च सगच्छति। नाधयो
व्याधयश्चैव नभवन्ति पराजयः। श्रियं पुण्यमवाप्नोति विजयञ्च सदाभुवीति। उक्तं प्रस्थान व्याख्यास्यामो जनेषु गमिष्यत्सु पार्थिव वान
स्यत्यदुन्दुभयो वीणाश्चोपवादयेरन्। हृष्टात्वलङ्कृतां स्वारुवदन्तमुदगयने पूर्वपक्षे पुण्यनक्षत्रे केशश्मश्रुरोमनखानि वापयित्वा संभारानुपक्ल-
प्तयित्वा मैत्रे मुहूर्त्तेऽग्निमुपसमाधाय शांतिप्रतिसरं कारयित्वा वोढारन्तेनाभिषिंचेरन्। येषां कौतुकैश्च प्रचरन्ति परतस्त्रीकृतात् प्रतीघाता-
दिति। यथोक्तमञ्जनाभ्यंजनानुलेपनं कारयित्वा वासोगन्धान् स्रजश्चावध्य पुरः कर्त्तारं स्थापयित्वा कर्त्तान्वारभ्य जुहोत्यभयैरपराजितै रायुष्यै
स्वस्त्ययनैः शर्मवर्मभिर्जनवेदनैश्च हुत्वा पार्थिवस्येति सा प्रगाज्येति च हुत्वा आगदता तस्येतीन्द्रस्थालीपाकेनेष्ट्वा आतिष्ठजिष्णुत अनूत्तरान्तृज ८७
वन्ति पन्थानमास्थाययेदिमौपादौ यत इन्द्रत्रातारमिन्द्रमानो विन्द्रअभयं सोमोष्टबृहस्पतिर्नः परिपातु पश्चादिति त्रीन् विष्णुक्रमान् क्रांत्वा विविवाहं

कारयेन्न दूरान् प्रतिष्ठेन्नराचिंपरिवसेत्सद्य एव कुर्य्यादिति मदनरत्ने गोपथब्राह्मणे विजयादशमीविधिः ॥ इति भट्टनीलकण्ठात्मज शङ्करकृतौ व्रतार्के दशमी व्रतानि ॥ अथैकादशी व्रतानि ॥ तत्रोपवास एकादशीनिर्णयः । सा च द्विविधा शुद्धा दशमीविद्धाच वेधोपि द्विविधः । अरुणोदये दशमी सम्बन्धात्सूर्योदये च । तत्राद्यो वैष्णवैस्त्याज्यः । तथाच भविष्ये । अरुणोदयकाले तु दशमी यदि दृश्यते । सा विद्धैकादशी तत्र पापमूलमुपोषणं । तथा । दशमीशेषसंयुक्तो यदिस्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दिनैकादशी व्रतं । अरुणोदयस्वरूपन्तु हेमाद्रौ स्मृत्यन्तरे दर्शित । निशि प्रान्ते तु यामार्द्धे देववादित्रवादने । सारस्वतानध्ययने चारुणोदय उच्यते यामार्द्ध मुहूर्त्तद्वयलक्षकं । अतएव सौरधर्मेषु । आदित्योदय वेलायां या मुहूर्त्त द्वयान्विता । सैकादशी तु संपूर्णा विद्धान्या परिकीर्तितेति । यच्च माधवीये स्कान्दे । उदयात् प्राक्चतस्रस्तु घटिका अरुणोदय इति । तदपि द्वात्रिंशत् घटिकारात्रिमानपक्षे मुहूर्त्तद्वयस्य तावत्परिमाणत्वादुक्तमिति द्वैतनिर्णये पितामह चरणाः । येपि ब्रह्मवैवर्ते । चतस्रो घटिकाःप्रातररुणोदयनिश्चयः । चतुष्टयविभागोच वेधादीनां किलोदितः । अरुणोदयवेधःस्यात् सार्द्धन्तु घटिकात्रयं । अतिवेधो द्विघटिकः प्रभासं दर्शनाद्रवेः । महावेधोपि तत्रैव दृश्यतेर्को नदृश्यते । तुरीयस्तत्र विहितो योगः सूर्योदये सतीत्यादयो वेधास्तेप्यर्वाकदोषातिशयार्था इति तातचरणाः । वैशावलक्षणन्तु स्कान्दे । परमापद्मापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षातु वैष्णवी । समात्मा सर्वजीवेषु निजोचारादविच्युतः । विष्णुर्पिताखिलाचारः सहिवैष्णव उच्यते इति गारुडे वैखानसाद्यागमोक्तदीक्षां प्राप्तोहि वैष्णवः । तथा विष्णवर्पिताखिलाचारः सहि वैशावउच्यते ॥ भविष्ये ॥ यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा । तुल्ये ते मन्यते यस्तु सहि वैशावउच्यते इति । अतिवेधादयः सर्वे ये वेधास्तिथिषु स्मृताः । सर्वेष्वपत्र विज्ञेया वेधः सूर्योदये स्मृत इति मदनरत्नधृतस्मृत्युक्तसूर्योदयवेधः परिशेषादेतल्लक्षण रहितस्मार्त्तपर एव । तत्र वैष्णवानामेकादशी निर्णीयते । तत्र शुद्धा चतुर्द्धा एकादशीमात्राधिका । द्वादशीमात्राधिका उभयाधिका अनुभयाधिका चेति तत्राद्या परैव तथाच नारदः । संपूर्णैकादशी यत्र द्वादश्यां वृद्धि

॥ व ॥ गामिनी। द्वादश्यां लङ्घनं कार्य्यं त्रयोदश्यांतु पारणमिति। संपूर्णा चार्कोदयात्प्रागिति परिभाषिता। द्वितीयापि परैव तथाच हेमाद्रि मदनरत्न
॥ ८८ ॥ दिधृत भागवतादि तन्त्रे॥ संपूर्णैकादशी त्याज्या परतो द्वादशी यदि। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणं। नगर्भे विशते जन्तु रित्याह भ॰
वान् हरि रिति। भविष्यत्पुराणेपि॥ उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणं। निर्गतायां त्रयोदश्यां कला वा द्विकलापि वा। द्विकलायांतु द्वादश्या
पारणं यः करोतिहि। तामुपोष्य महीपाल न गर्भे विशते नरः। इदमपि पूर्वेणैकवाक्यतयाशुद्धन्यूनाधिक द्वादशिकायामेवोत्तरत्रोपवास विधायकं
नतु विद्धन्यूनाधिक द्वादशीकार्या। अतएव पृथ्वी चन्द्रोदये वृहन्नारदीये उक्तं। संपूर्णैकादशी शुद्धा द्वादश्यां नैवकिञ्चन। द्वादशीच त्रयोदश्यामस्ति
तत्र कथं भवेत्। पूर्वा गृहस्थैः कार्य्या स्यादुत्तरा यतिभिस्तथेति हेमाद्याद्युदाहृतभागवततन्त्रसमानार्थकस्यास्य वचसो हेमाद्यालिखनमात्रेणानाकरत्वा
शिर्नव्यानामनाकरैवेति। यत्तु माधवाचार्य्यै र्नव्यैश्चकालतत्वविवेचने। एकादशी यदा लुप्ता परतो द्वादशी भवेत्। उपोष्या द्वादशी तत्र यदीच्छेत्परमां
गतिमिति। व्यासवचनात् शुद्धायां द्वादशीमात्राधिक्ये परेत्युक्तं तच्चेतितातचरणाः। लोपपदस्य सूर्य्योदयास्पर्शाख्यत्ववमे प्रसिद्धा सूर्य्योदयगतदशमीवि
द्वायामेतद्वचनप्रवृत्तेः। अतो नेदं शुद्धं न्यूनाधिकद्वादशिकायामुत्तरदिन उपवासविधायकमिति। नच लोपोत्र द्वितीयसूर्य्योदयमात्रास्पर्शित्व
रूपोभिमतो माधवाचार्य्याणामिति वाच्यन्तैरेव यतोनुपदे नैवस्मार्त्तनिर्णये पुनरिदं लिखित्वा व्याख्यातं। लुप्तादौदशमीमिश्रितत्वात्परतो वृद्धभावा
त्वक्षयंगतेतियावत् नव्यैरपि स्मार्त्त निर्णये व्यासवचनसमानार्थक ब्रह्मवैवर्त्ते वचनमुदयविद्धद्वादशीमात्राधिकायामेव योजितमिति एतेन एकादशीय
दाऽलुप्तेत्यकार प्रश्लेषेण व्याख्यानमपास्तम्। पूर्वापरविरोधान्मानाभावाच्चेतिदिक्। उभयोराधिक्ये कैमुतिकन्यायेनैव प्राप्तपरत्रोपवासानुवादोभृ
गुनारदाभ्यामुक्तः। संपूर्णैकादशी यत्र प्रभाते पुनरेवसा। तत्रोपोष्या द्वितीयातु परतो द्वादशी यदीति अनुभयाधिकातु पूर्वैवेत्यसन्देह एव अत्रा ८८
धिक्यानाधिक्ये सूर्य्योदयानन्तरानु वृत्तिरूपे बोध्ये नतु षष्टिघटिकोत्तरत्वतदभावरूपे इति वैष्णवान प्रत्येकादशी निर्णीता अथ स्मार्त्तत्वेन प्रसिद्धा

तादृश्येकादशी निर्णीयते। साच द्विविधा शुद्धा सूर्योदये दशमी सत्वेन विद्धाच। तत्र शुद्धा चतुर्द्धा एकादशी मात्राधिका द्वादशीमात्राधिका उभयाधि
का अनुभयाधिकाचेति। तत्रैकादशी मात्राधिक्ये पूर्वेद्युरुपवासउक्तः। स्कांदे। प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता। द्वादश्यांतु तथा तात
दृश्यते पुनरेवच। पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो इति। अत्र गृहस्थ यतिपदे सकाम निष्कामपरे। तथाच मार्कंडेयः संपूर्णैकादशी
यत्र प्रभाते पुनरेवसा। पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेदिति निष्काम गृहस्थस्य तूत्तरैव। निःकामस्तुगृही कुर्यादुत्तरैकादशीं सदा प्रातर्भव
तु वामावा द्वादशीच द्विजोत्तमा। इति स्कांदात्। ईदृशे विषये विष्णु प्रीतिकामैस्तु दिनद्वये प्युपवासः कार्य्यः। सपूर्णैकादशी यत्र प्राभाते पुनरेव
सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्। उपोष्ये द्वेतिथी तत्र विष्णु प्रीणनतत्परैरिति वृद्धवसिष्टोक्तेः। तातचरणास्तु विष्णु तत्पर इति। य
द्वा वैष्णवानामेवेदमिति इदंचोपवासद्वयं नैकाधिकारिणं प्रतिविधीयते एक निमित्तकोपवासस्यावृत्तेरयुक्तत्वात् किंतु मार्कंडेयवचनात्सकामनिःकामा
भ्यां तत्र कामेन पूर्वा निष्कामेनोत्तरेति। केचित्तु द्वंद्वसमानार्थके न तिथी इत्येकशेषेणेतरेतरयोगस्य प्रतीतेर्विष्णु प्रीति युक्ताधिकार्य्यन्तरश्रवणा
च्चैके नाधिकारिणे तरेतरयुक्तं तिथिद्वयमुपोष्यं आवृत्तिस्ववाचनिकीतिपरे शुद्धायां द्वादशीमात्राधिक्येपि पूर्वेद्युरुपवास उक्तः। स्कांदे शुद्धायदा
समाहीना समाहीनाधिकोत्तरा एकादशीमुपवसेन्न शुद्धा वैष्णवीमपि शुद्धैकादशी यदा समा न्यूना वा भवति उत्तरा द्वादशी समा न्यूनाधिका
वा भवतु तदैकादशी मुपवसेन्नतु वैष्णवीं द्वादशीमित्यर्थः। एवं न्नोचेदेकादशी विष्णौ द्वादशी परतः स्थिता। उपोष्यैकादशी तत्र यदि
च्छेत्परमं पदमिति नारदवचनमप्येतदेक वाक्यतया एतद्विषयमेव यत्तु यदिच्छेदित्यर्थवादमात्रं नतु मुमुक्षूणां पूर्वोपवासविधायकं। तेषामुत्तरत्रोप
वासस्यैव सर्वत्र विधानेन तदनौचित्यादितिकाल तत्वविवेचने। नव्यास्तुचिंत्यं मुमुक्षूणां विद्धानधिकायामेव परत्रोपवासस्य दिनत्रयेतुशुद्धैव द्वादशीमे
कादशीमपि शुद्धा एकादशी ... सदा मुमुक्षुभिर्द्दशमीविद्धानोपोष्यैकादशीतिथिरित्यादिवचनैर्विधानात् तेन यदीच्छेदित्यस्यार्थवा

॥ व्र ॥ दत्वेप्युक्तो दाहरणे वैष्णवातिरिक्तानां स्मार्तानां मुमुक्षूणामपि तेषां पूर्वोपवास विधानमेवयुक्तं शुद्धायामुभयाधिक्ये तु परेद्युरेवोपवासः। पूर्णाप्येकादशी त्य
॥ ८९ ॥ क्तव्या वर्द्धते द्वितयं यदीति स्कांदात्। सपूर्णैकादशी यत्र प्रभाते पुनरेव सा सर्वैरेवोत्तरा कार्या परतो द्वादशी यदीति। नारदीयाच्च बहुविद्धाप्यविद्धा विज्ञे
रतो द्वादशी नचेत्। अविद्धापिच विद्धा स्यात्परतो द्वादशी यदीति। पाद्मवचनं न तत्सर्वं वैष्णवविषयं वक्तुं शक्यं। तेषां विद्धाया निषेधात्। नापि स
विषयं। शुद्धा यदा समाप्नोनेत्यादि वचनविरोधात्। किन्तु पूर्वार्द्धस्य स्मार्तान्प्रतिप्रवृत्तौ बाधकाभावेन तदेकवाक्यतया वर्द्धते द्वितयं यदीति पूर्वोक्त। ।
कवाक्यतया च तान् प्रत्येवोभयवृद्धौ ज्ञेयं। शुद्धायां उभयानाधिक्ये तूत्तराप्रापक प्रमाणाभावेन सन्देहाभावात्पूर्वैव इति शुद्धानिर्णयः। अथ विद्धापि पूर्वे
देव चतुर्द्दशी तत्र विद्धैकादशी मात्राधिक्ये विद्धायामेवोपवासः। तथाच प्रचेता एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः। उत्तरांतु यतिः कुर्यात्पूर्वामुपव
सेद्गृहीति इदं चाशेषात् शुद्धाविद्धातुल्यमिति माधवः। यत्तु संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। उत्तरांतु यतिः कुर्यात्पूर्वामुपवसेद्गृहीत्याद्यनेकवाक्यै
कवाक्यतया प्रचेतो वचनं शुद्धाविषयमेवेति कालतत्वविवेचनकारि र्माधव मतं दूषयित्वा स्वयमनंत भट्टमदनरत्नानुसारेण निर्णयः कृतः सच द्वादशीमि
श्रिता कार्या सर्वत्रैकादशी तिथिः। द्वादशीच त्रयोदश्यां विद्यते यदिवानवा तत्रा सर्वत्रैकादशी ग्राह्या द्वादशीमिश्रिता नरैः। प्रातर्भवतु वा मावा यतो
नित्यमुपोषणं। उपोषणस्य प्राधान्याद्दंत्यकलावच्छिन्नैकादशी। तत्र मुख्या पारणत्वगतं। तत्र द्वादश्यस्तिवेलभ्यगोवनो चेत् त्रयोदश्यामेव तत्कार्यमित्य
र्थः। द्वादश्येकादशी यत्र सङ्गता त्रिदशाधिप। तामुपोष्य ततःकार्य्यं त्रयोदश्यांतु पारणं। एकादशी कलामात्रा परतो द्वादशी भवेत्। तत्र क्रतुश
तं पुण्यं त्रयोदश्यांतु पारणं। परत एकादशी कलोत्तरं एकादशी द्वादशीच रात्रि शेषे त्रयोदशी। उत्तरार्धं तदैव इत्यादि पाद्म नारद स्कान्द
कौर्मादिवचनैर्विद्धाधिकानधिक द्वादशिकायामुत्तरत्रैवोपवास इत्येव रूप इति तच्चित्यं। यतः सपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी द्वादश्यां लङ्घनं ८९
कार्य्यं त्रयोदश्यांतु पारणं। एकादशीकला प्राप्ता येन द्वादश्युपोषिता। तुल्यंक्रतुशतस्योक्तं त्रयोदश्यां तु पारणं। एकादशीकलाप्येका द्वादशी सकलन्दिनं।

त्रयोदशी उषःकाले वैष्णवं तद्दिनत्रयं। सर्व्वपापहरं प्रोक्तं तदुपोष्यमितिस्मृतमित्यादि एकादशी नात्राधिक्य् वैष्णवविषयत्वेन एवं माध
वादिभिश्च लिखितानि तदैकवाक्यतया द्वादशीमिश्रिते त्याद्युक्तानि सर्व्वाणि शुद्धाविषयाण्येवेति कथं विद्धाधिकायां स्मार्त्तपरतया योज
यितुं शक्यानि यदि त्वेतानि विद्धाधिकायां स्मार्त्तानां शुद्धाधिकायां वैष्णवानामित्यधिकारिभेदेनापि प्रवर्त्तन्ते तर्ह्येकाधिकारिणं स्मार्त्तं
प्रति शुद्धाविद्धा साम्येन माधवोक्तं प्रचेतोवाक्यं किमिति शुद्धाविषयमेव व्याख्यातमिति विद्वद्भिरालोचनीयमिति तस्मात्प्रचेतो वच
नात्पूर्व्वेतिमाधवोक्तिः। पाद्मादिवचनैरुत्तरेत्यनंतभट्टमदनरत्नव्योक्तिश्चायुक्तेति। विद्धैकादशी मात्राधिक्ये किञ्चिदुच्यते। सर्व्वैका
दशी कार्य्या दशमीमिश्रिता नरैः। प्रातर्भवतु वामावा यस्मान्नित्यमुपोषणमिति। कालादर्श मदनरत्नयोर्न्ध्रत्यश‍ृङ्गवचनं प्रातर्द्वादशीदिने
एकादशी भवतु मावेत्यर्थकं। एकादशी यदा विद्धादशमी भवतु मावेत्यर्थकं। एकादशी यदा विद्धादशमी च त्रयं गता। दशमी मिश्रिता तत्र
उपोष्या मुनिसत्तमेति। कालादर्शादि धृतवायु पुराणीयञ्च विद्धोपवासविधानं विप्रानर्थकं यत् दिनत्रयस्पृतेदेवि नोपोष्या दशमीयुता सैवोपोष्या सदा
पुण्या परतश्चेत्त्रयोदशीत्यनंतभट्टहेमाद्र्यादिधृतपद्मपुराणवचनं दिनत्रयातिरिक्त दशमी विद्धायामुपवास निवृत्तिं विनाऽनर्थकमिति द्वयोर्विरोधप्रसक्तौ
व्यवस्थैवं कार्य्या दशमीविधायकं वचनं पुत्रवद्भिन्नगृहस्थानां नोपोष्यादशमीयुतेतिनिवर्तकं पुत्रवद्गृहस्थानां यतीनांच दशम्यनुगता यत्र तिथिरेकादशी
भवेत्। तत्रापत्यविनाशःस्यात् परेत्य नरकं व्रजेत्। तथा उदयोपरि विद्धातु दशम्येकादशीयदि दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः। दश
मीशेषसंयुक्ता गांधार्य्या समुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत्। ये कारयन्ति कुर्वंति दशम्येकादशीं यता। आलोक्य तन्मुखं व्रह्मन् सूर्य्य
दर्शनमाचरेदिति। तथा एकादशी यदाविद्धापरतोपि न वर्द्धते। यतिभिर्गृहिभिश्चैव सैवोपोष्या त्रयेतिर्थिरितीत्याद्या। नेकवाक्यैक वाक्यत्वात् अत्र
दिनत्रय सूर्योदयन्यूनत्व रूपएव। दिनत्रयस्पृते दैवीति माधवादिधृतपाठात्। यद्यपि दिनत्रयस्पृतेतिपर्य्युदासात्साम्ये परा प्राप्ता। तथापि अविद्धानिनि

विद्धे अन्नलभ्यंते दिनानितु मूहूर्तैः पञ्चभिर्विद्धा ग्राह्येवैकादशी तिथिरितिकृष्णशृङ्गेण साम्येनापि विद्धा ग्राह्या तयाउक्तत्वात् मुहूर्त्तपः
दशमारभ्य चयं सूर्योदयमारभ्य ग्रहणेतुत्रिमूहूर्त्ताधिकचयाभावाद्द्वितीयदिने एकादश्यवश्यंभावेनाविद्धालाभस्या संभवएव । एवंचौदयि
दश्युत्तरां प्रवृत्तायाएकादश्यास्त्रिमुहूर्त्तं चीणायाः सूर्योदयसाम्यमेव भवतितेन मुहूर्त्तपञ्चकनियमोपि सार्थकोन्यथा वैयर्थ्यंस्यात् । नतं
नक्षये उपवासं करोति यः । तस्यपुत्रा विनश्यन्तिमघायां पिण्डदोयथेति पिण्डदस्य आदन्त षष्ठ्येक वचन आतोधातोरित्याकारलोपइति मह
पिण्डतोयथेतिपाठः दिनक्षयेतु संप्राप्ते नोपोष्या दशमीयुता । यदीच्छेत्पुत्रपौत्राणा मृद्धिं संपदमात्मन इत्यादिषु उपवासदिने निषेधात सैवोपोष्येति विधा
माद्विष्टिता प्रतिषिद्धत्वात् । विकल्पापतिरितिचेन्न एकादशी प्रकरणे । भाषमाना निषेधा प्रायशः पर्युदासाएवेति । तदापत्तिविरहात् तत्र येषु दशमी
विद्धानिषेधेषु अज्ञानाद्यदिवामोहात्कुर्वन्नेकादशीं नरः । दशमीशेषसंयुक्तं प्रायश्चित्तमिदंचरेत्यादि प्रायश्चित्ताम्ना ते पुनः फलनिषेधास्तत्वतः पर्युदासाए
येतु दिनक्षयनिषेधास्तेपर्युदासाएव उपवासनिषेधेतु भक्ष्यं किञ्चित्प्रकल्पयेत् । नदुष्यत्युपवासेन उपवासफलं लभेदिति । वायवीयेन सामान्यतः । तथा अ
विद्धा नामलाभेतु पयोदधि फलानि त । सकृदेवासमश्नीयादुपवासस्त्वसौभवेदिति । कृष्णशृङ्गवचनेन विशेषतस्तुसाम्यन्यूनत्वरूप दिनक्षये भक्ष्यनि
यम करणाच्च यानितु एकाश्यां यदावल्पदिनक्षय तिथिर्भवेत् । त्रयो पोष्या द्वादशीस्यात् त्रयोदश्यांतु पारणं तथा एकादश्यां यदा ब्रह्मन् दिनक्षयतिथि
र्भवेत् । तदाह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । तथा दिनक्षयेतु संप्राप्तेनोपोष्यादशमीयुता । उपोष्याद्वादशीशुद्धात्रयोदश्यांतु पारणमित्यादीनिपि
तामहमोभिलभविष्यत्पुराणवचनानि तानि । दिनक्षयेतु शुद्धैव द्वादशी मोक्षकांक्षिभिः । उपोष्या दशनोविद्धा नोपोष्यैकादशी सदेति । समन्तु
सत्यव्रत वचनैक वाक्यतया मुमुक्षुपराणि । एतेन पुत्रवद्गृहस्य परत्वमेतेषांक्षयस्याच न्यूनत्वरूपसाम्येतु पुत्रवतामपि पूर्वदिन एवोपवास निषेधे प्रवृ ९०
त्त्या तत्रापिक्षस्य द्वादश्युपवासविधेरप्य प्रवृत्तेः । अतएव भविष्यत्पुराणे एकादशी कलाप्येका परतो नच विद्यते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या तदा

तिथिरिति नव्योक्तिः परास्ता सकलशिष्टाचारविरोधात्साम्ये पूर्वाचयपरेत्यनौचित्याच्च । यत्तु पाद्मे एकादशी दशाविद्धापरतो नच वर्द्धते यतिभि र्गृहिभिश्चैव नैवोपोष्याचये तिथिरिति । ततत्पुचवद्गृहस्थानां यतीनांचोभयविधे चये पूर्वविद्धोपवासे उपोद्दलकमेवेति । एवंच विद्धाप्यविद्धाविद्धै या परतो द्वादशी नचेत् । चयोदश्यां न लभ्येत द्वादशी यदि किञ्चन । उपोष्यैकादशी तच दशमी मिश्रितापि चेदितिस्मृत्यंतरपाद्मस्कांदादि विद्धानुग्र हवचनानि तानि पुचवद्गृहस्थानामेव । पूर्वविद्धोपवासे उपोद्दलकानीति सर्वेषामविरोधः । तस्माद्विद्धैकादशीमाचाधिक्ये पुचवद्भिन्नगृहस्थमां पूर्वा पुचवतो तेषां यतीनांच परेति सिद्धं । विद्धायां द्वादशी माचाधिक्येतु सर्वेषां परेद्युरेवोपवासः । उपवास दिर्नविद्धं यदा भवति पूर्वया द्वितीयेऽपियदा नस्यात्तत्राप्येकादशीतिथिः । तचोपवासोविहितः कथं तद्वद सूतज ॥ सूतउवाच ॥ यदा न प्राप्यते विप्रा द्वादश्यां पूर्ववासरः । रविचक्रार्द्धमाचो पि तद्दोपोष्यं परं दिनं । उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् ॥ निर्गता वैचयोदश्यां कलावा द्विकलापिवेति हेमाद्रौ नारदीयात् । एकादशी यदा लुप्ता परतो द्वादशी भवेत् ॥ उपोष्या द्वादशी तच यदीच्छेत्परमां गतिमिति । तचैव ब्रह्मवैवर्त्ते व्यासवचनाच्च लुप्ता दिनद्वये सूर्योदयास्पर्शेन च्चयं गता यदीच्छेत्यर्थवादमाचमिति हेमाद्र्यादयो वहवः । मदनस्तु परमांगतिमुक्तिमिति व्याख्यायैतानि वचनानि मुमुक्षु विषयाण्येवेत्युक्ता प्रकृते अविद्धानि निषिद्धे सेन्न लभ्यन्ते दिनानितु । मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यायैकादशी तिथिः । मुहूर्त्तपञ्चकमरुणोदयमारभ्य ज्ञेयं । सूर्योदयमारभ्य ग्रहणेतूत्तरदिने एकादश्यभावकथनं नोपपद्यते तथा सर्वचैकादशी कार्या दशमीमिश्रिता नरैः । प्रातर्भवतु वामावा यतो नित्यमुपोषणमिति । कार्ष्णशृङ्गवचनात् । पूर्वेद्युरेवोपवासः । प्रातस्त्रयोदश्यां द्वादशी भवतु मावेत्यर्थः । इत्याह तदयुक्तं । एकादशी यदा विद्धा द्वादश्यां न प्रतीयते । द्वादशीच चयोदश्यां मस्ति तच कथं भवेत् । उपोष्या द्वादशी शुद्धा सर्वैरेव न संशय इति इहन्नारदीये सर्वेषां शुद्धा द्वादश्यामुपवासविधानात् अविद्धानि निषिद्धे स्येतितु विद्धसमन्यून द्वादशिकायां सावकाशं मुहूर्त्तपञ्चकनियमोपि साम्यएव सार्थकोनान्यथा यत्तु नैवसर्वचैकादशीति वचनं प्रातस्त्रयोदश्यां द्वादशी

॥ व्र ॥ भवतु मावेत्येवं व्याख्यायैतत्परतया योजितं तदप्ययुक्तं दशमीमिश्रितैकादशीत्युक्ते तदव्यवहितोत्तरं प्रातःकालस्यैव प्रातःशब्दात्प्रतीः
॥ ९१ ॥ दशी पदस्य कर्त्तृत्व कल्पनामपेक्ष्य श्रुतैकादशी पदस्यैव तत्त्वौचित्याच्चेति। एतेन दशमीवेधे प्रातःसङ्कल्पकाले एकादशी भवतु वा माबा
नित्यत्वात्तत्रैवोपोषणं कार्य्यमित्यपि कस्यचिद्व्याख्यानमपास्तं। बिद्धोपवासे सकलं दिनंत्यक्त्वा समाहितः। रात्रौ संपूजयेद्विष्णुं सङ्कल्पेच तद्
नारदीये विद्धोपवासे रात्रौ सङ्कल्पस्योक्तत्वेन प्रातःकाले सङ्कल्पासम्भवाच्च यत्तुकालतत्त्व विवेचने। नव्यैरिदमेव वचनं। कृष्णशृङ्गनामानु...
समयद्योते इत्येव लिखित्वा उक्त प्रकारेणैव तदीयव्याख्यां दूषयित्वा स्वारसिकव्याख्याने चैकादशीमात्राधिक्ये विद्धायामुपवासः स्यात्सचवङ्गवचनविरुद्धं।
इतिहेमाद्र्यादि सकलनिवन्धेषु दृष्टः। सर्वत्रैकादशी कार्य्या द्वादशी मिश्रिता नरै रित्येव रूपमेव तद्वचनमिति दशमी मिश्रितेतिपाठोपलपितं। त
द् युक्तं प्रामाणिकतरकालादर्शमदनरत्नादिभि कृष्णशृङ्ग नाम्ना लिखितस्यापलपितुमशक्यत्वात्। गतिस्तु पूर्वमुक्तैवेति दिक् विद्धायामुभयाधिक्ये पि
सर्वैःपरैव कार्य्या सूर्य्योदयवेधस्य स्मार्तान् प्रत्येवप्रवृत्तेः शुद्धायामुभयाधिक्यपराया उक्तत्वाद्विद्धायां तादृश्यांकैमुतिकन्यायाच्च विद्धायामनुभयाधिक्ये तु विद्धै
वोपोष्या यदिदैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयं। तत्र क्रतुशतं पुण्यं पारणे द्वादशी भवेदिति नारदवचनात्। द्विस्पृगेकादशी यत्र तत्र संन्निहितो हरिः
तामेवोपवसेत्काममकामोविष्णुतत्पर इति कौर्माच्च विष्णुर्द्वादशी तथाच द्वादशी तत्परो दशमीविद्धामुपवसेदिति फलितं। एकादशी द्वादशीच त्रये
यदि दिनत्रयं। न द्वादशी परे चैव कर्त्तव्या दशमी युते ति हेमाद्र्यादिधृतवौधायनवचने कंठरवेणोभयानाधिक्य एव दशमी युताया विधानात् परेपर
दिवसे त्रयोदश्यामिति यावत्। दिनत्रयस्पृतेदेवि नोपोष्या दशमीयुता। सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशीति सर्वनिबन्धधृतपूर्वोदाहृत
वचनाच्च॥ अत्र दशम्येकादशी द्वादशीत्येव दिनत्रयं नत्वेकादशी त्रयोदशीत्येवं रूपं। यदि दैवात्त्वित्यादिवचनैक वाक्यात् सैवेतितच्छब्देन सा वैश्वदे ९१
वीइत्यत्र तापविशिष्ट पयस इव दिनत्रय युतदशमी विद्धाया एव परामर्शो नतुदशमी बिद्धामात्रस्यापरतश्चेत्त्रयोदशीत्यनेन द्वादश्यभावः कथितः। तथा

च विद्वाउभयानधिकाविद्धैवोपोष्येति फलितार्थः। अत्रऐन्दं कृत्वोन्नेयमितिवत्सैवोपोष्येत्ययमेवच विधिर्नोपोष्या दशमीयुतेत्यनुवादो न गिरागिरेति ब्रूया दितिवत् वचनन्तु त्रिंशदितिब्रूयात् षड्विंशति रित्येवब्रूयादित्यच एवकारेणाविधिशक्तिप्रतिवन्धान्नषड्विंशति रितिविधिः किन्तु न चतुस्त्रिंशदिति निषेध एवमत्रावमात्रापि सैवोपोष्येत्यनुवादोनोपोष्या दशमी यतेति निषेध इति वाच्यं। तथा सति परतश्चेचयोदशीत्यस्यव्यवहितान्वयापत्तेः ममतु सैवोपोष्येत्यनेनैवान्वय इतिदिक्। अयञ्चोभयपक्षयोर्नित्यो गृहस्थातिरिक्तस्य तस्यतुशुक्लायामेव तथाच कौर्मे एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वनस्थपति धर्मोयं शुक्लामेव सदा गृही ति। भविष्येतु ब्रह्मचारीच नारीचेति तृतीयपाद उक्तः ब्रह्मचारी साहचर्य्यान्नारी विधवा सधवायास्तु भर्त्तृ त्रयाधिकारपरिभाषया प्रतिपादितशयनीबोधन्यंतर्गतातु कृष्णापि गृहिणा उपोष्या। तदुक्तं मदनरत्ने स्मृत्यन्तरे शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचनेति। नान्या कृष्णेति न निषेध प्राप्त्यभावात्॥ किन्तुनांतरिक्षेनदिवेत्यादिवद् नुवाद एवेति एतच्चापुत्र गृहिविषयं। पुत्रवतस्त्वत्रापि निषेधः। संक्रात्यामुपवासञ्च कृष्णैकादशिवासरे। चन्द्र सूर्य्य ग्रहेचैव न कुर्य्यात्पुत्रवान् गृहीति नारदोक्तेः आदित्येहनि संक्रांतौ ग्रहणे चन्द्र सूर्य्ययोः। पारणंचोपवासञ्च न कुर्यात्पुत्रवान् गृही। तत्प्रयुक्तोपवासस्य निषेधोयमुदाहृतः। प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनमितिजैमिनिस्मृतेश्चेति। अत्राधिकार्युक्तः कात्यायनेन। अष्टवर्षाधिको मर्त्त्योह्यशीतिन्यूनवत्सरः। एकादश्यामुपवसेत्पक्षयोरुभयोरपीति। अष्टवर्षाधिक इत्युपनयनोत्तरत्वस्योपलक्षणं। अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तेरन्निति षष्ठेस्थापितत्वादिति तातचरणाः। अयंचोपवासः। प्रातःसंकल्प्य कार्यः। तथाच देवलः अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः। सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत्। एतद्व्याख्यानं परिभाषायां द्रष्टव्यं। तथा। एकादश्यां निराहारो भूत्वाहमपरेहनि। भोक्ष्यामि पुण्डरीकाक्ष गतिर्भव ममाच्युत। सएव दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः। एकादश्यामुपवसेत्पक्षयोरुभयोरपीति। एतेनैकभक्तादिनियमाकाम्यैकादशी परा। सायमाद्यं न्तयोरह्नोःसायं प्रातं च मध्यमे। उपवासफलं प्रेप्सुर्जह्याद्भक्त चतुष्टयं। अथ नित्योपवासी चेत्सायं

॥ व्र ॥ प्रातर्भुक्तिक्रियां वर्जयेन्मतिमान्विप्रः संप्राप्ते हरिवासरे। इति विष्णूक्तेः। ब्रह्मवैवर्त्तेपि। इति विज्ञाय कुर्वीतावश्यमेकादशी व्रतं। वि
॥ ८२ ॥ शक्तो होरात्रं भुक्तिवर्जित इति। कात्यायनोपि। शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणमिति। ब्रह्मवैवर्त्ते। प्राप्ते हरिदिने सम्यक् विध
निज्ञि। दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतं। देवलः। गृहीत्वोदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासं तु गृह्णीयाद्यथासंकल्पयेद्बुधः।
ताम्रमयं। यथासंकल्पयेद्यथाकामं फलमुद्दिशेदित्यर्थः। वाराहे। इत्युच्चार्य ततोविद्वान्पुष्पांजलिमथार्पयेदिति। इत्युच्चार्य संकल्प्येत्यर्थः।
अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम्। उपवासफलं प्रेप्सुः पिबेत्पात्रगतं जलं कपालवेधे तु विशेषो नारदीये। दशम्या सङ्गदोषेण अर्द्धरात्रा
त्परेण तु वर्जयेच्चतुरोयामान् संकल्पार्चनयोस्तदा विद्धोपवासेनश्चस्तु दिनंत्यक्त्वा समाहितः। रात्रौ संपूजयेद्विष्णुं संकल्पञ्च तदा चरेत्। पूजा प्रका
रस्तु ब्राह्मे एकादश्यामुभे पक्षे निराहारः समाहितः। नानापुष्पैर्मुनिश्रेष्ट विचित्रं मण्डपं शुभम्। कृत्वेति शेषः स्नात्वा सम्यग्विधानेन सोपवासो
जितेन्द्रियः। संपूज्य विधिवद्विष्णुं श्रद्धयासुसमाहितः। पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः। उपचारैर्वहुविधैर्जपहोमैः प्रदक्षिणैः। स्तोत्रैर्नानाविधै
र्दिव्यैर्गीतवाद्यमनोहरैः। दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः। एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम्। याति विष्णोःपरं स्थानं नरो नास्त्य
त्र संशय इति विशेषो वृहन्नारदीये। पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनं। द्वादश्यां पयसा स्नाप्य हरिसारूप्यमश्नुत इति। सूतकादौ वारा
हे। सूतके च नरःस्नात्वा प्रणम्य मनसा हरिम्। एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते। मृतकेपि न भुञ्जीत एकादश्यां सदानर इति। स्त्रीणां
रजोदर्शनेत्वाह माधवीये ऋष्यशृङ्गः। संप्रवृत्तेपि रजसि न त्याज्यं द्वादशीव्रतमिति। एकादश्यां श्राद्धप्राप्तौ त्वाहमाधवीये सएव। उपवासो
यदा नित्यः श्राद्धं नैमित्तिकं यदा। उपवासं तदा कुर्यादाघ्राय पितृसेवितमिति। उपवासासामर्थ्येप्याह। तत्रैव मार्कण्डेयः। एकभक्तेन नक्तेन तथैवाया ८२
चितेनच। उपवासेन दानेन न निर्द्वादशिको भवेत्। हेमाद्रौ पुराणे। उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनादिवा दद्याद्भुक्ताद्द्विगुणं तथा

सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान्। कुर्याद्द्वादशसंख्याकान् यथाशक्त्यातुरो नर इति। अदत्वा भुक्तश्चेदिति शेष व्रताकरणे प्रायश्चित्तं स्मृत्यन्तरे। अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा। एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेदिति ॥ इति श्रीमीमांसकभट्टनीलकण्ठात्मज महशङ्कर कृतौ व्रतार्के एकादशी निर्णयः ॥ एवमेकादशी व्रतं विधाय द्वादश्यां पारणं कार्य्यं। कात्यायनः ॥ द्वादश्यां पारणं कुर्याद्वर्जयित्वाच्युपोदकीं। उपोदकी पूतिका। योइन्नीति महाराष्ट्रभाषया प्रसिद्धा। तथा। प्रातःस्नात्वा हरिं पूज्य उपवासं समर्पयेत्। अज्ञानतिमिरान्धस्य व्रतेनानेन केशव। प्रसीद सुमुखोनाथ ज्ञानदृष्टि प्रदो भव। पारणं तु ततः कुर्याद्यथा सम्भवमागत इति। यथा सम्भवत्वं च ब्राह्मण भोजन तद्दक्षिणादान बन्धुसाहित्येषु। तथाच हृद्नारदीये। ब्राह्मणान् भोजयेच्छक्त्या दद्याद्वै दक्षिणां तथा। ततः स्वबन्धुभिः सार्धं स्वय भुञ्जीत वाग्यत इति ॥ पारणेच नैवेद्यं तुलसीमिश्रितान्नेन कुर्यात् तथाच स्कान्दे कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशी दिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनमिति। तच्च द्वादशीमध्य एव कार्य्यं। महाहानिकरीह्येषा द्वादशिलङ्घिता नरैः। करोति धर्महरणमस्नातेव सरस्वतीति पाद्मे। द्वादशी लङ्घने दोषस्मरणात्। अस्नाता लङ्घिता सरस्वती यथा धर्म्मं हरति तथोपवासेन लङ्घिता द्वादशीति। तेन सरस्वत्यां स्नात्वोत्तरणं नद्यन्तरे उत्तीर्य्यं स्नानमित्युक्तं भवति। अल्पायां द्वादश्यामरुणोदय एव माध्याह्निकादि कृत्वा पारणा कार्या। कलाद्वयं त्रयं वापि द्वादशी यत्र दृश्यते। स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते। अल्पायामथविप्रेन्द्र द्वादश्यामरुणोदये। स्नानार्चन क्रियाः कार्य्या जपहोमादि संयुताः। यदा भवेदती वाल्पा द्वादशी पारणा दिने। उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदेति स्कान्द नारदपाद्म वचनेभ्यः। रात्रिशब्दोत्रारुणोदय परः। होमश्चात्र स्मार्तएव गृह्यते न श्रौतःस्मृत्या श्रौत कालबाधा योगात्। भूयस्यामपि द्वादश्यां मध्याह्नापकर्षं कृत्वा प्रातरेव पारणा कार्य्या। सर्वेषामुपवासानां प्रातरेव हि पारणमिति स्मृतेः। भोजनमाध्याह्निकयोश्च वाचनिक क्रम सद्भावात्। अथ हरिवासर स्वरूपं तद्वर्जनं चोक्तं। विष्णुधर्मे। द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः।

॥ व्र ॥ तमतिक्रम्य तु कर्तव्यं पारणं विष्णुतत्परैरिति। आषाढ भाद्रपदकार्तिक शुक्लद्वादशीषु क्रमेणानुराधाश्रवणरेवतीनां क्रमेणा [illegible] यपादयोगे
॥ ६३ ॥ पारणं न कार्यं। तत्र आभाकासितपक्षेषु मैत्रश्रवणरेवतीसङ्गमे नहि भोक्तव्यं द्वादश द्वादशीर्हरेदिति। मैत्रादिपादे स्वपितीह वि [illegible] मध्येपरिव
र्तमेति। पौष्णांत्यपादे प्रतिवोधमेति सुप्तिप्रवोधपरिवर्त्तनमेव वर्ज्यमिति। भविष्यविष्णुधर्म्मोत्तर वचसो प्रमाणत्वेन हेमा [illegible] नुनिकावन्ह
वोलिलिखुः। यतु सर्वेषां हेमाद्र्यादर्शन निवन्धनं। यतो हेमाद्रौविष्णुशयनकालनिर्णयावसरे आदिमध्यावसानेषु प्रस्वापावर्तनोत्स [illegible] पूर्वं वचनोत्त
रार्द्धं लिखितं। द्वितीयवचनोत्तरार्द्धन्तुपौष्णावसानेन सुरारिहन्ता प्रवुध्यते मासचतुष्टये नेति तेन पारणा विचारे हेमाद्रिनाम्ना एतल्लेखनं साहसमिति
दिक्। अथैकादशी व्रतोद्यापनं॥ अर्ज्जुन उवाच। कीदृग् व्रतविसर्गोच विधानं चाच कीदृकीदृशं। संपूर्णंहि भवद्येन तन्मेवद कृपानिधे। श्रीकृष्णउवाच
शृणु पाण्डव यत्ने प्रवक्ष्यामि तदव्ययं शक्तः स्वर्ण सहस्रन्तु अशक्तः काकिणीमपि। ददाति श्राद्धया पार्थ समंस्यादुभयोरपि शक्तस्त्वे द्विगुण दद्याद्यथोक्तोम
ध्यमोवधिः। उक्तार्थमप्यशक्तस्य दानं पूर्णफलप्रदम्। तद्रूप विधिमप्यस्य कथयामि तवाग्रतः। यानि कृष्णेन चीर्णानि व्रतानि कुरुसत्तम। विफलान्ये
वसर्वाणि उद्यापनविधिं विना प्रवोध समये पार्थ कुर्य्यादुद्यापन क्रियां। मार्गशीर्षे विशेषेण माघे भीमतिथावापि। दशम्यां दिनशेषेण रात्रौ गुरुगृहं
व्रजेत्। एकादशी दिने प्राप्ते गुरुमभ्यर्च्य शक्तितः। गृहीत्वा चरणौ मूर्द्ना प्रार्थयीत विचक्षणः। पुण्य देशोद्भवं विप्रं शांतं सर्वगुणान्वितम्। सदाचार
रतं पार्थ वेदवेदाङ्ग पारगं। गुरु प्रार्थना। अस्मदीयं व्रतं विप्र विष्णुवासर सम्भवं। संपूर्णंतु भवद्येन तत्कुरुष्व द्विजोत्तम। तस्याग्रे नियमः कार्य्यो
दन्तधावन पूर्वकं। एकादश्यां निराहारः स्थित्वाचैव परेहनि। भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत। एवं प्रभातसमये शुचिर्भूत्वा समाहितः।
पाखण्डिनांच सर्वेषां पतितानांच सङ्गमं। कामं दुरोदरं पार्थ दूरतः परिवर्जयेत्। स्नानं कृत्वा मन्त्र पूर्वं नद्यादौ विमले जले। तर्पयित्वापितृन्देवान्पू ६३
जयेन्मधुसूदनं। उपलिप्यशुचौ देशे कीटकेशास्थि वर्जिते। वर्णैश्च सर्वतोभद्रं नीलपीत सितासितैः। मण्डलंचोद्धरेद्रूप सर्व कर्म्म सुपूजितं। अथवा तण्डु

लानांच अष्टपत्रांबुजं चरेत्। वारि पूर्णं घटं ताम्रं पात्रं रौप्यसमुद्भवं। जातरूपमयं देवं लक्ष्म्या युक्तं जनार्द्दनं। साक्षतं सोपवीतञ्च सहिरण्यं सुवाससं। अक्षमालासमायुक्तं शङ्खचक्रगदाधरं। भक्त्या सुवर्णपुष्पैश्च पूजन पुष्टिवर्द्धन। अन्यै ऋतूद्भवैः पुष्पैरर्चयेद्विधिवन्नरः। नैवेद्यानि चतुर्विंशत्यथदद्यादनुक्रमा त्। भक्त्या चतुर्विंशतिषु तिथिष्वपि परन्तप। इच्छया वा तदा दद्याद्यदैवोद्यापनं भवेत्। मोदकान् गुड़कांश्चूर्णान् घृतपूरकमण्डकान्। सोहालिकादि कासारः सेवा सक्तव एवच। वटकान्पायसं दुग्धं शालिदध्योदनं तथा। इण्डीकान् पूरिकान्यार्थं अपूपान् गुड़मोदकान्। तिलपिष्ठं खण्डपिष्टं शितापिष्ठं सशर्करम्। रम्भाफलंच सघृतं मुद्गचूर्णं गुड़ौदनं। एवं क्रमेण नैवेद्यं दत्वा चरमे हनि। अथ पूजानामानि॥ दामोदराय पादौतु जानुनी माधवायच गुह्यं वैकामपतये कट्यां वामनमूर्त्तये। पद्मनाभाय नाभिन्तु उदरं विश्वमूर्त्तये। हृदयं ज्ञान गम्याय कण्ठं श्रीकण्ठसञ्ज्ञिने। सहस्रवाहवे वाहुं चक्षुषी योगयोगिने। ललाटमुरुगायेति नासां नाकसुरेश्वरं। श्रवणौ श्रवणेशाय शिखायां सर्वकामदं। सहस्रशीर्षाय शिरः सर्वाङ्गं सर्वरूपिणे। इति पूजा। शुभेन नालिकेलेन वीजपूरेण वा पुनः। हृदि ध्यात्वा जगन्नाथं दद्यादर्घं विधानतः। साक्षतञ्च सपुष्पञ्च सजलं चन्दनान्वितं। पूर्वोक्तेनैव मन्त्रेण व्रत पूर्त्तिकरःसुधीः। रात्रौ जागरणं कुर्याद्गीतशास्त्रविनोदतः। इष्ठं दत्तं धरादानं पिण्डं दत्तं गयाशिरे। कृतं दानं कुरुक्षेत्रे यैः कृतं जागरं हरेः। नृत्य गीतं प्रकुर्वन्ति वीणावाद्यं तथैवच। ये पठन्ति पुराणानि ते नराः कृष्णवल्लभाः। शास्त्रैर्वाप्यथवा भक्त्या शुचिर्वाप्यथवाशुचिः। कृत्वा जागरणं विष्णो र्मुच्यते पापकोटिभिः। भक्तो वाप्यथवाभक्तो जागरः समुपस्थितः। मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति। यावत्पदानि स्वगृहात्केशवायतनं प्रति अश्वमेधसमानि स्यु र्जागरार्थं प्रगच्छतः। पादयोः पांशुकणिका धरण्यां निपतन्ति याः। तावद्वर्षसहस्राणि जागरी वसते दिवि। बहून्यपिच पापा नि कृतं जागरणं हरेः। निर्द्दहेन्मेरुतुल्यानि युगकोटि कृतान्यपि। मनसा संस्मरेद्देवं तां रात्रिमतिवाह्य च। प्रभाते विमले स्नात्वा विप्राणां कारयेत् क्वचित्। चतुर्विंशतिसंख्याकान्विप्रानागमदर्शिनः। सर्वं कुर्याद्विधानेन जपहोमार्चनादिकं। शतमष्टोत्तरं होमः सर्वत्रापि प्रशस्यते। इदं

विष्णु द्विजातीनां होम मन्त्रः प्रकीर्त्तितः। शूद्राणां चैव सर्वेषां मन्त्रमष्टाक्षर विदुः। विविधैरपि वस्त्रैश्च भाजनैरासनैः सह। पादत्राणं नवां गां
दद्यात्पार्थ पृथक् पृथक्। द्वादशैवाथवा शक्त्या वस्त्रालङ्कारभूषणैः। पूजयेत् पुष्पमालाभिः सपत्नीकान् द्विजोत्तमान्। कुम्भा द्वादश दातव्याः पक्वाः
जलपूरिताः। भोजयित्वा ततो विप्रान् भक्तितो विचरेद्बुधः। एकाहि कपिला देया सर्वकामफलप्रदा। तया स्वर्गश्च मोक्षश्च इह संपूर्णता अ
सपत्नीको गुरुः पूज्यो मण्डले हरि सन्निधौ। भूषणाच्छादनैर्भोज्यैः प्रणामैः परितोषयेत्। नमस्ते कपिले देवि संसारार्णव तारिणि। मया दत्ता हि
जेन्द्राय प्रीयतां मे जनार्द्दनः। समाप्य वैष्णवं श्राद्धं दद्यात्सर्वं धनञ्जय। इष्टं चान्यद्यथा शक्त्या वित्तशाठ्यविवर्जितः। जलदानं विशेषेण भूरिदान
मतःपरं। प्रार्थयेत्पुरुषाधीशं ततो भक्त्या कृताञ्जलिः। मयाद्यस्मिन्व्रते देव यदपूर्णं कृतं विभो। सर्वं भवतु संपूर्णं त्वत्प्रसादाद्रमापते। प्रदक्षिणां
ततः कृत्वा दण्डवत्प्रपतेत्प्रभुं। मण्डलं मूर्त्तिसंयुक्तं सोपहारं सदक्षिणं। प्रियतां विष्णुरित्युक्त्वा आचार्य्याय निवेदयेत्। सर्वं विसर्ज्जयेत्पश्चात् संभो
ज्य परितोष्य च। तदाज्ञया ततः कुर्य्यात्पारणं बन्धुभिः सह। एकादशी व्रतं चैतद्यथाविधि कृतं पुरा। यौवनाश्वेन भूपेन कथितं पुरतस्तव। धन
ञ्जय तव प्रीत्या भक्त्यानुग्रहकारणात्। यः करोति नरो भक्त्या व्रतमेतद्भयापहं। स याति वैष्णवं स्थानं दाहप्रलयवर्जितं। उक्तमुद्यापनञ्चैवमुभयोः
कुरुसत्तम। किमन्यैर्वङ्भिर्वाक्यैः प्रशंसापरकैर्भुवि। एकादश्याः परतरं त्रैलोक्ये नहि विद्यते। अत्र दानन्तु गोदानं भूमिदानमथापि वा। गोरोम
वीज मूलानां सम संख्या युगानिति। दातारो विष्णुभवनमेकादश्यां वसतिहि। येपि शृण्वन्ति सततं कथ्यमानां कथामिमां। तेपि पापविनिर्मुक्ता स्वर्गं
यान्ति न संशयः। इत्याकर्ण्यार्ज्जुनो वाक्यं कृष्णस्य परमाद्भुतं। आनन्दं परमं प्राप सौख्यञ्चापि निरन्तरं॥ सूतउवाच॥ एवं प्रीत्या पुरा विप्राः श्रीकृ
ष्णेन परं व्रतं। महात्म्यं विधिसंयुक्तमुपदिष्टं विशेषतः। उत्पत्तिं यः शृणोत्येवमेकादश्या द्विजोत्तम। भुक्ता भोगाननेकांस्तु विष्णुलोकं प्रयातिसः॥ अर्ज्जुन ६४
उवाच॥ उपवासस्य नक्तस्य एक भक्तस्य किं प्रभो। किं पुण्यं किं विधानं हि ब्रूहि सर्वं जनार्द्दन॥ श्रीभगवानुवाच॥ हेमन्ते चैव संप्राप्ते मासि मार्गशिरे

शुभे शुक्लपक्षे तथा पार्थ समुपोष्यच द्वादशीं। दशम्यां चैव नक्तंतु यत्किञ्चित् सुदृढ व्रतं। नक्तञ्च तद्दिने कृत्वा दशम्यां दन्तधावनं। दिवसस्याष्टमे
भागे मन्दीभूते दिवाकरे। तत्र नक्तं विजानीयान्ननक्तं निशिभोजनं। ततः प्रभातसमये सङ्कल्पं नियतश्चरेत्। मध्याह्ने च तथा पार्थ शुचिः स्नातः
समाहितः। नद्यां वाप्यां तथा कूपे उत्तमं मध्यमंत्वधः। क्रमात् ज्ञेय तडागेतु तदभावे प्रशस्यते। अश्वक्रांते रथक्रांते विष्णुक्रांते वसुन्धरे। मृ
त्तिके हर मे पापं यन्मया पूर्वसञ्चितं। त्वया हृतेन पापेन सर्वपापैः प्रमुच्यते। अनेन मृत्तिकास्नानं विदध्यात्तु व्रती नरः। नालपेत्पतितैश्चौरैस्तथा
पाखण्डिभिः सह। मिथ्यापवादिनो देव वेदब्राह्मणनिन्दकान्। अन्यांश्चैव दुराचारानगम्यागामिनस्तथा। परद्रव्यापहारांश्चदेवद्रव्यापहारका
न्। न सम्भाषेत दृष्ट्वापि भास्वन्तमवलोकयेत्। ततोगोविन्दमभ्यर्च्चेन्नैवेद्यादिभिरादरात्। दीपं दद्याद्गृहे तत्र भक्तियुक्तेन चेतसा। तद्दिने वर्ज्जयेत्या
र्थ निद्रांमैथुनमेवच। गीतशास्त्रविनोदेन दिवारात्रं नयेद्व्रती। रात्रौ जागरणं कृत्वा भक्तियुक्तेन चेतसा। विप्रेभ्यो दक्षिणां दत्वा प्रणिपत्य क्षमाप
येत्। यथा शुक्ला तथा कृष्णा मत्वा वैधर्मतत्परैः। एकादश्योर्द्वयो राजन् विभेदं नैव कारयेत्। एवंहि कुरुते यस्तु शृणु तस्यापि यत्फलम्। शङ्खो
द्धारे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्। एकादश्युपवासस्य कलां नार्हतिषोडशीम्। वैधृतस्यच दानस्य लक्षमेव फलं स्मृतम्। संक्रांतिषु चतुर्लक्षं यो ददा
ति धनञ्जय। कुरुक्षेत्रेच यत्पुण्यं ग्रहणे चन्द्र सूर्य्ययोः। तत्सर्वं लभते यस्तु एकादश्यामुपोषितः। अश्वमेधस्य यज्ञस्य करणाद्यत्फलं लभेत्। ततः शतगुणं
पुण्यमेकादश्युपवासतः। तपस्विनो गृहे नित्यं लक्षं यस्यच भुञ्जते। षष्ठिवर्षसहस्राणि तस्य पुण्यञ्च यद्भवेत्। एकादश्युपवासस्य कलां नार्हति षोड
शीम्। गो सहस्रस्य यत्पुण्यं दत्वा वेदांतपारगे। एतत्पुण्यं दशगुणमेकादश्युपवासिनाम्। नित्यंच भुञ्जते यस्य दशचैव द्विजोत्तमाः। भवेत्तद्दश
गुणं ब्रह्मचारिणि भोजिते। तत्सहस्रन्तु भूदाने कन्यादाने ततः स्मृतं। तस्माद्दशगुणं प्रोक्तं विद्यादाने ततोपिच। विद्याद्दशगुणं चान्नं यो ददाति बुभु
क्षिते। अन्नदानसमं दानं न भूतं न भविष्यति। तृप्तिमायांति कौंतेय स्वर्गस्थाः पितृदेवताः। एकादश्या व्रतस्यापि पुण्यसंख्या न विद्यते। एत

।व्र ॥ त्पुण्य प्रभावं यत्सुरैरपि सुदुर्लभम्। नक्तस्यार्द्धं भवेत्तस्य एक भक्तस्य कारके। एक भक्तच्च नक्तञ्च उपवासस्तथैवच। तावद्गर्जन्ति तीर्थानि दानानि नि
-५ ॥ यमा यमाः। एकादशी न संप्राप्ता यावत्तावन्मखा अपि। न शङ्खेन पिवेत्तोयं न हन्यान्मत्स्यसूकरौ। एकादश्यां न भुञ्जीत यन्मां त्वं पृच्छसेर्जुन। ए
[illegible]तं सर्वं व्रतानामुत्तमं व्रतं। एकादशीसमं नास्ति कृत्वा यज्ञ सहस्रकं॥ अर्जुन उवाच॥ उक्ता त्वया कथा देव पुण्येयं सर्वतस्तिथिः। सर्वेभ्योऽ
पवित्रैर्मुक्ताचैकादशी तिथिः॥ श्रीकृष्ण उवाच पुराकृते युगे पार्थ मुरुनामाहि दानवः। अत्यद्भुतो महारौद्रः सर्व देव भयङ्करः। इन्द्र उच्छेदित
स्तेन अन्य एव पुरन्दरः। आदित्या वसवो ब्रह्मा वायुरग्निस्तथैवच। देवता निर्जितास्तेन अत्युग्रेणच पांडव। इन्द्रेण कथितः सर्वो वृत्तांतः शङ्कराय वै
स्वर्ग लोकपरिभ्रष्टा विचरामो महीतले। उपायान् ब्रूहि मे देव अमराणांतु का गतिः। ईश्वरोवाच॥ देवराज सुरश्रेष्ट यत्रास्ति गरुडध्वजः।
शरणानां जगन्नाथः परित्राण परायणः। तत्र गच्छामहे सर्वे स नः कार्य्यं विधास्यति। ईशस्य वचनं श्रुत्वा देवराजो महामनाः। पुरस्कृत्य महादेवं स
गणं समरुद्गणं। यत्र देवो जगन्नाथः प्रसुप्तोहि जनार्द्दनः। जल मध्ये प्रसुप्तन्तु दृष्ट्वा देव जगत्पतिं कृतांजलिपुटो भूत्वा इन्द्रःस्तोत्रमुदीरयेत्। ओं नमो
देव देवाय देवदैवैः सुवं दित दैत्यारे पुण्डरीकाक्ष त्राहि मां मधुसूदन। दैत्यभीता इमे देवा मया सह समागताः। शरणं त्वं जगन्नाथ त्राह्यस्मान्
भय विह्वलान्। त्वं गतिस्त्वं मतिर्देवत्वं कर्त्ता त्वंच हारकः। त्वं माता सर्व लोकानां त्वमेव जगतः पिता। त्वं स्थितिस्त्व तथोत्पत्तिस्त्वंच संहार कारकः
सहायस्त्वञ्च देवानां त्वञ्च शांतिकरः प्रभो। त्वं धराच त्वमाकाशः सर्व विश्वोपकारकः। भवस्त्वञ्च स्वयं ब्रह्मा त्रैलोक्यस्यच पालकः। त्वं रविस्त्वं
शशांकश्च त्वंच देवो हुताशनः। हव्यं होमो हुताशस्त्वं मन्त्रतन्त्रत्विजोजपः। यजमानश्च यज्ञश्च फलभोक्ता त्वमीश्वरः। न त्वया रहितं किञ्चित्त्रै
लोक्ये सचराचरे। भगवन् देवदेवेश शरणागतवत्सल। त्राहि त्राहि महायोगिन भीतानां शरणं भव। दानवैर्निर्जिता देवाः स्वर्गभ्राष्टाः कृता ९५
विभो। स्वर्गभ्रष्टा जगन्नाथ विचरन्ति महीतले। इन्द्रस्य वचनं श्रुत्वा विष्णुर्वचनमब्रवीत्। कोसौदैत्यो महामायो देवा येन विनिर्जिताः। किं स्थानं

तस्य किं वासो किं वलं कस्तदाश्रयः। एतत्सर्वं समाचक्ष्व मघवन् निर्भयो भव॥ इन्द्र उवाच॥ भगवन् देवदेवेश भक्तानुग्रह कारक। दैत्यः पूर्वं
महानासीत्तालजङ्घ इति स्मृतः। ब्रह्मवंशसमुद्भूतो महोग्रःसुरसूदनः। तस्य पुत्रोऽतिविख्यातः मुरनामा महासुरः। तस्य चन्द्रवती नाम नगरीच
गरीयसी। तस्यां वसन् स दुष्टात्मा विश्वं निर्जित्य वीर्यवान्। सुरान स्ववशमानिन्ये निराकृत्य त्रिविष्टपात्। इन्द्राग्नियमवाय्वीशसोमनिर्ऋतिपा
शिनां। पदेषु स्वयमेवासीत् सूर्य्यो भूत्वा तपत्यपि। पर्जन्यः स्वयमेवासीदजेयः सर्व देवतैः। जहि तं दानवं विष्णो सुराणां जयमावह। तस्य तद्वच
नं श्रुत्वा कोपाविष्टो जनार्द्दनः। उवाच शक्रं देवेन्द्र हनिष्ये तं महाबलं। प्रयांतु सहिता सर्वे चन्द्रवत्यां महावला। इत्युक्ताः प्रययुः सर्वे पुरस्कृत्य
हरिं सुराः। दृष्टो देवैस्तु दैत्येंद्रो गर्जमानस्तु दानवः। असंख्यातसहस्रैस्तु दिव्यप्रहरणायुधैः। हन्यमानास्तदा देवा असुरै र्वाहुशालिभिः। ते
संग्रामं समुत्सृज्य पलायन्त दिशोदश। ततो दृष्ट्वा हृषीकेशं संग्रामे समुपस्थितम्। अन्वधावन्नभिक्रुद्धा विविधायुधपाणयः। अथतान् प्रद्रुतान्
दृष्ट्वा शङ्खचक्र गदाधरः। विव्याध सर्वं गात्रेषु शरैराशी विषोपमैः। तेनच्छिन्नास्तु शतशो दानवा निधन गताः। एकाकी दानवः स्थित्वा युध्य
मानो मुहुर्मुहुः। तस्योपरि हृषीकेशो यद्यदायुधमुत्सृजेत्। पुष्पवत्तं समभ्येति कुण्ठितं तस्य तेजसा। शस्त्रास्त्रैर्वाध्यमानोपि यदा जेतुं न शक्यते।
युयोधच तदा क्रुद्धो वाहुभिः परिघोपमैः। वाहुयुद्धं कृतं तेन दिव्यवर्षसहस्रकं। तेन श्रांतः सभगवान् गतो बदरिकाश्रमं। तत्र वाह्निवती नाम
गुहा परम शोभना। तां प्रविश्य महायोगी सुष्वाप जगतां पतिः। योजनद्वादशायामा एकद्वारा धनञ्जय। अहं तत्र प्रसुप्तोस्मि भयभीतो न संशयः
महायुद्धेन तेनैव श्रांतोहं पाण्डुनन्दन। दानवः पृष्ठतो लग्नः प्रविवेश स तां गुहां। प्रसुप्तं मां तदा दृष्ट्वा चिन्तयद्दानवो हृदि। हरिमेनं हनिष्यामि
दानवानां त्रयावहं। एवं सुदुर्मतेस्तस्य व्यवसायं व्यवस्यच। समुद्भूता ममांगेभ्यः कन्यकैका महाप्रभा। दिव्यप्रहरणा देवी युद्धाय समुपस्थिता। ई
क्षिता दानवेंद्रेण मुरणा पांडवर्षभ। युद्धं समीहितं तेन स्त्रिया तत्र प्रयाचितम्। सा कन्या युध्यते नित्यं तां दृष्ट्वा विस्मयं गतः। केनेयं निर्मितं। रौद्रा

ब्र ॥ अत्युग्राशनिपातिनी । इत्युक्ता दानवेन्द्रोपि युयुधे कन्यया तया । ततस्तया महादेव्या त्वरया दानवो वली । च्छित्वा सर्वाणि शस्त्राणि क्षणेन विरथः
८६ ॥ कृतः । बाहुप्रहरणोपेतो धावमानो महावलात् । तलेनाहत्य हृदये तया देव्या निपातितः । ततस्तद्भ्रातयो ये ये प्रमुखा युद्ध मूर्द्धनि । तद्बाणोत्कृत्त
शिरसोजग्मुर्वैवस्वतक्षयं । शेषाभयार्दिता दीनाः पातालं विविशुर्द्विषः । ततः समुत्थितो देवः पुरोदृष्ट्वा दनुं पुरं । कन्यां पुरस्थितां वापि कृताञ्जलि
पुटां नतां । विस्मयोत्फुल्लनयनः प्रोवाच जगतां पतिः । केनायं निहतः सख्ये दानवो दुष्ट मानसः येन देवाः सगन्धर्वाः सेन्द्राःसह मरुद्गणाः । सनागाः
सहलोकेशा लीलयैव विनिर्जिताः । येनाहं निर्जितो भीतः स्रांतः सुप्तोगुहामिमाम् । केन कारुण्यभावेन रक्षितोहं पलायितः । कन्योवाच ॥ मया
विनिहितो दैत्यस्त्वदंशोद्भूतया प्रभो । दृष्ट्वा सुप्तं हरेत् त्वांतु दैत्योहंतुं समुद्यतः । त्रैलोक्य कण्टकस्येत्थं व्यवसायं प्रबुध्यच । हतो मया दुरात्मासौ देव
ता निर्भयाः कृताः । तवैवाहं महाशक्तिः सर्व शत्रु क्षयं करी । त्रैलोक्यरक्षणार्थाय हतो लोक भयङ्करः । निहतं दानवं दृष्ट्वा किमाश्चर्यं वद प्रभो ॥
श्रीभगवानुवाच ॥ निहते दानवेंद्रेस्मिन् सन्तुष्टोहं तवानघे । हृष्टपुष्टाश्च वैदेवा आनन्दः समजायत । आनन्दः त्रिषुलोकेषु मुनीनामपि यत्कृतः ।
प्रसन्नोस्म्यनघे तुभ्यं वरं वरय सुव्रते । ददामि ते नसन्देहो यः सुरैरपिदुर्लभः । एकादश्युवाच ॥ यदि तुष्टोसि मे देव यदि देयो वरो मम । याचेहं
वरदात्वत्तः प्रसन्नोवरदर्षभ ॥ उपवासस्य यत्पुण्यं तस्यार्द्धं नक्तभोजने । तदर्द्धंच भवेत्तस्य एकभक्तंकरोति यः । यः करोति व्रतं भक्त्या दिने मम जिते
न्द्रियः । स गत्वा वैष्णवं स्थानं कल्पकोटिशतानिच । भुञ्जानो विविधान् भोगानुपवासविवर्जितः । भगवन् त्वत्प्रसादेन भवत्वेष वरोमम । उपवा
सस्य नक्तस्य एक भक्तं करोति यः । तस्य धर्मञ्च वित्तञ्च मोक्षंदेहि जनार्द्दन । श्रीभगवानुवाच । यत्त्वं वदसि कल्याणि तत्सर्वंच भविष्यति । मम
भक्ताश्च ये लोके तव भक्ताश्च ये नराः । त्रिषुलोकेषु विख्याता प्राप्स्यन्ति मम सन्निधिं । एकादश्यां समुत्पन्ना मम शक्तिः परा यतः । अतएकाशीत्येव ८६
तव नाम भविष्यति । सर्वासांच तिथीनां त्वमुत्तमापि भविष्यसि । उपोष्यैकादशीं योवै मम पूजां करिष्यति । दग्ध्वा पापानि तस्याहं दास्यामि पदम

व्ययं। तृतीया चाष्टमी चैव नवमीच चतुर्द्दशी। एकादशी विशेषेण तिथयो मे महाप्रियाः। सर्वतीर्थाधिकं पुण्यं सर्वदानाधिकं परं। सर्वं व्रताधिकञ्चैव सत्यं सत्यं वदामिते। एवं दत्वा वरं तस्यास्तत्रैवांतरधीयत। ततो हृष्टातु संजाता तत्रैवेकादशी तिथिः। इमामेकादशीं पार्थ करिष्यन्ति नरास्तु ये शत्रूंस्तेषां हनिष्यामि दास्यामि परमां गतिं। अन्येपि ये करिष्यन्ति एकादश्या महाव्रतं। हरामि तेषां विघ्नानि सर्वसिद्धिं ददामिच। एवमुक्ता समुत्पत्तिमेकादश्याः पृथासुत। इयमेकादशी नित्या सर्वपापक्षयं करी। एकैवच महा पुण्या सर्वपापनिषूदिनी। पूजिता सर्वलोकेषु सर्वसिद्धिकरा तिथिः। शुक्लावाप्यथवा कृष्णा इति भेदं न कारयेत्। कर्त्तव्येतु उभेपार्थ न तुल्या द्वादशी तिथिः। अन्तरं नैव कर्त्तव्यं समस्तैर्व्रतकारिभिः। तिथिरेका भवेत्सर्वा पक्षयोरुभयोरपि। एकादशी तु सम्पूर्णा प्रभाते घटिका यदि। सा तिथिः परिहर्त्तव्या उपोष्या द्वादशी तदा। उपवासं प्रकुर्वन्ति एकादश्यां नराश्चये। ते यांति परमं स्थानं यत्रास्ते गरुडध्वजः। धन्यास्ते मानवा लोके विष्णुभक्तिपरायणाः। एकादश्यास्तु माहात्म्यं सर्वकालेतु यः पठेत्। अश्वमेधस्य यत्पुण्यं तदाप्नोति न संशयः। यः शृणोति दिवा रात्रौ नरो विष्णुपरायणः। कुलकोटि समायुक्तो विष्णु लोके महीयते। एकादश्याश्च माहात्म्यं पादमेकं शृणोति यः। ब्रह्महत्यादिकं पापं नश्यते नात्र संशयः। विष्णुधर्म समं नास्ति गीतार्थस्य धनञ्जय। एकादशी समं नास्ति व्रतं नाम सनातनं। इति मात्स्ये एकादशी व्रतकथा॥ अथ ज्येष्ठ शुक्लैकादश्यां निर्जलैकादशी व्रतं। तद्विधिः स्कान्दे। ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी भवेत् निर्जलं समुपोष्यात्र जलकुम्भान् सशर्करान्। प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसन्निधाविति। अथ कथा पाद्मभारतयोः॥ युधिष्ठिर उवाच॥ श्रुता मे मानवा धर्म्माः वैदिकाश्च मया श्रुताः। द्वैपायन यथोद्दिष्टवैष्णवान् वक्तुमर्हसि। व्यासउवाच॥ श्रुताते मानवा धर्मा वैदिकाश्च श्रुतास्त्वया कलौयुगे। न शक्यन्ते तेवैकर्त्तुं नराधिप सुखोपायमल्पधनमल्पक्लेशं महाफलं। पुराणानांच सर्वेषां सारभूतान् वदामि ते। एकादश्यान्नभुञ्जीत पक्षयोरुभयोरपीति। एकादश्यां न भुंक्ते यो न याति नरकं तु सः। व्यासस्य वचनं श्रुत्वा कंपिताश्वत्थपत्रवत्। भीमसेनो

 महावाक्ये भीतो वाक्यमभाषत । भीमसेन उवाच ॥ पितामह नशक्तोहमुपवासे करोमि किं । अतोवद फलं बृहि व्रतमेकमपि प्रभो । व्यासउवाच । वृषस्थे
 मिथुनस्थेवा शुक्लाह्येकादशी भवेत् । ज्येष्ठमासे प्रयत्नेन सोपोष्या जलविवर्जिता । स्नाने वाचमने चैव वर्ज्जयित्वोदकं बुधः । उपभुञ्जीत नैवान्य
व्रत भङ्गोन्यथा भवेत् । उदयादुदयं यावद्वर्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वादश द्वादशी नृप । ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत्
जलं सुवर्णं दत्वाच द्विजातिभ्यो यथा विधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृतेतु यत्पुण्यं भीमसेन शृणुष्वतत् । संवत्सरस्य मध्ये
याएकादश्यो भवन्त्युत । तासां फलमवाप्नोति अत्र मे नास्ति संशयः । इति मां केशवः प्राह शङ्खचक्रगदाधरः । तस्य व्रतस्य यत्पुण्यं तन्मे प्राह जना
र्दन । एकादश्यां सिते पक्षे ज्येष्ठस्योदकवर्जितम् । उपोष्य फलमाप्नोति यत् शृणुष्व वृकोदर । सर्व तीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं । सर्वहोमेषु
यत्पुण्यं तदस्याः समुपोषणात् । संवत्सरेच यास्वस्युः शुक्लाःकृष्णाः वृकोदर । उपोषितास्तु सर्वास्यु रेकादश्यो न संशयः । धनधान्यवहाः पुण्याः पुत्रा
रोग्य प्रदास्तथा । उपोषिता नरव्याघ्र इति सत्यं ब्रवीमिते । यमदूता महाकायाः करालाः कृष्णरूपिणः । दण्डपाशधरा रौद्रा मरणे दृष्टिगोचरा
न प्रयांति नरव्याघ्र एकादश्यामुपोषणात् । पीतांवरधराः सौम्याश्चक्रहस्ता मनोजवाः । अन्तकाले नयन्त्येनं वैष्णवं वैष्णवीं पुरीं । तस्मात्सर्वप्रयत्नेन उपो
ष्या जलवर्जिता । जलं धेनुं तथा दत्वा सर्वपापैः प्रमुच्यते । स्कन्दपुराणेत्वस्यां शर्करा जलदान मुक्तं । ज्येष्ठे मासि नृपश्रेष्ठ याशुक्लैकादशी शुभा ।
निर्जलं समुपोष्याच जलकुम्भान् सशर्करान् । प्रदाय विप्रमुख्येभ्यस्तापत्रयविवर्जितः । विष्णुलोक मवाप्येह मोदते विष्णु सन्निधौ । इति निर्जलै
कादशी व्रतं ॥ आषाढ शुक्लैकादश्यां शयन्येकादशी व्रतं । तत्र ब्रह्मपुराणे एकादश्यान्तु शुक्लायामाषाढे भगवान् हरिः भुजङ्ग शयने शेते यदा क्षीरा
र्णवे सदा । तदातत्प्रतिमा कार्य्या सर्वलक्षणसंयुता । सुप्ता तु शेषपर्य्यंके शैलस्त्वङ्गैस्तु चारुभिः । ताम्रारकूटरजतैस्तथाचित्रपटेषुवा । लक्ष्म्याउत्सङ्ग 
हस्तेच विन्यस्तचरणांबुजा । उत्सङ्गहस्ते उत्सङ्गस्थिते हस्ते नानाविधोपकरणैः पूज्याच विधिपूर्वकम् । उपवासश्च कर्त्तव्यो रात्रौ जागरणं तथा । तस्यां

रात्रौ व्यतीतायां द्वादश्यां पूजयेत्तथा। त्रयोदश्यां ततो गीतं नृत्यं वाद्यं निवेदयेदिति भविष्योत्तरे। आषाढस्य सिते पक्षे एकादश्यामुपोषितः। स्थापयेत्प्रतिमां विष्णोः शङ्खचक्र गदाधरां। कांचनीं राजतीं ताम्रमयींपैत्तलिकीं तथा पीतांबरधरां सौम्यां पर्य्यंके स्वास्तृते शुभे शुक्लवस्त्र समाच्छन्ने सोपधाने युधिर। इतिहासपुराणज्ञोविष्णु भक्तोथवा पुमान्। स्नापयित्वा दधिक्षीर घृतक्षौद्रजलै स्तथा। तामालभ्य शुभैर्गंधैर्धूपैदीपैरलंकृता। पूजयेत् कुसुमैः शुक्लैर्मन्त्रेणानेन पांडव। सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदं। विबुद्धे त्वयि बुध्येत जगत्सर्बं चराचरमिति। महाभारते आषाढेतु सिते पक्षे एकादश्यामुपोषितः। चातुर्मास्य व्रतं कुर्य्याद्यत् किञ्चिन्नियतो नरः। सनत्कुमारस्तु चातुर्मास्य व्रतारंभस्य कालांतरमप्याह। एकदश्यांतु गृह्णीयात् संक्रातौ कर्कटस्यच। आषाढ्यांवानरो भक्त्या चातुर्मास्योदितं व्रत मिति। संकल्प मन्त्रस्य तेनैवोक्तः। इदं व्रतं मया देव गृहीतं पुरतस्तव निर्बिघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव। गृहीतेस्मिन् व्रते देव पञ्चत्वं यदिमे भवेत्। तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्द्दनेति। अयञ्च प्रारंभो गुर्बस्तमया दावपिकार्य्यः। तथाच वृद्धगार्ग्यः। नशैशवं न मौढ्यञ्च शुक्रगुर्वोर्नवातिथेः। खण्ड त्वं चिन्तयेच्चादौ चातुर्मास्यावधौनर इति चातुर्मास्य व्रतानि। भविष्योत्तरे चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि। स्त्रीवा नरोपिवा भक्त्या धर्म्मार्थं सुदृढ व्रतः। गृह्णीयान्नियमानेतान्दन्तधावनपूर्वकं तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक्। मधुरस्वरो भवेन्नित्यं नरो गुड विवर्जितात्। तैलस्यवर्ज्जनात्पार्थ सुन्दरांगः प्रजायते। कटुतैलपरित्यागात्छत्रुनाशः प्रजायते। योगाभ्यासी भवेत् यस्तु स ब्रह्मपदमाप्नुयात्। तांबूल वर्जनाद्भोगी रक्त कण्ठः प्रजायते। घृतत्यागात्सुलावण्यं सर्वं स्निग्धं वपुर्भवेत्। फलत्यागाच्च मतिमान्वहुपुत्रः प्रजायते। शाकपत्राशन त्यागी पक्वान्नादोभवेन्नरः। अभ्यङ्गस्य परित्यागा द्वपुः सौभाग्यमाप्नुयात्। दधि दुग्ध तक्र नियमाद्गोलोकं लभते नरः। लभते सन्ततिं दीर्घां स्थालीपाक मभक्षयत्। भूमौ प्रस्तरशायीच विष्णोरनुचरो भवेत्। भूमौ भुंक्तेयस्तु नरः स पृथिव्याः पतिर्भवेत्। सदामुनिः सदायोगी मधुमांसस्य वर्जनात्। निर्व्याधिर्नीरुगोजस्वी विष्णुभक्तः प्रजायते। एकांतरोपवासेन

व्र ॥ विष्णुलोकमवाप्नुयात्। धारणाच भवेत्तस्य गङ्गास्नानं दिने दिने। मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत्। नमो नारायणायेति जपस्थामान
९८ ॥ सजं फलं। पादाभिवन्दनाद्विष्णोर्भवेद्गोदानजं फलं। विष्णुपादांबुजस्पर्शात् कृतकृत्यो भवेन्नरः। विष्णोर्देवालये कुर्यादुपलेपनमार्जने। कल्पस्थायी
भवेद्राजन् सनरोनाच संशयः। प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः। हंसयुक्तविमानेन सच विष्णुपुरं व्रजेत्। कृत्वा प्रेक्षणकं दिव्यं स्थानम
प्सरसां लभेत्। एकभक्ताशनान्नित्यमग्निष्टोमफलं लभेत्। अयाचितेन चाप्नोति वापीकूपप्रपाफलं। द्विजेभ्यस्त्वान्नदानेन स्थायी स्वर्गे नरो भवेत्
पत्रेषु यस्तरोर्भुङ्क्ते कुरुक्षेत्रफलं लभेत्। शिलायां भोजने नित्यं प्रयाग स्नानजं फलं। एवमादि व्रतैः पार्थ तुष्टिमायाति केशव। इति शयन्येकादशी
व्रतं। अथाषाढ शुक्लैकादश्यां गोपद्म व्रतं। देशकालौ संकीर्त्य आत्मनः यमदेहनिरसन पूर्वकं पुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वारा श्रीगोपाल प्रीत्यर्थं
पञ्चवर्षात्मकं गोपद्म व्रतं करिष्ये। तत्रपूजा। चतुर्भुजं महाकायं जांबूनद समप्रभं। शङ्खचक्र गदापद्म रमागरुडशोभितं। सेवितं मुनिभिर्देवै
र्यक्षगन्धर्व किन्नरैः। एवंविधं हरिं ध्यात्वा ततो यत्नं समारभेत्। ध्यानं। आवाहयामि देवेशं भक्तानामभयप्रद। सन्निग्धवरदं शान्तं मनसा वाह
येद्धरिं। आवाहनं। सुवर्णमणिभिर्दिव्यैः खचिते देव निर्मिते। दिव्यसिंहासने स्निग्धे प्रविशत्वं सुरालये। आसनं। पादोदकं सुरश्रेष्ठ सुवर्णक
लशे स्थितं। गन्धपुष्पाक्षतैर्युक्तं गृहाण रमया सह ॥ पाद्यं॥ अष्टद्रव्य समायुक्तं स्वर्णपात्रस्थितं जलम्। अर्घं गृहाण भो देव भक्तानामभयप्रद ॥
अर्घं। देवदेव नमस्तुभ्यं पुराण पुरुषोत्तम। मयानीतमिदं तोयं गृहीत्वाचमनं कुरु। आचमनं॥ पञ्चामृतैस्ततस्नायान्मन्त्रैर्वेदोद्भवैरपि। मध्ये
मध्ये प्रपूजाच मधुपर्क पुरःसरं। पञ्चामृतं। नदीनांचैव सरसां मयानीतं जलं शुभं। अनेन स्नान मन्त्रेण मन्त्रैर्वरुण सम्भवैः स्नानं। वस्त्रयुग्ममसमानीतं
पट सूत्र विनिर्मितं। वस्त्रं कार्पासतन्तूनां सुवर्णेन विराजितं। वस्त्रं नारायण नमस्तेस्तु त्राहिमां भवसागरात्। ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम। ९८
यज्ञोपवीतं॥ केयूर मुकुटैश्चैव नूपुरै रङ्गुलीयकैः। पूजितोसि प्रयत्नेन रत्नैराभरणैर्विभो। आभरणानि। चन्दनं मलयोद्भूतं कस्तूर्यागरु संयुतं। कर्पू

देवचन्दनसंमिश्रं स्वीकुरुष्वानुलेपनं। गन्धं। शतपत्रैः कर्णिकारै चम्पकैर्मल्लिकादिभिः। पुष्पैर्नानाविधैश्चैव पूजितः पुरुषोत्तमः। पुष्पं। दशाङ्गंगुग्गु लं धूपं सुगन्धञ्च मनोहरं। गृहाण देव देवेश धूपोयम्प्रतिगृह्यतां। धूपं। एकार्त्तिका सुरश्रेष्ट गोघृतेन सवर्त्तिना। संयुक्ता तेजसा कृष्ण गृहाणादित्य दीपिता। दीपं। अन्नञ्च पायसं भक्ष्यं सिताघृत समन्वितं। दधि क्षीर घृतैर्युक्तं गृहाण सुरपूजित। नैवेद्यं। नागवल्लिदलैर्युक्तं पूगीफलसमन्वितं। कर्पूर खदिरैर्युक्तं तांवूलंप्रति गृह्यतां। तांवूलम्। नीराजनं गृहाणेश पञ्चवर्त्तिभिरा हृतं। तेजोराशे मया हृत्तं लोकानन्दकरं प्रभो। नीराजनं नन्दनस्य प्रसूनैश्च तथा कल्पद्रुमस्यच। सुरहस्तच्युतै रीश गृहाण कुसुमांजलिं। नमस्ते देव देवेश नमस्ते गरुड़ध्वज। नमस्ते विष्णवे तुभ्यं व्रतस्यफल दायक। नमस्कारः। ततः बायनं दद्यात् मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर। व्रतेनानेन सुप्रीतः सम्पूर्ण फलदो भव। प्रार्थना। इति पूजा। अथकथा। व्यासं वसिष्ट नप्तारं शक्तेः पौत्रमकल्मषं। पराशरात्मजं बन्दे शुकतातं तपोनिधिं। सूत उवाच॥ द्वापरे द्वारवत्यांवै नारदः कृष्णदर्शनात्। उत्साहेनाभ्यगात्तत्र ददर्श यदुनन्दनं। पूजितश्चैव कृष्णेन विष्टरादिभि रादरात्। ततः प्रोवाच तं विष्णुर्न्नारदं लोक पूजितं। श्रीकृष्ण उवाच॥ शृणु लोकत्र देवर्षे भुवने विचरन् सदा। लोकांतरेषु चरितं यद्विशेष वदस्वमे। नारद उवाच॥ भगवन्देवदेवेश भक्तोस्मि तव चांतिकं। तत्राश्चर्यमिदं बक्ष्ये धर्मस्य सदसिस्थितं। तत्र सर्वे समासीनाःसुरा इन्द्राश्चतुर्दश। आक्रुश्चैकादशारुद्रा आदित्या द्वादश स्मृताः। बसवोष्टौ तथा नागा यक्ष राक्षस पन्नगाः। ते सर्वे यममाहुश्च स्थितं सिंहासने शुभे। मानुष्यं दुन्दुभेश्चर्म च्छादनार्थं बदस्वनः। यम उवाच। चातुर्मास्य ब्रतञ्चैकं संक्रांतिव्रतमेवच। न कुर्वंतिच यानार्यास्तासामाच्छादनं त्वचा। कुर्वन्ति दुन्दुभेस्तास्य विचरध्वं महाभटाः। ते तस्य बचनं श्रुत्वा भटाः प्रविविशुर्भुवं। स्वामिन्निदमहाश्चर्यमतस्त्वां प्रवदामिच। तत् श्रुत्वा त्वरितः कृष्णः प्राह लोकान् पुरस्थितान्। तथा कुर्वंतु लोकाश्चनार्यः पुर्यां न संतिहि। तत् श्रुत्वा त्वरितः कृष्णःपक्षेषु नगरेषुच। कृष्णाज्ञाया कृष्णदूताःप्रोचुस्ते सर्वयोषितः। पुरःसराः प्रशृण्वन्तु एतस्यां पुरयोषितः। अन्यच यत्र कुत्रापि ऊचुस्ता यदुनन्दनं

त्वमोदरी विना स्वामिनान्यानार्योंच संतिह्नि । तच्छ्रुत्वा भयसंत्रस्तः सोदरां प्रत्यभाषत । श्रीकृष्ण उवाच । सुभद्रे किङ्करोषीह आगता यमसेवकाः ।
था न कृतं भद्रे सत्यंवद सहोदरि । सुभद्रोवाच । सर्वं व्रतान्यहं कृष्ण कार्य्याण्यच न संशयः । नोचेत्तवसहोदर्थं स्यान्न चार्जुनयोषितः । पुत्रोभिमन्युः
सोचेत् कथयस्व सहोदर । श्रीकृष्ण उवाच । तथापि भगिनि त्वंहि व्रतमेकंचरस्वहि । गोपद्मामिति विख्यातं व्रतं लोकेषु विश्रुतं । सूतेन कथितं पूर्वं ।
षीणां हितकाम्यया । नैमिषे हिमवत्पार्श्वे सिद्धाश्रममनुत्तमं । तत्र सूतं समासीनं सर्वज्ञानविदाम्वरं । तंदृष्ट्वा मुनयः सर्वे पादयोस्तेनतामुनेः । स्वा
चिंतास्तेन मुनिना स्वर्घादिभिर्यथाविधि । अभ्यर्च्य तं मुनिं विप्राऊचुस्ते प्रश्नपूर्वकं । ऋषयऊचुः । भवाल्लोकस्य धर्मज्ञः भक्तस्य ज्ञान साधनं । समर्थं स
र्वं मन्मार्थं सर्वसौभाग्य कारकं । कृपया मुनिशार्दूल कथयस्वोत्तमं व्रतं । सूतउवाच । शृणुध्वं ऋषयः सर्वे व्रतानामुत्तमं व्रतं । गोपद्मामिति विख्यातं
सर्व पापहरं परम् । सर्वदुःखोपशमनं सर्व संपत्प्रदायकं । यमस्यदंडनं यस्मात् दूरीकृत मनुत्तमं । सुवासिनित्वं भाग्यादि पुत्रपौत्र प्रवर्द्धनम् । ऋषय
ऊचुः । कस्मिन्मासि कथं कृत्वा किम्फलम् कस्य पूजनं । केन चीर्णं पुराविप्र तत्सर्वं कथयस्वनः । सूत उवाच । आषाढ शुक्लपक्षस्य एकादश्यां विशे
षतः । तदारभ्यच कार्त्तिक्यां द्वादश्यां तं व्रतं चरेत् । गोष्टेच शुद्धगोस्थाने गोमयेनोपलिप्यच । त्र्यःविंशत् चपद्मानि गन्धपुष्पैः प्रपूजयेत् । देशकालौच
संकीर्त्य चात्मनः यमदेहनिरसनपूर्वकं पुत्रपौत्रसौभाग्याद्यभिष्टद्धिद्वारा श्रीगोपाल प्रीत्यर्थं पञ्चवर्षाचरितगोपद्मव्रतोद्यापनमहं करिष्ये । तत्संख्य
या च कर्त्तव्या नमस्कार प्रदक्षिणाः । तत्संख्यकान पूपांश्च ब्राह्मणाय निवेदयेत् । प्रथमे वत्सरेचैव द्वितीयेचैवमेवहि । वायनस्य तथाचैवपायसं सेव
निर्मितं । तृतीये मण्डकान् दद्याच्चतुर्थे पूर्णमिश्रितान् । पञ्चमे घार्यस्तत्संख्याकापूर्णे वत्सर पञ्चके । उद्यापनं प्रकुर्वीत आदौचांतेच मध्यमे एकाद
श्यामुपवसेद्दन्तधावनपूर्वकं । अभ्यङ्गंतु प्रकुर्वीत स्वार्चिते र्ब्राह्मणैः सह । पुण्याहं वाचयित्वातु प्रतिमायां यजेद्धरिं । कर्षमात्र सुवर्णेन तदर्द्धार्द्धेन ९९
वापुनः । पुनर्द्धार्द्धमनाप्यपि सतिलाज्यसमित् घृतं । पायसञ्च शतं चाष्टौ हुत्वापूर्णाहुतिं चरेत् । पुंवत्ससहितां धेनुं आचार्याय समर्पयेत् ।

ब्राह्मणान्यंच योषिद्भिर्भोजयेत्षड्रसैः सह। भुञ्जीत बंधुभिः सार्द्धं मेकाग्रकृत मानसं। अन्यान्यपि यथा शक्त्या ब्राह्मणानपि भोजयेत्। इदं व्रतम् महापुण्यम् कुर्वंतु मुनिपुङ्गवाः। इह भुक्त्वातु विपुलान् सर्वान् कामान्मनोरमान्। अन्ते स्वर्ग पदङ्गच्छेत्सर्वपापविवर्जिताः कृष्णस्य वचनम् श्रुत्वा सुभद्रा तत्तथा करोत्। पश्चाब्दं व्रतमेतत्स्याद्रात्रौ यामचतुष्टये। तत्सर्वं त्वरितं कृत्वा प्रातर्हुत्वा हुताशनं। एवं कृते व्रते तस्मिन् काले यमभटाविशन्। यम भटाऊचुः। सुभद्रे तव देहस्य चर्मार्थे चागता वयं। लोकेस्मिंस्तु व्रतं येन न कृतं भक्ति पूर्व्वतः। तच्चर्मणापि नद्धव्यो पटहो यमशासनात्। सुभद्रोवाच। भटाः पश्यत मे चीर्णं गोपद्मव्रतमुत्तमं। दत्ता पुं वत्ससहिता धेनुर्विप्राय दक्षिणा। गोष्टे पद्मानि संपश्य सर्वं पश्यंतु हेभटाः। अन्योन्यवाद समये विष्णुदूतास्तदागताः। तान् दृष्ट्वा ताडयामासुर्व्रतस्यास्य प्रभावतः। पलायन्ते महाभीता स्मरन्तो यमशासनं। तान् दृष्ट्वा रक्तदग्धांगान्यमो भयसम न्वितः। कस्येदं कृत्यमिति च ज्ञात्वातीन्द्रिय दर्शनात्। उवाच दूताः शृण्वन्तु यत्र संपूज्यते हरिः। भवद्भिस्तन्नगन्तव्यं हरेरद्भुतकर्मणः। तस्य व्रत मिदं तत्र पश्यतो हितबाञ्छतां। प्राप्तवन्तो दैववशात् किं कुर्मः प्रचरन्तु गां। इत्युक्त्वा धर्मराजोसौ शालोपान्तं विवेशह। तेनैव ऋषिणा मह्यं कथितं व्रत मीदृशम्। दमयन्त्या च पाञ्चाल्या राज्यं शात्कृतं व्रतं व्रतस्यास्य प्रभावेण राज्यसौभाग्यसम्पदः पुत्रपौत्रादि सौख्यन्तु भुक्त्वा मोक्षमवाप्नुयात् ऋषय ऊचुः त्वत्प्रसादात्कृतार्थास्मो गच्छामः स्वाश्रमान् वयम् प्रणाम्य मुनिभिःसार्कं तत्रैवान्तरधीयत मुनिभिः सर्वलोकेषु कथितं व्रतमुत्तमं नातः परतरं पुण्यं त्रिषु लोकेषु विश्रुतम् इति भविष्योत्तरे गोपद्म व्रतं अथ कार्त्तिक शुक्लैकादश्यां प्रवोधनविधिर्हेमाद्रौ ब्राह्मे एकादश्यां च शुक्लायां कार्त्तिके मासि केशवं प्रसुप्तं वोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः नृत्यगीतैस्तथा वाद्यै ऋग्यजुः साम मङ्गलैः वीणापणवशब्दैस्च पुराण श्रवणेन च वासुदेवकथा भिस्च स्तोत्रैरन्यैस्च वैष्णवैः सुभाषितैरिन्द्रजालैर्भूरिशोभाभिरेवच पुष्पैर्धूपैस्च नैवेद्यै र्दीपै र्हद्यैः सुशोभनैः होमैर्भक्ष्यै रपूपैस्च फलैः शर्कर पायसैः इक्षोर्वि कारैर्मधुरै द्राक्षाद्यैः सदाडिमैः कुटेरकस्य मंजर्या मालत्या कमलेन च कुटेरकः पर्णाशः कृष्णातुलसीति केचित् हृद्याभ्यां स्वेतरक्ताभ्यां चन्दनाभ्यां च

॥ त ॥ सर्वदा कुंकुमालक्तकाभ्यां च रक्तसूत्रैः स कङ्कणैः तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रियाहृतैः विक्रेता प्रथमतोभिहितं मूल्यं दत्त्वाक्रियमाणः क

१०० तस्यां रात्रौ व्यतीतायां द्वादश्यामरुणोदये आदौघृतेनैवचवेणमधुना स्नापयेत्ततः। दध्नाक्षीरेण च ततः पञ्चगव्येन शास्त्रवत्। उद्वर्त्तनं माषचू

लकानि च ।सर्षपांश्च प्रियंगूंश्च मातुलिंगरसैस्तथा। सर्वौषध्यः सर्वगन्धाः सर्ववीजानि काञ्चनं। मङ्गलानि यथा कामं रत्नानि च कुशोदकं

देवेशं दद्याद्गोरोचनं शुभं। ततस्तु कलशा देया यथा प्राप्तास्त्वलङ्कृताः। जातीपल्लव संयुक्ता सफलाश्च सकांचनाः। पुण्याह वेदशब्देन

रवेण च। एवं संस्नाप्य गोविन्दं स्वनुलिप्य स्वलंकृतं। सबासमन्तु संपूज्य सुमनोभिः सकुङ्कुमैःदीपैर्धूपैर्मनोज्ञैश्च पायसेन च भूरिणा। हविष्यैश्चान्नदानैश्च

होमैः पुष्पैः सदक्षिणैः। वासोभिर्भूषणै रन्यैर्गोभिरश्वैर्मनो जवैः। ब्राह्मणाः पूजनीयाश्च विष्णोरीड्याश्च मूर्त्तयः। यत्तु शिष्टाचृतं पश्चाद्भोक्तव्यं ब्राह्मणैः

सहेति भविष्योत्तरे कार्तिके शुक्लपक्षे तु एकादश्यां दृथासुत। मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद्द्विज। मन्त्रश्च ब्रह्मेन्द्ररुद्राग्नि कुवेर सूर्यसोमादिभिर्व

न्दित वन्दनीय। वुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव॥ इयं च द्वादशी देव प्रवोधाय सुनिर्मिता। त्वयैव सर्वलोकानां हितार्थं शेषशा

यिना। उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते। त्वयिसुप्ते जगन्नाथ जगत् सुप्तं भवेदिदं। उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठमाधव। ततः पुष्पां

जलिं दद्यात्। तत्रमन्त्रः। गतमेघं वियच्चैव निर्मलं निर्मला दिशः। शारदानिच पुष्पाणि गृहाण मम केशव। इदं विष्णुरिति प्रोक्तो मन्त्रउत्था

पने हरेः। समुत्थिते ततो विष्णौ क्रियाः सर्वाः प्रवर्त्तयेत्। महातूर्य्यरवो रात्रौ भ्रामयेत् स्यन्दने स्थितं। उत्थितं देवदेवेशं नगरेपार्थिवः स्वयं।

रात्रौ प्रजागरं कुर्यादेकादश्यां सुरालये। प्रभाते विमले स्नात्वा द्वादश्यां विष्णुमर्चयेत्। होमयेद्धव्यवाहंवै होमद्रव्यै र्घृतादिभिः। ततो विप्रान् नृप

श्रेष्ठ भोजयेदन्न विस्तरैः। घृतक्षीरदधिक्षौद्रकासारगुडमोदकैः। ब्राह्मस्कांदयोः पुरुषोत्तममाहात्म्ये। अतःपरं शृणुत वै उत्थापनमहोत्सवं पूजयि १००

त्वा जगन्नाथं कौमुद्याख्ये महोत्सवे। आश्विन्यां अक्षक्रीडादिभिः वस्त्रमाल्यानुलेपनैः। ततः प्रभाते सङ्कल्प्य कार्त्तिक व्रतमुत्तमं। व्रतेन तेनैव

नयेद्यावदेकादशी सिता। तस्यामुत्थापयेद्देवं संपूज्य जगदीश्वरं। उत्तिष्ठ देवदेवेश तेजोराशे जगत्पते। वीक्षितत् सकलं विश्वं प्रसुप्तं तव मायया।
प्रफुल्लपुण्डरीकश्रीहारिणा नयनेन वै। त्वया दृष्टं जगदिदं पवित्रं परमेष्यति। इत्युत्थाप्य जगन्नाथं वेणुवीणादिनिस्वनैः। शङ्खकाहालमुरजवाद
नैर्नृत्यगीतकैः। जयशब्दैस्तथास्तोत्रै नयेयुर्नृत्यमण्डपं। सुगन्धतैलेनाभ्यज्य स्नापयेत् पुरुषोत्तमम्। पञ्चामृतैर्नालिकेरैरसै फलरसै स्तथा। सुगन्धामल
केनाथ लेपयेद्गन्ध चन्दनैः। पुष्पाधिवासितैश्चैव तथा गन्धाधिवासितैः। स्नाप्यमानं तु गोविन्दं ये पश्यन्ति मुदान्विताः। कल्पते सुदृढं पापं तेषामाज
न्मसञ्चितं। कुङ्कमागरुकस्तूरी कर्पूरैश्चन्दनार्चितैः। ततो वै मालतीमालां चन्द्रचूर्णयुतां ददेत्। महोपचारैः संपूज्य विष्णुं नीराजयेत्ततः। कृतां
जलिपुटो भूत्वा प्रार्थयेत्पुरुषोत्तमम्। चराचरमिदं सर्वं त्वदेकशरणं विभो। अनुग्रहाद्धृतालोकैराप्यायस्व जगद्गुरो। नृत्यगीतैः प्रेक्षणकै रात्रिशेषं
नयेद्व्रती। शयनादुत्थितं देवं ये पश्यन्ति गदाधरं। सर्वकामानाप्नुवन्ति अश्वमेधं लभन्ति ते। इत्युत्थापनमहोत्सवविधिः। अथ कार्त्तिक शुक्लैकाद
श्यादिभीष्मपञ्चकं। हेमाद्रौ नारदीये॥ नारद उवाच॥ यदेतदचलं पुण्यं व्रतानां परमं व्रतं। कर्त्तव्यं कार्तिके मासि प्रयत्नाद्भीष्मपञ्चकं। विधानं
तस्य विस्पष्टं फलं चापि ततोवरं। कथयस्व प्रसादेन मुनीनां हितकाम्यया॥ ब्रह्मोवाच॥ प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर। भीष्मेणैवचसंप्राप्तं
व्रतं पञ्चदिनात्मकं। सकाशाद्वासुदेवस्य ततउक्तं भीष्मपञ्चकं। व्रतस्यास्य गुणान् वक्तुं कः शक्तः केशवादृते। व्रतं चैतन्महापुण्यं महापातकनाशनं।
अतोवश्यं प्रयत्नेन कर्त्तव्यं भीष्मपञ्चकं। कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यत व्रतः। एकादश्यां तु गृह्णीयात् व्रतं पञ्चदिनात्मकं। प्रातःस्नात्वा विधानेन
मध्याह्ने च यथाविधि। नद्यां वा विष्णुगर्ते वा समालभ्यच गोमयं। यवव्रीहि तिलैः सम्यक् पितृन् सन्तर्पयेत् क्रमात्। स्नात्वा मौनं ततः कृत्वा धौत
वासा दृढव्रतः। ततः संपूजयेद्देवं सर्वपापहरं हरिं। स्नापयेत्परया भक्त्या मधुक्षीर घृतेन वा। तीर्थे च पञ्चगव्येन गन्धचन्दन वारिणा। चन्दनेन सुग
न्धेन कुङ्कुमेनाथ केशवं। कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजं। अर्चयेदुचितैः पुष्पैर्गन्धधूप समन्वितैः। गुग्गुल घृतसंयुक्तं दहेदक्षयं भक्तिमान्। दीपकं

॥ त्र ॥ तु दिवारात्रौ दद्यात्पञ्च दिनानि तु। नैवेद्यं देव देवस्य परमान्नं निवेदयेत्। एवमभ्यर्च्य देवेशं स्तुत्वा चैवं प्रणम्य च। ओं नमो भगवते
१०१ परमान्नं निवेदयेत्। घृताक्तं जुहुयाद्वह्नौ तद्देवाष्टोत्तरं शतं। जुहुयात्तु घृताभ्यक्तं तिलव्रीहि यवं व्रती। षडक्षरेण होमस्तु स्वाहाकारा
ओं नमोविष्णवे इति षडक्षरो मन्त्रः। उपास्य पश्चिमां सन्ध्यां प्रणम्य गरुडध्वजं। जपित्वा पूर्ववन्मन्त्रं चितिशायी भवेत्ततः। सर्वमेतद्वि
ध्यं पञ्चतिथिष्वपि। विशेषोक्ते व्रते चास्मिन् यदन्यूनं शृणुष्वतत्। प्रथमेह्नि हरेः पादौ पूजयेत् कमलैर्द्विजः। द्वितीये विल्वपत्रेण जानुदेशं समर्चयेत्
पूजयेच्च तृतीयेह्निनाभिं भृङ्गारकेन तु। वाणविल्व जपाभिश्च ततः स्कन्धौ समर्चयेत्। ततो तु पूजयेच्छीर्षं मालत्या चक्रपाणिनः। कार्तिक्यां देवदेवस्य
भक्त्या तन्मयमानसः। पूजयेज्जप मन्त्रेण गन्धधूपं निवेदयेत्। अर्चयित्वा हृषीकेशं एकादश्यां विशेषतः। त्रिःप्राश्य गोमयं सम्यक् एकादश्यामुपाव
सेत्। गोमूत्रं मन्त्रवद्भूयो द्वादश्यां पूजयेद्व्रती। क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि। संप्राश्य कायशुध्यर्थं लङ्घनीयं चतुर्दिनं। प्राशनं होममन्त्रेणे
ति हेमाद्रिः। पञ्चमे तु दिने स्नात्वा विधिवत्पूज्य केशवं। भोजयेद्ब्राह्मणान् भक्त्या तेभ्यो दद्याच्च दक्षिणां। व्रतोपदेष्टारमपि पूजयेद्वस्त्रभूषणैः।
ततोनक्तं समश्नीयात् पञ्चगव्यपुरःसरं। एवं सम्यक् समाप्यं स्यात् यथोक्तं व्रतमुत्तमं। सर्वपापहरं पुण्यं प्रख्यातं भीष्मपञ्चकं। जन्मप्रभृति यत्पापं
त्यक्त्वा पुण्यमवाप्नुयात्। तत्फलं समवाप्नोति सत्यक्त्वा भीष्मपञ्चकं। मद्यपीयस्त्यजेत् मद्यं जन्मतो मरणान्तिकं। तद्भीष्मपञ्चके त्यक्त्वा संप्राप्नोत्यधिकं फलं।
भविष्योत्तरे। कार्तिके शुक्लपक्षस्य शृणुधर्मं पुरातनं। एकादश्यां समारभ्य विज्ञेयं भीष्मपञ्चकं। दुष्करं सत्वहीनानामशक्यं वालचेतसा। पापधीःपरि
हर्तव्या ब्रह्मचर्येण निष्ठया। शाकाहारेण मुन्यन्नैः कृष्णार्चन परै र्नरैः। स्त्रीभिर्वाक्येन कर्तव्यं स्वप्रत्युः पुण्यवर्द्धनं। विधवाभिस्तु कर्तव्यं पुत्राणां सुख
लब्धये। सर्वकामसमृद्ध्यर्थं कर्त्तव्यं चैव पाण्डव। नित्यं स्नानेन दानेन कार्त्तिकी याव देवतु। वैश्वदेवस्तु कर्त्तव्यो विष्णुध्यानपरायणैः। वैश्वदेवः सर्व १०१
देवस्य व्याहृति होमोवाक्यार्थः। पापस्य प्रतिमा कार्या रौद्रवक्त्राति भीषणा। खड्गहस्तातिविकृता लौहो द्रंष्ट्राकरालिनी। तिलप्रस्थोपरि स्थाप्या धर्म

राजस्य नामभिः। यमाय धर्मराजाय इममुच्चारयेन्मन्त्रं गृह्णीत कुसुमाञ्जलिः। यदन्य जन्मनि कृतमिह जन्मनि वा पुनः। तत्पापं शममायातु तवपाद प्रसादतः। एवं संपूज्य विधिवत् प्रतिमाञ्च सकांचना। ब्राह्मणाय प्रदातव्या धर्मो मे प्रीयतामिति। तद्वच्च देवदेवस्य कृष्णस्याक्लिष्टकारिणः। प्रतिमा देयेत्यनुषङ्गः। कृत्वा पूजां यथाशक्त्या विप्राणां वेदवादिनां। दद्याद्धिरण्यगङ्गांश्चैव कृष्णो मे प्रीयतामिति। अन्येषामपि दातव्यं सत्कृत्य वसु वांछितं। कृतकृत्यः स्थिरो भूत्वा विरक्तः संयतो भवेत्। नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः। अष्टपादेकनयनः शङ्कुकर्णो महास्वनः। जटीद्विजिह्वस्ताम्राक्षो मृगराजतनुच्छदः। चिन्तनीयो महादेवो यस्य रूपं न विद्यते। व्रतदेवस्य विष्णोरिदं रूपं। इदं भीष्मेण कथितं शरतल्पगतेन मे। ब्रह्मचारी गृहस्थो वा वानप्रस्थोथ वा यतिः। प्राप्नोति वैष्णवं स्थानं तत्कृत्वा भीष्मपञ्चकं। ब्रह्महामद्यपस्तेयी गुरुगामी सदा नृती। मुच्यते पातकान्मर्त्यः कृत्वेदं भीष्मपञ्चकं मुच्यते पातका त्कृत्वा पाठको विष्णुलोक भाक्। धन्यं पुण्यं पापहरम् युधिष्ठिर महाव्रतं। यच्च त्वां ब्रह्महागोघ्नः सर्वपापैः प्रमुच्यते। यद्भीष्मपञ्चकमिदं प्रथितं पृथिव्यामेकादशी प्रभृति पञ्चदशीनि वह्नं। मन्यन्न भोजनपरस्य नरस्य तस्मिन्निष्ठं फलं दिशति पाण्डव शार्ङ्गधन्वा। पाद्मे पञ्चाह पञ्चगव्याशी भीष्मायार्घं तु पञ्चसु। अह स्वपि तथा दद्यान्मन्त्रेणानेन पाण्डव। वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च। अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे। वसूनामवताराय शन्तनोरात्मजाय च। अर्घं ददामि भीष्माय आजन्म ब्रह्मचारिणे॥ इति हेमाद्रौ भीष्मपञ्चकं। मार्गकृष्णैकादशी व्रतं॥ हेमाद्रौ भविष्योत्तरे॥ श्रीकृष्ण उवाच॥ शरतल्पगतं भीष्मं पर्य पृच्छद्युधिष्ठिरः। व्रते च येन पुण्येन यमलोको न दृश्यते। नारी वा पुरुषो वापि लोकं चैव न पश्यति। तत् समाचक्ष्व धर्मज्ञ पितामह कृपां कुरु॥ भीष्म उवाच॥ एकादशी वैतरणी तां कृत्वा तु सुखी भवेत्। यमलोकं न पश्येच्च शोकं चैव न विन्दति। युधिष्ठिर उवाच॥ केन तात विधानेन कर्त्तव्या सा महाफला। पितामह समाख्याहि तद्विधानं मम प्रभो। भीष्मउवाच॥ एकादशी तिथिः कृष्णा मार्गशीर्षगता नृप। तामासाद्य नरः सम्यग्गृह्णीयात् नियमं शुचिः। एकादशीतिथिः कृष्णानाम्ना वैतरणीशुभा। सा व्रतेन मया

कार्या वर्षं नक्तोपवासिनी मध्याह्ने तु नरः। स्नात्वा नित्यं निर्वर्त्तितक्रियः रात्रौ सुरभिमानीय कृष्णामर्चेद्यथाविधि। पूर्वामुखी विधातव्या कृष्णा गौः
लभूतले। अग्रपादात् समारभ्य पश्चात्पादद्वयावधि। गोपुच्छं तु समासाद्य कुर्याद्वापिष्टतर्पणं। ततः पूजा प्रकर्त्तव्या शास्त्रदृष्टविधानतः। गांचैव अक्षु
युक्तचन्दनेनानुलेपयेत्। गन्धतोयेन चरणौ शृङ्गे प्रक्षाल्य शक्तितः। ततोनुपूजयेद्भक्त्या पुष्पैर्गन्धाधिवासितैः। मन्त्रैः पुराणसंप्रोक्तैर्यथा स्थाने ट
विधि। अथ पूजा॥ गो अग्रपादाभ्यां नमः गो आस्याय नमः गोः शृङ्गाभ्यां नमः गोः स्कन्धाभ्यां गोः पुच्छाय नमः। गोः पादाभ्यां नमः। ग
सर्वाङ्गेभ्यो नमः स्थानेष्वेतेषु गन्धांश्च प्रक्षिपेत्कुङ्कुमानसः। पश्चात्प्रदापयेद्धूपं गौर्धूपः प्रतिगृह्यतां। धूपः। असिपत्रादिकं घोरं नदीवैतरणी
तथा। प्रसादात्ते तरिष्यामि गोमातस्ते नमो नमः। सुखेन तीर्यते यस्मान्नदी वैतरणी ध्रुवं। तस्मादेकादशीं कृत्वा नाम्ना वैतरणी भवेत्। आन
न्दकृत् सर्व्वलोके देवानांच सदाप्रियः। गौस्त्वंपाहि जगन्नाथे दीपोयं प्रतिगृह्यतां। दीपः। आच्छादनं गवे दद्यात् सम्यक्शुद्धं सुनिर्मलं। सुरभिर्वस्त्रदा
नेन प्रीयतां परमेश्वरी। वस्त्रं मार्गशीर्षादिकैर्भक्त्या यावन्मासचतुष्टयं अन्यन्मासचतुष्कन्तु यावकाशनमेवच। श्रावणादिषु मासेषु चतुर्थ्वं
द्याच्च पायसं। तदन्नस्य त्रयोभागा गो गुरु स्वार्थमेवच। नैवेद्यंहि मयादत्तं सुरभिः प्रीयतामिति। द्वितीयं गुरवे दद्यात्तृतीयं स्वयमेवच। मासा
न्मासं प्रकुर्वन्ति मासद्वादसकं व्रतं। उद्यापनं ततः कुर्यात् पूर्णे संवत्सरे तदा। शय्यासतूलिका कार्या दंपत्योः परिधानकं। सवस्त्रा कृष्णवर्णा तु धेनुः
कार्या पयस्विनी। सौवर्णां सुरभिं कृत्वा स्थापयेत् तूलिकोपरिसुरभीं पूजयेन्मंत्रैः पूर्वोक्तैर्भक्तिसंयुतैः। ततस्तु गुरवे दद्यात् सर्वं तच्च क्षमापयेत्। नारी वा
पुरुषो वापि व्रतस्यास्यप्रभावतः। राज्यं बहुविधं भुक्त्वा स्वर्गलोके महीयते। भारो लोहस्य दातव्यः कार्पासद्रोणसंयुतः। वैतरण्याः समाप्त्यर्थं ब्राह्म
णाय कुटुंबिने॥ इति वैतरणी व्रतं। इदंच गुर्जरेषु प्रसिद्धं। अथ सोद्यापनं शुक्लैकादशी व्रतं हेमाद्रौ भविष्योत्तरे॥ युधिष्टिर उवाच॥ अथातः १०२
कृष्ण मे शुक्लां द्वादशीं परमां वद। पुरा मयाम्बरीषाय हृतासर्वे मनोरथाः। द्वादश्यचैकादशीति हेमाद्रिः। कृष्णउवाच। य इच्छेत् सफलं जन्म जीवितं च

मुपोषितं। विनाशं सर्वपापानां स कुर्य्यात् द्वादशीमिमां। युधिष्ठिर किमिष्टेन शिष्टैरन्यैरनुष्ठितैः। दुष्टानीतरदुर्गाणितोषयस्व च केशवं। मार्गशीर्ष
सिते पक्षे द्वादशीमारभेदिमां। यदा वा भक्तिरुत्पन्ना देवदेवं जनार्द्दनं एकादश्यामनाहारो मासि मासर्च्चयेद्धरिं द्वादश्यां द्वादशैतानि नामानि परिकीर्त्त
येत्। केशवं मार्गशीर्षे च पौषेनारायणं विदुः माधवं माघमासेतु गोविन्दमथ फाल्गुने। चैत्रे विष्णुं तथा विद्याद्वैशाखे मधुसूदनं। त्रिविक्रमं तथा
ज्येष्ठे आषाढे वामनं विदुः। श्रावणे श्रीधरं विद्धि हृषीकेशन्तु भाद्रके। पद्मनाभं चाश्वयुजि पश्चाद्दामोदरं विदुः। एवं द्वादशभिर्मासैर्व्रतपारं गमि
ष्यति। व्रतान्ते ब्राह्मणान् शान्तान् माससंख्यान्निमन्त्रयेत्। मासनाम्ना तथा देवं पाद्यार्घादिभिरर्च्चयेत् द्वादशान्नघटाश्चैव तिलपात्र जलैर्युताः। देया
स्तेतोतिसंपूर्णा लेख्या द्वादशनामभिः। ततो देवस्य पुरतो गोष्ठे वा होममारभेत् मंत्रेणेदं विष्णुरिति समिदाज्यप्रतौदनैः। तैरेवच यजेत्यस्मान्मन्त्रै
द्वादशनामभिः। धेनुः श्वेतानुदातव्या कपिला वा सकाञ्चना। माघस्नानस्य यत्पुण्यं गङ्गासागरसङ्गमे। तत्फलं समवाप्नोति श्रुत्वेदं द्वादशी व्रतं।
यो द्वादशीव्रतमिदं विदधाति मर्त्यः शुभ्रेतधेनुवरदक्षिणमब्दमेकं। तस्याशुभं सकलमाशु विनाशमेति श्रीपद्मनाभपदपङ्कजपूजकस्य। इति शुक्लै
कादशी व्रतं। अथकृष्णैकादशी व्रतं। हेमाद्रौवाराहे धरण्युवाच। ब्रह्महा हेमहृत् गोघ्नः सुरापो गुरुतल्पगः। कृतघ्नो गरदः स्त्रीघ्नोऽग्निदो विश्वास
घातका। विप्र साधु सुहृन्मित्र देवद्वृत्ति हरोधमः। यज्ञहन्ताग्निहोत्रघ्नः परस्त्रीनिरतोधमः। इत्यादिपापोपहतपितुर्वर्णोत्तमस्य यः।
पतितो नरके घोरे भूतप्रेतत्वमागतः। निष्कृतिं नीयते पुंसां यथा तत् ब्रूहि भूधर। श्रीवाराह उवाच। समस्तपातकहरं स्वर्गदं सर्वकामदं।
न समं कृष्णद्वादश्याः किंचिदस्त्यपरं भुवि। मार्गशीर्षे कृष्णपक्षे दशम्यामेक भुक् नरः। एकादश्यामुपवसेत् कृष्णस्यार्चां समर्चयेत्। सौवर्णीं राजतीन्तां
म्रां कृष्णमूर्त्तिं चतुर्भुजां। अक्षतेषु च कलशं तत्र कृष्णं प्रपूजयेत्। स्नात्वा च कृष्णोस्तु तिलैः प्रभाते दद्याच्च सम्यक्तिल युक्तपात्रं नमोस्तु कृष्णाय पितु
र्व मातुर्हत्वात्वघं प्रापयतो स्वगत्यै। अर्घं दत्वा ततः सम्यक् कृष्णं संपूजयेद्बुधः। अन्नीयान्मासि मास्येवं कुर्यात् संवत्सरं व्रती। नामानि देवदेवस्य

 केशवस्य पृथक् पृथक्। कृष्णोनन्तोच्युतश्चक्री वैकुण्ठोथ जनार्दनः। उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः। योगीशः पुण्डरीकाक्षो मासनाम
 क्रमात्। एतानि प्रातरुत्थाय यः स्मरेत् पुरुषः सदा। अपि दुर्गतिगास्तस्य पितरः स्वर्गमाप्नुयुः। तिलपात्र द्वादशकं यो दद्यात् प्रत्यहं द्विजे। गा
कपिला दद्यात् अपेक्षामानितेः समं। मासोपवासिनां पुण्यं यज्वनां तीर्थयायिनां। स्याज्जपैर्देवदेवस्य प्रत्यहं मासनामभिः। प्रतिमासं स्वनाम्नैव ग
दानादिकं हरेः। स्वनाम्ना पूर्वोक्त तत्तन्मासनाम्नेत्यर्थः। कृत्वांते च ततो होमः कार्यस्तैर्देवतापदैः। अन्ते व्रतान्ते। अग्निप्रणयनादूर्द्ध्वं द्वादशैताः
नुस्मरेत्। द्वादशाश्वत्थ पत्रेषु स्थापयेत्कुङ्कुमतण्डुलैः। ओं तस्मै नमः आयातु स इत्यावाहयेत् पृथक्। संस्थाप्याग्निं ततः प्राच्यां ध्यायेत्तानात्मसंमुखात्।
आसनं पाद्यमर्घञ्च गन्धपुष्पार्चनानि च। धूपदीपाश्च वासांसि होमशेषं समापयेत्। दत्वा चाचमनं पश्चाद्धोमशेषं निवेदयेत्। अष्टाष्टसमिधो होमे
हुत्वाष्टाष्टघृताहुतीः। यवस्याहुतिरेकैका अष्टाष्टौ च तिलाहुतीः। अग्निप्रतिष्ठितं होहं देवेभ्यश्च निवेदयेत्। पूर्णाहुतौ भवेन्मन्त्रः तद्विष्णोः परमं
पदं। एवं कृते तु होमान्ते गाः कृष्णा द्वादशाष्ट वा। षट् चतस्रोथ वा देया एका वापि पयस्विनी। हेमशृङ्गीं रौप्यखुरां सघण्टाभरणाम्बरां। कांस्य
दोग्ध्रीं ताम्रपृष्ठीं सुवर्णमितदक्षिणां। सवत्सां द्विजमुख्याय पूजयित्वा समर्पयेत्। कृष्णभक्ताय शान्ताय विधिज्ञाय महात्मने। ते प्रीयतामिति प्रोक्त्वा
देवान् द्वादशमासिकान्। मामेवमुद्धरस्वेति गवां वाच्यः प्रतिग्रहः। मासि मासि भवेत्तेषु तिलपात्रैर्घृतैर्घटैः। सहार्थे तृतीया प्रतिमासं युक्ततिलपात्र
दानेप्ययं मन्त्र इत्यर्थः। तस्मिन् काले प्रदातव्यास्ते घटा मासनामभिः। समाप्य तु व्रतं पुण्यं तस्मादर्घं समर्पयेत्। सूर्यायेति शेषः समाप्तेस्मिन् व्रते भूप
यदभीष्टं तदाप्यते। महारौरवपूर्णेभ्यो नरकेभ्योपि तारयेत्। स्वपितॄंस्तु सनिर्यग्भ्यः सचकल्पशतैरपि। ब्रह्महत्यादि पापानां अश्वमेधैर्भवेत् क्षयः।
अश्वमेधाद्धयाश्राद्धाकृतमेतद्विशिष्यते। पितॄणामात्मनश्चैवं तारकं सर्वकामदं। नरकस्थास्तु ये केचिद्गर्भवासे रणे च ये। ये वाल्यमरणा ये च भूतप्रेतत्व १०३
मागताः। नैकन्ति सन्ततिं ये च मुच्यन्ते ते च किल्विषैः। उत्तारयेत् पितृगणान् दशपूर्वान् दशपरान्। आत्मानमेकविंशं च कृष्णद्वादशीमुपोषणात्। इति

वाराहे कृष्णैकादशी व्रतं। अथोभयैकादशी व्रतं। हेमाद्रौ भविष्योत्तरे। युधिष्ठिर उवाच। कृष्णाकृष्णा न मे ख्याता द्वादशी केन हेतुना। किं सा ते न प्रिया देव किंवा ख्यातुं न युज्यते। श्रीकृष्ण उवाच। न कस्यचिन्मयाख्यातं गुह्यमेतदनुत्तमं। महापुण्यप्रदं पार्थ महापातकनाशनं। वांछितार्थप्रदं नृणां श्रुतं पापापहारकं। श्रेष्ठं व्रतानां सर्वेषां शुभदं द्वादशी व्रतं। तत्तेऽहं संप्रवक्ष्यामि समाहित मनाः शृणु। ततो पराह्ने सन्तर्प्य कृतसन्ध्यादिकं शुचिः। प्राप्याज्ञां वेदविदुषः पुराणज्ञाज्जितेन्द्रियात्। संपूज्य देवदेवेशं दन्तधावन पूर्वकं। कुर्याच्च नियमः पार्थ गुरुदेवाग्नि सन्निधौ। एकादश्यां निराहारः स्थित्वाहमपरेऽहनि। भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत। इत्युक्त्वाथ गुरुं नत्वा पूजयित्वा जनार्दनं। भूमौ स्वपेत् जितक्रोधः शब्दादिविषयेजितः। ततः प्रभाते विमले केशवार्पितमानस। केशवेति तदा वाच्यं सुतप्रस्खलितादिषु। पाखण्डादिभिरालापं दर्शनं स्पर्शनं तथा। त्यजेद्धि नचयं पार्थ व्रतवैकल्पकारकं।, ततो मध्याह्न समये नद्यादौ विमले जले। स्नानं कुर्यात् जितक्रोधः पञ्चगव्यपुर सरं। आदित्याय नमस्कृत्य केशवं शरणं व्रजेत्। स्ववर्णाचारविधिना कृतकृत्यो गृहं व्रजेत्। पूजयेत्तत्र गोविन्दं केशवेति जपन् बुधः। पुष्पधूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि। गीतवाद्यैः कथाभिश्च जागरं कारयेन्निशि। कुम्भं संस्थापयित्वा तु रत्नगर्भं सकाञ्चनं। छादितं वस्त्रयुग्मेन सितचन्दन चर्चितं। गन्धमाल्यसमायुक्तं दीपैर्दिक्षु स्वलङ्कृतं। कुङ्कुमाक्तामङ्गदेशे सितचन्दनचर्चितां। प्रतिमां देवदेवस्य शङ्खचक्र गदाभृतां। कृत्वाभ्यर्च्य यथान्यायं प्रभाते विमले सति। द्वादश्यां कृतकृत्यस्तु समभ्यर्च्य जगद्गुरुं। विप्राय दद्यात् कलशं दक्षिणा पावकान्वितं। पावकं सुवर्णं। सम्भोज्य विप्रमुख्याय दद्याच्छक्त्या च दक्षिणां। भृत्यान् सम्भोजयित्वा तु दत्वा गोषु गवाह्निकं। पञ्चगव्यं तु संप्राप्य स्वयं भुञ्जीत वाग्यतः। अनेन विधिना मासि तस्मिन् कृष्णामुपोषयेत्। द्वादशीं पुरुषव्याघ्र ध्यायन् सङ्कर्षणं विभुं। प्राग्वत् सर्वं ततः कृत्वा ब्राह्मणाय निवेदयेत्। भोजयित्वा द्विजश्रेष्ठं दद्यात् तस्मै च दक्षिणां। भुञ्जीत वाग्यतः पश्चात्पञ्चगव्यकृताशनः। एवं पौषे तु सङ्कल्प्य द्वादश्यां शुक्लपक्षतः। नारायणं जपन् प्राज्ञः सर्वं प्राग्विधिमाचरेत्। स्नानप्राशनदानानि भोजनं तद्वदाचरेत्।

॥ ब्र ॥ ब्राह्मणेभ्यस्तथा दद्यात् दक्षिणां पाण्डुनन्दन। नारायणः प्रीयतां मे इत्याचार्यं क्षमापयेत्। अस्यैव पुष्यमासस्य द्वादश्यां कृष्णपक्षतः। न
१०४ संपूज्य प्रागुक्त विधिना नृप। वासुदेवं जगन्नाथं सर्वकारणकारणं। ततो दद्याद्द्विजातिभ्यो दक्षिणां श्रद्धयान्वितः। भोजनं पूर्ववत् कुर्यात्
[illegible]। शुक्लायां माघमासस्य द्वादश्यां तु विशांपते। माधवेति जपेन्नाम पूजयेत्पूर्ववद्धरिं। रात्रौ जागरणं कुर्यात् पुष्पधूप प्रदीपकैः। पू[illegible]यित्वा
द्विजश्रेष्ठान् माधवः प्रीयतामिति। प्राशनादिकमेवात्र पूर्वोक्त विधिनास्मृतं। अस्यैव माघमासस्य द्वादश्यां कृष्णपक्षतः। पद्मनाभेति जपन् प्राज्ञः सर्वं
प्राग्विधिना चरेत्। चैत्रस्यामलपक्षे तु द्वादश्यां पाण्डुनन्दन। पञ्चगव्य जलैः स्नात्वा विष्णुनामानुकीर्त्तयेत्। उपस्थानं तु कुर्वीत भास्करस्य विचक्ष
णः। एष एव भास्करो देवः सर्वे विष्णुः प्रकीर्त्तितः। विष्णुर्भवतु सुप्रीतो देवदेवः सनातनः। भक्तिमुक्ति प्रदानाय तवदत्तो मयाञ्जलिः। इत्युच्चार्याञ्ज
लिं क्षिप्त्वा गन्धपुष्पाक्षतैर्युतं। पूर्ववद्देवमभ्यर्च्य दानं दद्यात्स्वशक्तितः। विष्णुर्मे प्रीयतां देवो जगद्योनिः सनातनः। अस्मिन् मासि तथा कृष्णद्वादश्यां
विधिना क्षिपेत्। स्नाने भोजनकाले तु जपन्वै पुरुषोत्तमम्। वैशाखे वामले पक्षे पूजयेन्मधुसूदनं। दक्षिणां गुरवे दद्यात् प्रीयतां मधुसूदनः। मासे
स्मिन् कृष्णपक्षे तु यजेद्देवमधोक्षजं। ज्येष्ठमासामले पक्षे द्वादश्यां पूर्ववन्नृप। स्नानादिकं निर्वर्त्य पूजयेच्च त्रिविक्रमं। द्विजेभ्यो दक्षिणां दद्यात् प्री
यतां मे त्रिविक्रमः। इत्युच्चार्यनरव्याघ्र स्वयं भुञ्जीत पूर्ववत्। ज्येष्ठस्यैव हि कृष्णायां द्वादश्यां तु विशांपते। स्नात्वा प्राग्विधिना भक्त्या नृसिंहं पूज
येद्विभुं। पुष्पैर्धूपैस्तथा दीपैस्तथानैवेद्यकैरपि। आषाढस्यैव शुक्लायां द्वादश्यां तु नृपोत्तम। वामनं पूजयेद्देवं दद्याद्विप्राय दक्षिणां। वामनः प्रीयतां
देवो मम नित्यं सनातनः। आषाढस्यैव कृष्णायां द्वादश्यां प्रयतः शुचिः। पूजयेदच्युतं देवं तेनैव विधिना नृप। विप्राय दक्षिणां दद्यादच्युतः प्रीयता
मिति। श्रावणस्य तु मासस्य द्वादश्यां शुक्लपक्षतः। तत्र पूर्वविधानेन श्रीधरेति जपन् बुधः। पूजयेद्देवदेवेशं शङ्ख चक्र गदाधरं। विशेषं नवनीतं तु १०४
तत्र देयं द्विजातये। श्रीधरः प्रीयतां मेद्य श्रियं युष्मात्वनुत्तमां। इत्युच्चार्य कुरुश्रेष्ठ ततो विप्रान् विसर्जयेत्। श्रावणस्यैव कृष्णायां द्वादश्यां कुरुनन्दन।

जनार्दनेति सम्पूज्य प्रतिमां चक्रपाणिनः ततो विप्रेषु दातव्यं भोजनं सह दक्षिणं। जनार्दनः प्रीयता मेवाक्यमेतदुदीरयेत् मासि भाद्रपदे भद्र
द्वादश्यां शुक्लपक्षतः। हृषीकेशेति सम्पूज्य घृतः प्रक्षलितादिषु। विशेषेणात्र देयञ्च क्षीरं विप्रेषु पाण्डव। हृषीकेशः प्रीयतां मेवाक्यमेतदुदीरयेत्।
कृष्णाप्येवं हि कर्त्तव्या मासिभाद्रपदे नृप। उपेन्द्रेति च सम्पूज्य प्रतिमां शार्ङ्गधन्वनः। आश्वयुक् शुक्लपक्षे तु द्वादश्यां नियतः शुचिः। पद्मनाभे
ति नाम्नावै पूजयेत् प्रतिमां हरेः। विप्रान् संभोजयित्वा च तेभ्योहेम स्वशक्तितः। प्रीयतां पद्मनाभोमे इति वाच मुदीरयेत्। आश्वयुक् कृष्णपक्षेतु
द्वादश्यां भक्तिमान्नरः। उपोष्य विधिनानेन हरिमित्यं तु पूजयेत्। हरिर्मे प्रीयतां देवो मन्त्रमेतदुदीरयेत्। कार्त्तिकस्य तु मासस्य द्वादश्यां
शुक्ल पक्षतः। आद्ये न विधिना सर्वं स्नानादि विनिवर्त्य च। दामोदरेति सम्पूज्य मूर्त्तिं देवस्य चक्रिणः। कृष्णाप्येवंतु निर्वर्त्य द्वादशी कार्त्तिके
तदा। कृष्णेति नाम्ना सम्पूज्य देवदेवस्य चक्रिणः। प्रागुक्तोस्य विधिः पार्थ विशेषात्तु विधीयते। अत्र देयानि दानानि षोडशैव
विदुर्बुधाः। गोलक्षं गोसहस्रं वा गोशतं द्वादशैवगाः। तुलापुरुषदानानि मुख्यानि विधिवत्तदा। देयानि विप्रमुख्येभ्यो व्रतान्ते समुप
स्थिते। चन्द्रसूर्योपरागे तु कुरुक्षेत्रे कुरूत्तम। हेमभारशतं दत्वा तत्फलं तद्दिने भवेत्। उभयद्वादशीयोगाच्छ्रद्दधानो नरोत्तमः। कुलान्यु
द्धृत्य सप्तैव विष्णोः सायुज्यतां व्रजेत्। एतदुद्देशतः प्रोक्तमुभयद्वादशीफलं। एतत्पुण्यं पवित्रं च व्रतानामुत्तमं परं। नाशिष्याय प्रदातव्यं नचाशुश्रूष
वेकथित्। इदं हि यः पार्थ नरो महात्मा शृणोति यो भक्तियुतः पठेद्वा। विमुक्तपापः स निहत्य दुःखं प्रयाति सांनिध्यमनंतमूर्तेः। इति भविष्योत्तरो
क्तमुभयैकादशीव्रतं। इयमेवाभयेत्युच्यते गुर्जरैः॥ इति श्रीमीमांसकभट्टनीलकण्ठात्मज भट्टशङ्करकृतौ व्रतार्के एकादशीव्रतानि। अथ द्वादशी
व्रतानि। तत्र भाद्रशुक्लद्वादश्यां श्रवणद्वादशी व्रतं। तच्चैकादशीयुतद्वादश्यां श्रवणद्वादशी व्रतं। तच्चैकादशीयुतद्वादश्यां श्रवणयोगे कार्य्यं
तथाच मात्स्ये। द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदि। स एव वैष्णवो योगो विष्णुशृङ्खल संज्ञितः। तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः।

।व। प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभां। विष्णुधर्मेपि। एकादशी द्वादशी च वैष्णव्यमपि तत्रचेत्। तद्विष्णुशृङ्खलं नामविष्णु सायुज्य कृद्भवेदिति।
१०५ [illegible]णैकादशी द्वादश्योरुपवासः कार्यः। यदा श्रवणमेकादशीं स्पृश्य द्वादशीं स्पृशति तदा प्रशस्तेत्युक्तं। नारदीये। संस्पृश्यैकादशीं राजन्
द्वाद[illegible] संस्पृशेत्। श्रवणं ज्योतिषां श्रेष्ट ब्रम्हहत्यां व्यपोहतीति। यत्तूदयव्यापिनी ग्राह्या श्रवण द्वादशीव्रतइति इत्त्यन्नारदीय वचनं। तत्पूर्वेद्युः
शृङ्खलयोगा[illegible]भावे दिन द्वये च श्रवणयोग उदयकालेच परदिन एवतद्योगस्तदा सावकाश मतोनतद्योग उपवासविधायकं द्वादश्यां श्रवणाभावे नार
दीये। यदा न प्राप्यतेऋक्षं द्वादश्यां वैष्णवं क्वचित्। एकादशी तदोपोष्या पापघ्नी श्रवणान्विता उपवासद्वयसामर्थ्ये तूपवासद्वयं कार्यं। तदुक्तं भविष्ये।
एकादशी मुपोष्यैव द्वादशीं समुपोषयेत्। नचात्र विधिलोपःस्यादुभयोर्दैवतं हरिः। विधिलोप एकादशीपारणहानिकृतः। उपवासद्वयासमर्थे
तत्रैकादशी व्रतसङ्कल्पस्य श्रवणद्वादश्युपवास फलप्रेप्सोश्चकाम्यां नित्यस्य वाधकमिति न्यायेन प्राप्तस्य श्रवणद्वादश्युपवासस्य वाधोमात्स्ये द्वादश्यां शुक्ल
पक्षेतु नक्षत्रं श्रवणं यदि। उपष्यैकादशीं राजन् द्वादश्यां पूजयेद्धरिमिति। तादृशस्याकृतैकादश्युपवासव्रतसङ्कल्पस्य काम्यं नित्यस्य वाधकमिति
न्यायात्प्राप्तश्रवणद्वादश्यामेवोपवासस्यानुवादो नारदीये। उपोष्य द्वादशीं पुण्यां वैष्णवर्क्षेण संयुतां एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयमिति।
एतद्व्रतपारणंतु पारणाह। उभयानुवृत्तादुभयान्त इति मुख्यः कल्पः तथाच स्कान्दे। तिथिनक्षत्रनियमे तिथिभान्ते च पारणं। अतोन्यथा
पारणायां व्रतभंगमवाप्नुयात्। अन्यतरान्तस्त्वनुकल्पः। यत्तु तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्। पारणन्तु न कर्त्तव्यं यावन्नैकस्य संक्षयः। ततः
पारणकं कुर्यादेवं वेदविदो विदुरिति नारदीयाभ्यामन्यतरांतस्य सांयोगिके व्रते उभयान्त तुल्यत्वमुक्तं तच्छ्रवणे रोहिणीव्रतपारणातिरिक्तपरं याः
काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ऋक्षांते पारणं कुर्याद्विना श्रवणंच रोहिणीमिति मदनरत्नधृतवचनं श्रवणरोहिण्योः पर्युदासात्। अयं च प १०५
र्युदासः श्रवणयोगनिमित्त व्रतपारणायामुभयांत पक्षस्य द्योतको मत्वेकांतमात्रेपारणविधायकः। पारणाहेम श्रवणतो द्वादश्याधिक्ये श्रवणं विहाय

द्वादशी मध्य एव पारणा कार्या तामपेक्ष्य श्रवणाधिक्ये श्रवणं विहाय त्रयोदशी मध्ये। तदुक्तं वह्निपुराणे। पारणं तिथि वृद्धौ तु द्वादश्यामुडुसंज्ञ
याम्‌ उडुवृद्धौ त्रयोदश्यां तत्र दोषो न विद्यत इति। एतेन यदा तिथ्यपेक्षया नक्षत्राधिक्यं पारणादिने भवति तदैकादशीव्रतपारणायां द्वादश्या
लङ्घने दोषाच्छ्रवणद्वादशीव्रत पारणायास्तूभयान्तेऽन्यतरान्ते वा कर्त्तव्यत्वाद्विरोधप्रसक्तिः। तस्यां च सत्यामेकादशीव्रतकप्रकरणे हेमाद्र्युदाहृतैर्दशम्यामेक
भक्तस्य मांसमैथुनवर्जित इत्यादि वचनैरेकादशीव्रतस्य त्रिदिनसाध्यत्वावगत्या पूर्वं प्रवृत्त द्वादशीव्रतं पुरोडाशवत्प्रसङ्गीतितन्त्रिप्रसङ्गिनोर्विरोधे तन्त्रि
णो बलवत्त्वेन द्वादश्यामेव पारणं कार्यमित्यपास्तम्। अथ कथा। वह्नि पुराणे॥ मैत्रेय उवाच॥ विधानं शृणु राजेन्द्र यथा दृष्टं मनीषिभिः।
यथोक्तं नियमं कुर्यादेकादश्यामुपोषितः। दन्तकाष्ठं प्रगृह्याथ वाग्यतो नियतेन्द्रियः। श्रवण द्वादशीयोगे समुपोष्य जनार्दनं। अर्चयित्वा विधानेन
त्रयोदश्यां परेऽहनि। नदीनां सङ्गमे स्नायादर्चयेदथ वामनं। सौवर्णवस्त्रसंयुक्तं द्वादशांगुलमुच्छ्रितं। पीतवस्त्रैः शुभैर्वेष्ट्य शृङ्गार निर्व्रणं नवं। हिरण्म
येन पात्रेण अर्घपात्रं प्रकल्पयेत्। दध्यक्षतफलैश्चैव सहिरण्यं सचन्दनं। पूजा प्राग्वत्। ततो नमस्ते पद्मनाभाय नमस्ते जलशायिने। तुभ्यमर्घं प्रयच्छा
मि बालवामन रूपिणे। नमः कमलकिंजल्कपीत निर्मलवाससे। महाहवरिपुस्कन्धघृष्टचक्राय चक्रिणे। नमः शार्ङ्गासिबाणाय वामनाय च विष्णवे।
यज्ञभुक्‌ फलदात्रे च वामनाय नमोनमः। देवेश्वराय देवाय देवसम्भूति कारिणे। प्रभवे सर्वदेवानां वामनाय नमोनमः। मत्स्य कूर्म वराहाय नर
सिंह स्वरूपिणे। रामरामाय रामाय वामनाय नमोनमः। श्रीधराय नमस्तेस्तु नमस्ते गरुडध्वज। चतुर्बाहो नमस्तेस्तु नमस्ते धरणीधर। एवं संपू
ज्य विधिवन्नरःप्रस्कन्दनादिभिः। रात्रौ जागरणं कुर्यात्पुरतो जलशायिनः। धृत्वा जलमयं रूपं देवदेवस्य चक्रिणः। ब्रह्माण्डमुदरे यस्य मरुद्भूतैरधि
ष्ठितं। मायावी वामनः श्रीशः सोत्रायातु जगत्पतिः। एवं संपूजयित्वा तं द्वादश्यामुदये रवेः। शृङ्गारसहितं तन्तु ब्राह्मणाय निवेदयेत्। वामनः
प्रतिगृह्णाति वामनोऽहं ददामि ते। वामनः सर्वतोभद्रं द्विजाय प्रतिपादयेत्। जलधेनुं तथा दद्याच्छत्रं चैव तु पादुके। सहिरण्यानि वस्त्राणि द

॥ व ॥ धेनुं तथा नृप। यत्किञ्चिद्दीयते तत्र तदानन्त्याय कल्पते। श्रवणद्वादशीयोगे संपूज्य गरुडध्वजं। दत्वादानं द्विजातिभ्यो वियोगे पारणं ततः। सिंह
१०६. स्थिते तु मार्त्तण्डे श्रवणस्थे निशाकरे। विष्णुधर्मोत्तरे। रामउवाच। उपवास समर्थानां किं स्यादेकमुपोषितं। महाफलं महादेव तन्ममाचक्ष्व पृच्छतः।
[illegible]। या रामश्रवणोपेता द्वादशी महती तु सा। तस्यामुपोषितं स्नातः पूजयित्वा जनार्दनं। प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादश द्वादशीफलं। दध्यो
दनयुतं तस्यां जलपूर्णं द्विजे घटं। वस्त्रसंवेष्टितं दत्वा छत्रोपानद्दमेव च। न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति। अक्षयं स्थानमाप्नोति नात्र
कार्या विचारणा। श्रवण द्वादशीयोगे बुधवारो भवेद्यदि। अत्यन्त महती नाम द्वादशी सा प्रकीर्त्तिता। स्नानं जपस्तथा दानं होमः श्राद्धं सुरार्चनं।
सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह। तस्मिन्दिने तथा स्नातो यत्र क्वचन सङ्गमे। स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम्। श्रवणे सङ्गमाः सर्वे
परंतुष्टि प्रदाः सदा। विशेषाद द्वादशीयुक्ते बुधयुक्ते विशेषतः। तथैव द्वादशी प्रोक्ता बुधश्रवणसंयुता। तृतीया च तथा प्रोक्ता सर्वकाम फल प्रदा।
तथा तृतीया धर्मज्ञ तथा पञ्चदशी शुभा। ब्रह्मवैवर्त्ते। नभस्ये फाल्गुने मासि यदि वा द्वादशी भवेत्। बुधश्रवणसंयुक्ता सङ्गमे विजया स्मृता। वारिधा
नीं प्रदास्यन्हि दध्योदन समायुतां। प्रेतयोनौ न जायेत पूजयित्वात्र वामनं। वंशः समुधृतस्तेन मुक्तः पितृऋणादसौ। नभस्ये सङ्गमे स्नात्वा वामनो
येन पूजितः। भविष्योत्तरे। युधिष्ठिर उवाच॥ उपवासासमर्थानां सदैव पुरुषोत्तम। एका या द्वादशी पुण्या तां वदस्व ममानघ। श्रीकृष्ण उवाच॥
मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता। सर्वकामप्रदा पुण्या उपवासे महाफला। सङ्गमे सरितां स्नात्वा द्वादशीं समुपोषितः। समग्रं समवा
प्नोति द्वादश द्वादशीफलं सा धेनुद्वादशी ज्ञेया नस्याद्भाद्रपदादृते। दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः। श्रवणेनतु संयुक्ता सा शुभा सर्वकामदा।
पारणा तिथिवृद्धौ तु द्वादश्यामुडुसंचयात्। वृद्धौ कुर्यात् त्रयोदश्यां तत्र दोषो न विद्यते। इत्येषा कथिता राजन् द्वादश्यां श्रवणे मया कर्त्तव्या सा प्रयत्नेन १०६
इहामुत्र फलप्रदा। इति हेमाद्रौ श्रवणद्वादशी व्रतं॥ विष्णु रहस्ये। द्वादश्यामुपवासोत्र त्रयोदश्यां तु पारणं। निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमेश्वरी

तथा बुधश्रवणसंयुक्ता सैवचेद्द्वादशी भवेत्। अतीव महती तस्यां सर्वं कृतमिहाक्षयं। द्वादशी श्रवणोपेता यदा भवति भारत। सङ्गमे सरितां स्ना
त्वा गङ्गादिस्नानजं फलं। सोपवासः समाप्नोति नात्र कार्या विचारणा। जलपूर्णं तदा कुम्भं स्थापयित्वा विचक्षणः। पञ्चरत्नसमोपेतं सोपवीतं सुच
र्चितं। तस्य स्कन्धे सुघटितं स्थापयित्वा जनार्दनं। यथा शक्त्या स्वर्णमयं शङ्खशार्ङ्गविभूषितं। स्नापयित्वा विधानेन सितचन्दनचर्चितं। सितवस्त्रयुगच्छ
न्नं छत्रोपानद्युगान्वितं। ओं नमो वासुदेवाय शिरःसंपूजयेत्ततः। श्रीधराय मुखं तद्वत् वैकुण्ठाय दृशौ नमः। नमः श्रीपतये वक्षं भुजौ सर्वास्त्रधारि
णे। व्यापकाय नमः कुक्षिं केशवायोदरं नमः। त्रैलोक्यजनकायेति मेढ्रं संपूजयेद्धरेः। सर्वाधिपतये जङ्घे पादौ सर्वात्मने नमः। अनेन विधिना राजन्
पुष्पधूपैः समर्चयेत्। ततस्तस्याग्रतो देयं नैवेद्यं घृतपाचितं। मोदकांश्च नवान् कुम्भान् शक्त्या दद्याच्च दक्षिणा। एवं संपूज्य गोविन्दं जागरं तत्र कार
येत्। प्रभाते विमले स्नात्वा संपूज्य गरुडध्वजम्। पुष्पधूपादि नैवेद्यैः फलैर्वस्त्रैः सुशोभनैः। पुष्पाञ्जलिं ततो दत्वा मन्त्रमेतदुदीरयेत्। नमोनमस्ते
गोविन्द बुधश्रवणसंज्ञक। अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव। अनन्तरं ब्राह्मणे तु वेदवेदांगपारगे। पुराणज्ञे विशेषेण विधिवत्तं प्रदापयेत्
प्रीयतां देवदेवेशो ममनित्यं जनार्दनः। अनेनैव विधानेन नद्यां स्नात्वा नरोत्तमः। सर्वं निर्वर्त्तयेत्सम्यगेकभक्तरतोपि सन्। श्रीकृष्ण उवाच॥ अत्रा
प्युदाहरन्तीममितिहासं पुरातनं। महत्यरण्येयद्वृत्तं भूमिपाल शृणुष्व तत्। देशो दशार्णवो नाम तस्य भागे तु पश्चिमे। अतीवासीन्मरुद्देशः सर्व
सत्वभयङ्करः। सुतप्तसिकताभूमिर्यत्र कृष्णा महोरगा। अल्पच्छायद्रुमाकीर्णो मृतप्राणिसमाकुलः। शमीखदिरपालाशकरीरैश्च सुपीलुभिः। तत्र
भीमद्रुमाः पार्थ कण्टकैरावृता दृढाः। गन्धप्राणिगणाकीर्णा तत्र भूर्दृश्यते क्वचित्। अनर्कतापविषमा भीषणाः पुरुषाः खराः। ज्वलिताग्निसमश्चैव
यत्किञ्चित्तत्र दृश्यते। तथापि जीवा जीवन्ति सर्वे कर्मनिबन्धनाः। नोदकं नो तृषा भीमा राजं स्तत्र वलाहकाः। कदाचिदपि दृश्यंते भ्रममाना विहङ्गमाः।
सकांतारगतैः कैश्चिच्छिशुभिस्तृषितैः समं। सैकतेष्वेव नश्यन्ति जलैः सैकतसेतुवत्। तस्मिं तथाविधे देशे कश्चिद्दैववशाद्वणिक्। निजसार्थपरिभ्रष्टः प्रवि

॥ व्र ॥ ष्ठो मरुजं गते । दृष्टवान्मलिनान् यत्नान्निर्मांसान् भीमदर्शनान् । वभ्रामोद्भ्रांतहृदयः क्षुत्तृषा श्रमकर्षितः । क्व ग्रामः क्व जनः क्वाहं यास्यामि बहुधीरभिः ।
१०७ [illegible] प्रेतान् ददर्शासौ तृष्णाव्याकुलितेन्द्रियः । स्नायु बद्धास्थिचरणान् धावमानानितस्ततः । प्रेतस्कन्धसमारूढमेकं विकृतदर्शनं । ददर्श बहुभिः प्रेतैः
समं[illegible]विवारितं आगच्छन् शवभक्षोसस्तुतिशब्दपुरःसरं । प्रेतस्कन्धान्मंर्शी गत्वा तस्यांतिक मुपागमत् । सौम्यवाचा वणिक् श्रेष्टमिदं वचनमब्रवीत् । अ
स्मिन् घोरतरे देशे प्रवेशो भवतः कथं तमुवाच वणिक् धीमान् समर्थं भ्रष्टगोवशः । प्रवेशो दैवयोगेन कष्टकर्मकृतेन तु । तृष्णा मे बाधतेत्यर्थं क्षुद्रमौ च
कर्ष तथा । प्राणाः कण्ठमनुप्राप्ता वचनं नश्यतीव मे । अत्रोपायं न पश्यामि जीवेयं येन केनचित् । कृष्ण उवाच ॥ इत्येवमुक्तः प्रेतस्तु वणिजं वाक्यमब्रवीत्
पुन्नागमिममाश्रित्य प्रतीक्षस्व मुहूर्त्तकं । कृतातिथ्यो यथापस्यान्नमिष्यसि यथासुखं । एवमुक्तस्तथा चक्रे स वणिक् तृष्णयार्दितः । मध्याह्नसमये प्राप्ते स्तत
स्तं देशमागतः । पुन्नागस्याच्छीतोदा वारिधानी मनोरमा । दध्योदनस्य भक्तेन वर्धमानेन संयुता । अवतीर्य ततः सोग्रन्ददावतिथये तदा । तेषा
मामन्त्रणे सवणिक् परां तृप्तिमुपागतः । वितृष्णो विज्वरश्चैव क्षणेन समपद्यत । ततस्तु प्रेतसङ्घस्य तस्माद्भागक्रमाद्ददौ । दध्योदनात्सपानीयात्प्रेतास्तृप्तिं
परां गताः । अतिथिं तर्पयित्वा च प्रेतलोकंच सर्वशः । ततः स्वयञ्च बभुजे भुक्तशेषं यथासुखं । तस्य भुक्तवतस्त्वन्नं पानीयंच क्षयं ययौ । प्रेताधिपस्तत
स्तुष्टो वणिग्वचनमब्रवीत् । आश्चर्यमेतत्परमं वनेस्मिन् प्रतिभाति मे । अन्नपानस्य संप्राप्तिः परमस्य कुतस्तव । स्तोकेन च तथान्नेन विभर्षि सुबहून् पृ
थक् । तृप्तिं गताः कथं त्वेते निर्मांसाभिन्नकुक्षयः । अपरं च कथं स्वेच्छमवाप्ता वा परिच्चयं । हिंसाबलश्च कस्मात्त्वं संप्राप्तो निर्जले वने । तृप्तस्यासि कथं
ग्रासमात्रेणैव शुभं ब्रवीत् । शृणु भद्रं प्रवक्ष्यामि दुष्कृतं कर्म चात्मनः । शाकले नगरे रम्ये अहमासं सुदुर्मतिः । शाकले नगरे रम्ये नास्तिकस्य दुरात्मनः ।
धनलोभात्तथा तत्र कदाचित्प्रमदेरिता । न दत्ता भिक्षवे भिक्षा तृषायांतु कदाचन । प्रतिवेश्यस्तु तत्रासीद्ब्राह्मणो गुणवान्मम । श्रवणद्वादशी योगे १०७
मासि भाद्रपदे तथा । स कदाचिन्मया सार्द्धं तापीं नाम नदीं ययौ । तस्यास्तु संगमः पुण्यो यत्रासीच्चन्द्रभागया । चन्द्रभागा सोमसुता तापीचैवार्क

नन्दिनी। तयोः शीतोष्णसलिले सङ्गमे सुमनोहरे। तत्तीर्थवरमासाद्य प्रतिवेश्यसुमे द्विजः। श्रवणद्वादशीयोगे स्नातस्चैव तथोषितः। चन्द्रभागस्य तोयस्य वारिधान्यो नवा दृढाः। दध्योदनयुतैः सार्द्धं संपूर्णैर्विधिमानकैः। छत्रोपानद्युगं वस्त्रं प्रतिमां विधिवद्धरेः। प्रददौ विप्रमुख्याय रहस्यज्ञो महामुनिः। वित्तसंरक्षणार्थाय तस्यापि च ततो मया। सोपवासेन दत्ता वै वारिधानी सुशोभना। चान्द्रभागस्य विप्राय दध्योदन युता तदा। एतत्कृत्वा गृहं प्राप्य ततः कालेन केनचित्। पञ्चत्व मह मासाद्य नास्तिक्यात् प्रेततां गतः। अस्यामटव्यां घोरायां यथा दृष्टस्त्वयानघ। ब्रह्मस्व हारिणस्त्वेते पापाः प्रेतत्वमागताः। परदार रताः केचित्स्वामिद्रोहरताः परे। मित्रद्रोहरताः केचिदेतस्मिंस्तु सुदारुणे ममैते भृत्यतां याताः अन्नपान कृतेनघ। अक्षयो भगवान्विष्णुः परमात्मा सनातनः। यद्दीयते तमुद्दिश्य अक्षयं तत्प्रकीर्त्तितं। मया विहीनाः किंत्वेते वनेऽस्मिन्भृशदारुणे। पीडामनुभविष्यन्ति दारुणां कर्मयोनिजां। एतेषांतु महाभाग ममानुग्रहकाम्यया। अनेक नामगोत्राणि गृहीत्वास्त्वखिलेन च। अस्तिकच्चां गतां चैव तत्वसम्पुटिका शुभा हिमवन्तमथासाद्य तत्रत्वं लप्स्यसे निधिं गयाशीर्षं ततो गत्वा श्राद्धंकुरु महामते। एकमेकमथोद्दिश्य प्रेते प्रेते यथासुखं। एवं सम्भाव्यमाणास्ते तप्तजांबूनदप्रभाः। समारुह्य विमानेन स्वर्गलोकमितो गतः। स्वर्गते प्रेतनाथेन प्रभावात्सवणिक्क्रमात्। नामगोत्राणि संगृह्य प्रयातः स हिमाचलम्। तत्र प्राप्य निधिं गत्वा विनिक्षिप्य स्वके गृहे। धनभागमुपादाय गयाशीर्षं वटं ययौ प्रेतानां क्रमशस्तत्र चक्रे श्राद्धं दिने दिने। यस्य यस्य यथाश्राद्धं स करोति दिने वणिक्। स स तस्य तदा स्वप्ने दर्शयत्यात्मनस्तनुं। ब्रवीति च महाभाग प्रसादेन तवानघ। प्रेतभावमिमं त्यक्त्वा प्राप्तोस्मि परमां गतिं। सकृत्वा धनलोभेन प्रेतानां सद्गतिं वणिक। जगाम स्वगृहं तत्र मासि माद्रे युधिष्ठिर। चकार विधिवद्दानं ततो दिष्टान्तमागतः। यत्रास्ते परमं स्थानं दुर्लभं सर्व मानवैः। यत्र कामफला वृक्षा नद्यः पायसकर्द्दमाः। शीतलामलपानीयाः पुष्करिण्यो मनोरमाः। तन्देशमासाद्य वणिक् महात्मा सुपुष्ट जाम्बूनद भूषिताङ्गः। कल्पं समग्रं सुरसुन्दरीभिः स्वर्गे स रेमे मुदितः सदैव। बुधश्रवणसंयुक्ता द्वादशी सर्वकामदा। दानं

॥ व्र ॥ दध्योदनं व्रतमुपवासः परो विधिः। सगरेण ककुत्स्थेन धुंधुमारेण गाधिना। एतैश्चान्यैश्च राजेन्द्र कामदा द्वादशी कृता। या द्वादशी वुधयुक्ता
॥ १०८ ॥ श्रवणेन साढ्ढी सा वैजयन्ति कथिता मुनिभिर्नभस्ये। तामादरेण समुपोष्य नरोऽहि सम्यक् प्राप्नोति सिद्धिमणिमादिगुणोपपन्नां ॥ इति हेमाद्रौ भविष्यो
त्तरे श्रवण द्वादशी व्रतं अस्यामेव वामनजयन्ती व्रतं हेमाद्रौ भविष्योत्तरे ॥ श्रीकृष्णउवाच ॥ द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर।
सर्वपाप प्रशमनः सर्वसौख्यप्रदायकः एकादशी यदा सा स्याच्छ्रवणेन समन्विता। विजया सा तिथिः प्रोक्ता भ्रतिनामभयप्रदा। पुरा देवगणैः सर्वैः समेत्यच
युधिष्ठिर। वरदः प्रार्थितो विष्णु इन्द्राग्न्यनिलसंयुतैः। वलवानजितो दैत्यो वलि र्नाम महावलः। तेन देवगणाः सर्वे पातिता निजमन्दिरं।
त्वं गतिः सर्वदेवानां शीघ्रं कष्टं तमुद्धर। जहि दैत्यं महावाहो वलिं वलवतां वर। श्रुत्वा विष्णुस्तदा वाक्यं देवानां करुणोदयं। उवाच वाक्यं
वाक्यज्ञो देवानां हितकाम्यया। जाते वैरोचनेः पुत्रं वलिं त्रैलोक्यशङ्कितं। तपसा भावितात्मानं शान्तं दान्तं जितेन्द्रियं। मद्भक्तं मद्गतप्राणं सत्यसन्धं
महावलं। प्रजापति समं स्वात्मप्रजानां प्रियकारकं। नगुणास्तस्य शक्यन्ते वक्तुं केनापि भूतले। अवश्यं तपसोपेतैर्भोक्तव्यं तपसः फलं तपसोन्तस्तु
बहुना कालेनास्य भविष्यति यदा तु विजयन्दैत्यं ग्रास्ये कालेन केनचित्। समाहृत्य श्रियं तस्मा तदा दास्ये दिवौकसां। अदितिर्मे
प्रयत्नार्हैं पुत्रार्थे पुत्रगृद्धिनी तस्या मनीषितं देव कार्यं विष्णुरचिन्तयत्। स चिन्तयित्वा सुचिरं देव्या गर्भावधारणं। अदितिं वरया-
मास वाञ्छितन्ते भविष्यति। अथ काले वहुतिथे गते सा गुर्विणी भवत्। सुषुवे नवमे मासि पुत्रं सा वामनं हरिं। ह्रस्वपादं ह्रस्वकायं महाशिर
समर्भकं। पाणिपादोदर श्मश्रु ह्रस्वजङ्घोरुकेशारं। दृष्ट्वातु वामनं जात मदितेर्मोदनं तथा। भयं वभूव दैत्यानां देवता स्तोषमागमन्। जातकादीन् शुभ
करान् संस्कारान् स्वयमेवच। चकार कश्यपो धीमान् प्रजापति समन्वितः। आवद्धमेखलो दण्डी जटी यज्ञोपवीतवान्। कुशचर्माजिनधरः कमण्ड १०८
लुविभूषितः। वलेर्वलवतो यज्ञं जगाम वहुविस्तरं। दृष्ट्वा दैत्यवलं सर्वं वामनोभेत्यतत्क्षणं। अर्थं नाहं यज्ञपते दीयतां मम मेदिनी। पदत्रय प्रमा

येन पठनार्थं स्थितोच्छ्रुतं। दत्ता दत्ता तव तथा बलिः प्राह द्विजोत्तमं। ततो वर्द्धितुमारब्धो वामनोऽनन्तविक्रमः। पादौ भूमौ प्रतिष्ठाप्य शिर
आहत्य रोदसी। नाभ्यां स्वर्गादिकांल्लोकान् ललाटे ब्रह्मणः पदं। न तृतीयपदं लेभे यतो नेदुर्दिवौकसः। तं दृष्ट्वा महदाश्चर्यं सिद्धा देवर्षयस्तथा।
साधुसाध्विति देवेशं प्रशशंसुर्मुदान्विताः। ततो दैत्यगणान् सर्वान् जित्वा त्रिभुवनं वशी बलिं प्राह च भोगच्छ पातालं स्वबलानुगः तत्र त्वमोषि
तान भोगान् भुङ्क्ष्व मद्बाहुपालितः। अस्येन्द्रस्यावसानेतु त्वमेवेन्द्रो भविष्यसि। एवमुक्तो बलिःप्रायात्प्रणमस्कृत्य नरोत्तमं। विसर्ज्य च बलिं
देवो लोकपालानुवाच ह। स्वानि धिष्ण्यानि गच्छध्वन्तिष्ठध्वं विगतज्वराः। देवेनोक्ता गता देवाः प्रहृष्टाः पूज्य वामनं। देवः कृत्वा जगत्कार्यं
तत्रैवान्तरधीयत। एवमेवं समभवदेकादश्यां नराधिप। तेनेष्टा देवदेवस्य सर्वथा विजया तिथिः। एवं च फाल्गुने मासि पुष्येण सहिता
नृप। विजया प्रोच्यते सद्भिः कोटि कोटि गुणोत्तरा। एकादश्यां सोपवासो रात्रौ संपूजयेद्धरिं। रौप्ये सौवर्णपात्रे वा दारुवंशमयेपिवा।
सौवर्णं वामनं कुर्यात् स्ववित्तस्यानुसारतः। शिखी कमण्डलुधरः छत्री यज्ञोपवीतवान्। एवं लक्षणसम्पन्नं वामनं पूजयेद्धरिं। आच्छाद्य पात्रं
वासोभीरक्तैः फलसंयुतैः। मार्गेण चर्मणा नद्धैर्भक्त्या वा शक्त्यपेक्षया। तिलाढकेन संपूर्णं प्रस्थेन कुडवेन च। अलाभे यवगोधूमैः फलैः शुक्लतिलै
र्भवेत्। पुष्पैर्गन्धैः फलैर्धूपैः कालोत्थै रर्चयेद्धरिं। नानाविधैश्च नैवेद्यैर्भक्ष्य भोज्यैर्गुडोदनैः। स्वस्यवित्तानुसारेण सहिरण्यं च कारयेत्। एभिर्मन्त्र
पदैश्चैव पूजयेत् गरुडध्वजम्। उपचारैर्नरश्रेष्ठ शुचिर्भूत्वा समाहितः। अथाग्नेय भविष्ययोः पूजा। धृत्वा जलमयं देवं देव देवस्य चक्रिणः। ब्रह्माण्ड
मुदरे यस्य महद्भूतैरधिष्ठितं। मायावी वामनः श्रीशः समाया तु जगत्पतिः। आवाहनं। अजनाय महेशाय जलजास्याय शंसिने। नमस्ते केशवा
नन्त वासुदेव नमोऽस्तुते। स्नानं॥ मलयेषु समुत्पन्नं गन्धपुष्पं मनोहरं। मया निवेदितं तुभ्यं गृहाण पुरुषोत्तम। पुष्पं॥ नमः कमलकिंजल्कपीत
निर्मल वाससे। महाहव रिपुस्कन्ध छृष्टचक्राय चक्रिणे। पूजामन्त्रः॥ मत्स्यं कूर्मं वराहञ्च नारसिंहञ्च वामनं। रामं रामं रामकृष्णं अर्चयामि हिते

॥ व्र ॥ नमः। पादाद्यैकैकमस्याङ्गं पूजयेच्छीर्षमन्ततः। पादौ मत्स्याय च नमोनमः कूर्माय जानुनी। वराहाय नमोगुह्यं नृसिंहायेति नाभितः। उरसो
१०८ वामनायेति भुजौ रामाय वै नमः। मुखं रामाय च नमः कृष्णाय च नमः शिरः। एवं व्रते कृते ब्रह्मन् यत्पुण्यं तन्निबोध मे। यावत्कल्पशतं पूर्णं एक
सप्तति संख्यया। प्राप्य विष्णुपुरं भोगान् भुङ्क्ते कालमक्षयं। इहागत्य भवेद्राजा राजभिश्च सुसेवितः। सर्वाङ्गपूजा॥ धूपोयं देवदेवेश शङ्खचक्र
गदाधर। अच्युतानन्त गोविन्द वासुदेव नमोस्तु ते। धू० त्वमेव पृथिवी ज्योतिर्वायुराकाशमेव च। त्वमेव ज्योतिषां ज्योति र्दीपोयं प्रतिगृह्यतां।
अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं। मया निवेदितं देव प्रसीद परमेश्वर। अग्नियमो वैश्रवणः पापं मे हन्तु मेव्ययं। जगत्पूज्यो जगद्वन्द्यः
अनादिर्जगदक्षत्। जगाश्रयो जगद्योनिः प्रीयतां मे जनार्दनः। अनेककर्म निर्बन्धध्वंसिनं जलशायिने। नतोस्मि मथुरानाथं माधवं मधुसूदनं। नमो
वामनरूपाय नमस्तेस्तु त्रिविक्रम। नमस्ते बलिबन्धाय वासुदेव नमोस्तु ते। नमोनमस्ते गोविन्द गमनेश त्रिविक्रम। पापस्य संक्षयं कृत्वा सर्वकाम
प्रदो भव। सर्वगः सर्वदेवेशः श्रीधरः श्रीनिकेतनः। विश्वेश्वराय विष्णवे श्रीशाय च नमोनमः। सर्वं संपूजयेद्रात्रौ एकादश्यां नरोत्तम। जागरं
तत्र कुर्वीत गीतवादित्र मङ्गलैः। एवं पूर्वोक्तविधिना अर्चयेद्वामनं हरिं। प्रदेयः त्रिदशो विदुषि ब्राह्मणे मन्त्रतोनघ। वामनो बुद्धिदो दाता द्रव्य
स्थो वामनः स्वयं। वामनोस्य प्रतिग्राही वामनाय नमोनमः। मन्त्रेणानेन गृह्णीयात् ब्राह्मणश्चापि मन्त्रवित्। वामनः प्रतिगृह्णाति वामनो वै ददाति
च। वामनास्तारकोभाभ्यां वामनाय नमोनमः॥ इति प्रतिग्रह मन्त्रः॥ एवं दत्वा ततः प्रातर्भोजनं पृषदाज्यकं। पूर्वं दद्यात् ब्राह्मणेभ्यः पश्चात्
भुञ्जीत वाग्यवान्। भूयो यथेच्छया राजन् सर्वत्रैष विधिः स्मृतः। एवं व्रते कृते ब्रह्मन् यत्पुण्यं तन्निबोध मे। हस्त्यश्वरथवाजीनां दाता भोक्ता विम
त्सरी। रूपसौभाग्य सम्पन्नो दीर्घायुर्नीतिज्ञो भवेत्। पुत्रैः पौत्रैः परिवृतो जीवेत्सः शरदां शतं। एषा व्युष्टिः समाख्याता एकादश्यां मया तव। पूर्व १०९
मेव समाख्याता द्वादशी श्रवणान्विता। व्युष्टिः फलं। उपोष्यैकादशीं पश्चात् द्वादशीमप्युपोषयेत्। नचात्र विधिलोपःस्यात् उभयोर्देवता हरिः। बुध

श्रवण संयुक्ता द्वादशी सक्तुमोदकं। दानं दध्योदनं सम्यक् उपवासः परो विधिः। सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना। एतैश्चान्यैश्च राजेन्द्रैः कृता वै द्वादशी तिथिः॥ इति भविष्योत्तरपुराणे वामनजयन्ती। अथ पौषकृष्ण द्वादश्यां गुर्जराचारप्रसिद्धं सुरूपा द्वादशी व्रतं॥ उमा उवाच॥ भगवन् प्रष्टुमिच्छामि प्रसादं कुरु मे प्रभो। कथितव्यं प्रसादेन यद्यस्ति मयि सौहृदं। व्रतेन केन चीर्णेन विरूपत्वं प्रणश्यति। सौभाग्यश्चैवमतुलं प्राप्यते कस्य रोचनात्। तन्मे कथय देवेश परमाभीष्ट दायक॥ ईश्वर उवाच॥ श्रूयतां परमं गुह्यं व्रतं पापहरं शुभं। सुरूपा द्वादशी नाम महापातक नाशिनी। सुरूपदायिनी चैव महापातक नाशिनी। कुलवृद्धिकरी चैव सर्व्वसौख्य प्रदायिनी। तत् शृणुष्व प्रयत्नेन कथ्यमानं मया नघे। पुरा वै द्वापरस्यान्ते विष्णुर्दैत्यनिसूदनः। अवतीर्णो मर्त्यलोके वसुदेव कुले किल। तेनोढा रुक्मिणी नाम भीष्मकस्य सुता पुरा। अत्यन्त रूपसुभगा पतिव्रत परायणा। नहि तस्याः विना कृष्णः लोकमुद्वहते सुखं। श्वश्रुश्वशुरयोः सापि पादवन्दनतत्परा। केनापि कर्म्मदोषेण कुपितां विष्णुमातरं। न प्रसादयति क्षिप्रमिति माता तु देवकी। कृष्णं प्रोवाच कुपिता यदि ते जननीह्यहं। ततस्त्वया हि वै बाह्या कुलरूपा गुणाधिका। महाक्यमन्यथा कर्त्तुं नार्हसि त्वं कुलोद्वह। श्रीकृष्ण उवाच॥ अपापां रुक्मिणीं त्यक्ता उद्वहेहं कथं शुभां। यः परित्यजते भार्यामविश्वस्य देहिनां। सःप्राप्नोतिहि मन्दत्वं दौर्भाग्यं सप्तपौरुषं। विरूपत्वमवाप्नोति न सुखं विन्दते क्वचित्। व्याधिर्वा जायते लोके निन्दनीयः सदेहिनां। इत्यहं जानमानोपि कथं कुर्याम्बचस्तव॥ देवक्युवाच॥ सर्व्वेषामेव वेदानां तीर्थादीनामपि ध्रुवं। माता गुरुतरा पुत्र कस्तस्या वचनं त्यजेत्। मम वाक्यस्य करणे कथं पापिष्टता भवेत् जननी पूज्यते ते न भार्या च यदुनन्दन। श्रीकृष्णउवाच॥ परित्यजामि नाहन्तां प्रियां प्राण धनेश्वरीं। इति तूष्णीं पराभूतां मातरं प्रेक्ष्य केशवः। चिन्तयामास परमं कथं सौख्यं भवेदिति। एतस्मिन्नेवकालेतु नारदो भगवानृषिः। अभ्युज्जगाम सहसा विष्णुं संप्रेक्ष्य विस्मितं। पूजितः परया भक्त्या अर्घं अग्राह नारदः। उपविष्टो यथान्यायं पर्य्यपृच्छदनामयं। नारद उवाच॥ किम्ब खेदं करोषि त्वं कथमुद्वेग कारणं। किं न सिद्ध्यति ते भीष्टं त्वकोद्वेगं वदूत्तम। श्रीकृष्ण

॥ व ॥ उवाच ॥ आज्ञा नियुक्तो ब्रह्मर्षे परिणेतुं द्विजोत्तम । कन्यामुद्वाहयिष्यामि कुरूपां कस्यचित्प्रभो ॥ नारद उवाच ॥ श्रूयतामभिधास्यामिपूर्वं वृत्तान्तमादरात् ।
११० लक्ष्मीयुक्तः पुरा नाथः क्रीडमानोऽपि नन्दने । तत्रायातः सभगवान् दुर्वासा ऋषि सत्तमः । सत्कृतस्तु यथान्यायमभ्युत्थापनपूर्वकं । प्रेक्ष्य वीभत्सरूपन्तं देव्या
हास्यं कृतं तदा । स कोपेन महातेजा वैश्वानरसमप्रभः । शशाप लक्ष्मीं दुर्वासा मुनिः क्रोधेन संयुतः । हसितोऽहन्त्वया मुग्धे यात्मनो रूपमीक्षतु । वि
रूपा भव दुर्वृत्ते किं न ज्ञातोऽस्म्यहं त्वया । इत्युक्ता स तया देव्या यथा शक्त्या प्रसादितः । प्रसन्नो अमदे वाक्यं मच्छापो नान्यथा भवेत् । जन्मान्तरेणास्य
फलं करिष्यति विरूपतां । सा तन् मर्त्यवतीर्णापि गोपकस्य गृहे शुभा । सत्यभामा विरूपाङ्गी विरूपदर्शनी त्वथ । कर्णनासातिविकृता संजाता तस्य
मावतः । पाणिपाद कटिग्रीवा सर्ववैरूप्य लक्षणा । तत्र गच्छ महाप्राज्ञ सा ते कन्यां प्रदास्यति । श्रीकृष्ण उवाच ॥ भगवन् विरूपवदनां कथमुद्वहामि
नित्यशः । कां गतिं च गमिष्यामि तां विवाह्य कुरूपिणीं ॥ नारद उवाच ॥ तस्याः शाप प्रसादेन रुक्मिण्या यदु नन्दन । उत्तमं प्राप्स्यते रूपं सौ
भाग्यं परमं सुखं । माता पिता वा किल वै धर्मकामार्थमिच्छते । एवं भविष्यतीत्येव सम्बन्धो विहितः सुरैः । त्वया च नान्यथा कार्यं गुरूणां वचनं
महत् । माता गुरुतरा भूमेरिति वेदेषु गद्यते । ईश्वर उवाच । एवमुक्ता महादेवि नारदस्त्रिदिवङ्गतः । कृष्णोऽपि मातरं प्राह वैवाह्यं हि विधी
यते । विवाहिता च सा तेन वेदोक्त विधिना ततः । आनीय स्वगृहं मातुः दर्शयामास तां वधूं । पश्चाच्च वचनं भामा परिणीता शुचिव्रता ।
निर्वृत्तिं परमां गच्छ प्रसादपरमा भव । इत्युक्ता मोचतां कृष्णः प्रणिपत्य च मातरं । जगाम कृतकार्यार्थं कारणाय महाबलः । तां दृष्ट्वा देव
माता च बभौ दुःखाधिका भृशं । ईदृग्विरूपा विकृता कथं भर्त्तासि गोपिता । चिन्तामवाप महतीमतीवोद्विग्न मानसा । कस्यापि नाचचक्षेथ विरूपं
तत्शरीरजं । अथ कस्मिंस्तु कालेतु रुक्मिणीं तत्र भावतः । नमस्कृत्य ततश्वश्रूं संहृष्टक्षेममयं तदा । उवाच प्रसृतं वाक्यं भक्तियुक्तं शुभावहं । श्वश्र्वाहं ११०
द्रष्टुमिच्छामि सपत्नीं कृष्णवल्लभां । तां दर्शयामास शीघ्रं प्रसादं सुविधीयतां । देवक्युवाच । श्वश्रूश्चाहन्ते सुभगे ममापि वचनं कुरु । पूर्वमाचरितं

शुभ्रु सुरूपा द्वादशी व्रतं संप्रयच्छसि येनास्यै दर्शनन्ते भविष्यति। रुक्मिण्युवाच। कष्टेन क्रियते धर्मः व्रतं चापि सुदुस्करं। कथं तस्यै प्रयच्छामि फलं देवैः सुदुर्लभं। देवक्युवाच॥ अर्द्धं प्रदीयतामस्यै तदर्द्धमथवा पुनः। षष्ठमांशमथो षष्ठं षोडशांशमथापि वा॥ रुक्मिण्युवाच॥ सुरूपा द्वादशीपुण्यं तिलार्द्धमपि नोत्सहे। किं पुनः षोडशांशन्तु सपत्न्या दुःखचेतसि। एवमुक्ता जगामाशु मन्दिरं स्वं शुभेक्षणा। पुनः पप्रच्छ कृष्णं सा प्रणिपातेन वै तथा देव पृच्छामि यैवोक्तं न तथापि प्रभो मम। कथं पश्यामि तामद्य नवेढां कृष्णवल्लभां। श्रीकृष्ण उवाच अम्बा द्रक्ष्यति तेशुभ्रु विरूपां तां सुमध्यमां। विरूपत्वबलाचीर्न्तां कुरूपां विकृताननां। यद्दृष्ट्वैव विचरन्तं रूपाद्यत्र न संशयः। प्रार्थयाथ प्रियां सुभ्रु सुरूपाद्वादशीव्रतं। तिलादपिहि षष्ठांशादेहि मे सेविकास्म्यहं। सा गता तत्सकाशन्तु पिधाय द्वारमादरात्। उवाच रुक्मीणीं सातु सत्यभामा शुचिव्रता। एका यथाकृतिं देवि देहि भीष्मकनन्दिनि। यद्वाकृतिर्वा मे देया यद्यस्ति मयि सौहृदं। रुक्मिण्युवाच॥ कोयं मतिभ्रमस्तेद्य सुरूपां द्वादशीं प्रति। तिलाकृतिं प्रयच्छामि उद्घाटय कपाटकं। इत्युक्ता त्वरितं स्नात्वा दत्वा चैकां तिलाकृतिं। तस्यां चैव प्रदत्तायां रूपेण साधिकाभवत्। तां दृष्ट्वा विस्मयपरां पप्रच्छ दयितां हरेः। कथ्यतां मम का हि त्वं किमर्थमिह चागता। सत्यभामा उवाच॥ तवाहं भगिनी भद्रे कृष्णेनोढास्मि धार्मिके। सत्यभामेति मे नाम नमामि चरणौ तव। इति श्रुत्वा तु वचनं विस्मयोत्फुल्ललोचना। नोवाच किञ्च चार्वंगी प्रत्यर्थं विस्मिता भवत्। एतस्मिन्नेव कालेतु वागुवाचाशरीरिणी च दानप्रभावेण सत्यव्रतपरायणा। सुरूपाद्वादशी पुण्यं देवानामपि दुर्लभं॥ देव्युवाच॥ कर्मणा केन कर्त्तव्या किमाचारं वदस्व मे। नियमं होमदानञ्च प्रसादं सन्निवेद्यतां॥ ईश्वर उवाच॥ पौषमासे तु संप्राप्ते पुष्यर्क्षं यदा भवेत्। तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनं॥ श्वेता गौरेकवर्णा वा तस्या ग्राह्यं तु गोमयं। अन्तरिक्षात्तु पतितं शुचिर्मौनमवस्थितः। तस्य कृत्वाकृतीनां तु शतमष्टोत्तरं तिलैः। प्रतीक्षे द्वादशी कृष्णां उपवास परायणः। स्नात्वा नद्यां तडागे वा विष्णुमेवाथ चिन्तयेत्। सौवर्णं तु हरिं कृत्वा रूप्यं वा भक्तिशक्तितः। बिल्वपत्रोपरिस्थं

॥ व्र ॥ च ततो विष्णुं प्रपूजयेत्। इतिसंपूज्य विधिवत् पुष्पैर्धूपैस्तु धूपितैः। नैवेद्यं तिल मिश्रं तु फलानि विविधानि च। नमः परमशान्ताय विरूपाय नमोस्तुते।
११९ सर्व्वसंकष्टनाशाय गृहाणार्घं नमोस्तुते॥ अर्घमन्त्रः॥ एवं संपूज्य देवेशं कुर्याद्धोमं समाहितः। आवाह्य देवं लक्ष्मीशं होमयेद्धोमयाहुतीम्। शतम
ष्टाधिकं चैव तिलान् व्याहृतिसंयुतान्। सहस्रशीर्षेति मन्त्रेण हृदि ध्यात्वा जनार्दनं। लक्ष्मीयुक्तञ्च मेघाभं शङ्खचक्रगदाधरं। होमान्ते कारयेत्
श्राद्धं वैष्णवं द्विजसत्तमैः। दत्वा च भोजनं तेभ्यः शतकुम्भञ्च दक्षिणां। धर्मश्रवण संयुक्तं जागृयात्तु ततो निशां। तत्कुलं वैष्णवीमूर्त्तिं विप्राय प्रतिपाद
येत्। मन्त्रहीनं क्रियाहीनं च सर्वं तत्र क्षमापयेत्॥ ईश्वर उवाच॥ एवं यः कुरुते देवि सुरूपा द्वादशीव्रतं। नरो वा यदि या नारी तत्र पुण्यं शृणुष्व
मे। दौर्भाग्यं नश्यते तस्य अपि जन्मान्तरार्जितम्। अपि धूमस्य सम्पर्काज्जायते कारणान्तरात्। तस्यापि तस्य ते दुःखं वैरूप्यं तस्य जन्मनि। बन्धु
भिर्न्न वियोगश्च नेष्टैः सह वियोगता। जायते गोवर्द्धिश्च कीर्त्तिमान् जायते भुवि। जातिस्मरणमाप्नोति पदं निर्वाणमाप्नुयात्। पठ्यमानमिदं भक्त्या
यः शृणोति समाहितः। पुण्यमाप्नोति सततं स्वर्गलोके महीमते। इति सुरूपद्वादशी व्रतं॥ इति श्रीभट्टनीलकण्ठात्मज भट्टशङ्करकृतौ व्रतार्के द्वादशी
व्रतानि॥ अथ त्रयोदशी व्रतानि॥ तत्राषाढशुक्लत्रयोदश्यां द्विजपा पार्वती व्रतं भविष्योत्तर पुराणे॥ श्रीलक्ष्मीरुवाच। देवदेव जगन्नाथ भुक्तिमुक्ति
प्रदायक। कथयस्व प्रसादेन लोकानां हितकाम्यया। नारीणां तु व्रतं चैव अवैधव्यकरं शुभं। येन चीर्णेन नारीणामखण्ड फलदो भवेत्॥ श्रीभगवा
नुवाच। सत्यमुक्तं त्वया देवि मिथ्या नच त्वयोदितं। तद्व्रतं कथयिष्यामि नाख्यातं कस्यचित्पुरा। अकथ्यं परमं गुह्यं पवित्रं पापनाशनं। येन चीर्णेन
नारीणामवैधव्यं च जायते। आषाढे चैव कर्त्तव्यं शुक्लपक्षे त्रयोदशी। गृह्णीयान्नियमं तत्र दन्तधावन पूर्व्वकं। दन्तधावन मन्त्रः॥ आयुर्बलं यशो
वर्चः प्रजाः पशु वसूनि च। ब्रह्मप्रज्ञां च मेधांच तन्नोधेहि वनस्पते॥ नियमात् फलमाप्नोति निःफलं नियमं विना। एतत्सर्वं प्रयत्नेन व्रतं नियमपूर्वकं ११९
एकभुक्तं व्रतं चैव करिष्ये च मयाधुना। क्षारादुरहितेन धान्येन तेन पापं व्यपोहतु। उमामहेश्वरौ कार्यौ सुवर्ण रजतादिभिः। अथवा मृन्मयौ कार्यौ

सिंहदेवीपरिस्थितौ। गोष्टे देवालये चापि तथा ब्राह्मणवेश्मनि। स्थापयेद्वेदमन्त्रेण प्रतिष्ठां तत्र कारयेत्। तद्दिने दन्तकाष्ठं हि यूथिकां च
वरानने स्नानशुद्धिं ततः कृत्वा ततः पूजां प्रकल्पयेत् ऋषिभिः सह सनकैः पूजां कृत्वा पृथक् पृथक् कुङ्कुमागरुकस्तूरीसिन्दूरैरष्टगन्धकैः।
पल्लवैः शतपत्रैश्च यूथिकादिकृतूद्भवैः। ग्रीवासूत्रेण दूर्वायाः पूजयित्वा विधानतः। अर्घेण चातिशुभ्रेण उत्ततीयुग एव च। श्रीफलद्राक्षा
दाडिम्बैः तथा जातीफलेन च। आद्या देवी च शर्वाणी शङ्करस्य सदा प्रिये। अर्घं गृहाण देवेशि ममोपरि कृपां कुरु। इति पूजा प्रकर्त्त-
व्या कथां चक्रे द्विजोत्तमः॥ श्रीलक्ष्मीरुवाच॥ अच्युताय नमस्तुभ्यं पुरुषायादिरूपिणे। व्रताध्यक्ष महाप्राज्ञ त्वं वृद्धिक्षयकारक। कथयस्व प्रसादेन
व्रतानामुत्तमं व्रतं। केन चादौ पुराचीर्णं मृत्युलोके च कारितं। एतत्सर्वं प्रयत्नेन ब्रूहि मे जगदीश्वर॥ श्रीभगवानुवाच॥ अथातः संप्रवक्ष्यामि पार्व-
त्यास्व कथामिमां। यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः। आसीत्पुराकृतयुगे कौण्डिन्ये नगरेवरे। ब्राह्मणो वसते तत्र सत्यशौच परायणः। गुण-
वान् शीलसन्तोषी वामनो नाम नामतः। तस्य भार्या प्रिया सत्या रूपलक्षणसंयुता। धनाढ्यो वेदविदुषः गृहे वै सर्व सम्पदः। तस्य कर्मविपाकेन सन्तानरं
हितो भवत्। अपुत्रस्य गृहं शून्यं श्मशानसदृशं भवेत्। दम्पती तेन दुःखेन चामौ जातौ शरीरतः। एककाल समायोगे नारदो गृहमागतः। अर्घं
पाद्यं कृतं तस्य कथां चक्रेऽमुना सह॥ वामन उवाच॥ नारदस्त्वं ऋषिश्रेष्ठ सर्वज्ञान परायण। कथयस्व प्रसादेन कथं दुःखं प्रशाम्यति॥ दानेन केन
देवर्षे व्रतनियम पुरःसरं। तीर्थेन च मुनिश्रेष्ठ सन्तानं मे भविष्यति॥ नारद उवाच॥ शृणु विप्र प्रवक्ष्यामि सन्तानश्च भविष्यति। वनस्य दक्षिणे
पार्श्वे विल्वयूपन्तु मध्यतः। वियल्लिङ्गञ्च विख्यातं भवानीसंस्थितं परं। सपर्यां कुरु यत्नेन तुष्टो दास्यति सन्ततिं। अपूज्यं लिङ्गमभ्यर्च्याऽपूज्यस्य यद्दीय
ते। अनाथे प्रेतसंस्कार कोटियज्ञ फलं भवेत्। इत्युक्ता नारदः स्वर्गं गतोवै मुनिपुङ्गवः। वनमध्ये गतौ द्वौ तौ दम्पती पुत्रकांक्षिणौ। विल्वमध्ये गतो
दृष्टा शिवलिङ्गं पुरातनं। विल्वपत्रेण जीर्णेन लिङ्गं तत्रैव छादितं। विहाय विल्वपत्राणि सन्मार्ज्य उपलेपनं। पश्चात्स्तेन प्रक्षाल्य पूजां कृत्वा मनो

दूमां । नित्यं नियमसंयुक्तं पूजयेत्परमेश्वरं । पश्चाब्दं पूजितस्तेन पार्व्वती सहितो हरः । एकदा तु गतो सौ तु पुष्पार्थं ब्राह्मणस्य हि । कुसुमं गृह्यते
[illegible]वत् दष्टो सुपन्नगैः । पतितस्तद्वने घोरे सिंहव्याघ्र समाकुले । तृतीयेन मुहूर्त्तेन तद्भार्या चिन्तितं तदा । केनापि कारणेनैव कथं नायाति
मे [illegible]दन्ती शोकसंयुक्ता वनमध्ये गता सती । आगता तत्र यत्रास्ते भर्त्ता च पतितोपि च ॥ भर्त्तारं पतितं दृष्ट्वा सापि तत्र उपागता । तत्य
खादेदना[illegible] स्मरन्ती वनदेवतां । पार्व्वती च समायाता यत्र तिष्ठति ब्राह्मणी । क्रन्दमानां तु तां दृष्ट्वा पार्व्वती वरदा भवत् । सुधाशीकर हस्तेन
विप्रवक्त्रं विमुञ्चती । उत्थितो ब्राह्मणो तत्र निशीथे निद्र्यापि च । तावेत्य चरणौ गृह्य दम्पती विनयान्वितौ । पार्व्वत्योदितमिदं वरं वरय सुव्रते ।
ब्राम्हण्युवाच ॥ त्वत्प्रसादेन रुद्राणि लब्धश्च वाञ्छितं मया । सन्तानं चैव मे नास्ति एतत् दुःखं च मे हृदि । पार्व्वत्युवाच ॥ व्रतं कुरु विधानेन मम
नाम्ना च विश्रुतं । जया ममव्रतं नाम त्रैलोक्ये पावनं परं । जया पार्व्वती व्रतंच आषाढे चारुलोचने । स्वादुरहितेन चान्नेन लवणेन रहितेन च । भो
क्तव्यं दिनपञ्चैव कर्तव्यं च दृढव्रतं । त्रयोदश्यां व्रतारम्भं तृतीयायां समापन । शुक्लपक्षे व्रतारम्भं कृष्णपक्षे समापनं । पञ्चाब्दं यावनालैस्तु व्रतं कार्यं
प्रयत्नतः । पञ्चाब्दं हि यवैस्सैव व्रतन्तु लवणं विना । पञ्चाब्दं तण्डुलैः कार्य्यं इक्षुरसविसर्जन । पञ्चाब्दं मुद्गैः कार्य्यं एवं ह्यायनविंशति । विंश
तितमे ततोऽब्दे व्रतोद्धारं समाचरेत् । दम्पत्योः परिधानं हि प्रदद्याद्रुद्रहेतवे । भोजं सुवासनीनाञ्च तृतीयायां यथोदितं । विंशति प्रथमे पक्षे वित्त
साद्यमतःपरं । पञ्चके पञ्चके कार्य्यं परिधानं भोजनैः सह । ननारसैः समायुक्तं घृतखण्ड समन्वितं । सभर्तृकायास्य दातव्यं भोज्यं सौभाग्य हेतवे ।
कुङ्कुमं कज्जलं देयं अब्दे अब्दे स्वशक्तितः । रात्रै जागरणं कुर्य्यात् अखण्ड फलदं भवेत् । अनेन विधिना यस्तु कुरुते व्रतमुत्तमं । जागरेच कृते याति
व्रतं संपूर्णतां सदा । व्रतेन च विना नारी विधवा जन्मजन्मनि । शोचन्ती दुःखसंयुक्ता नच सौभाग्य भाग्भवेत् । नारीणां च व्रतैर्दानैः पतिभक्त्या ततः 
परं । सौभाग्यमतुलं याति पतिसन्तोषदानतः । एतावदुक्त्वा व्रतमिदं तत्रैवान्तरधीयत । पश्चाद्गृहं समागत्य दम्पती च मदान्वितौ । पूर्वोक्तेन विधा

नेन प्राप्तं पुत्रसुखं तयोः। भर्त्तारं च विशेषेण अवैधव्यं परं सुखं। भुक्का च विविधान् भोगान् अन्ते प्राप्तं शिवालयं। श्रीभगवानुवाच॥ एवं या कुरु
ते नारी नवभर्त्ता विमुच्यते। कुलत्रयं समुद्धृत्य नीयते शिवमन्दिरं। सान्निध्य सुखमाप्नोति शिवलोके महीयते कथां श्रुत्वा विधानेन सर्व्वपापै र्विमुच्य
ते। इति भविष्योत्तर पुराणोक्तया पार्वती व्रतं॥ इदञ्च गुर्जराचार प्राप्तं॥ अथ भाद्रशुक्ल त्रयोदश्यादि गोत्रिरात्र व्रतं। हेमाद्रौ भविष्योत्तरे।
युधिष्ठिर उवाच॥ भगवंस्त्वत्प्रसादेन बहूनि सुकृतानि मे। श्रुतानि बहुपुण्यानि कृतानि मधुसूदन। सर्व्वपापहराणि स्युः सर्वकाम प्रदानि च। सा
म्प्रतं श्रोतुमिच्छामि व्रतानामुत्तमं व्रतं। किञ्चिद्योग व्रतं ब्रूहि यदि तुष्टोसि माधव। यत्कृत्वा सर्व्वपापेभ्यो नरोनारी प्रमुच्यते॥ श्रीकृष्ण उवाच॥ क
थयामि नृपश्रेष्ठ व्रतानामुत्तमं व्रतं। यन्नकस्यचिदाख्यातं तच्छृणुष्व नृपोत्तम। यान्यान् कामान् वाञ्छन्ति लभेत्तांस्तांस्तथैव च। तत्प्रसादेव मुच्यन्ते
नरा नार्यश्च सर्व्वशः। प्रभोर्भगवतोराजन् कामधेनोः प्रसादतः। सौभाग्यं संततिं लक्ष्मीं प्राप्नोति सुखमुत्तमं॥ युधिष्ठिर उवाच॥ यदि तुष्टोसि भगव
न् व्रतस्यास्य विधिंशुभं। ब्रूहि मे राजशार्दूल करोमि त्वत्प्रसादतः। कैर्मन्त्राः के नमस्कारा देवतार्थे प्रकीर्त्तिताः। किं दानमर्घ्यं मन्त्रञ्च कथयस्व
सुरोत्तम॥ श्रीकृष्ण उवाच॥ नारदेन पुरा राजन् यदुक्तं सागरादिषु। स्मारितं तत्वया राजन् शृणुष्वैकमना व्रतं। मासि भाद्रपदे शुक्ले त्रयोदश्यां
समारभेत्। त्रयोदश्यां प्रभाते तु समुत्थाय शुचिर्भवेत्। गृह्णीयान्नियमं पूर्व्वं दन्तधावनपूर्वकं। आचम्योदकमादाय इमं मंत्र मुदीरयेत्। गोत्रिरात्र
व्रतस्यास्य उपवासकरणे मम। शरणं भव मे देवि नमस्ते धेनुरूपिणि। प्रसीद तु महादेवो लक्ष्मीनारायणः प्रभुः। लक्ष्मीनारायणं देवं सौवर्णं वा स्वश
क्तितः। पञ्चामृतेन गव्येन स्नापयेत् कमलापतिं। स्थापयेत् सर्व्वतोभद्रं मण्डलेष्टदलेपि वा। गन्धपुष्पैः सुनैवेद्यैः स्तुतिगीतादिनर्तनैः। नालिकेरार्घ
दानेन प्रीणयेद्वा हरिं तथा। लक्ष्मीकान्त जगन्नाथ गोत्रिरात्र व्रतं मम। परिपूर्णं कुरुष्वेमं गृहाणार्घं नमोस्तुमे। आरार्तिकं ततः कुर्याद्भक्त्या कृष्णस्य
तुष्टिदं। नवं कुम्भं जलभृतं हविष्यान्नेन पूरितं। कृत्वा दिनत्रयं पार्थ प्रीतयेविनिवेदयेत्। धेनुपूजां ततः कुर्यात् जलधारां प्रदक्षिणां। पुरा दत्वा तु

मुकुटं कुण्डलं कुङ्कुमं तथा। वस्त्राच्छादन गन्धादि दिव्यपुष्पैः सदीपकैः। अहोरात्र भवं किञ्चित् घृतदीपं दिनत्रयं। अर्घदानं ततः कुर्यात्नालिकेरा
दिभिः फलैः। अर्घ मन्त्रः॥ पञ्चगावः समुत्पन्ना मथ्यमाने महोदधौ। तासां मध्ये तु या नन्दा तस्यै धेन्वै नमोनमः। प्रदक्षिणी कृता येन धेनु मार्गानुसा
रिणी। प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा। गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः गावो मे हृदये सन्तु गवां मध्ये वसाम्यहं। आरार्तिकं सनैवेद्यं
गीतवाद्यं महोत्सवः कुङ्कुमं कलशं सूत्रं धेन्वैदद्याद्विचक्षणः। एवं संपूज्य तां धेनुं सम्यग् भक्त्या दिनत्रयं। यवांश्च यवसञ्चैव चारयेत्पाययेत्पयः। गोमयादा
गतैर्धौतैः कुर्यात्तैरेव पारणं। धेन्वै प्रजागरं कुर्यात् सर्व पाप प्रणाशनं। त्रिविधान्मुच्यते पापात् प्रहरार्धेन पांडव। तस्योत्तरंकृतात्पापात् प्रहरार्धेन मुच्यते।
चत्वारि वेणुपात्राणि कारयित्वा प्रपूजयेत्। नालिकेराम्रकदलद्राक्षाखर्जूरदाडिमैः। शुभैः विरूढैः सिन्दूरैर्वस्त्रकुंकुमकज्जलैः। प्रथमे बीजपूरार्घं द्वितीये
दाडिमं शुभं तृतीये नालिकेरेण दद्यादर्घं दिनत्रयं। करकास्त्रयः कार्या हविष्यान्नेन पूरिताः। लक्ष्मीनारायणं देवं ब्राह्मणं भार्यया सह। पूजयेतकुसुमै
र्वस्त्रैर्हेम सूत्रैर्युधिष्ठिर। दंपत्योर्भोजनं देयं धेनुं भक्त्या दिनत्रयं पारणे गौरिणीं विप्रानिष्टं बंधूंश्च भोजयेत्। गुरुरूपाय तां धेनुं द्विजाय प्रतिपादयेत्।
सकुंकुमां सवस्त्रांच घंटा मुकुटभूषितां। गीतवादित्रनृत्यादिशान्तिपाठपुरःसरां। यावाद्विप्रगृहं यावत् प्रापयेत्तत एवच। एवं या कुरुते पार्थ गोत्रिरात्रं
व्रतोत्तमं। दुर्लभं तु सदा स्त्रीणां नराणां नृपसत्तम। अश्वमेधसहस्राणि वाजपेयशतानिच। कृत्वायत् फलमाप्नोति गौत्रिरात्रव्रते कृते। प्रभासेच
कुरुक्षेत्रे चन्द्रसूर्यग्रहे तथा। हेमभारशतं दद्यात् फलं तत्प्राप्नुयात् नृप। धेनुदानं ततःपश्चान् सवत्सं सर्वकामकं। सागरां वरसंयुक्ता दत्ता तेन वसुंधरा।
एवं या कुरुते पार्थ त्रिरात्रव्रतमुत्तमं। भवान्तरकृतात्पापात् त्रिविधान्मुच्यते नरः। या वा काचिन्नपश्येत भर्तृदुःखं नराधिप। पुत्र पौत्रसुखं
तस्याभविष्यति न संशयः। जन्मांतरेप्यसौ नारी वैधव्यं नैव पश्यति। वैधव्यं च महद्दुःखं न भवेत्तु भवांतरे। अपुत्री लभते पुत्रान्धनहीनो धनं लभेत्।
कायेन मनसा चैव कर्मणा यदुपार्जितं। तत्सर्वं पातकं याति गोत्रिराचव्रतेन वैं। इह भोगान्सविपुलान् भुक्त्वाद पूर्णमेवच। व्रतस्यास्य प्रभावेण गोलोके

च मखीयते। कीर्त्तिदं धनदं चैव सौभाग्यकरणं नृप आयुरारोग्य करणं सर्वपापप्रणाशनं। एतस्मात् कारणाद्राजन् सभार्यस्त्वं कुरु व्रतं। यदि राज्यं च सत्कीर्त्तिन्नित्यमाप्तुमिहेच्छसि। तच्छ्रुत्वा पांडवश्रेष्टो व्रतं चक्रे समाहितः। व्रतस्यास्य प्रभावेण लब्धं राज्यमकंटकं। इतिहेमाद्रौ भविष्ये गोत्रिराचव्रतं। इदं च गुर्जरेषु प्रसिद्धं। स्कांदेतुआश्विनशुक्लत्रयोदश्याद्युक्तम्। अथ गुर्जराचारप्राप्तं गोत्रिराचव्रतं॥ युधिष्ठिर उवाच येन लक्ष्मीःसकलापि नराणां भुवने भवेत्। संततिर्वर्द्धते स्त्रीणां तद्व्रतं वद मे प्रभो॥ श्रीकृष्णउवाच॥ शृणु राजन् प्रवक्ष्यामि व्रतानामुत्तमं व्रतं। येन वैक्रियमाणेन सर्वपापक्षयो भवे। गोत्राचमिति ख्यातं नृस्त्रीणां फलदायकं वांछितं जायते तेषां दयाचेतसि वर्त्तते॥ युधिष्ठिरउवाच॥ कीदृशं तद्व्रतं देव विधानं तत्रकीदृशं कथमेषा समुत्पन्ना कस्मिन् काले तु केशव॥ श्रींकृष्णउवाच॥ पुराकृतयुगे पार्थ मनुर्नाम वभूवह। वैवस्वतकुले जातो वभूव पृथिवीपतिः। तदन्वये दिलीपश्च प्रसूतः पतिरुत्ततः। नृपाः सर्ववशं तस्य संजाताः करदायकाः। नित्यं धर्मपरो राजा पूजनीयो मनीषिणां न जायते तु संतानं तस्यैवं वर्त्ततः सदा। वांछता तनयं तेन दत्तामन्त्रिषु कोशला। स पुत्रार्थं सपत्नीको वसिष्टस्याश्रमं यायौ। पश्यन्हि पथि कल्याणि सारसैस्तोरणं कृतं। विविधानि चवृक्षाणि मार्गेषु फलितानि वै। सराजा महिषी सार्द्धं रथारूढसुवाहनः। संध्यायां योगिनस्तस्य महर्षेः प्रापदाश्रमं। सारथिंच समादिश्य वाहान् विश्रामयेत्पथ्। रथादुत्तीर्य्य दंपत्यावाश्रमं चगतौमुनेः। एवं कर्मणि संध्यायां दिलीपो ददृशे गुरुं। अरुंधत्या सहासीनं साविचेरिवपितामहं तौ प्रणम्य गुरुं तत्र मुनिपत्नी विशेषतः। स्थितौ तस्य समीपे तु प्रीत्या चासनं दत्तौ तयोः। दिलीपं च तदा पार्थ धर्मज्ञं लोकपालकं। पप्रच्छ कुशलं राज्ये वसुधायां शुभो मुनिः। दिलीपउवाच॥ कुशलं मे सदा देवस्थिते त्वयि गुरौ सति। सुराणांचमनुष्याणां विपदं रक्षिता भवान्। विषये मम कांताया मपत्यं किं न जायते। किं नु कार्य्यंधरित्र्यां मेनिराशाः पितरो मम। तथा कुरु मुनि श्रेष्ट पुत्रो भवति मे यथा। राज्ञां विपदि संप्राप्ते त्वया दत्तं सुखं मुने। वदेति कथितं राज्ञामुनये वै युधिष्ठिर। तदा मुनिः क्षणं तस्थौ ध्यानस्तिमितलोचनः। कारणं संतते राज्ञो मुनिर्दृष्टा समाधिना। पश्चान्निवेदितं तस्मै दिलीपाय

॥ ब्र ॥ प्रयत्नतः ॥ वसिष्ठ उवाच ॥ पूर्वं इन्द्रमाराध्य वसुधां गछत स्तव । अभूत्कल्पकुल स्याधः कामधेनुर्न वंदिता । जातस्तस्यास्तदा. कोपोदत्तस्ते
११४ [illegible]द्दग्रः । न वंदिताहं भवता सांप्रतं यदि भूमिप । न भविष्यत्यतः पुत्रः तच्छापो न श्रुतस्त्वया न पूजयेद्यः पूज्यानां वंद्यनां यो न वंदते ।
न [illegible]ते तु कल्याणं पातकैरेव लिप्यते ॥ दिलीप उवाच ॥ कृतो मयापराधोयं करोमि किमहं मुने । सति जायते येन तद्व्रतं वद मे प्रभो ॥
वसिष्ठउवाच ॥ अन्यैर्नानाविधैः पुण्यैःस्तपोभिर्न्रप दुःसहैः । न जायते तु संतानं गोत्रिरात्रव्रतं विना । सपत्नीकःसवत्सां मे धेनुं राजन् फलप्रदां ।
आराधयैकाग्रमनसा गोत्रिरात्र व्रतं कुरु । यावदित्थं दिलीपस्य मुनिना कथितं व्रतं । तावच्च नंदिनी धेनुर्वनादावर्त्तते शुभा । कुंडोध्नी तिलकं सितं
मुखफलादुग्धं शुचिर्बिभ्रती देवानां वरदा शुभा दधिभवा कामप्रदा पाटला । गीर्वाणाः सकलाः श्रुतौ वपुषि वै तिष्टंति यस्याश्च ते संपूर्णांशच्चिनः
कलां चदधती । श्रेयस्करा पूर्णिमा । भाद्रपदे समायाते शुक्लपक्षे तु पार्थिव । प्रातः स्नात्वा त्रयोदश्यां नियमं तु सुभक्तितः । समुपोष्य गोत्रिरात्रं भक्तिं
कृत्वा तत स्तव । श्वोच्येऽहनि चतुर्थेऽहं सौभाग्यं देहिगौर्मम । नियममंत्रः । ततोगाश्च समभ्यर्च्य मंडले गंधदीपकैः । तगरैःशतपत्रैश्चचपंकाद्यैः शुभाननां ।
गावोममाग्रतः सन्तुगावो मे संतु पृष्टतः गावो मे हृदये संतु गवांमध्येवसाम्यहं । पंचगावो समुत्पन्ना मथ्यामाने महोदधौ । तासांमध्ये तु या नंदा तस्यै धेन्वै
नमोनमः । पूजामंत्रः ॥ फलैर्नानाविधैः पुष्पैर्गन्धैरपि स्वशक्तितः । पूजनीया प्रयत्नेन दद्यादर्घं विधानतः । नालिकेरं च कुष्माण्डं मातुलिङ्गञ्च दाडिमं ।
हविष्यान्नञ्च नैवेद्यं कारयेद्यवसंयुतम् । गोत्रिरात्र व्रतार्थाय फलं मेच करे धृतम् । सर्व्वकामप्रदा देवि गृहाणार्घं नमोस्तुते ॥ अर्घं मन्त्रः ॥ वस्त्रयुग्मं
विधानेन दद्याद्वासांसि दक्षिणां । सपत्नीकाय गुरवे स्वशक्त्या च व्रती नरः । दिनानि व्रतिभिस्त्रीणि श्रोतव्या च कथा शुभा । जितक्रोधैस्ततः सर्व्वैं
स्तोभिर्वा पुरुषैरपि । एवं सम्पूज्य विधिवत् लक्ष्मीयुक्तन्तु केशवम् । चतुर्थे दिवसे प्राप्ते ततो धेनुं विसर्जयेत् । ततो धेनुं सवत्सांतु मन्त्रेणानेन पार्थिव । ११४
दद्याद्विप्राय विदुषे धर्मज्ञे शास्त्रपारगे । परिपूर्णं व्रतं कृत्वा इष्टान् कामानभीप्सितान् । विप्राय त्वं मया दत्ता मातर्गच्छ यथा सुखम् ॥ दानमन्त्रः ॥

सर्व्वदानानि देयानि स्वशक्त्या व्रतिभिर्नरैः ॥ विविधेभ्यो द्विजेभ्यश्च दक्षिणां च स्वशक्तितः ॥ वित्तशाठ्यं न कुर्वीत दापयेच्च ततो नरः ॥ गृहं यावत् व्रजेत् हृष्टे गीतनृत्य पुरःसरम्। गोपालानां च पाथेयं पूजाकरकरं वरम्। यवा ये चारिता नित्यं फलैर्नानाविधैः सह। भक्ता वै कामधेन्वा च संयुक्ता गोमयेन तु। पारणं वै प्रकर्त्तव्यं सर्वैरिष्ट जनैः सह। सपत्नीकाय गुरवे दत्वा चान्नं सदक्षिणं॥ श्रीकृष्ण उवाच॥ पूर्वमाराध्यतां धेनुं राजा वै भक्तितत्परः। ततः प्रजानामधिपः प्रभाते सुरभिर्मुनेः। भाद्रपदे सिते पक्षे त्रयोदश्यां युधिष्ठिर पूजां कृत्वा विधानेन मुमोच त्वरितं शुचिः। सन्ध्यायाः प्रभृति स्थित्वा आययौ पुनराश्रमे। अर्चां सुदक्षिणा कर्तुं नीत्वा च विधिवद्बलिं। ययौ धेनोः समीपे तु वलिं दत्वा दिनत्रयं। अनुया तस्ततो धेनोस्तृतीयदिवसे पुनः। जगतां गोरूपधारामिवोद्धिपयोधरां। लतामिश्च ततो राजा पुष्पैर्वद्वापितस्तदा। जयशब्दं च भाषन्ते पक्षिणः सुन्दराननाः। गीतञ्च वन देवीभिः गायमानन्तथा यशः। सुश्राव च ततो राजा भृशं मनसि हर्षितः। चिरं शुभे वने व्यक्तं भूमिपे भ्रमिते सति। धेनुश्च शुशुभे राज्ञा राजा धेन्वा वभौ पुनः। तद्दिने च मुने धेंनू राज्ञोभावञ्च पश्यति। विवेश गह्वरं तत्र पार्वत्याश्च पितुर्न्टप। कृत्रिम स्तत्र सिंहस्तु मुनि धेन्वा विनिर्मितः। सिंहश्च दहशे राज्ञा धेनुं कर्षन्बलेन वै। दृष्टा राज्ञा च सा धेनुः क्रन्दमाना स्वरोल्वणैः। ततो धनुर्धरः सोपि तां मोक्तु मुपचक्रमे। वध्यसिंहवधार्थाय राजा वाणं करे दधौ उत्पन्नस्तु तदा शोकः कोपयुक्तो वभूव सः धनुष्यारोपयन् वाणं चित्रन्यस्त इव स्थितः। हस्तस्य निश्चलत्वेन क्रोधस्तस्य व्यवर्धतः। विस्मयं प्रापयन्सिंहो राजानं वै युधिष्ठिर। मानवस्य गिरा प्राह दुष्टत्वेन गवि स्थितः। सिंह उवाच॥ अस्त्रं प्रयुक्तं भवता दृथा मयि मविष्यति। ततः कष्टेन महता श्रमं माकुरु सर्वथा। न मारुतस्य वेगोपि पर्वतोन्मूलने क्षमः। आयते न महाराज स्यात्केवल मनोग्रहे। महेश्वरस्य मां राजन् नाम्ना कुम्भोदरेणतु। सेवकानां च सर्वेषां मुख्यं जानीहि भूमिप। विलोकयेमं पुरतो देवदारुमहाद्रुमं। सिक्तः स्नेहेन भूपाल शिवया च सुतः कृतः। कदाचिदागतो हस्ती भग्नस्तेन महाद्रुमः। तस्य संरक्षणार्थाय नियुक्तोहं शिवेन तु। कृत्वा शिवेन सिंह

॥ व ॥ त्वं मुक्तोऽहं जीवभोजनः । तथैयं खलु गौ राजन् भक्ष्या तु समुपागता त्यक्त्वा लज्जां निवर्त्तस्व भक्तोऽसि गुरवे भवान्। आपत्काल इदं हत्तं नस्याच्छस्त्रभृतो
॥ ११५ ॥ नृपः । दोषो न जायते तस्य यशो राजन् न गच्छति । श्रुत्वा गिरं च सिंहस्य राजा चैनमुवाच ह । ईश्वरस्तु समो मान्यो वेत्सि सिंह भवानपि ।
समीपात्कथं याति मम धेनुर्गुरोरियं। प्रसीद भक्ष देहं मे धेनुं मुञ्च सवत्सकां। भविष्यति जनन्यास्य वत्सो मार्गं विलोकयन्। सिंहेन तद्दिलीपस्य
कथितं वै तदा पुनः। देहान्तरे च हृष्टानि भयकारीणि कुर्वता। स्तोकेन हेतुना पार्थ कान्तं च्छत्रं च सत्कृतं। सर्वस्य जगतो राज्यं वपुरेतन्नवं वयः
त्यक्तुमिच्छसि वा राजन् मूर्खस्त्वमीदृशः कथं। ददासि च कथं प्राणान् प्रजापालनतत्परः। जीवन्नवा महाराज मुनेः कोपस्य यास्यति। ततो रक्षय
देहं स्वं राज्यं च कुरु भूमिप। यावच्चोवाच सिंहोसौ नगेनानुगताङ्घ्रिरं। दिलीपोपि तदा पार्थ वाणीमेतामुवाच ह। गवा निरीक्षितस्त्वाहं भूमि
पो दीननेत्रया। किंभो राज्येन मे सिंह विषये जीवनेन वा। यशो गतञ्च मे सर्वं यदि धेनु ग्रहीष्यसि। मुञ्च धेनु मिमां रक्ष देह
भक्षस्व मे कुरु। सिंह उवाच। इत्थं भूप करिष्यामि तवाङ्गं देहि मे ततः। दिलीपोपि ततस्त्वाग्रे सिंहस्य पतितस्तदा।
यावदित्थं च पतितो मांसस्य पिण्डवन्नृपः। तावत्सिंहो रवं कृत्वा धावितश्च भयङ्करः। दृष्ट्वा सिंहं निपतितं चञ्चलो न बभूव ह। तावत्तस्योपरिष्टाच्च
पुष्पवृष्टिः पपात वै। उत्तिष्ठ वत्स भूपाल वाचमित्थं निशम्य सः। उत्थितः सन्नुनस्त्वाग्रे गां ददर्श न वै हरिं। सेवया च गुरौ पार्थ भक्त्या वापि विशेषतः।
प्रीता कामदुघ्वाचाहं वरं याचयतात् भवान्। योजयित्वा करौ राजा ययाचे तनयं ततः। वंश कर्त्ता महाप्राज्ञो शिवभक्तो निरन्तरं ॥ गौरुवाच ॥
गौश्चि रात्र व्रतं राजन् यद्भक्त्या भवता कृतं। ततः पश्चाद्यते दत्तः पुत्रः पौरुष विग्रहः। ये येन्येपि करिष्यन्ति गोचिरात्र व्रतं मम। तेषां कामञ्च
दास्यामि मनसीष्टं न संशयः। इत्युक्त्वा चलिता धेनुर्वशिष्ठस्याश्रमं प्रति। सम्मुखी च वलिं नित्वा आययौतु सुदक्षिणा। पूजां कृत्वा विधानेन ११
राजपत्नी विशेषतः। प्रदक्षिणक्रियां कृत्वा चलिता वै युधिष्ठिर। आश्रमञ्च ततो गत्वा दिलीपोसौ युतस्तदा। गुरोरग्रे च तत्सर्वं वृत्तान्तमवदीत

पुनः । नन्दितौ च तदा पार्थ दम्पती तौ सुकोमलौ । पारणं च ततः कृत्वा प्रस्थितौ नगरं प्रति । कृताशं च नमस्कृत्य होतारं गां तथैव च ॥ आगतस्य
ततो राजा उत्पताकं पुरं पुनः । राज्ञा तेन कृशाङ्गेन राज्यमारोपितं भुजे । दिनैः कतिपयैरेव गोचिराचप्रभावतः । राज्यञ्च कुर्वतस्तस्य
सुतो जातो महाबली । प्रभाते सुमुहूर्त्ते च उत्पन्नो रघुसंज्ञया । रम्यं जातं तदा सर्वं संजाता निर्मला दिशः । आददे च हुतं वह्निर्वायवः शीघ्र
गा ववुः । मृदंगस्य स्वनैरभ्यैः पूर्णं स्वर्गमनुत्तमं । प्रजाः सर्वास्तदा पार्थ वदन्ति च पुनः पुनः । गोचिराचप्रभावाच्च राज्ञः पुत्रो बभूव ह । पुरं
दरस्य जेता च महाधर्मपरायणः । दिग्विजयस्य यज्ञस्य कर्त्ता सोऽपि युधिष्ठिर । यज्ञं दिग्विजयं कृत्वा विप्रेभ्यश्च ददौ वसु । ईदृशश्चाप्ययं सुतो गोचि
राच प्रभावतः तदा प्रभृति लोकेऽस्मिन् लोकाः कुर्वन्ति ते व्रतं । देवैः सर्वैः कृतं तच्च सर्वकामार्थसिद्धये । सर्वाभिर्देवपत्नीभिः
कृतं च व्रतमुत्तमं । गोचिराच व्रतं पुण्यं विधानेन फलप्रदं । कुरुष्व त्वं महाराज भवानपि युधिष्ठिर । साक्षादनन्तरं मातुः कृत्वा मनसि
पार्थिव भाद्रपदे सवत्सां तु भक्त्या त्वाराधयस्व गां । एवं यः कुरुते भक्त्या गोचिराच व्रतं पुनः सिध्यन्ति सर्वकार्याणि सुखञ्चैव प्रवर्द्धते । नजायते त्व
पत्यतु येषां पार्थ भुवस्तले । भक्त्येदं यदि कुर्वन्ति तेषां स्याच्च न संशयः । तपोभिर्दुष्करैः किञ्चित् यज्ञैस्तीर्थगयादिभिः । मुक्तोऽखिलेभ्यः पापेभ्यो
व्रतमेतत् विधाय तु । कुर्वन्ति ये व्रतमिदं जगति प्रसिद्धं पापापहं सकलचिन्तितकामदं च । आरुह्यते वरविमानमनुत्तमं च स्वर्गं प्रयाति
यमदत्तमयं विहाय ॥ इति भविष्योत्तरपुराणे गोचिराच व्रतम् ॥ अथोद्यापनविधिः ॥ युधिष्ठिर उवाच ॥ कथयस्व महापुण्यं गोचिराच व्रत
स्यवै । उद्यापनविधिं कृष्ण येन चीर्णेन तत्फलं । श्रीकृष्ण उवाच ॥ वर्षे चतुर्थे संप्राप्ते गोचिराचव्रतस्य वै । उद्यापनविधिं वक्ष्ये सर्वेषां व्रत
सिद्धये । तृतीये दिवसे स्नायान्मध्याह्ने विधिपूर्वकं । देवान्पितृन्समभ्यर्च्य शुद्धे च स्वगृहे व्रती । रात्रौ च सर्वतोभद्रं गौरीतिलकमेव च । पूजयेत्प
च भिर्वर्णैः शोभनं च यथोदितं । ताम्रस्य कलशं कुर्यात् ताम्रपात्रसमन्वितं । माषकेन च राजेन्द्र लक्ष्मीनारायणं प्रभुं । नवे सूक्ष्मे धौतवस्त्रे देवार्थं

॥ व्र ॥ च प्रकल्पयेत्। वंशपात्राणि कुर्वीत सौभाग्यचिह्नविह्नवैः। विरूढवस्त्रपक्वान्नैर्नारिकेलादिभिः फलैः। विलेपनैश्च पुष्पैश्च धूपैर्दीपैस्तथोत्तमैः।
॥ ११६ ॥ दुग्धामृतैश्च नैवेद्यैः पूजयेद्विधिपूर्वकं। लक्ष्मीनारायणं देवं गां सवत्सां विशेषतः। रात्रौ जागरणं कृत्वा गीतवादित्रकौतुकैः। ततः प्रभात
समये होमं कृत्वा च वैष्णवं। आचार्यं वरयेत्तत्र वेदवेदाङ्गपारगं। तदाज्ञया च कर्त्तव्यं साधु कर्म प्रयत्नतः। गोत्रयं च प्रदातव्यं एकामपि
सवत्सकां। बहुदुग्धा सुशीला च तरुण्याभरणान्विता। दम्पती परिधानश्च वस्त्रैराभरणैः शुभैः शय्यां सोपस्करां दद्यात् पानपात्रं कमण्डलुं।
चामरं घृतपात्रं च तिलपात्रं सदक्षिणं। छत्राणि च सुवर्णं च भोज्या गव्येन वै द्विजाः। एवं धेनुं च विप्राय दत्वा च पृष्ठतो व्रजेत् पदे पदेऽश्वमेधस्य
फलं प्राप्नोत्यसंशयं। अवारितानि दानानि दत्वा तु च विसर्जयेत्। भूयसीं दक्षिणां दद्याद्व्रतसंपूर्णहेतवे। गोपालेभ्यः प्रदातव्यं अङ्गुल्यादिकरं बलं।
सर्वं क्षमापयित्वा तु पारणं च ततश्चरेत्। अनाथैर्व्याधिमुक्तैश्च सीदद्भिश्च कुटुम्बकैः। गवां भक्षितमन्नं यत् दुग्धेन परिपाचितं। तेनान्नेन प्रकर्त्तव्या
देहस्य शुद्धिमिच्छता। एवमुद्यापनं कार्य्यं व्रतस्य फलमिच्छता। शक्त्यभावे द्विजानुज्ञां गृह्णीयुर्व्रतिनः सदा। तया तत्पूर्णतामेति नान्यथापि कदा
चन। एवमुद्यापनं कुर्यात् व्रतस्य फलसिद्धये। नारी वा पुरुषो वापि पुत्रवान् जायते ध्रुवं। इह लोके सुखं भुक्त्वा अन्ते गोलोकमाप्नुयात्॥ श्रीकृष्ण
उवाच॥ एतत्ते कथितं राजन् व्रतस्योद्यापनं शुभं। ये श्रोष्यन्ति सदा तेषां भविष्यन्ति मनोरथाः। ये करिष्यंत्यसंदेहं तेषां लोकाश्च शाश्वताः॥
इति श्रीभविष्योत्तरपुराणे गोत्रिरात्रव्रतोद्यापनं॥ अथाशोकत्रिरात्रव्रतं॥ श्रीकृष्ण उवाच॥ शृणु राजन् पुरा वृत्तमयोध्यायां व्रतं शुभम्। वसि
ष्ठेन मुनीन्द्रेण सीताग्रे यन्निवेदितम्॥ विधाय रावणवधं यदा रामः पुरेऽभ्यगात्। तदा देवी प्रणम्याथ वसिष्ठं वाक्यमब्रवीत्॥ सीतोवाच॥ भगवन्द
ण्डकारण्याद्रावणेन हृता पुरा। न पश्यामि तदा किञ्चिदात्मीयं विकलेन्द्रिया॥ मासान्दशोषिता तत्र राक्षसेन हृता सती। अशोकवृक्ष प्रणता तच्चि ११६
त्ता तत्परायणा॥ उक्तं त्रिजटया तत्र वाक्यं हेत्वर्थसंयुतम्। अशोक प्रणता सीते विशोका त्वं भविष्यसि॥ तथेत्युक्तं मया ब्रह्मन् यथोक्तं त्रिजटा वचः

ततः प्रभृत्यहं अश्वद्शोकव्रतमारभम्॥ तेन व्रतप्रभावेण हनुमान् पवनात्मजः। शतयोजनविस्तीर्णं तीर्त्वा सागरमव्ययम्॥ मया दृष्टो नृपश्रेष्ठ सा भिज्ञानो महाबलः। पुनश्च कुशली यातो दग्ध्वा लङ्कां महाबलात्॥ ततो मे प्रत्ययो जातो व्रतस्यास्य महातरोः। अस्य च व्रतराजस्य प्रभावेण गतो हरिः॥ ततः कैश्चिद्दिनोरात्रैर्भर्त्ता मे राघवो बली। निहत्य रावणं संख्ये मां विशुद्धां गृहीतवान्॥ तदहं भगवन्विप्र पृच्छामि त्वां दृढव्रतम्। अशोकस्य प्रभावं मे वक्तुमर्हस्यशेषतः। व्रतस्य तस्य पुण्यं तु पुराणोक्तं महीतले। अथवा सुरलोकेषु सुरनारीनिषेवितम्॥ वसिष्ठ उवाच॥ एवमेतज्जनकजे यथा वक्ष्यसि सुव्रते। अशोकस्य प्रभावेण यदवाप्तं मयाधुना। शृणु चाच मया ख्यातं नन्दने दिव्यकानने। बृहस्पति मुखाच्छ्रुत्वा यज्जातं परमाद्भुतम्। वृत्राभिभूतेनेन्द्रेण हतो दैत्यान् महासुरः। विश्रंसत्वाद्बुद्धिहानिस्तस्य धर्मं च्व जायत। ब्रह्महत्यामवाप्याथ देवेन्द्रो नष्टचेतनः। त्रैलोक्यराज्यं त्यक्त्वाशु ममज्जारिभयार्दितः। एतस्मिन्नन्तरे देवि नहुषो नृपसत्तमः। त्रैलोक्यराज्यं सकलं जहार बलदर्पितः। ततः शचीप्रव्यथिता हृतराज्यमवेक्ष्य सा। नन्दनान्तरमासाद्य तपस्तेपे सुदुष्करम्। तां श्रुत्वा धर्मनिरतां बृहस्पति रुदारधीः। आगत्य नन्दनं देवीं वाक्यमाह महातपाः॥ बृहस्पतिरुवाच॥ किमर्थं तप्यते देवि तपः परमदुस्तरम्। त्वया किं प्रार्थ्यतेऽनेन तपसा ब्रूहि कारणम्॥ शच्युवाच॥ वृत्राभिभूतदेवेन्द्रं हृतराज्यं हतद्विषम्। क्वापि प्रनष्टं तं विप्र न जानेहं प्रियं पतिम्। एतस्मात्कारणाद्ब्रह्मं स्तपउग्रं समाश्रिता। यथा पुनर्निजं राज्यं देवेन्द्रः प्राप्नुयादिति। क्व तिष्ठति मुने ब्रूहि सुरराट् शत्रुतापनः। प्रसादं कुरु मे देव संयोगन्तेनचाप्नुयाम्॥ वाक्यतिरुवाच॥ शृणु पौलोमि देवेन्द्रो यथा नष्टो भयातुरः। मानसाभ्यसि सम्भूत पद्मआन्तरमाश्रितः। वृत्रहत्या प्रभावेण उद्वेगं गुरुमाश्रितः। अभिभूतमिवापश्यन्तनोद्यनिलयं गतः। कामं तपःप्रसङ्गेन सर्वं प्राप्स्यसि सुव्रते। बहुकालेप्सितं यस्मात्तपसा लभ्यते फलम्। स्त्रीणां पुष्टिकरं ह्येकं व्रतं प्रोक्तं स्वयम्भुवा। सावित्र्याः पृच्छमानायास्तत्वं कर्त्तुमिहार्हसि। अशोकव्रतमित्येवं नाम्ना ख्यातं त्रिविष्टपे। येन चीर्णेन पौलोमि नारीदुःखं न संस्मरेत्। हरःस्वयं भवत्येव वृत्तराजेषु नन्दने। अस्मिंस्तुष्टे हरस्तुष्ट इति विद्मामि निश्चित

॥ अ ॥ म् ॥ मधुवाच ॥ पुन्नाग नाग बकुल चम्पकाद्यान्महीरुहान् । परित्यज्य कथं चान्यान् हरोस्मिन् कृतसन्निधिः ॥ बृहस्पतिरुवाच ॥ हरेण निर्मितः
॥ ११७ ॥ पूर्व्वमशोकोयं कृपालुना । लोकोपकारकरणे ततोयं शिववल्लभः ॥ वसिष्ट उवाच ॥ निशम्य वृक्षप्रवरं प्रणम्य भक्त्यार्चयित्वा विधिवच्च धर्मं । पप्रच्छ
देवी गुरुराज नम्रा देवि शृणु त्वं विधिमस्य सर्व्वम् ॥ वाक्पतिरुवाच ॥ आरभ्य तद्व्रतं कार्यं चिराच्च समपोषणम् । चिराच्च देवि विख्यातमशोकतरुमूल
के । कार्यं नारीभिरमलमनोवाक्कायकर्मभिः । ततः प्रदक्षिणा देया अष्टोत्तरशतं फलैः । नालिकेरैश्च खर्जूरैर्गोस्तनीभिर्दिने दिने । मंत्रेणानेन मन
सा पूजयन्ति सदा शिवम् । अशोकशोकापनुद सर्वकामफलप्रद । व्रतेनानेन चीर्णेन यथोक्त फलदो भव । इति प्रदक्षिण मन्त्रः ॥ ततस्तृतीये दिवसे
समभ्यर्च्य विधानतः । महादेवं वृषयुतं वंशपात्राणि कारयेत् । अनेनैव विधानेन यः कुर्याद्व्रतमुत्तमम् । वैधव्यं नाप्नुयान्नारी पुत्रसौख्ययुता भवेत् ।
वसिष्ट उवाच ॥ बृहस्पतिमुखाच्छ्रुत्वा शचीचक्रे व्रतं शुभम् । शास्त्रोक्त विधिना सीते भक्त्या देवः समागतः । वृत्रहत्या विनिर्मुक्तो यथा भवति वा
सवः । तथा त्वमपि वांछार्थं व्रतमेतत्समाचर । तथा साध्वीषु सुष्टधीः प्राधान्यं जायते क्षितौ । व्रतमेतत् कृतं लोके ख्याता देवि भविष्यति । व्रतमे
तदशोकस्य सर्व्वकामफलप्रदम् ॥ श्रीकृष्ण उवाच ॥ वसिष्टस्य वचःश्रुत्वा सीता चक्रे व्रतोत्तमम् । रामाज्ञां समनुप्राप्य अयोध्यायां चकार सा । सीता
व्रते कृते तस्मिन् दुःखहीना भवत्किल ॥ युधिष्ठिर उवाच ॥ अशोकस्य समाख्याता पूजा देवि विधानतः । का देवता तत्र पूज्या नारीभिर्व्रतसिद्ध
ये ॥ श्रीकृष्ण उवाच ॥ अशोकवृक्षे तिष्ठन्ति सर्वदेवा युधिष्ठिर । पल्लवेषु च शाखासु शिवाद्याः सर्वदेवताः । अशोकसन्निधौ रामः पूजनीयः सलक्ष्म
णः । सीतया सहितो राजन् विष्णोरंशो यतो मतः । पृथक् मन्त्रैः पृथग्वस्त्रैरशोकाय यथाक्रमम् । पूज्यस्य भरतश्रेष्ठ पुराणोक्त विधानतः । अशोक
वृक्षनिचिता शिवाद्या ये सुरोत्तमाः । अशोकपूजनेनाद्य ते तुष्टा मे भवन्त्विह । गौर्या लक्ष्म्या तथेन्द्राण्या अरुन्धत्या च सीतया । त्वं समाराधितः पूर्व्व ११
मशोक फलदो भव ॥ इति पूजामन्त्रः ॥ अशोकवाटिकामध्ये सीतया त्वं प्रसादितः । अशोकसम्पन्नफलोगृहाणार्घं कृतं मया ॥ इत्यर्घं ॥ रावणस्य

वधार्थाय उत्पन्नस्त्वं महीतले। विष्णोरंशोऽसि देवेश गृहाणार्घं नमोऽस्तु ते। दशावतारग्रहणं करोषि त्वं प्रभावतः। गृहाणार्घं मया दत्तं सीता लक्ष्मसंयुत॥ इति रामपूजा मन्त्रः॥ तातभक्त्युन्मुखं वीरं वने येनानुययौ तदा। लक्ष्मीविवर्द्धनं गौरं लक्ष्मणं पूजयाम्यहं॥ लक्ष्मणपूजा मन्त्रः॥ अवनीतलसंभूते सीते सर्वाङ्गसुन्दरि। गृहाणार्घं मया दत्तं पूजां जनकनन्दिनि। लक्ष्मी त्वं सर्वदेवस्य विष्णोरंशेन भूतले। अवतीर्णा मया दत्तं गृहाणार्घं नमोऽस्तु ते॥ इति सीता पूजा मन्त्रः॥ एवं संपूज्य विधिना सर्वशोकविनाशनम्। सर्वपापप्रशमनं सर्वकीर्त्तिविवर्द्धनम्। अपुत्रया पुरा पार्थ पार्वत्या मन्दराचले। अशोकः शोकशमनः पुत्रत्वे परिकल्पितः। जातकर्मादिकं तस्य अशोकस्य महातरोः। कारितं विधिवद्विप्रैस्तेन हर्षोनगोत्तमः। या व्रतं कुरुते नारी पुराशोकविधानतः। अशोकस्य प्रसादेन सर्वान् कामानवाप्नुयात्। अवैधव्ययुता सा तु लक्ष्मीसान्निध्यमाप्नुयात्। सर्वोपहारान् राजेन्द्र ब्राह्मणाय निवेदयेत्। कथामपि समाकर्ण्य कुर्याद्धि द्विजतर्पणं। व्रतस्य फलमाप्नोति सुव्रतोऽपि न संशयः॥ युधिष्ठिर उवाच॥ विशेषं ब्रूहि मे देव अशोकतरु पूजने। येनार्चिते तरौ सर्वैः प्राप्यते सकलं फलम्॥ श्रीकृष्ण उवाच॥ कथयामि तरो राजन् याभिर्व्रतमिदं कृतम्। मनुष्य देव गन्धर्व नारीभिः पुत्र हृदये। अनसूययाचिपलयावा अरुन्धत्या तथैव च। देवक्या सीतया चैव द्रौपद्या सत्यभामया। दमयन्त्याच साविच्या कृतं तद्व्रतमुत्तमम्। अशोकः पूजितः पूर्वं यथावच्छृणु पार्थिव। अशोको राजतस्यैव सौवर्णस्य तथा शिवः। तथैव कारयेत्सीतां सौवर्णौ रामलक्ष्मणौ पूजयेद्विविधैर्मन्त्रैः पूर्वोक्तैर्नृपसत्तम। अशोकं पूजयेद्वृक्षंप्रवढं शुभपल्लवैः। विरूढैः सप्तधान्यैश्च गुणकर्मोदकैः शुभैः। कालोद्भवैः शुभैर्दिव्यैर्नालिकेरैः सदाडिमैः पुष्पादिना तथा धूपैः पूजये त्तरुमुत्तमम्। अशोकः पाण्डवश्रेष्ठ शोकं नाशयति ध्रुवम्। पितृ मातृ पतीनाञ्च श्वशुराणां तथैव च। अशोकस्त्वं शोकहरो भव सर्वत्र नःकुले॥ इति श्रीभविष्योत्तर पुराणे अशोक चिराचव्रतं॥ अथ कार्त्तिकादिमासेषु शनियुक्तायां त्रयोदश्यां शनिप्रदोष व्रतं स्कान्दे॥ लोमश उवाच॥ पुरा वृत्रादिभिर्दैत्यैर्वर्त्तमाने महाहवे॥ हतःशक्रेण नमुचिरपांफेनेन वै बली। दैत्यान्यशाविनान् हत्वा

॥ ॥ हंन्यमानान् सुरैर्भृशं। वृत्रः कोपपराविष्टो देवान्योद्धुमथा ययौ। कालाग्निरूपसदृशं रूपं कृत्वा महाजवं। व्यवर्द्धत महातेजा रोदसी पूरयन्निव।
॥ ११८ ॥ तं दृष्ट्वा भयविह्वला देवाः शक्र पुरोगमाः। कर्त्तव्यं नाध्यपद्यंत तदा गुरुवाचह। तपसा सुमहोग्रेण व्रतेन नियमेन च। अजेयोयंमहातेजा वृत्रः
[illegible]विनाशनः। आराधय ततो देवं पूर्वं शंकरमव्ययं। व्रतेन विधियुक्तेन वृत्रं जेष्यथ माचिरं। देवा ऊचुः॥ गुरो केन विधानेन कीदृशेन
[illegible]॥ आराधनीयो गौरीशोत्यस्माभिर्जयकामुकैः। तद्वदस्व सुराचार्य त्वं हि नः परमा गतिः॥ गुरुरुवाच॥ कार्त्तिकादिषु मासेषु मन्दवारे
त्रयोदशी। विशेषा शुक्लपक्षेतु सर्वकामकरी शुभा। तस्यां प्रदोषसमये लिङ्गरूपी सदाशिवः। पूजनीयो हि देवेन्द्र सर्वकामसमृद्धये। स्नात्वा
मध्याह्नसमये तिलामलकसंयुतं। शिवस्य चार्चनं कुर्यात् गन्धपुष्पफलादिभिः। पश्चात्प्रदोषसमये स्थावरं लिङ्गमर्चयेत्। स्वयंभुवं स्थापितं वापि
पौरुषेयमपौरुषं। जने वा विजने वापि अरण्ये वा तपोवने। ग्रामाद्बहिःस्थितं लिङ्गं ग्राम्याच्छतगुणं स्मृतं। वाह्याच्छतगुणं पुण्यमारण्यस्य
च पूजनं। वन्याच्छतगुणं प्रोक्तं लिङ्गं वैपर्वतस्थितं। पर्वताच्चायुतं पुण्यं तपोवनसमाश्रितं। काश्यादि संस्थितं लिङ्गं पूजितं स्यादनंतकं एवं
विशेषं लिङ्गानान्तीर्थानां निपुणैर्भृशं। ज्ञात्वा च शिवपूजायां विधिं शंभुं प्रपूजयेत्। कूपवापीतडगादि देवखातनदीषुच। क्रमाच्छतगुणं प्रोक्तं
गङ्गायां स्यादनंतकं। पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणि। ततः प्रदोषसमये स्नात्वा मौनं समाचरेत्। प्रदीपानां सहस्रेण दीपनीयः
सदाशिवः। शतेनाप्यथवा देवं द्वात्रिंशद्दीपमालया। घृतेन दीपयेद्दीपान् शिवस्य परितुष्टये। तथा फलैश्च धूपैश्च नैवेद्यैर्विविधैरपि। उपचारैः
षोडशभिर्लिङ्गरूपी सदाशिवः। पूज्यः प्रदोषसमये नृभिः सर्वार्थसिद्धये। नाम्नांशतेन रुद्रोसौ स्तोतव्यश्च स्तुतिप्रियः। नमोरुद्राय भीमाय
नीलकण्ठाय वेधसे। कपर्द्दिने सुरेशाय व्योमकेशाय वै नमः। वृषध्वजाय सोमाय सोमनाथाय वैनमः। दिगम्बराय भर्गाय उमाकान्ताय ते नमः ११।
तपोमयाय व्याप्ताय शिपिविष्टाय वै नमः। व्यालप्रियाय व्यालाय व्यालानां पतये नमः। महीधराय व्याघ्राय पशूनां पतये नमः। त्रिपुरान्तकाय

सिंहाय शार्दूलाय ऋषभायच । मिताया मित नाथाय सिद्धाय परमेष्ठिने । कामान्तकाय कामाय वह्नीनां पतये नमः । कल्याणाय विशिष्टाय शिष्टाय परमात्मने । वेदाय वेदवीजाय वेदगुह्याय वैनमः । दीर्घाय दीर्घरूपाय दीर्घार्थाय महायच । नमोजगत्प्रतिष्टाय व्योमरूपाय वैनमः । गर्वहत्तमहादैत्यअन्धकासुर भेदिने । नीललोहितशुक्लाय चण्डमुण्डप्रियायच । भक्तिप्रियाय देवाय ज्ञानज्ञायाव्ययायच । महेशाय नमस्तुभ्यं महादेव हरायच । त्रिनेत्राय त्रिवेदाय वेदांगाय नमोनमः। अर्थाय अर्थरूपाय परमार्थाय वैनमः । विश्वाय विश्वरूपाय विश्वनाथाय वैनमः । शंकराय च कालाय महाकालस्वरूपिणे । अरूपाय विरूपाय सूक्ष्मसूक्ष्माय वैनमः। श्मशानवासिने तुभ्यं नमस्ते कृत्तिवाससे । शशांकशेखरायैव रुद्रभूमिश्रयायच । दुर्गाय दुर्गपाराय दुर्गावयवसाक्षिणे । लिङ्गरूपाय लिङ्गाय लिङ्गनां पतये नमः । नमः प्रभाव रूपाय प्रभावार्थाय वैनमः । नमोनमः कारणकारणाय ते मृत्युं जयायात्मभवस्वरूपिणे त्रियंवकायासितकण्ठभर्गवे गौरीपते मङ्गलहेतवे नमः ॥ वृहस्पति रुवाच ॥ नाम्नां शतं महेशस्य उच्चार्यं व्रतिना सदा । प्रदक्षिण नमस्कारै रेत्तत्संख्यैः प्रयत्नतः । कार्यं प्रदोषसमये तुष्ट्यर्थंशङ्करस्य च एवं व्रतं समादिष्टं तव शक्र महामते । शीघ्रं कुरु महाभाग पश्चाद्युद्धं कुरु प्रभो । शम्भोः प्रसादात् सर्वंते भविष्यति जयादिकं । शक्रउवाच ॥ कृतः कदा महेशानं समाराधयदादरात् । कथञ्च स वरः प्राप्तः पुरा कस्माभव द्विज ॥ गुरुरुवाच ॥ वृत्रोह्ययं महातेजास्तपस्वी तपसा पुरा । शिवं प्रसादयामास पर्वते गन्धमादने । नाम्ना चित्ररथो राजा वनं चित्ररथस्य तत् । एतज्जानीहि भो इन्द्र तव पुर्याः समीपतः । यस्मिन्वने महाभागा वसन्ति महदुर्मयः । तस्माच्चैत्ररथं नाम वनं परममङ्गलं । यस्य राज्ञः शिवेनैव यानञ्च परमाद्भुतं । कामगं किंकिणीयुक्तं सिद्धचारणसेवितं । गन्धर्वैरप्सरोयक्षैः किन्नरै रुपशोभितैः । तत स्तेनैव यानेन पृथिवीं पर्य्यटन् पुरा । तथा गिरीन् समुद्रांश्च द्वीपांश्च विविधांस्तथा । एकदा पर्यटन् राजा नाम्ना चित्ररथो महान् । कैलासमागतस्तत्र ददर्श परमाद्भुतं । तथा सभां महेशस्य गणैश्चैव विराजितां । अर्द्धाङ्गलग्नया देव्या शोभितंच महेश्वरं । निरीक्ष्य देव्या सहितं सदाशिवं कर्पूरगौरं वरमंवुजेक्षणं । कपर्द्दिनं चंद्रकलाविभू

[illegible]
षितं गङ्गाधरं देववरं तदानीं प्रहस्य राजा च तदा गिरीशं न्यायान्वितं वाक्यमिदं बभाषे। वयञ्च शम्भो विषयान्विताश्च मर्त्यादयः स्त्रीजिताश्चापिचा
त्ये। नलोकमध्ये वयमेवचाद्या स्त्रीसेवनं लज्जाया नैवकुर्मः। एवं वाक्यं निशम्याह महेशः प्रहसन्निव। उवाच न्यायसंयुक्तं सर्वेषामपि शृण्वतां।
[illegible]लोकापवादोच सर्वेषामपिनान्यथा। भक्षितं कालकूटं मे सर्वेषामपि दुर्ज्जयं। लोकातीतंच मे वृत्तं तथाप्युपहसत्यसौ। तत श्चित्ररथं देवी गिरि
[illegible]यमब्रवीत्। रेदुरात्मन् कथं त्वद्य शङ्करश्चोपहासितः। मया सहैव मन्दात्मन् ईक्ष्यसे कर्मणः फलं। साधूनां समचितानामुपहासं करोति यः।
देवोवाप्यथवामर्त्यः सविज्ञेयो धमाधमः। एते मुनींद्राश्च महानुभावास्तथाह्यमीऋषयो वेदगर्भाः। तथैव सर्वे सनकादयोह्यमी अज्ञाननाशाः।
शिवमर्चयन्ते। रेमूढ सर्वेषु जनेष्वभिज्ञस्त्वमेकएवासि परो नकश्चन। तस्मादतिस्तब्धमहंकृतं त्वां समीक्ष्य कुर्यात्परिशोधनन्ते। अस्मात्पत विमा
नात्त्वं दैत्योभूत्वा सुदुर्मते। एवं शप्तस्तयादेव्या भवान्या राजसत्तमः। राजा चित्ररथः सद्यःपपात स तदा दिवः। आसुरीं योनिमासाद्य वृत्रो नाम्नाभव
त्तदा। तपसा परमेणैव त्वष्ट्रा संयाजितः क्रमात्। तपसा ब्रह्मचर्येण शम्भोराराधनेनच। व्रतेनानेन च वली जेतुं शक्यो न केनचित्। आसुरेण हि भावेन
व्यंगं चक्रे व्रतं यतः। तेन छिद्रेण चैवासौ पश्चाज्जेयो भविष्यति। तस्मात्वमपि देवेन्द्र कृत्वा चेदं व्रतं शुभं। हनिष्यसि महाबाहो वृत्रं नास्त्यत्र संशयः।
गुरोस्तद्वचनं श्रुत्वा उवाचाथ शतक्रतुः। सोद्यापनं विधिं ब्रूहि प्रदोषस्यच मेधुना। गुरुरुवाच॥ कार्त्तिके मासि संप्राप्ते मन्दवारे त्रयोदशी। संपूर्णा
तु भवेद्यासा समग्रव्रतसिद्धये। वृषभो रजतः कार्य्यः पृष्ठे तस्य सुपीठकं। तस्योपरि न्यसेद्देवं उमाकांतं त्रिलोचनं। पञ्चवक्त्रं दशभुजमङ्कांगे गिरिजा
सती। सौवर्णां प्रतिमां कृत्वा ताम्रकुम्भे जलावृते। पञ्चरत्नफलोपेतं पञ्चपल्लवचर्चितं। चन्दनेन सुगन्धेन मिश्रितं शोभितं तथा। रूप्यपात्रं ततः
कृत्वा कुम्भस्योपरि विन्यसेत्। अशक्तो मृन्मये कुम्भे वंशपात्रमथापिवा पर्णशरावं चास्थाप्य सौवर्णां प्रतिमां तथा। शक्त्या कृतां प्रतिष्ठाप्य वस्त्रमाल्यविभू ११
षणैः। पूजयित्वा विधानेन रात्रौ जागरणं चरेत्। पुष्पमण्डपिकामादौ कृत्वा श्रद्धासमन्वितः। आवाहयेत्प्रथमं तत्र मन्त्रेणानेन सुव्रत। अथपूजा एह्येहि

त्वमुमाकांत स्थाने चात्र स्थिरो भव। यावद्व्रतं समाप्येत तत् कृपया दीनवत्सल। आवाहनं आसनेस्मिन्नुमाकान्त सुखस्पर्शे सुनिर्मले उपविश्य त्वइदानीं मम शांति प्रदोभव॥ आसनं॥ पाद्यंचते मया दत्तं पुष्प गन्ध समन्वितं। गृहाण देवदेवेश प्रसन्नो वरदो भव। पाद्यं॥ ताम्रपात्रस्थितं तोयं पुष्प गन्धादि संयुतं। अर्घं गृहाण देवेश मया दत्तंहि भक्तितः॥ अर्घं॥ शीतलं निर्मलं तोयं कर्पूरेण सुवासितं। आचम्यतां सुरश्रेष्ठ मया दत्तंहि भक्तितः। आचमनं। पञ्चामृतेन स्नपनं तत्तन्मन्त्रैस्तु कारयेत्। गोक्षीरधाम देवेश गोक्षीरेण मया कृतं। स्नपनं देवदेवेश गृहाण परमेश्वर। दध्ना चैव मया देव स्नपनं क्रियते तव। गृहाण भक्त्या दत्तं मे सुप्रसन्नो भवाव्यय। दधि। सर्पिषा देवदेवेश स्नपनं क्रियते मया। उमाकांत गृहाणेदं श्रद्धया सुरसत्तम॥ घृतं। इदं मधु मया दत्तं तव तुष्ट्यर्थमेवच। गृहाण शंभो मे भक्त्या मम शांतिप्रदो भव। मधु॥ सितयादेवदेवेश स्नापनं क्रियते मया। गृहाण श्रद्धया दत्तं सुप्रसन्नो भव प्रभो। कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती। गङ्गाच यमुना चैव ताभ्यः स्नानार्थमाहृतं। गृहाण त्वमुमाकान्त स्नानाय श्रद्धया जलं। स्नानं। एतद्वासो मयादत्तं सोत्तरीयं सुशोभनं। गृहाणत्वं सुरश्रेष्ठ मम चायुः प्रदोभव॥ वस्त्रं॥ यज्ञोपवीतं सौवर्णं मया दत्तंच शङ्कर। गृहाण परया तुष्ट्या तुष्टिं मे कुरु सर्वतः। उपवीतं॥ सुगन्धं चन्दनं देव मया दत्तं तव प्रभो। भक्त्या परमया शंभो सुगन्धं कुरु मे भव। चन्दनं॥ मालती चम्पकादीनि कुमुदान्युत्पलानिच। विल्वपत्राणि पूजार्थं स्वीकुरु त्वमुमापते॥ पुष्पं॥ धूपं विशिष्टं परमं सर्व्वौषधिविजृंभितं। गृहाण परमेशान मम शांत्यर्थमेवच। धूपं। दीपञ्च परमं शंभो घृत प्रज्वलितं मया। दत्तं गृहाण देवेश मम ज्ञान प्रदोभव। दीपावली मया दत्ता गृहाण परमेश्वर। आरार्त्तिका प्रदानेन मम तेजः प्रदो भव। नीराजनं। शाल्योदनं घृतापूपपायसादिसमन्वितं। नैवेद्यं विविधं दत्तं भक्त्यामे प्रतिगृह्यतां। नैवेद्यं। कर्पूरैलालवङ्गादि पूगीफलसमन्वितं। तांवूलं कल्पितं भक्त्या गृहाण गिरिजाप्रिय। तांवूलं॥ इदं फलं मया दत्तमिति फलं हिरण्यगर्भगर्भस्थमिति दक्षिणा। निपत्य दण्डवद्भूमौ प्रणम्यच पुनः पुनः। क्षमापयित्वा देवेशं रात्रौ जागरणं चरेत्। गीत

 वादित्र नृत्याद्यैर्गृहे वा देवतालये। वितान मण्डपं कृत्वा नानावर्णैः समन्वितं। प्रभातायांतु शर्वर्यामुदिते रविमण्डले। स्नात्वा पुनः समभ्यर्च्य
 जुहुयात्पायसेनच। आचार्य्यञ्च सपत्नीकं वस्त्रालङ्कार चन्दनैः। तोषयित्वा शुचिं दांतं गां च दद्यात्पयस्विनीं। ब्राह्मणान् भोजयेत्पश्चाद् दक्षिणाभिः प्रतो
षयेत्। दीनानाथांश्च संतर्प्य मङ्गलं वाचयेत्ततः। लब्ध्वानुज्ञां ब्राह्मणेभ्यो बन्धुभिः सहितः शुचिः हृदि स्मरन् शिवं भक्त्या भुञ्जीत नियतो व्रती।
अनेनैव विधानेन कुर्य्यादुद्यापनं बुधः। एवं यः कुरुते भक्त्या प्रदोषव्रतमुत्तमं। शनिवारेण संयुक्तं सोद्यापनविधिं नरः। आयुरारोग्य मैश्वर्य्य पुत्र
पौत्रमनन्तकं। प्रभूं स जयते नित्यं प्रसादाच्छङ्करस्यच। तस्मात्त्वमपि देवेन्द्र पूजयस्व सदाशिवं। शनिप्रदोषविधिना ध्रुवं शत्रुं विजेष्यसि। एवं
निशम्य गुरुणा कथितं तदानीं इन्द्रोप्यनेन विधिना गिरिशं प्रपूज्य लोकं ग्रसन्तमिव दैत्यपतिं प्रवृद्धं शक्रोजघ्वानचमहासुमीशतुष्ट्या। इति स्कांदोक्त
केदारखण्डे शनिप्रदोष व्रतं। स्कांदे व्यासउवाच। त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनं। द्रष्टव्यं प्रथमे यामे मुच्यते सर्व पातकैः॥ मदनरत्न
स्कांदे॥ देव्युवाच॥ देव केन विधानेन प्रदोषव्रतमुत्तमं। विधातव्यं नरैः स्त्रीभिः सन्तानफलसिद्धये। ईश्वर उवाच॥ यदा त्रयोदशी शुक्ला मन्द
वारेण संयुता। आरब्धव्यं व्रतं तत्र सन्तानफल सिद्धये। ऋणनिर्मोचनार्थंतु भौमवारेण संयुता। सौभाग्य स्त्रीसमृद्ध्यर्थं शुक्रवारेण संयुता। एक
वत्सर पर्य्यंतं प्रतिपक्षे त्रयोदशी। प्रदोषे शिवमभ्यर्च्य नक्तं भक्ष्यामि शङ्कर। तत्र चोक्तेन मंत्रेण व्रतं संकल्पयेद्बुध ततस्तु लोहिते भानौ स्नात्वा स
नियमो व्रती पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत् पूजामन्त्रःभवाय नमः महादेवाय रुद्राय नीलकण्ठाय शशिमौलिने उग्राय भीमाय
ईशानाय भवाय षोडशोपचारैः पूजामष्टप्रदक्षिणः नमस्कारांस्तथाष्टौ कुर्य्यात्। यथावकञ्च नैवेद्यं मुखवासं तथैव च। दत्त्वा सन्तुष्ट देवाग्रे प्रार्थयेच्च
ततो व्रती। यथा भवान् समस्तानां पशूनां पाशमोचकः। तथा व्रतेन सन्तुष्टः पुत्रं देहि सुलक्षणं॥ ऋणयोगादि दारिद्र्यं पापक्षुदपमृत्यवः। भयशोक १८
मनस्तापा नश्यंतु मम सर्वदा। पृथिव्यां यानि तीर्थानि सागरादीनि तानि च। अन्नमाश्रित्य तिष्ठन्ति प्रदोषे गोवृषस्य तु। दृष्ट्वा तु वृषणौ तस्य शृङ्ग

मध्यं विलोक्य च। पुच्छञ्च ककुदंचैव सर्वपापैः प्रमुच्यते ॥ निवेद्य कर्म जातंतु देयाद्वित्तानुसारतः। दक्षिणां ब्राह्मणेभ्यश्च ततो मौनं विसर्जयेत्। एवं संवत्सरं कुर्यात् त्रयोदश्यामिदं व्रतं ॥ इदमपि स्कान्दोक्तमेव अथानंगत्रयोदशी व्रतं ॥ श्रीकृष्ण उवाच ॥ शृणु पार्थ व्रतं श्रेष्ठं नाम्नानङ्गत्रयोदशी। या शिवायै पुरा प्रोक्ता प्रसन्नेनेन्दुमौलिना। गौर्युवाच ॥ पुरा सौभाग्यकरणी ख्यातानङ्गत्रयोदशी। तस्यां व्रतं महादेव ममापि कथय प्रभो ॥ कस्मिन्मासे प्रकर्त्तव्यं सम्पूर्णं च कथं भवेत् ॥ पूज्यानि कानि नामानि विधिना केन वै वद। दुर्भगाणांच नारीणां सौभाग्यकरणं परं ॥ वन्ध्यानां पुत्रजननं धनधान्यविवर्द्धनं। एतद्व्रतं महादेव प्रसादाद्वक्तुमर्हसि। ईश्वर उवाच ॥ कथयामि न सन्देहो महापुण्यं महाफलं। चीर्णेन येन देवेशि सर्वं सम्पद्यते सुखं। नारीणां च नृणां चैव विधातव्यं प्रयत्नतः। हेमन्ते शिशिरे ऋतौ प्राप्ते मासि मार्गशिरे शुभे। शुक्लपक्षे त्रयोदश्यां उपवासंतु कारयेत्। मल्लिका दन्तकाष्ठञ्च पूजाचर्मनवेन तु। नारङ्गेणार्घदानञ्च नैवेद्ये पिण्डिकास्तथा। गन्धैः पुष्पैस्तथा धूपैरर्चयेच्च यथाविधि। अक्षतैश्च फलैश्चैव एकाग्रहृदयस्थितः। सम्यक् जितेन्द्रियो भूत्वा अनङ्गं हृदि कल्पयेत् ॥ पश्चात्प्रदक्षिणी कृत्वा अर्घंचैव निवेदयेत्। नमस्कुर्यादनङ्गञ्च मन्त्रेणानेन मानिनि। नमोऽस्त्वनङ्गदेवाय सर्वसङ्गनिवासिने। हृद्भूमिस्थाय नित्याय सूक्ष्माय परमेष्ठिने। स्वर्गे चैव तु पाताले मर्त्यलोके तथैव च। सर्वव्यापी त्वनङ्ग त्वं गृहाणार्घं नमोऽस्तु ते। इत्यर्घं ॥ पूजयेत् स्वस्थचित्ते नमधुञ्च प्राशयेन्निशि रम्भा तुल्या भवेन्नारी सौभाग्यमतुलं भवेत्। नश्यन्ति सर्वपापानि अन्यजन्मकृतानि च। लावण्यमतुलंचैव रूपैश्वर्यं समन्वितं। अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः। पौषस्यैव तु मासस्य औदुम्बरदन्तधावनं। जातीपुष्पैः पूजनं स्यात् दाडिमेनार्घ एवच। अशोकवर्त्तिकाः स्निग्धा नैवेद्ये च प्रकल्पयेत्। उपोष्य पूजयेद्देवं भक्त्यानाद्येश्वरं प्रिये। ओं नमोऽनाद्येश्वराय ईश्वराय नमोनमः। नमस्ते भुवनेशाय गृहाणार्घं नमोऽस्तु ते ॥ इति अर्घं। व्रतस्थः स्वस्थचित्तेन चन्दनं प्राशयेन्निशि। सर्वपापविशुद्धात्मा सौभाग्यमतुलं लभेत्। माघस्यैव तु मासस्य विष्णुक्रान्ता दन्तधावनम्। कुन्दपुष्पैः समभ्यर्च्य सर्वबेद्दीजपूरकैः। नैवेद्यं शर्करा दद्यात् देवो योगेश्वरस्तथा। ओं नमो योगेश्वराय योगतन्तुनिवासिने। गृहाणार्घं मया दत्तं

॥ख॥ योगेश्वर नमोस्तु ते । इत्यर्घं ॥ मौक्तिकं प्राशयेद्रात्रौ वाजपेयफलं लभेत् । सर्वाभिप्रायसिद्ध्यर्थं वीरेशं नाम पूजयेत् । ओं वीरेश्वर वीरभद्र उमा
१२१ कान्त सुरेश्वर । हिममध्यनिवासि त्वं गृहाणार्घं महेश्वर ॥ सीता तुल्या भवेन्नारी कङ्कोलं प्राशयेन्निशि । चैत्रस्यैव तु मासस्य नवमल्लीदन्तधावनं ।
दमनेनार्चयेद्देवं तथार्घञ्च प्रकल्पयेत् । नैवेद्यं खर्ज्जुकान् दद्यात् विश्वरूपं तु पूजयेत् । नमस्ते विश्वरूपाय सुरूपाय महात्मने । गृहाणार्घं मया दत्तं विश्व
रूप नमोस्तु ते । उमातुल्या भवेन्नारी कर्पूरं प्राशयेन्निशि । वैशाखस्य तु मासस्यापामार्गं दन्तधावनं । पूजा च मल्लिका पुष्पै उत्तमार्घं तु दापयेत् ।
नैवेद्यं वटकं दद्यात् महारूपन्तु पूजयेत् । नमस्ते महारूपाय सर्व्वविज्ञानरूपिणे । गृहाणार्घं मया दत्तं महारूप नमोस्तु ते । ततः शुद्धमना भूत्वा
जातीफलं प्राशयेन्निशि । अश्वमेधस्य यज्ञस्य फलमष्टगुणं लभेत् । ज्येष्ठस्यैव तु मासस्य सहदेवीदन्तधावनं । पूजा वकुलपुष्पैस्तु श्रीफलेनार्घकल्पना ।
नैवेद्यं मण्डकान् दद्यात् लवङ्गं प्राशयेन्निशि । प्रद्युम्नं पूजयेद्देवं सर्व्वपाप प्रणाशनं । नमस्ते पशुपतये प्रद्युम्न भुवनेश्वर । गृहाणार्घं मया दत्तं प्रद्युम्न
परमेश्वर । सुवर्णशतदानस्य फलमष्टगुणं लभेत् । आषाढस्य तु मासस्य नारङ्गी दन्तधावनं । कदम्बैः पूजयेद्देवं नालिकेरार्घ कल्पना । नैवेद्ये दधि नक्तं
उमानाथं प्रपूजयेत् । प्राशयेत्तिलबीजानि शिवस्वस्थेन चेतसा । उमापते महावाहो कामदहनाय ते नमः । गृहाणार्घं चन्द्रमौले उमाकान्त नमोस्तु ते ।
वाजपेयस्य यज्ञस्य फलमाप्नोति मानवः । श्रावणस्य तु मासस्य जातीभिर्दन्तधावनं । पूजयेत्पद्मपुष्पैश्च जम्बूकैरर्घ कल्पना । नैवेद्ये क्षीरकं दद्यात् शूल
पाणिं तु पूजयेत् । प्राशयेद्गन्धतोयन्तु रात्रौ चैव समाहितः । ओं नमः शक्तिधराय भक्तिभावन शूलिने । गृहाणार्घं मया दत्तं शूलपाणे नमोस्तु ते । सौ
त्रामण्याख्य यज्ञस्य फलमष्टगुणं लभेत् । भाद्रस्य वरमासस्य अङ्कोलं दन्तधावन । अर्चयेच्चम्पकैः पुष्पैः नैवेद्यं घृतपूरिकां । अर्घं पूगफलं दद्यात्सद्यो
जातं तु पूजयेत् । ततः स्वस्थमना भूत्वा अगुरु प्राशयेन्निशि । त्रिदशेश्वर देवाय सद्योजाताय ते नमः । गृहाणार्घं मया दत्तं सद्योजात नमोस्तु ते । १२१
दशानामश्वमेधानां फलं प्राप्नोति मानवः । आश्विनस्य तु मासस्य कङ्कती दन्तधावनं । अर्चयेत्करवीरैस्तु अर्घं कर्कटिका फलं । पूज्यस्त्रिदशाधिपो देवो

नैवेद्यं गुडमण्डिका। प्राशयेत्कनकं तोयं निशि देवं प्रपूज्य च। ओं त्रिदशाधिप देवेश उमाकान्त महेश्वर। त्रिधारूप मयस्त्वं हि अर्घोयं प्रतिगृह्यतां। चातुर्मास्यस्य यज्ञस्य फलं दशगुणं लभेत्। कार्त्तिकस्य तु मासस्य कादम्बं दन्तधावनं। रक्तोत्पलैः पूजनं च कूष्मांडार्घं प्रदापयेत्। नैवेद्यं पूरिकां दद्यात्पूजयेज्जगदीश्वरम्। प्राशयेन्मदनफलं निशि चैवं समाहितः। नमस्ते जगदीशाय तापिने शूलपाणये। गृहाणार्घं महेशान जगदीश नमोस्तु ते। अर्घमन्त्रः। पूर्णाते जागरं कुर्यात् गीतवाद्य महोत्सवैः। अर्द्धनारीश्वरं कुर्यात्सौवर्णं रौप्यमेव वा। वस्त्रयुग्मेन संवेष्ट्य शय्यायां विनिवेशयेत्। एवं कृत्वा तु देवेशं तत्र शोभां तु कारयेत्। श्वेतपुष्पैस्तु संपूज्य श्वेतचन्दन चर्चितं। धूपं सुगन्धि संचिन्त्य सवत्सां गां प्रदापयेत्। श्वेतवस्त्रपरीधानां घण्टाभरणभूषितां। सुसूक्ष्मं वस्त्रयुगलमाचार्याय निवेदयेत्। तथैव दक्षिणां दद्यात् आसनञ्चैव पादुकां। छत्रञ्च मुद्रिकांचैव कङ्कणञ्चैव भूषणं। शय्या दिव्या प्रदेया तु तूल्याच्छादनसंयुता। गृहोपस्करसंयुक्ता भक्तिसंयुक्तचेतसा। तत्रोपवेश्य चाचार्यमुपवासव्रती ततः। पादौ मूर्ध्नि समारोप्य प्रणिपत्य वचो वदेत्। भगवन् त्वत्प्रसादेन व्रतं सम्पूर्यतां मम। एवमस्त्विति स ब्रूयात् तव तुष्टोस्तु शङ्करः॥ ईश्वर उवाच॥ एवं कृत्वा प्रयत्नेन दम्पती चैव पूजयेत्। तयोश्च भोजनं दद्यात् दम्पत्योः परितोषकं। अनेन विधिना तुष्यास्यहं युक्तस्त्वयानघे। तेभ्यो दत्तञ्च यत्किञ्चिदक्षयं नात्र संशयः। आचार्यमग्रतः कृत्वा तस्मादेशन्तु कारयेत्। नास्त्याचार्यसमं तीर्थं नास्त्याचार्यसमन्तपः। तस्मादहं कार्यमास्थाय धर्मसिद्धिं नयेद्ध्रुवं। तेनैवाचार्यदानेन सर्वं भवति वाञ्छितम्। एतत् व्रतोत्तमं श्रेष्ठं गुह्याद्गुह्यतरं परं। राज्यमर्थान् सुतान् सिद्धिमवैधव्यञ्च यच्छति॥ रूपं धनं धान्यमायुरारोग्यं च प्रदापयेत्। इष्टलाभञ्च सौभाग्यं वर्द्धयेच्च वरानने॥ त्रयोदशीव्रतान्नास्ति सौभाग्यकरणं परम्॥ इति भविष्ये अनङ्गत्रयोदशी व्रतं। इति श्रीभट्टनीलकण्ठात्मज भट्टशङ्कर कृतौ व्रतार्के त्रयोदशी व्रतानि। अथ चतुर्दशीव्रतानि॥ तत्र वैशाख शुक्लचतुर्दश्यां नृसिंह चतुर्दशी व्रतं। तच्च प्रदोषव्यापिन्यां कार्यं। तदुक्तं हेमाद्रौ नृसिंहपुराणे वैशाखे शुक्लपक्षेतु चतुर्दश्यां निशामुखे। तज्जन्म सम्भवं पुण्यं व्रतं

॥ व्र ॥ पाप प्रणाशनं। वर्षे वर्षेतु कर्त्तव्यं मम सन्तुष्टिकारणमिति। स्कांदेपि वैशाखस्य चतुर्दश्यां सोमवारेनिलर्च्चके। अवतारो नृसिंहस्य प्रदोष समये द्विजा
१२२ इति। अनिलर्क्षस्वाती दिनद्वये तद्व्याप्ताव व्याप्तावेकदेश समव्याप्तौ परा। अनङ्गेन समायुक्ता न सोपोष्या चतुर्दशी। धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जये
दिति। अनङ्गंत्रयोदशी तत्रैव निषेधात्। इदंच व्रतं संयोग पृथक्त्वन्यायेन नित्यं काम्यंच। स्कांदे विज्ञाय महिनं यस्तु लङ्घयेत्पापकृन्नरः। स याति नरकं
घोरं यावच्चन्द्रदिवाकरौ। मम सन्तुष्टिकरणमिति फलश्रवणाच्च। अथकथा सूत उवाच॥ हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुं। सुखासीनं
तदुत्सङ्गे शांतकोपं रमापतिं। प्रह्लादो ज्ञानिनां श्रेष्ठो पालयन् राज्य मुत्तमं। एकाकी च तदुत्सङ्गे प्रियं वचनमब्रवीत्। प्रह्लाद उवाच॥ नमस्ते
भगवन् विष्णो नृसिंहरूपिणे नमः त्वद्भक्तोहं सुरेशैकं त्वां पृच्छामि तु तत्वतः। स्वामिन् त्वयि ममाभिन्ना भक्तिर्जाता त्वनेकधा। कथञ्च ते प्रियो
यातः कारणं वद मे प्रभो। श्रीनृसिंह उवाच॥ कथयामि महाप्राज्ञ शृणुष्वेकाग्र मानसः। भक्तेर्यत्कारणं वत्स प्रियत्वस्य च कारणं॥ पुराकालेद्य
भूर्विप्रः किन्तु त्वन्नाप्यधीतवान्। नाहतो वासुदेवो हि वेश्या संसक्तमानसः। तस्मिन् जातु नचैव त्वं चकार सुकृतं कियत्। कृत्वातु मद्व्रतञ्चैकं वेश्या
सङ्गतिलालसः। तद्व्रतस्य प्रभावेण भक्तिर्जाता तवानघ। प्रह्लाद उवाच॥ श्रीनृसिंहोच्यतां तावत् कस्य पुत्रस्य किं व्रतं। वेश्यायां वर्त्तमानेन
कथं तच्च कृतं मया। येन तद्विष्णुमाहात्म्यं वक्तुमर्हसि सांप्रतं। श्रीनृसिंह उवाच॥ पुरावंती पुरेह्यासीत् ब्राह्मणो वेदपारगः। तस्य नाम सुशर्मे
ति वद्ध लोकेषु विश्रुतः। नित्यहोमं क्रियांचैव विदधाति द्विजोत्तमः। ब्राह्मक्रियासु नियतं सर्वासु किल तत्परः। अग्निष्टोमादिभिर्यज्ञै रिष्टाः
सर्वे सुरोत्तमाः। तस्य भार्या सुशीलाभूत् विख्याता भुवनत्रये। पतिव्रता सदाचारा पतिभक्तिपरायणा। जज्ञिरेस्यां सुताः पञ्च तस्माद्द्विजवरा
त्तथा॥ सदाचाराः सुविद्वांसः पितृभक्तिपरायणाः। तेषां मध्ये कनिष्ठस्त्वं वेश्यासङ्गति तत्परः। तथापि विद्यमानेन सुरापानं सुपातकं। सुवर्णंचा १२:
प्यपहृतं चौरैः सार्द्धंत्वया वद्ध। विलासिन्याः प्रसङ्गेन समाचीर्णमघं वद्ध विलासिनी वेश्या एकदा तद्गृहेह्यासीत्तस्याः कलहस्त्वयासह। तेन कलह

प्रभावेण व्रतमेतत्त्वया कृतं। अज्ञानात् मद्व्रतञ्चक्रे व्रतानामुत्तमं व्रतं॥ तस्या विहारयोगेन रात्रौ जागरणं कृतं। वेश्यायाः वल्लभं कश्चित् प्रजातं न त्वया.समं। रात्रौ जागरणं चीर्णं त्यक्तं भोग्यमनेकधा। व्रतेनानेन चीर्णेन मोदन्ते दिवि देवताः। सृष्ट्यर्थञ्च पुरा ब्रह्मा चक्रे ह्येतदनुत्तमं। मद्व्रतस्य प्रभावेण निर्मितं स चराचरं। ईश्वरेण पुरा चीर्णं वधार्थं त्रिपुरस्य च। महाप्राज्ञेन विहितं व्रतमेतन्महाफलम्। एतद्व्रत प्रभावेण सर्वे सिद्धि मुपागताः। वेश्यापि मत्प्रिया जाता त्रैलोक्ये सुखकारिणी। ईदृशं मद्व्रतं वत्स त्रैलोक्येषु सुविश्रुतं। कलहेन विलासिन्या व्रतमेतदुपस्थितं। प्रह्लाद तेन ते भक्तिर्मयि जाता ह्यनुत्तमा। धूर्त्तया च विलासिन्या ज्ञात्वा व्रतमिदं महत्। कलहस्य कृतो येन मद्व्रतं यत्कृतं भवेत्। सा वेश्या तु वरा जाता भुक्ता भोगाननेकशः। मुक्ता कर्मविलीना तु त्वं प्रह्लाद विशस्व मां॥ कार्य्यार्थञ्च भवानास्ते मच्छरीर पृथक् तया। विधाय सर्व कार्य्याणि शीघ्रञ्चैव गमिष्यसि ये इदं व्रतमावश्यं प्रकरिष्यन्ति मानवाः। न तेषां पुनरावृत्तिर्मत्तः कल्पशतैरपि। अपुत्रो लभते पुत्रान् धनकामो धनं तथा। ज्ञानीच मम भक्तस्य दिव्यं सौख्यं भवेत्ततः। स्त्रियोवा पुरुषाश्चापि कुर्वन्ति व्रतमुत्तमं। तेभ्यो ददाम्यहं सौख्यं भुक्ति मुक्तिसमन्वितं। बहुनोक्तेन किं वत्स व्रतस्य फलमुत्तमं। प्रह्लाद उवाच। व्रतस्यास्य फलं साधु त्वयि मे भक्ति कारणं॥ स्वामिन् जातं विशेषेण त्वतः पापनिकृन्तनं। अधुना श्रोतु मिच्छामि व्रतस्यास्य विधिं परं। कस्मिन्मासे भवेदेतत्कस्मिंश्च वासरे प्रभो। एतद्विस्तरतो देव वक्तुमर्हसि सांप्रतं। विधिना येन वै स्वामिन् समग्रफल युग्भवेत्। ममोपरि कृपां कृत्वा ब्रूहि त्वं सकलं प्रभो। श्रीनृसिंह उवाच। साधु साधु महाभाग व्रतस्यास्य विधिं परं। सर्वं कथयतो मेघ त्वमेकाग्रमनाः शृणु। वैशाख शुक्ल पक्षेषु चतुर्दश्यां समाचरेत्। मज्जन्म सम्भवं पुण्यं व्रतं पाप प्रणाशनं। वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टि कारकं। महागुह्यमिदं श्रेष्ठ मानुषैर्भवभीरुभिः। तेनैव क्रियमाणेन सहस्र द्वादशी फलम्। जायते मन्मुखाद्वच्मि मानुषाणां महात्मनां। स्वातिनक्षत्रयोगेन शनिवारेण संयुते। सिद्धि योगस्य योगेन वणिजे करणे तथा। पुण्य सौभाग्ययोगेन लभ्यते दैवयोगतः। सर्वैरेतैस्तु संयुक्तं हत्याकोटि विनाशनं। एतदन्यतरे योगे तद्दिनं

॥ व्र ॥ पाप नाशनं। केवलेपि च कर्त्तव्यं तद्दिने व्रतमुत्तमं। अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ। यथा यथा प्रवृत्तिः स्यात्पातकस्य कलौयुगे। तथा
॥ १२३ ॥ तथा प्रणश्यन्ति सर्वे धर्मा न संशयः। महतस्य प्रभावेण मतिर्नस्यात् दुरात्मनां। विचार्येत्थं प्रकर्त्तव्यं माधवे मासि मद्व्रतं। नियमञ्च प्रकर्त्तव्यं दन्त
धावनपूर्व्वकं। श्रीनृसिंह महोदग्र दयां कृत्वा ममोपरि। अद्याहं ते विधास्यामि व्रतं निर्विघ्नतां नय। इति नियम मन्त्रः व्रतस्थेन न कर्त्तव्या संगतिः
पापिभिः सह मिथ्यालापो न कर्त्तव्यः समग्रफल कांक्षिभिः। स्त्रीभिर्दुष्टैस्व आलापान् व्रतस्थो नैव कारयेत्। स्मर्त्तव्यं मे महारूपं तद्दिने सफले शुभे।
ततो मध्याह्न वेलायां नद्यादौ विमले जले। गृहे वा देवखाते वा तडागे विमले शुभे॥ वैदिकेनच मन्त्रेण स्नानं कृत्वा विचक्षणः। मृत्तिकागोमये
नैव तथा धात्री फलेन च। तिलैस्च सर्व पापघ्नैः स्नानं कृत्वा महात्मभिः। परिधाय शुचिर्वासो नित्यकर्म समाचरेत्। ततो गृहं समागत्य स्मरंन्मां
भक्ति योगतः। गोमयेन प्रलिप्याथ कुर्यादष्ट दलं शुभं॥ कलशं तत्र संस्थाप्य ताम्रं रत्नसमन्वितं तस्योपरि न्यसेत्पात्रं वंशजं व्रीहिपूरितं। हैमी
तत्र च तन्मूर्त्तिं स्थाप्या लक्ष्म्यास्तथैवच। पलेन च तदर्द्धेन तदर्द्धार्द्धेन वा पुनः यथाशक्ति तथा कार्या वित्त शाठ्य विवर्जितैः। पञ्चामृतेन संस्नाप्य पूजनन्तु
समाचरेत्॥ ततोब्राह्मणमाहूय तमाचार्यमलोलुपम्। सदाचार समायुक्तं शान्तदान्तजितेन्द्रियं। तेनैव कारयेत्पूजां इष्टा शास्त्रानुसारतः। आचार्य
वचनाद्वीमान् पूजां कुर्य्याद्यथाविधि। मण्डपं कारयेत्तत्र पुष्पस्तवक शोभितम्। ऋतुकालोद्भवैः पुष्पैः पूजयेद्यतमानसः। उपचारैः षोडशभिर्मन्त्रै
र्वेदोद्भवैस्तथा। ततः पौराणिकैर्मन्त्रैः पूजनीयो यथाविधि। चन्दन शीतलं दिव्यं चन्द्रकुङ्कुममिश्रितं। ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर॥ चन्दन
मन्त्रः॥ कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो। पूजयामि नृसिंह त्वां लक्ष्म्या सह नमोस्तुते॥ पुष्प मन्त्रः॥ कृष्णागरुमयं धूपं श्रीनृसिंह जग
त्पते। तव तुष्ट्यै प्रदास्यामि सर्व्वदेव नमोस्तुते॥ धूपमन्त्रः॥ नैवेद्यं सौख्यदं चारु भक्ष्यभोज्य समन्वितं। ददामि ते रमाकान्त सर्व्वपापक्षयं कुरु॥ इ १
ति नैवेद्यं॥ पीताम्बर महाबाहो प्रल्हादभय नाशन। यथाभूतेनार्चनेन यथोक्त फलदो भव॥ इति प्रार्थना मंत्रः॥ रात्रौ जागरणं कार्य्यं गीतवादित्रनृत्य

कैः । पुराणश्रवणाद्यैश्च श्रोतव्याश्च शुभाः कथाः । ततः प्रभातसमये स्नानं कृत्वा जितेन्द्रियः । पूर्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः । वैष्णवान्
प्रयत्नेन मन्त्रान् मदग्रे स्वस्थमानसः । ततो दानानि देयानि वक्ष्यमाणानि चानघ । पात्रेभ्यस्तु द्विजेभ्यो हि सेवाकदर्पजिगीषया । सिंहः स्वर्णमयो देयो
मम सन्तोषकारकः । गोभूतिलहिरण्यानि देयानि च फलेप्सुभिः । शय्या सतूलिका देया सप्तधान्यसमन्विता । अन्यानि च यथाशक्त्या देयानि मम तुष्ट
ये । वित्तशाठ्यं न कुर्वीत यथोक्तफलकाङ्क्षया ॥ ब्राह्मणान् भोजयेत् पश्चात् तेभ्यो दद्याच्च दक्षिणां । निर्धनेनापि कर्त्तव्यं देयं शक्त्यनुसारतः । सर्वे
षामेव वर्णानामधिकारोऽस्ति मे व्रते । मद्भक्तैस्तु विशेषेण कर्त्तव्यं मत्परायणैः । तद्वंशे नास्ति दुःखञ्च दोषश्च मत्प्रसादतः । मां समुद्धर देवेश दुस्तरा
द्भवसागरात् । पातकार्णवमग्नस्य व्याधि दुःखाम्बुवारिभिः । जीवैस्तु परिभूतस्य मोहात् दुःखङ्गतस्य मे । करावलम्बनं देहि शेषशायिन् जगत्पते ।
श्रीनृसिंह रमाकान्त भक्तानां भयनाशन । क्षीराम्बुधिनिवासस्त्वं चक्रपाणे जनार्दन ॥ व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ॥ इति प्रार्थना मन्त्रः ।
एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि । उपहारादिकं सर्व्वमाचार्याय निवेदयेत् । दक्षिणाभिस्तु सन्तोष्य ब्राह्मणांस्तु विसर्जयेत् ॥ मध्याह्ने तु समा
युक्तो भुञ्जीत बन्धुभिर्नरः । य इदं शृणुयात् भक्त्या व्रतं पापप्रणाशनं ॥ तस्य श्रवणमात्रेण ब्रह्महत्यां व्यपोहति । पवित्रं परमं गुह्यं कीर्त्तयेद्यस्तु मानवः ।
सर्वान् कामानवाप्नोति व्रतस्य च फलं लभेत् ॥ इति हेमाद्रौ नृसिंहपुराणे नृसिंहचतुर्दशी व्रतं । अथ भाद्रशुक्लचतुर्दश्यामनन्तव्रतं ॥ तत्र त्रिमुहू
र्त्तोदयव्यापिन्यां कार्य्यं । मुहूर्त्तमपि चेद्भाद्रे पौर्णमास्यां चतुर्दशी । सम्पूर्णान्तां विदुस्तस्यां पूजयेद्विष्णुमव्ययं ॥ तिथौ भाद्रपदस्यान्ते चतुर्दश्यां द्विजो
त्तम । पौर्णमास्याः समायोगे व्रतं चानन्तकं चरेदिति स्कान्दभविष्योक्तेः । मुहूर्त्तेति त्रिमुहूर्त्तप्रशंसापरं । अतएव माधवः । उदये त्रिमुहूर्त्ता तु
ग्राह्यानन्तव्रते तिथिरिति । यद्यपि मध्याह्ने भोज्यवेलायां समुत्तीर्णसरित्तटे । इत्यादि भविष्यान्मध्याह्नः पूजाकालो भवति तथापि तत्र पूजाविधानाभावा
न्तद्व्यापिनी ग्राह्येति । इतिहासरूपार्थवादाद्विष्णुस्मरणात्प्राक् प्रत्यक्षविधिनोदयव्यापिन्यां तस्यां पूजाविधानादिति अस्मिंश्च व्रते पूजित चतुर्दश

॥ ग ॥ ग्रन्थियुतदोरकबन्धनं प्रधानं। संसारगह्वरगुहासु सुखं विहर्तुं वाञ्छन्ति ये कुरुकुलोद्भव शुद्धसत्वाः। संपूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिण
॥ १२४ ॥ करे वरदोरकं ते इति तस्यैव फलसम्बन्धात्॥ अथ व्रतविधिः॥ मासपक्षाद्युल्लिख्य पापनिर्मुक्त्युत्तमसिद्धि पुत्रपौत्रेप्सितभोगधनधान्यपरमगतिप्राप्तये
चतुर्दशवर्षावध्यनन्तव्रतं करिष्ये इति सङ्कल्प्य सर्वतोभद्रमण्डलं विधाय तत्र मण्डलदेवता आवाह्य तदुपर्येकं कलशं संस्थाप्य तत्र फणासप्तक मण्डितं दर्भ
मयं तदग्रे चतुर्दशग्रन्थियुतं दोरकमयमनन्तं पूजयिष्ये इति सङ्कल्प्य षोडशोपचारैः कलशोपरि पूजयेदित्याद्यप्रयोगे द्वितीयादौ तु गृहीतानन्तव्रते पूजनं
दोरकबन्धनं च करिष्ये इति सङ्कल्पयेत्॥ अथानन्तपूजा॥ मण्डलं सर्वतोभद्रं कृत्वा कुम्भन्तु विन्यसेत्। तत्राष्टदले पद्मे पूजयेद्विष्णुमव्ययम्॥ कृत्वा
दर्भमयं देवं फणासप्तकमण्डितं। तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुशोभनं॥ चतुर्दशग्रन्थियुतमुपस्थाप्य प्रपूजयेत्। ततस्तु मूलमन्त्रेण नमस्कृत्य चतुर्भुजं
नवाम्रपल्लवाभासं पिङ्गभ्रूश्मश्रु लोचनं। पीताम्बरधरं देवं शङ्खचक्रगदाधरम्। प्रसन्नवदनं विष्णुं विश्वरूपं विचिन्तये। ध्यानं॥ आगच्छानन्तदेवेश
तेजोराशे जगत्पते। क्रियमाणां मया पूजां गृहाण सुरसत्तम। सहस्रशीर्षेत्यावाहनं॥ ततो ग्रन्थि देवताः॥ विष्णुरग्निस्तथादित्यः सहस्राक्षः पिता
महः। इन्द्रः पिनाकी विघ्नेशः स्कन्दः सोमस्तथैवच। वरुणः पवनः पृथ्वी वसवो ग्रन्थि देवताः। नानारत्नसमायुक्तं कार्तस्वरविभूषितं। आसनं देव
देवेश प्रीत्यर्थं प्रतिगृह्यतां। पुरुष एवेदमित्यासनं। गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं। तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां। एतावान
स्येति पाद्यं॥ अनन्तानन्त देवेश अनन्त फलदायक। अनन्तानन्तरूपोसि गृहाणार्घ्यं नमोस्तुते। त्रिपादूर्ध्वमित्यर्घ्यं॥ कर्पूरवासितं तोयं मन्दाकि
न्याः समाहृतं। आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः। तस्माद्विराडित्याचमनम्। पञ्चामृतेन स्नपनं करिष्ये सर्व्वसिद्धिदं। कार्य्यं मे सिद्धिमा
यातु पूजिते त्वयि धातरि। पयो दधि घृतं गव्यं माक्षिकं शर्करा तथा। पञ्चामृतेन स्नपनं गृहाण जगतः पते। पञ्चामृतस्नानं। गङ्गा च यमुनाचैव न १२
र्मदा च सरस्वती। तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतं। तोयमेतत् सुखस्पर्शं स्नानीयं प्रतिगृह्यतां। यत्पुरुषेणेति। स्नानं। पीताम्बर युगं देव

सर्वकामार्थसिद्धये। मया निवेदितं भक्त्या गृहाण सुरसत्तम। तं यज्ञमिति वस्त्रं॥ दामोदर नमस्तेस्तु त्राहि मां भवसागरात्। ब्रह्मसूत्रं सोत्त
रीयं गृहाण पुरुषोत्तम। तस्माद्यज्ञादिति यज्ञोपवीतं। कस्तूरी कुङ्कुमोपेतं कर्पूरेण च संयुतं। गन्धं दास्यामि देवेश अनन्ताय नमोनम
इति। तस्माद्यज्ञात्सर्वहुत ऋच इति गन्धं॥ अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः। वासुदेव जगन्नाथ प्रीत्या मे स्वीकुरु प्रभो।
अक्षताः माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मया हृतानि पुष्पाणि पूजार्थं स्वीकुरु प्रभो। तस्मादश्वा इति पुष्पं। अथांगपूजा॥ अन
न्ताय नमः पादौ सङ्कर्षणाय गुल्फौ कालात्मने जानुनी। विश्वरूपाय जङ्घे विश्वनेत्राय कटिं। मधुसूदनाय मेढ्रं। पद्मनाभाय नाभिं। प
रमात्मने। हृदयं श्रीकण्ठाय कण्ठं सर्वास्त्रधारिणे बाहू। हरये मुखं वाचस्पतये जिह्वां। दामोदराय दन्तान् केशवाय ललाटं कमलासनाय शिरः स
र्वात्मने सर्वाङ्गं वनस्पतिरसोद्दिव्यो गन्धाढ्यो गन्धउत्तमः। आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां। यत्पुरुषमिति धूपं॥ आज्यंच वर्त्ति संयुक्तं व
ह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्यतिमिरापहं। ब्राह्मणोस्येति दीपं। अन्नं चतुर्विधं स्वादु रसैः षड्भिःसमन्वितं। नाना भक्ष्यसमा
युक्तं नैवेद्यं प्रतिगृह्यतां। नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु। ईप्सितं मे वरं देहि परत्रच परांगतिं। चन्द्रमा मनस इति नैवेद्यं। इदं फलं
मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि। नाभ्या आसीदिति फलम्। पूगीफलम् महद्दिव्यं नागवल्लीदलैर्युतं। कर्पूरा
दि समायुक्तं तांबूलं प्रतिगृह्यतां। सप्तास्यासन्निति तांबूलं हिरंण्य गर्भ गर्भस्थं हेमबीजं विभावसोः। अनन्त पुण्यफलदमतः शांतिं प्रयच्छमे। य
ज्ञेनेदक्षिणेति दक्षिणा। पञ्चवर्ति समायुक्तं सर्व मङ्गलदायकम्। नीराजनं निरीक्षस्व अनन्ताय नमोनमः। इति नीराजनं। मालती मल्लिका पुष्पैः
नागचम्पक संयुतैः। पुष्पांजलिं गृहाणेमां पादांबुजयुगार्पितां। विष्णु मन्त्रैः पुष्पांजलिः। अनन्त कामान् मे देहि सर्व कामफलप्रद। अनन्ताय नम
स्तुभ्यं पुत्रं पौत्रं प्रवर्धय॥ अनन्तः सर्वकामानामधिपः सर्व कामदः। व्रतेनानेन सुप्रीतो भवत्विह सदा मम। नमस्ते देवदेवेश नमस्ते धरणीधर।

॥ व्र ॥ नमस्ते कमलाकान्त नमस्ते च्युमरप्रिय। नमस्ते सर्वभूतेश वासुदेव नमोस्तुते प्रार्थना। अनन्ताय नमस्तुभ्य सहस्रशीर्षे नमोनमः। नमोस्तु पद्मनामाय
॥ १२५ ॥ नागाधिपतये नमः। संसारगह्वरगुहासु सुखं विहर्तुम्बांच्छन्ति ये कुरुकुलोद्भव शुद्ध सत्वाः। संपूज्यच त्रिभुवनेशमनंतदेवं बध्नंति दक्षिणकरे वर
दोरकंते। अनन्त संसार महा समुद्रे मग्नं समभ्युद्धर वासुदेव॥ अनन्तरूपेण नियोजयस्व अनन्तसूत्राय नमोनमस्ते दोरक बन्धनमन्त्रः। जीर्णदोरकं
पूर्ववत् संपूज्य विसर्जयेत्। न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि। क्षम्याणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय॥
इति पूजा॥ दाताच विष्णुर्भगवाननंतः प्रतिग्रहीताच स एवविष्णुः। तस्मात् त्वया सर्वमिदं ततंच प्रसीद देवेश वरान्ददस्व। प्रतिग्रह द्विजश्रेष्ट
अनन्तफलदायक। त्वत्प्रसादाद्धि विप्रेन्द्र मुच्येहं कर्मबन्धनात्। पक्वान्नं फलसंयुक्तं सघृतं दक्षिणान्वितं। द्विजवर्याय दास्यामि व्रतसंपूर्त्ति हेतवे मन्त्रः।
अनन्तः प्रतिगृह्णाति अनन्तो वै ददातिच। अनन्ततारकोभाभ्यामनन्ताय नमोनमः॥ इति वायनदानं। अथ कथा॥ युधिष्ठिर उवाच॥ अहं दुःखौघ
संक्रान्तो भ्रातृभिः परिवारितः कथं मुक्तिर्वदास्माकमनन्तात् दुःखसागरात्। कंदेवं पूजयित्वा वै प्राप्स्यामो राज्यमुत्तमम्। अथवा किं व्रतं कृत्वा त्वत्प्रसा
दाद्भवीष्विनः। श्रीकृष्ण उवाच॥ अनन्त व्रतमस्त्यन्यतिथावस्यामनुत्तमं। सर्व पापहरन्नृणां स्त्रीणां चैव युधिष्टिर। शुक्ल पक्षे चतुर्दश्यां मासि भाद्र
पदे भवेत्। तस्यानुष्ठान मात्रेण सर्वपापं व्यपोहति। युधिष्टिर उवाच॥ कृष्ण कोयमनंतेति प्रोच्यते यस्त्वया विभो। किं शेष नाग आहोस्विदनंत
स्तक्षकः स्मृतः। परमात्माथवानन्त उताहो ब्रह्म गीयेत। कएषोनंत संज्ञोवै तथ्यं मे ब्रूहि केशव। श्रीकृष्ण उवाच॥ अनन्त इत्यहं पार्थ मम रूपं नि
बोध तत्। आदित्यादि ग्रहात्मावो यः काल उपपद्यते। लवकाष्ट मुहूर्त्तादि दिनरात्रि शरीरवान्। पक्षमासर्तु वर्षाणि युगकालव्यवस्थया। योयं
कालो मया ख्यातः सोनन्त इति कीर्त्यते। सोहं कालोवतीर्णोत्र भूभारोत्तारणाय च। दानवानां वधार्थाय वसुदेव कुलोद्भवं। अनन्तं विद्धिमां पार्थ १२|
साधूनां पालनायच। अनादि मध्यपर्यंतं कृष्णां विष्णुम् हरिं शिवं। वैकुण्टं भास्कर सोमं सर्वव्यापिनमीश्वरं। विश्वरूपं महाकालं सृष्टिसंहारकारकं।

प्रत्ययार्थं मया रूपं फाल्गुनाय प्रदर्शितं। पूर्वमेव महाबाहो योगिध्येयमनुत्तमं। विश्वरूपमनन्तञ्च यस्मिन्निन्द्राश्चतुर्दश। वसवोष्टौ द्वादशादित्या रुद्राएका-
दशमताः। सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः। नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादिकं। मा कुरुष्वात्र सन्देहं सोहं पार्थ नसंशयः। युधिष्ठि-
र उवाच॥ अनन्त व्रतमाहात्म्यं विधिं वद विदांवर। किं पुण्यं किं फलम् चास्य अनुष्ठानवतां नृणां। केन चादौ पुराचीर्णं मर्त्ते केन प्रकाशितं। एवं स-
विस्तरं कृत्वा ब्रूह्यनन्तव्रतं मम॥ श्रीकृष्ण उवाच। आसीत्पुरा कृतयुगे। सुमन्तोनामवै द्विजः। वसिष्टगोत्रे चोत्पन्नः सुरूपां स भृगोः सुतां। दीक्षां
नाम्नीं चोपयेमे वेदोक्त विधिना नृप॥ तस्याः कालेन संयाता दुहितानन्तलक्षणा। शीला नाम सुशीला सा वर्द्धते पितृवेश्मनि। माता च तस्याः कालेन
ज्वरदाहेन पीड़िता। विननाश नदीतीरे ययौ स्वर्गं पतिव्रता। समन्तस्तु ततोन्यां वै धर्मपुंसः सुतां पुनः। उपयेमे विधानेन दुःशीला नाम नामतः
दुःशीलां कर्कशां चण्डीं नित्यं कलहकारिणीं। सापिशीला पितुर्गेहे गृहार्चनपरा बभौ। कुड्यस्तंभ तुलाधार देहली तोरणादिषु॥ वर्णकैश्चित्रमकरो-
न्नीलपीतासितासितैः। स्वस्तिकैः शङ्खपद्मैश्च अर्चयन्ती पुनः पुनः। ततः काले वक्क तिथे कौमारवशवर्त्तिनी। पित्रा दृष्टा तदा तेन स्वोचिन्ना यौवने
स्थिता। कस्मै देया मया शीला विचार्य्येति सुदुःखितः: एतस्मिन्नेव कालेतु मुनिर्वेद विदांवरः। कन्यार्थी चागतः श्रीमान् कौण्डिन्यो मुनिसत्तमः।
उवाच रूपसम्पन्नां त्वदीयां तनयां वृणे। पिता ददौ द्विजेन्द्राय कौण्डिनाय शुभे दिने। गृह्योक्त विधिना पार्थ विवाहमकरोत्तदा। निर्वर्त्योद्वाहिकं स
वै प्रोक्तवान् कर्कशां द्विजः। किंचिद्दायादिकं देयं जामातुः परितोषकं। तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्सार्य्य गृह मण्डनं। पेटायां सुस्थिरं बध्वा पिहि वेश्मनि
सा ययौ॥ भोज्यावशिष्ट चूर्णेन पाथेयञ्च चकार सा कौण्डिन्योपि विवाह्यैनां पथिगच्छन् शनैः शनैः। शीलां सुमन्तादादाय न वो-
ढां गोरथेनवै। मध्याह्ने भोज्यवेलायां समुतीर्य सरित्तटे। ददर्श शीला सा स्त्रीणां समूहं रक्तवाससं। चतुर्दश्यामर्चयतं भक्त्या देवं जनार्दनं। उपगम्य
शनैः शीला पप्रच्छ स्त्रीकदंबकं। आर्याः किमेतन्मे ब्रूत किन्नाम व्रतमीदृशं। ताऊचुर्योषितस्तां तु शीलां शीलविभूषणां। अनन्तव्रतमेतद्धि व्रतेनन्तः प्रपूज्य

॥ अ ॥ ते । चाब्रवीदहमप्येतत्करिष्ये व्रतमुत्तमं विधानं कीदृशं तत्र किंदानं कोत्र पूज्यते । स्त्रियउचुः । शीले सदन्नं प्रस्थस्य पुन्नाम्ना संस्कृतस्य च । अर्धं विप्राय
॥ १२६ ॥ दातव्यमर्द्धमात्मनि भोजनं । शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः । कर्त्तव्यं सत्सरित्तीरे विधिनानेन मानिनि । स्नात्वानन्तं समभ्यर्च्य मण्ड
ले धूप दीपकैः । पुष्पैर्गन्धैश्च नैवेद्यैः पीतरक्तैश्चतुःसमैः । चतुःसमं परिभाषायां ज्ञेयं तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुदोरकं । चतुर्दशग्रन्थियुतं वा
मेकरतले न्यसेत् । अनन्त संसार महासमुद्रे मग्नं समभ्युद्धर वासुदेव । अनन्तरूपो विनियोजयस्व अनन्तसूत्राय नमोनमस्ते । अनेन दोरकं बध्वा भो
क्तव्यं स्वस्थमानसैः । ध्यात्वा नारायणं देवमनन्तं विश्वरूपिणं । भुक्त्वाचान्ते व्रजेद्वेश्म भद्रे प्रोक्तं व्रतं तव । श्रीकृष्ण उवाच ॥ एवमाकर्ण्य राजेन्द्र
प्रहृष्टेनान्तरात्मना । सापि चक्रे व्रतं शीला करेबध्वा सुदोरकं । पाथेयमर्धं विप्राय दत्वा भुक्त्वा स्वयंततः । पुनर्जगाम साहृष्टा गोरथेन स्वकं गृहं ।
भर्त्रा सहैव शनकैः प्रत्ययस्तत्क्षणादभूत् । तेनानन्तव्रतेनास्या बभौ गोधनसङ्कुलम् । गृहाश्रमंश्रियाजुष्टं धनधान्यसमन्वितं । आकुलं व्याकुलं रम्यं स
र्वंचातिथिपूजनैः । सापि माणिक्यकांचीभिर्मुक्ताहार विभूषिता । देवाङ्ग वस्त्र संच्छन्ना सावित्री प्रतिमाभवत् । कदाचिदुपविष्टाया दृष्टोबद्धः सु
दोरकः । शीलाया हस्तमूलेतु भर्त्रातिनद्विजन्मना । शीमदांधेन कौरव्य साक्षेपं त्रोटितोरुषा । कोनन्त इति मूढेन जल्पता पापकारिणा । क्षिप्तो
ज्वाला कुलेवह्नौ हाहा कृत्वा प्रधावती । शीला गृहीत्वा तत् सूत्रं क्षीरमध्ये समाक्षिपत् । तेन कर्म विपाकेन सा श्रीस्तस्याः क्षयंगता । गोधनन्तस्करै
र्नीतं गृहं दग्धं धनं गतं । यद्यथैवागतं गेहे तत्तथैव पुनर्गतं । स्वजनैः कलहो नित्यं बन्धुभिः तर्जनं तथा । अनन्ताक्षेप दोषेण दारिद्र्यं प्रतिअगृहे ।
न कश्चिद्वदते लोके तेन सार्द्धं युधिष्ठिर । शरीरेणातिसंतप्तो मनसाप्यतिदुःखितः । निर्वेदं परमं प्राप्तः कौण्डिन्यः प्राह तां प्रियां । कौण्डिन्य
उवाच ॥ शीले ममेदं मे पुत्र सहसा शोककारकम् । येनाति दुःखितास्माकम् जातः सर्वं धनक्षयः । स्वजनैः कलहो गेहे न कश्चिन्मां प्र
पश्यते । शरीरे नित्य सन्तापः खेदश्चेतसि दारुणः । जानासि दुर्नयः कोत्रकिंकृते सुकृतम् भवेत् । शीलोवाच ॥ प्रत्युवाच पतिं शीला सुशीला

शीलसमङ्गना। प्राप्येनन्तकृताक्षेपपापसम्भवजं फलम्। भविष्यति महाभाग तदर्थं यत्नमाचर॥ एवमुक्तः स विप्रर्षिर्जगाम मनसा हरिं निर्वेदाग्निर्जगा
माथ कौण्डिन्यः प्रयतो वनं। तपसे कृत संकल्पो वायुभक्षो द्विजोत्तमः। मनसा ध्याय चानंतं क्व द्रक्ष्यामि च तं विभुं। यस्य प्रसादात् संजातमाक्षेपाग्निध
नं गतं। धनादिकं ममातीव सुखदुःखप्रदायकं। एवं संचिंतयन् सोथ बभ्राम विजने वने। तत्रापश्यन्महाचूतं पुष्पितं फलितं यथा। वर्जितं पक्षि सङ्घातैः
कीटकोटि हतं तथा। तम पृच्छत्त्वयानंतः क्वचिद्दृष्टो महातरो। ब्रूहि सौम्य ममातीव दुःखं चेतसि वर्त्तते। सोऽब्रवीद्भद्र नानन्तं क्वचित्पश्यामि वा द्विज।
एवं निराकृतस्तेन सजगामाथ दुःखितः क्व द्रक्ष्यामीति गच्छन् स गामपश्यत् सवत्सकां। तृणमध्ये प्रधावन्तीमितस्ततस्य पांडव। अब्रवीद्धेनुके ब्रूहि यद्यनंतस्त्व
येक्षितः। सा चोवाचाथ कौण्डिन्य नानंतं वेद्म्यहं द्विज। ततो व्रजन् ददर्शाग्रे गोवृषं शाड्वलेस्थितं। दृष्ट्वा पप्रच्छ गोस्वामिन् नानन्तोवीक्षितस्त्वया। गो
वृषस्तमुवाचेदं नानन्तो वीक्षितो मया। ततो व्रजन् ददर्शाग्रे रम्य पुष्करिणी द्वयं। अन्योन्य जलकल्लोलैर्वीचिपर्यंतसंगमं। छन्नं किं जल्पकह्लारकम
लोत्पलसमन्वितं। सेवितं भ्रमरैर्हंसैश्चक्रैः कारण्डकैर्बकैः। ते चापृच्छद्द्विजो नेतो भवद्भ्यां नोपलक्षितः। ऊचतुस्ते द्विजश्रेष्ठ नानन्तो वीक्षितो द्विज।
ददर्शाथ वने तस्मिन् गर्दभं कुञ्जरं तथा। तावप्युक्तौ द्विजेनेत्य नेति ताभ्यां निवेदितम्। एवं संपृष्ट्वा नष्टाशः तत्रैव निषसाद ह। कौण्डिन्यो विक्ल
वी भूतो निराशो जीविते नृप। दीर्घमुष्णञ्च निश्वस्य पपात भुवि भारत। प्राप्य संज्ञामनन्तेति जल्पन्नुत्थाय स द्विजः। नूनं त्यक्ष्याम्यहं प्राणा
निति संकल्प्य चेतसि। उत्थाप्योद्बध्य वृक्षेस्मिं स्तावन्नरत सत्तम। कृपयानन्तदेवोपि प्रत्यक्षः समजायत। वृद्धब्राह्मणरूपेण इत एहीत्युवाच तं।
प्रगृह्य दक्षिणे पाणौ गुहायां प्राविवेशयत्तां। स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युतां। तस्यां निविष्टमात्मानं दिव्यसिंहासने शुभे। पार्श्वस्थं शङ्ख
चक्राब्ज गदायवड्गशोभितं। दर्शयामास विप्राय स्वीयं रूपमनन्तकं। विभूतिभेदैस्त्वानंतैरनंतममितौजसं। तं दृष्ट्वा तादृशं रूपमनन्तमपराजितं।
वेद्यमाने जगादेदं जयशब्दपुरःसरं। पापोहं पापकर्माहं पापात्मा पापसम्भवः। त्राहिमां पुण्डरीकाक्ष सर्वपापहरो भव। तत्रैत्वानंतदेवेशः

॥ अ ॥ प्राह सुस्निग्धया गिरा। मामैत्वं ब्रूहि विप्रेन्द्र यत्ते मनसि वर्त्तते। कौंडिन्य उवाच। मया भूत्यावलिप्तेन चोटितोनन्तदोरकः। तेन पाप विपा
१२७ केन मूर्तिर्मे प्रलयं गता। स्वजनैः कलहो गेहे न कश्चिन्मां प्रभाषते। निर्वेदाद्भ्रमतोरण्ये तव दर्शनकांक्षया। कृपया देवदेवेश त्वयात्मा संप्रदर्शितः
तस्य पापस्य मे शांतिं कारुण्याद्दातुमर्हसि। श्रीकृष्ण उवाच। तच्छ्रुत्वानन्तदेवस्तमुवाच द्विजसत्तमं। भक्त्या सन्तोषितो देवः किन्नदद्याद्युधिष्ठिर
अनन्त उवाच। स्वगृहं गच्छ कौंडिन्य माविलम्बं करिष्यसि। चरानन्तव्रतं भक्त्या नव वर्षाणि पञ्च च। सर्वपाप विशुद्धात्मा प्राप्स्यसे सिद्धि मुत्तमां।
पुत्रपौत्रं समुत्पाद्य भुक्त्वा भोगान्यथेप्सितान्। अन्तेच स्मरणं प्राप्य मामुपेष्यस्यसंशयं। अन्यंच ते वरन्दद्मि सर्वं लोकोपकारकं। इदमाख्यानकवरं श्री
मानन्तव्रतादिकं। करिष्यति नरो यस्तु कुर्वन् व्रतमिदं शुभं। सोचिरात्पाप निर्मुक्तः प्राप्नोति परमां गतिं। गच्छ विप्र गृहं शीघ्रं पथा येनागतो
ह्यसि। कौंडिन्य उवाच। स्वामिन् पृच्छामि मे ब्रूहि किञ्चित्कौतूहलं मया। अरण्ये भ्रमता दृष्टं न तद्वेद्मि जगद्गुरो। स चूतवृक्षः कश्च का गौःको
वृषभस्तथा। कमलोत्पलकल्हारैः शोभितं सुमनोहरं। मया दृष्टं महारण्ये किन्तत्पुष्करिणी द्वयं। कःखरः कुञ्जरः कोसौ कोसौ वृद्धो द्विजोत्तमः। श्री
अनन्त उवाच। स चूतवृक्षौ विप्रोसौ विद्यावेद विशारदः। सोर्थितोपि नच प्रादात्शिष्येभ्यस्तरुतां गतः। सागौर्वसुन्धरा दृष्टा सफला या त्वया द्विज।
वृषो धर्मस्त्वया दृष्टः शाद्वलं सत्यमास्थितः। धर्माधर्म व्यवस्थानन्तच पुष्करिणी द्वयं। ब्राह्मण्यौ केचिदप्यास्तां भगिन्यौते परस्परं। धर्माधर्मादि यत्किञ्चि
तन्निवेदयतो मिथः। विप्राय न क्वचित् दत्तमतिथौ दुर्बलेपिवा। भिक्षा दत्ता नवार्थिभ्यस्तेन पापेन कर्मणा। वीचिकल्लोलमालाभिर्गच्छतस्ते परस्परं
खरःक्रोधस्त्वया दृष्टः कुञ्जरो मद उच्यते। ब्राह्मणोसावनं तोहं गुहा संसारगह्वरं। इत्युक्त्वा देवदेवेशस्तत्रैवांतरधीयत। स्वप्नप्रायं स तद्दृष्ट्वा ततः स्व
गृहमागतः। कृत्वानन्तव्रतं सम्यग्नवर्षाणि पञ्च च। भुक्त्वा सर्वमनंतेन यथोक्तं पांडुनन्दन। अंतेच स्मरणं प्राप्य गतोनन्तपुरं द्विजः। तथा त्व १२७
मपि राजर्षे कथां शृण्वन्व्रतं कुरु। प्राप्स्यसे चिन्तितं सर्वमनन्तस्य वचो यथा। यद्वच्चतुर्दशे वर्षे फलं प्राप्तं द्विजन्मना। वर्षैकेन तदाप्नोति कृत्वोपाख्यानकं

व्रतं। एतत्ते कथितं भूप व्रतानामुत्तमं व्रतं। यत् कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः। येपि शृण्वंति सततं पठ्यमानं पठंति ये। तेपि पापविनिर्मुक्ताः प्राप्स्यन्तिच हरेःपुरं। संसार गह्वरगुहासु सुखं विहर्त्तुं वांच्छंति ये कुरुकुलोद्भव शुद्ध सत्वाः। संपूज्यच त्रिभवनेशमनंतदेवं बध्नंति दक्षिणकरे वरडोरकं ते॥ इति श्रीभविष्योत्तरपुराणे अनंतव्रत कथा॥ अथोद्यापन विधिः॥ युधिष्ठिर उवाच॥ देवदेव समासेन व्रतस्य परमाद्भुतं। उद्यापनविधिं ब्रूहि अनुग्राह्योस्मि केशव। उद्यापनविधिं हित्वा न व्रतस्य फलं लभेत्। तस्माद्यथा तथा कुर्याद्वित्तशाठ्यं विवर्जयेत्। श्रीकृष्ण उवाच॥ मासिभाद्रपदे प्राप्ते परिपूर्णे व्रते ततः। शुक्लायांच चतुर्दश्यां ब्रह्मचारी व्रती ततः। एकभक्तेन नियमं कृत्वा भक्तिसमन्वितः। स्नात्वा नद्यां देवखाते तीर्थे प्रस्रवणे तथा॥ सर्वौषध्यैः सर्वगन्धैः तिलकल्कैरथामलकैः। वेदोक्तविधिना सम्यक् तर्पयेत् पितृदेवताः। ततो गृहं समागत्य वेदिं कृत्वातु शोभनां। तत्रालिखेन्मंडलकं पञ्चवर्णैः सुपेशलैः नवनाभं सुसम्पूर्णं सर्वतोभद्रमेव वा। तस्योपरिन्यसेत्कुम्भमव्रणं सुनवं दृढं॥ ताम्रपात्रसमायुक्तं पञ्चरत्नसमन्वितं। सुवर्णदोरकं चतुर्दशग्रन्थियुतमाह। माषकेण सुवर्णस्य दरिद्रेणापि पार्थिव॥ कृत्वानन्तं प्रयत्नेन ताम्रपात्रोपरि न्यसेत्॥ सुवर्णप्रतिमामाह॥ शय्यां सुविस्तरां कृत्वा तत्रानन्तं न्यसेद्व्रती॥ लक्ष्म्यायुतं वासुदेवं मुशले न हलेन च। कुम्भस्य ताम्रपात्रोपरि सुवर्णनिर्मितं शय्योपरि त्वर्थात्सुवर्णमयमनन्तं पूजयेदित्यर्थः। इति केचित् तन्न लक्ष्म्यायुतमित्यादेरसङ्गतेः। आचार्यं पूजयित्वाथ वस्त्रैराभरणैस्तथा। कर्णाङ्गुली पवित्रैश्च भक्त्या च सुसमाहितः। ततस्तु पूजयेद्देवमनन्तं विश्वरूपिणं। वस्त्रयुग्मं शुचि यस्माद्वासुदेवस्य वल्लभं। अनन्तः प्रीयतां तेन पीतवस्त्रेण मे सदा। वस्त्रयुग्मं समाच्छन्नं पीतयज्ञोपवीतिनं॥ चन्दनेन सुगन्धेन कर्पूरागुरुमिश्रिणा॥ लेपयेदन्तवाङ्गानि प्रीयतां मधुसूदनः। गन्धं॥ पुनः पुष्पाणि संगृह्य पूजयेन्नामभिः पृथक्॥ अनन्ताय नमः पादौ गुल्फौ संकर्षणाय च॥ कालात्मने तु जानुभ्यां जघनं विश्वरूपिणे। कटिं वै विश्वरूपाय मेढ्रं वै विश्वरूपिणे। नाभिन्तु पद्मनाभाय हृदयं परमात्मने। कण्ठं श्रीकण्ठनाथाय बाहू

 सर्वास्त्रधारिणे। वाचस्पते नमस्तुभ्यं मुखं संपूजयेद्धरिं ॥ ललाटे केशवायेति शिरः सर्वात्मने नमः। लोकात्मा सर्वभूतात्मा निमेष त्रुटिसम्भवः
 जन्म मृत्यु जरा व्याधि संसार भयनाशनः। वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां ॥ धूपं ॥ आज्यं
च वर्त्ति संयुक्तं वह्निना योजितं यमा। दीपं गृहाण देवेश त्रैलोक्यतिमिरापहं ॥ दीपं ॥ अन्नं चतुर्विधं स्वादु भूतानां जीवनं परं नैवेद्यं ते मया
दत्तं देव प्रीत्या प्रगृह्यतां ॥ नैवेद्यं ॥ पूगी फलं सपत्रञ्च कर्पूरं च मनोहरं ॥ पवित्रीकृतमत्यन्तं तांबूलं प्रतिगृह्यतां ॥ तांबूलं ॥ एवं पूजां ततः
कृत्वा गच्छन् कुण्ड समीपतः। स्व गृह्योक्तविधानेन कृत्वाग्निस्थापनं बुधः। प्रारभेत ततो होममश्वत्थसमिधैस्तिलैः। व्रीहिभिः मिश्रितैश्चापि
घृतेन तु विधानतः। पुरुष सूक्तेन जुहुयादतो देवेति वा पुनः इदं विष्णुर्विचक्रमे त्रेधा निदधे इति। शतमष्टोत्तरं यावत्प्रत्येकं जुहुयाद्गुरुः। चरुहो
मस्ततः कार्यो मन्त्रैरेतैर्विचक्षणः। अनन्ताय च कालाय अहोरात्राय वै पुनः। अर्द्धमासाय मासाय ऋतुभ्यश्च तथा पुनः। संवत्सराय स्वाहेति जुहुयात्
व्याहृतीस्ततः। स्विष्टकृत्प्रभृतीर्हुत्वा ग्रहादीनर्चयेत्पुनः ॥ मदनरत्ने जुहुयाद्गुरुरित्यस्याग्रे सर्वं हुत्वेत्यादि यथाक्रममित्यन्तः पाठः सर्वं हुत्वा
विधानेन मन्त्रै रेतै विचक्षणः। एतैर्वक्ष्यमाणैश्च मन्त्रै र्जुहुयादित्यनुषङ्गः। अनन्ताय स्वाहा। कालाय स्वाहा ० अहो रात्राय स्वाहा ० अर्धमासाय
स्वाहा। ऋतुभ्यःस्वाहा। संवत्सराय स्वाहा ०। ततो महाव्याहृतयः। सर्व प्रायश्चितं दक्षिणा। आज्य तिलैः स्विष्टकृतं प्रजापतिभ्यो जुहुयात्।
ततो वै लोकपालांश्च ग्रहान्पूज्य यथाक्रमं। गीतवादित्र निनदैर्हुत्वा पूर्णाहुतिं व्रती। पुराणश्रवणैस्तद्वद्रात्रिशेषं नयेद्व्रती। तेन रात्रावेव
होमः। ततः प्रभातसमये स्नात्वा शुद्धः कृताह्निकः। क्वचिद्धेमाद्रि पुस्तके पुराण श्रवणे रितितत्। श्लोकस्थाने पुराण श्रवणं कृत्वा कृतमध्याह्निक
क्रिय इत्यर्थमेव पठितं तदातु रात्रौ होमो नभवतीति पूर्वोक्तेन विधानेन पूजयेद्विश्वरूपिणं। पूजयित्वा हरिं देव माचार्यं पूजयेत्ततः। परिधाय १२८
सपत्नीकं वस्त्रालङ्कार भूषणैः। मन्त्रैः संपूज्य विधिवद्धेनुं दद्यात्प्रयत्नतः सुरभी वैष्णवी माता नित्य विष्णु पदे स्थिता। ग्रासं गृहाण मया दत्तं गो

मातस्त्रातु मर्हसि। गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहं मन्त्रेणानेन सपूज्य आचार्याय निवेदयेत्। गो दानस्य विधानार्थं दद्यात्स्वर्णं यथा विधि। अनन्तं परिवारं च आचार्याय निवेदयेत्। तत आमन्त्रितान् विप्रान् पूर्वदुक्त चतुर्दश वस्त्रोपवीतैः संपूज्य भोजयेदन्न विस्तरैः। ततस्तु दक्षिणाभिस्तेभ्यो वित्तशाठ्य विवर्जितः। स्वशक्त्या दक्षिणां दद्यादाचार्याय क्षमापयेत्। क्रियाहीनं भक्तिहीनं द्रव्यहीनं तथैव च। मन्त्रहीनं पठेत्यस्मात् व्रतसंपूर्तिहेतवे। दीनान्धकृपणेभ्यश्च दद्याच्चैव तथाधनं। तत इष्टैः समस्तैश्च पुत्रसंबन्धिबान्धवैः। यथोपपन्नं भोक्तव्यं कृत्वा मानस मव्ययं॥ आचम्य च शुचिर्भूत्वा चिन्त्यो विष्णुश्च तद्दिने॥ एवं कृते नृपश्रेष्ठ कर्मण्याशु जनार्दनः। अनंत रूपी भगवांस्तुष्टो भवति सर्वदा। व्रतस्य फल माप्नोति विष्णुलोके महीयते॥ इति हेमाद्रौ भविष्योत्तरे सोद्यापन मनंत व्रतं। अथ हेमाद्रि मदन रत्न लिखित भविष्य पुराणानुयायी अनन्त व्रतो द्यापन प्रयोगः। व्रत ग्रहणदिनावधिक चतुर्दश वर्ष समाप्ति दिनं त्रयोदश्यां कृतैकभक्तस्तदुत्तर भाद्र शुक्ल चतुर्दश्यां ब्रह्मचर्योपवास नियमयुतो यथा सम्भवं पुण्यं तीर्थादौ सर्वौषधि सर्व गन्ध तिलकल्का मलकैः स्नात्वा स्नानांगतर्पणं कृत्वा गृहमागत्य स्वदा वेदीं कृत्वा तत्र नवनाभं सर्वतो भद्रं वा आलिख्य पञ्चरङ्गैर्यथावत्परिपूर्य्यपवित्रपाणिराचम्य मासपक्षाद्युल्लिख्य चरितानंतव्रतपरिपूर्णतार्थं उत्तराङ्गमुद्यापन महं करिष्ये इति सङ्कल्प्य निर्विघ्नतार्थं गणपतिं पूजयेत्। तत आचार्यं वृत्वा वस्त्रासनकुण्डलादिभिः पूजयेत्। तत आचार्यो यदत्र संस्थितमिति सर्षपान्विकीर्य शुचीवोहव्येति प्रोक्ष्य सर्वतो भद्र करणपक्षे तत्र सर्वतो भद्र देवता अवाह्य पूजयेत्। तास्व देवतास्तासांस्थापनं पूजा प्रकारादि परिभाषायां द्रष्टव्यं। ततो मण्डलमध्ये महीद्यौरित्यादि प्रकारेणाव्रणं दृढं ताम्रपूर्णपात्रयुतं कलशं स्थापयेत्। तत्र भाषादि परिमित स्वर्णनिर्मितचतुर्दशग्रन्थियुतानन्तं स्थापयेत्। तदुत्तरतः सुविस्तृतां शय्यामासाद्य तत्रापि स्वर्णादि निर्मित लक्ष्मीसहित मुसल हल युतानांतप्रतिमां स्थापयेत्। ततः स्वर्णदोरक प्रतिमयोः श्रीमदनंताय नमः। इति मन्त्रेणावाहनस्तवनान्त वार्षिक पूजावत् कुर्यात् ततो वस्त्र युग्मं शुचि.यस्माद्वासुदेव

॥ व्र । [illegible] । अवंतः प्रीयतां नेन वस्त्र युग्मेन सर्वदेति मन्त्रेण वस्त्र युग्मं समर्प्य यज्ञोपवीतञ्च समर्प्य कर्पूरागरुमिश्रितचन्दनं समर्पयेत् । चन्दनेन
। १२८ । कुङ्कुमेन कर्पूरागरु मिश्रिता । [illegible] तथांगानि प्रीयतां मधुसूदन इति । ततः पुष्पाणि संगृह्याङ्गपूजां कुर्यात् ॥ अनंताय नमः पादौ पूज
यामि । सङ्कर्षणाय गुल्फौ पू० कालात्मने० जानुनी० विश्वरूपिणे जघनं पू० विश्वरूपाय० कटिं पू० विश्वरूपिणे मेढ्रं पू० पद्मनाभाय नाभिं पू० ।
परमात्मने हृदयं पू० । श्रीकण्ठाय कण्ठं पू० सर्वास्त्रधारिणे बाहू पू० वाचस्पतये मुखं पू० केशवाय ललाटं पू० सर्वात्मने शिरः पू० ततो लोकात्मा
सर्व भूतानां निमेष त्रुटि सञ्चयः । जन्म मृत्यु जरा व्याधि संसार भय नाशन इति मन्त्रेण पुष्पाणि समर्प्य धूपं दद्यात्० तन्मन्त्रः । वनस्पति रसो
[illegible] सुरभिर्गन्धः आघ्रेयः सर्व देवानां धूपोयं प्रतिगृह्यतां । ततस्त्वं ज्योतिः सर्व देवानां तेजसां तेज उत्तमः । आत्मज्योतिः परं धाम दी
पोयं प्रतिगृह्यतामिति दीपं । ततः अन्नं चतुर्विधं स्वादु भूतानां जीवनं परं ॥ नैवेद्यन्ते मया दत्तं देव प्रीत्या प्रगृह्यतां । ततः पूगीफलं सपत्रञ्च
कर्पूरञ्च मनोहरं । पवित्री कृतमत्यन्तं तांबूलं प्रतिगृह्यतामिति तांबूलं । ततः पूजा साद्गुण्यार्थं । दक्षिणां दत्वा निराजनं कुर्यात् । ततः कुम्भा
[illegible] भागे कुण्डं स्थण्डिलं वा निर्माय उद्यापनांग भूतं होमं करिष्य इति सङ्कल्प्य स्थण्डिलोप लेपनाद्यग्निप्रतिष्ठां कृत्वाऽन्वा दध्यात् ॥ तत्रैवं ॥
[illegible] जातवेदसमग्निमिध्मेन प्रजापतिं चाज्येन अग्नीषोमौ चक्षुषी आज्येन प्रधान देवमनन्तमश्वत्थसमित्तिलव्रीहियव घृत द्रव्यैः ।
प्रत्येकमष्टोत्तर शतसंख्याकाहुतिभिः पुनरनन्तं कालं संवत्सरं अर्धमासं मासं ऋतुं संवत्सर अग्निं वायु सूर्यं प्रजापतिं चरुणा एकैकया आहुत्या
[illegible] समिदाज्यचरुद्रव्येण प्रत्येकमष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्यया सर्वतो भद्र पीठ देवता आज्येनैकैकया हुत्वा स्विष्टकृतं प्रजापतिं
[illegible] इत्यादि सर्वमाज्यभागांतं कृत्वोक्त द्रव्यैः पुरुषसूक्तेन अतोदेवेत्यनेन वा इदं विष्णुरित्यनेन वा अन्वाधान क्रमेण १२८
जुहुयात्० ततः प्रायश्चित्त होम शेषं समाप्य लोकपालान् ग्रहांश्च पञ्चोपचारैः संपूज्य वलिदानं च कृत्वा गीतवादित्र निनदैः पूर्णाहुतिं जुहुयात् पुराण

श्रवणादिना रात्रिं जागरणेनातिवाहयेत्। ततो परेद्युः कृताह्निको यजमानः स्थापितानन्तं पूर्ववत्पूजयित्वा आचार्यं पूजयेत्। ततो गावो मम
शतः संत्वित्यनेन धेनुं संपूज्य सुरभी वैष्णवी माता नित्यं विष्णु पदे स्थिता। ग्रासं गृह्ण मया दत्तं गोमातस्त्रातु मर्हसीति मन्त्रेण गोग्रासं दत्वा तामा
चार्याय दद्यात् ततः प्रतिमां कलशशय्यादि युतामाचार्याय प्रतिपादयेत्। पूर्वं पुनर्निमन्त्रितान् चतुर्दश ब्राह्मणान् वस्त्रयज्ञोपवीतैः संपूज्य नानाविधा
न्नेनाचार्य्य सहितान् भोजयित्वा यथा शक्ति तेभ्यो दक्षिणां च दत्वा आचार्याय च दक्षिणां दत्वा क्षमापयेत्॥ तत्र मन्त्रः। क्रियाहीनं भक्तिक्षीणं द्रव्य
हीनं तथैवच। मन्त्रहीनं कृतं यत्र परिपूर्णं तदस्तु मे॥ इति पठित्वा स्वयं भुञ्जीतेति अनन्त व्रतोद्यापन प्रयोगः। अथ नष्टदोरक प्रायश्चित्तं॥
युधिष्ठिर उवाच॥ अनन्त व्रत माहात्म्यं कृत्स्नं कृष्ण त्वयोदितं। भगवन् दोररूपेण भाग्यदोपि महात्मनां। दोरं प्रमादतो नष्टं यदिस्याद्विदितं
जनैः। तदाकिं करणीयं स्याद्व्रतं त्रैलोक्य पावनं। श्रीकृष्ण उवाच। साधु पृष्टं त्वया राजन्वक्ष्यामि व्रत निष्कृतिं। फलं लोकस्य सर्वस्य रक्षार्थं
शृणु तत्क्रमात्॥ दोरे नष्टे महान् दोषः प्रभवेद्व्रतिनामिह॥ तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते चतुर्दशकलशान्यक्षान्न पूरितान्दक्षिणासहि
तान् तेभ्यो प्रतिगृह्ण द्विजश्रेष्ठेति मन्त्रभ्यां दद्यात्॥ गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः। विज्ञाप्य दोरनाशञ्च कृत्वा दोरं व्रती ततः।
हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परं। आज्यमन्नावधिश्रित्य दद्याद्विप्राय चासनं॥ अष्टोत्तरशतं हुत्वा मूलमन्त्रेण वैष्णवं॥ नाम मन्त्रेण
तत्कृत्वा द्वादशाक्षर संयुतं। केशवादि सकृद्हुत्वा प्रायश्चित्तंतु शक्तितः। पूर्णाहुतिं ततो हुत्वा होम शेषं समापयेत्। व्रतच्छिद्रं जपच्छिद्रं यच्छिद्रं
यस्य कर्मणि वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत्। मन्त्र हीनं क्रिया हीनं भक्ति हीनं जनार्दन॥ यत्पूजितं मया देव परिपूर्णं तद
स्तु मे। आचार्य पूजनं कार्यं दक्षिणाद्यैर्नृपोत्तम। एवं शांतिविधिं कृत्वा पूर्ववद्व्रतमादिशेत्। कृत्वा दोरं व्रती पश्चात्पूजितैः सह बन्धुभिः।
तस्मात्सर्व प्रयत्नेन प्रायश्चित्तं चरेत्सुधीः। प्रायश्चित्तमकृत्वा तु पुण्यं नस्याच्छुभम् क्वचित्। व्याधिना ग्रसितो देहः श्रिया संत्यज्यते गृहं॥ दोर

 स्यातिक्रमे चैव वदेत्सर्वमिदं बुधः। य इदं कुरुते पार्थ ह्यायुः पुत्रस्य सम्पदः। इति श्रीअनन्तदोरप्रायश्चित्तं। अथापरमनन्तोद्यापनं। युधि
 ष्टिर उवाच। त्वत्प्रसादात् श्रुतं कृष्ण मयानन्तव्रतं शुभं। इदानीं ब्रूहि मेनन्तव्रतोद्यापन मुत्तमं। श्रीकृष्ण उवाच॥ शृणु पाण्डव वक्ष्यामि व्रतोद्या
पन मुत्तमं। कृतेन येन सफलं व्रतं भवति निश्चितं। आदौ मध्ये तथा चांते व्रतस्योद्यापनम् भवेत्। यदा चित्तस्य स्थिरता संपत्तिः शुभकालतः।
तदोद्यापनं कुर्याच्छुभे लग्ने शुभे दिने। चतुर्दशसु वर्षेषु मुख्यन्तूद्यापनं मतं। कायशुद्धिं त्रयोदश्यामेकभक्तादिना चरेत्। ततः प्रात श्चतुर्दश्यां स्ना
त्वा देशे शुचौ शुचिः। संकल्पयेदुपवासं देशकालावनुस्मरन्। ततो नदीं तडागं वा गत्वा सर्वौषधै स्तथा। तिल कल्केनामकलकैः स्नायान्मार्जनपूर्वकं।
तीरे मण्डपिकां कुर्यात् गृहे वापि सुशोभितां। तन्मध्य उपविश्याथ देशकालौ स्मरेत्ततः। गणेशं पूजयित्वाथ पुण्याहं वाचयेत् द्विजैः। आचार्य्यं वर
येत् भार्य्यायुतं वेदांगपारगं। ब्रह्माणमृत्विजश्चापि चतुर्दश फलादिना। सर्वान्वस्त्रालंकरण जलपात्रादिनार्चयेत्। विरच्य सर्वतो भद्रं मण्डपां
तस्य मध्यगं। ब्रह्मादि देवता स्तस्मिन्नावाह्यापिच पूजयेत्। तन्मध्ये पङ्कजे धान्यं यथाशक्ति क्षिपेत्ततः। सौवर्णं राजतं वापि ताम्रजं वापि मृन्मयं।
कुम्भं न्यसेत्तदुपरि सुधा चन्दन चर्चितं। तस्मिन् जलं गन्धपुष्प फलपल्लव मृत्तिकाः क्षिप्त्वा रत्नहिरण्यंच वाससा वेष्टयेत्ततः। सौवर्णं राजतं ताम्रजातं
वंशजमेववा। पात्रं तदुपरिन्यस्य पट्टकूलादिकं शुभं। प्रसार्य्य तदुपर्यन्नमष्टदलं चन्दनादिना। पद्मं विरच्य तन्मध्येनंतमूर्त्तिं निधायच। पलेनवा तद
र्धेन तदर्द्धेनापिवा कृता। सौवर्णी रमया युक्तां शङ्खचक्रगदाब्जभां। आवाहनाद्युपाचारैः पूजयेत्सुसमाहितः। पञ्चामृतेन स्नपयेत्ततस्त्ववसनद्वयं। पट्टकू
लादिकं पीतमर्पयित्वार्चयेद्व्रती। गन्ध पुष्पादिभिर्नाना भक्ष्यैर्नाना फलैस्तथा। एवं संपूज्य विधिवद्विधिना वार्षिकेण तु। पुष्पैः संपूजयेदंगान्यनन्तस्यच
नामभिः। अनन्ताय नमः पादौ गुल्फे संकर्षणायच। कालात्मने जानुनीच जघनं विश्व रूपिणे। कटिंच विश्वनेत्राय मेढ्रं वै विश्वसाक्षिणे। नाभिञ्च १३०
पद्मनाभाय हृदयं परमात्मने। कण्ठं श्रीकण्ठनाथाय बाहू सर्वास्त्रधारिणे। मखञ्च वाचस्पतये चक्षुषी कपिलायच ललाटं केशवायेति। शिरः सर्वा

त्मने नमः तथा पादौपूजयामीत्येवमादि प्रपूजयेत्। एवं पूजांविधायैव रात्रौ जागरणं चरेत्। गीतवादित्रनृत्यादि पुराण श्रवणान्वितं। प्रतिमांच संप्रकुर्वीत पूजां गन्धादिना हरेः। नाना फलानि भक्ष्याणि चोपवासी निवेदयेत्। ततः प्रभात समये स्नात्वाचार्यादिभिः सह। अनन्तं पूजयेत्प्राग्वज्जुहुयात्पश्चिमे ततः। कुण्डे वा स्थंडिले कुर्यादग्नि स्थापन पूर्वकं। आज्यभागांतमाचार्यः स्वगृह्योक्त विधानतः। ततोऽश्वत्थ समिद्भिस्तु तदलाभेन्याभिदेव वा। दधिमध्वाज्य दुग्धैस्तु तिलैर्वैपायसेन च। आज्येनच प्रतिद्रव्य मष्टोत्तर सहस्रकं। अष्टोत्तर शतं चाष्टाविंशतिर्जुहुयात् क्रमात्। अतोदेवेति मन्त्रेण स्त्रीणां वै नाममन्त्रतः। प्रणवादि चतुर्थ्यंतनमोंतानन्तनाममतः। नाम मन्त्रैश्च जुहुयाच्चतुर्दशभि राद्‌रात्। ओं अनन्ताय स्वाहा। ओं कपिलाय स्वाहा। ओं शेषाय स्वाहा। ओं कालात्मने स्वाहा। ओं अहोरात्राय स्वाहा। ओं मासाय ओं अर्धमासाय ओं षड्‌ऋतुभ्यः स्वाहा ओं सम्वत्सराय ओं उषसे ओं कलायै ओं काष्ठायै ओं मुहूर्ताय समिदादिभि रेवच प्रत्येकं जुहुयात् क्रमात्। ततः स्विष्ट कृदादाय पूर्णापर्यांत माचरेत्। अपेतुरुष सूक्तंतु स्तुत्वानन्तम् सुरोत्तमं। पूर्णाहुतिंच जुहुयाद्धोमान्ते विश्वमित्यृचा। होमशेषं समाप्याथ कृत्वा आयुषमप्यथ। पूजयित्वा हरिं देवं आचार्यं पूजयेत्ततः। वस्त्रालङ्कार भूषाद्यै स्ततोऽङ्गेनुम् समर्चयेत्। पयस्विनीं सुशीलांच वस्त्रालङ्कारभूषितां। स्वर्ण शृङ्गीं रौप्य खुरां ताम्रपृष्ठीं सुवाससां कांस्य दोहां रत्नपुच्छां निष्ककण्ठीं सवत्सकां। गवां मन्त्रेण संपूज्य चाचार्याय समर्पयेत्। मन्त्रस्तु गंवामङ्गेष्विति गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहं। मन्त्र मेतम् समुच्चार्य वस्त्रालङ्कारभूषणैः। तत्पत्नीं पूजयित्वाथ ब्रह्माणं तोषयेत्ततः। ऋत्विजः पूजयित्वाथ तेभ्यो दद्याच्च दक्षिणां। चतुर्दशैव कुंभांश्च पक्वान्न परिपूरितान्। वस्त्रोपवीते दद्याचाप्यनन्तः प्रीयतामिति। आचार्यादीन् भोजयित्वा पूर्णतां वाचयेत्ततः। अथानन्तम् विसृज्यापि गृह्णीयादाशिषस्ततः। भक्तियुक्तो नमस्कृत्य ब्राह्मणां स्तान्विसर्जयेत्। ततो हृष्टो बन्धु युतो भुञ्जीत सुसमाहितः। एवं कृतेनन्तफल दाताऽनन्तोभवेन्नृणां इति भविष्यपुराणेऽनन्तव्रतोद्यापनं॥ अथ भाद्र शुक्लचतुर्दश्यां कदलीव्रतं। हेमाद्रौभविष्ये॥ यत्

॥ व्र ॥ प्रसिद्धं समाख्यातम् कदलीव्रत मुत्तमम्। तत्तेहं संप्रवक्ष्यामि लोकानुग्रहकारकम्। नाकपृष्ठे पुरा देवै र्यच्च गन्धर्व किन्नरैः। अप्सरोमरकन्याभिर्नाग
१३१ कन्याभिरर्चिता। संसारासारतां ज्ञात्वा कदली नन्दनेस्थिता। शुक्ल पक्षे चतुर्दश्यां मासि भाद्रपदे नृप। देयमर्घं वरस्त्रीभिः फलैर्नानाविधै स्तथा।
विरूढैः सप्तधान्यैश्च दीपाली रक्तचन्दनैः। दधि दूर्वाक्षतै र्वस्त्रै र्नैवेद्यैः घृतपाचितैः। जातीफलैः पूगफलैः पूजयेद्गत मत्सरः। तस्मिन्नहनि दातव्यं स्त्रीभि
रन्याभि रेवच। मन्त्रे णानेन चैवार्घं तं गृह्णीष्व नराधिप। चिन्तयेत् कदलीं नित्यम् कदलैः कामदीपितैः। शरीरारोग्य लावण्यम् देहि देवि नमोस्तुते
एवं यः पूजयेद्रंभां पुरुषो भक्तिमान्नृप। नारीवाऽनग्नि पक्वाशी चोन्मासांश्चतुरोपिवा। तस्मिन् कुलेनहि भवेत् काचिन्नारी कुलाटिनी। दुर्गता दुर्भगाथ्यङ्गा
स्वैरिणी पापकारिणी। भवेत् सौभाग्य सौख्यादि पुत्र पौत्रश्रिया युता। आयुष्मती जीववत्सा जीवेद्वर्ष शतम् भुवि। इति हेमाद्रौ कदलीव्रतम्। अथ
गुर्जरा चारप्राप्तम् कार्तिक्यां माघ्यां वैशाख्यां वा कदलीव्रतं। तत्र कदली पूजनम्। आगच्छ कदली देवि सौभाग्य फलदायिनी। रूपम् देहि जयम् देहि
यशो देहि सुनिश्चितं। आवाहनं। आगच्छागच्छ वरदे शङ्करेश महेश्वरि। करिष्यमाणां पूजां मे गृहाणानुग्रहं कुरु। आवाहनम्। कान्तस्वरमयं दिव्यं नाना
मणिगणान्वितम्। अधितिष्ठ महादेवि शिवेन सह पार्वति। आसनम्। दूर्वाक्षतादिभिर्युक्तम् स्वर्णपात्रे स्थितं शुभम्। पाद्यार्थं कल्पितं भक्त्या गृहाण पर
मेश्वरि। पाद्यम्। अर्घं चन्दनमिश्रितम् तोयं फल पुष्पसमन्वितम्। अर्घं गृहाण मे देवि भक्त्या दत्तम् शिवप्रिये। अर्घं। कर्पूरोशीरसुरभि शीतलं विमलं जलं
गङ्गायास्तु समानीतं गृहाणाचमनीयकम्। आचमनीयम्। गङ्गादि सर्व तीर्थेभ्यो मया प्रार्थनयाहृतम्। स्नानार्थं ते मया देवि गृहाणेदं सुरेश्वरि। स्नानं
यथा रम्भे विटङ्कस्ते शाखादीनां सदा भवेत्। तथा वर्द्धय मां देवि सेचनात्पार्वती प्रिये। सेचनमंत्रः। वस्त्रयुग्म मिदं दिव्यं कुङ्कुमाक्तं सुशोभनं गृहाणाच्छा
दनं देवि तथाच्छादय मां सदा। वस्त्रं। आचमनीयं। श्रीखण्डं चन्दनं दिव्यं घनसारं मनोहरं विलेपनं गृहाणेदं रुद्राणी प्रियवल्लभे। चन्दनं। माल १३१
ती चम्पकादीनि शतपत्रादिकानि च। सुगन्धीनि गृहाण त्वं पूजार्थं सुमनांसि नः। पुष्पाणि। अगुरुं गुग्गुलं धूपं दशाङ्गं सुमनोहरं। गृहा

धोदं हृप्तिकरं प्राणस्य दयितं परं ॥ धूपं ॥ चक्षुर्दं सर्व लोकानां तिमिरस्य निवारणं । आर्त्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ॥ दीपं ॥ नानापक्वान्न संयुक्तं रसैःषड्भिः समन्वितम् नैवेद्यम् विविधं भक्त्या कल्पितम् त्वं गृहाण मे ॥ नैवेद्यं ॥ कर्पूरैलालवङ्गादि नागवल्लीदलान्वितं । पुगीफलसमायुक्तं तांबूलं प्रतिगृह्यतां ॥ तांबूलं ॥ इदं फलं मयादेवि स्थापितं पुरतस्तव । तेन मे सफला हृत्तिर्भवेज्जन्मनि जन्मनि ॥ फलं ॥ हिरण्यगर्भ गर्भस्थं हेम बीजं विभावसोः । अनन्तम् पुण्यफलदमतः शान्तिम् प्रयच्छ मे ॥ हिरण्यं ॥ नीराजनं ॥ त्वमिन्द्राणिप्रिया नित्यं पार्वत्यास्वातिवल्लभा सतीनां कामदा पूज्या कामान् मे परिपूरय । प्रार्थना ॥ आश्रवो देवपत्नीनां पूजिता च श्रिया स्वयं सौभाग्यारोग्यमायुष्यं देहि रंभे नमोऽस्तुते । नमस्कारः । कदली कामदायिन्यै मेधायै ते नमोनमः । रम्भायै भूतिधारायै सर्व सौख्यप्रदे नमः । यथा यथाते प्रसवो वर्द्धते कदली ध्रुवं । तथा मनोरथानां मे प्रभवो वर्द्धते स्वयं । कदली दान मन्त्रः । अथ कथा ॥ युधिष्ठिर उवाच ॥ कृष्ण कृष्ण महाबाहो सर्व्व विद्या विशारद ॥ अनाथा नाथ विश्वात्मन् दीनदैन्यनि कृन्तन त्वमस्माकं परोबन्धुस्त्व मस्माकं परः सखा । त्वयाभिरचिता नित्यं विचरामोथ निर्भयाः ॥ किञ्चित्पृच्छामि देवेश कृपां कुरु वदस्वमे ॥ यद्गुह्यं सर्व्व धर्मेषु कृते यस्मिन्महत्फलं ॥ सौभाग्यारोग्यदं पुण्यं धन धान्याभिवृद्धिदं । अन्नाच्छादन पुत्रादि च दुर्लं श्रीनिकेतनं । तन्ममाचक्ष्व भगवन् लोकानामुपकारकं ॥ श्रीकृष्ण उवाच । शृणु राजन् प्रवक्ष्यामि व्रतानामुत्तमं व्रतं ॥ यत्कृत्वा सर्व दुःखेभ्यो नारी मुच्येत सङ्कटात् । वस्त्रान्न पान विच्छित्तिर्न भवेत्तु कदाचन ॥ पुरा मामेत्य वै कान्ते रुक्मिणी प्राणवल्लभा । प्रणिपत्याब्रवीद्दीना सर्वकामा मये शुभा ॥ सौभाग्यं वे कथं देव भवेज्जन्मनि जन्मनि ॥ सपत्नीनां श्रियं वीक्ष्य स्पृहा मे जायते प्रभो ॥ इति प्रियाया वचनं श्रुत्वाहं तां समब्रुवं ॥ रम्भा व्रतं कुरुष्वाशु सौभाग्यावाप्तये शुभं । कृते यस्मिन्व्रते देवि परं सौभाग्यमाप्स्यसि ॥ इति श्रुत्वा वचो देवी रुक्मिणी माममाषत ॥ रम्भा व्रतं भवे त्कीदृशो विधिः किञ्च पूजनं । केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितं । रुक्मिणीभाषितं श्रुत्वा पुनरेवाहमब्रुवं । रम्भा व्रत विधिं वक्ष्ये शृणु

 देवि यथोदितं । गोचर्म मात्रं संलिप्य सर्वतोभद्र मण्डलं । लिखेत्तस्यतया वर्णैर्नील पीतैः सितासितैः । ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् ॥ कल
 शोपरि संस्थाप्य वैणवे पटले शुभे ॥ उमा महेश्वरौ तत्र मूलमन्त्रेण पूजयेत् ॥ अथवा स्वस्तिकं कुर्यात्पद्ममष्टदलं तु वै । ततः साग्रां सपर्णां हि सस्य
स्त्तां सुशोभनां । समूलां कदलीं स्थाप्य पूजयेत्तां यथा विधि । उत्तमोदकमानीय सेचयेत्तां समाहिता । यथा रम्भे विटद्धिस्ते शाखादीनां सदा
भवेत् । तथा वर्द्धय मां देवी सेचनात्पार्वतीप्रिये ॥ यया यथाते प्रसवो वर्द्धते कदली तव । तथा मनोरथानां मे प्रभवो भवतु स्वयं ॥ एवं
संपूज्य विधिवद्भक्तियुक्तेन चेतसा । रात्रौ जागरणं कुर्याद्गीतवादित्र निस्वनैः । एवं या कुरुते नारी व्रतामुत्तमं व्रतं ॥ भुक्ता तु विविधान् भोगान्
सौभाग्यं विन्दते ध्रुवं ॥ एवं यः कुरुते देवी कदली व्रतमुत्तमं । तस्मात्कुरु विधानेन यथोक्त फलमाप्स्यसि ॥ इति श्रुत्वा विधानेन चकार व्रतमुत्तमं ॥
अवाप सकलं कामं मनसा यदभीप्सितम् ॥ अन्यच्च शृणु राजेन्द्र व्रतस्य फलमुत्तमम् । अत्याश्चर्यकरं पुंसां शृणुष्वावहितो भवान् ॥ द्यूते यदा
जिता पूर्वं कृष्णा नीता सभां प्रति । दुःशासनेन दुष्टेन द्रौपदी मुक्तमुर्द्धजा ॥ आकृष्यमाणे वस्त्रेतु चिंतमाम स्मरत्तदा । तूर्णं तत्र गतो राजन्
द्रौपद्याः त्राणनाय वै ॥ अदृश्यमाणो कृष्णायै व्रतम् समुपदिष्टवान् ॥ तदा कर्त्तुमशक्येतु व्रतेस्मिन् राजसत्तम । रुक्मिण्या चरितं पूर्वं यदेतद्व्रतमुत्त
मम् । तस्य पुण्य फलं दत्तं कृष्णायै राजसत्तम । तत्कालमेव वस्त्राणां समृद्धिरभवत्पुरा ॥ दुःशासनेन दुष्टेन आचितेभ्वं शुकेषुच ॥ प्रादुर्भवानि
वस्त्राणि नानावर्णानि भारत ॥ खिन्नोदुःशासनः पापो विररामांशुक ग्रहात् । तावत् बभूव वस्त्राणि कदली गर्भवन्नृप ॥ इत्थं व्रत प्रभावोयम्
गुह्योपि कथितो मया । कारयाशुविधानेन पूर्णकामो भविष्यसि ॥ अथोद्यापनम् ॥ युधिष्टिर उवाच ॥ कस्मिन्मासे तिथौ कस्यामाचरेत् ध्रुवमुत्त
मम् । कथम् भावेन किम् कार्यं तन्मांचक्ष्व केशव ॥ श्रीकृष्ण उवाच ॥ कार्त्तिके माघ मासे वा वैशाखे चेतरे तथा पुण्यमासि प्रकुर्वीत पौर्णमास्यां 
शुभे दिने तिथि त्रयम् वर्जयीत शुभायां सुसमाहितः । यस्मिन्देशे न लभ्येत कदली राजसत्तम ॥ सुवर्णस्य शुभां तत्र कृत्वा पूजां समाचरेत् ॥ यदि

लभ्येत कदलीमारोप्यादौ प्रपूजयेत् । यावत्तस्यां फलं तावत् सिंचेन्नीरेण भूपते । फलेषुपक्केमेच्छवस्याः पश्चाद्विप्रान् समाह्वयेत् । प्रभाते विमले स्नात्वा न
द्यादौ विमलेजले । धृते वाससी गृह्य कृत्वा सन्ध्यादिकर्मच । सरलिमाचं कृत्वा तु स्थंडिलं वाग्यतः शुचिः । अग्निं संस्थाप्य विधिवत्तच होमं समाचरेत् ।
शतमष्टोत्तरं विद्वान् तिलाज्याहुतिभिस्तथा । एकाग्रचित्त संहृष्टः कृतीव्याहृतिभिः पृथक् । ब्रह्मादिभ्यो देवताभ्यो नाममन्त्रैः पृथक् पृथक् । आचार्यंच
सपत्नीकं वस्त्राद्यैः पूजयेत्ततः । धेनुं पयस्विनीं वत्सयुतां रत्नैः स्वलंकृतां । स्वर्ण शृङ्गीं रौप्य खुरां कांस्यदोहनिकायुतां । ताम्रपृष्ठीं रत्न पुच्छीं चन्द्र घण्टा सम
न्वितां । समभ्यर्च्य वेद विदुषे आचार्याय निवेदयेत् । पादुकोपानहौच्छत्रं अलङ्कारानानेकशः । यथाशक्ति प्रदेयानि व्रतस्य परिपूर्त्तये । चतुर्विंशत षोडश
वा युग्मान्याहूय संयतः । वस्त्रालङ्कार गन्धाद्यैः पूजयित्वातु भोजयेत् । वायनानिच देयानि वंशपात्रैस्त शक्तितः । दद्याच्च दक्षिणां सम्यग्यथावित्तानुसार
तः । अन्येभ्योपि यथाशक्ति दद्यादन्न सुसंस्कृतं । क्षमापयित्वा तान् देवी तव्रस्य परिपूर्णतां । वाचयित्वा यथान्यायमच्छिद्रत्वं चभाषयेत् । दीनानाथान् प्रत
र्प्याशुस्वयं भुञ्जीत वाग्यतः । एव यः कुरुते देवि कदली व्रतमुत्तमं । भुक्तातु विविधान् भोगान् सौभाग्य विन्दते ध्रुवम् । तस्मात्कुरु विधानेन यथोक्तं फल
माप्स्यसि । एवं नारी नरोवापि यः कुर्यात्कदली व्रतं । सर्वान् कामानवाप्नोतिस्वर्गलोके महीयते । इति भविष्योत्तरे कदलीव्रतं ॥ अथ पूर्णिमान्तमासेन का
र्त्तिककृष्णचतुर्दशी नरकचतुर्दशी । तस्यां तिल तैल स्नानमुक्तं भविष्ये । कार्त्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये । तिलतैलेन कर्त्तव्यं स्नानं नरकभीरुभिरिति
चाश्विनस्यासिते पक्षे चतुर्दश्यां विधूदये । कर्त्तव्यं मङ्गलस्नानं नरैर्निरयभीरुभिरिति कालादर्शधृतमात्स्यममां तमासेन ज्ञेयं । अथ चन्द्रोदयस्य कर्मकाल
त्वात्तद्व्यापिनी चतुर्दशी तैलाभ्यंगस्नानादौ ग्राह्या दिनद्वये चन्द्रोदयव्याप्तौ तु पूर्वा तैलाभ्यंगात्प्राग् यमतर्पणादि बहुकर्मकालव्याप्ति लाभात् । त्रयोदशी
युतायांच चतुर्दश्यामिषासिते । विधूदये नरः स्नात्वा नरकं नैव पश्यतीति गौडग्रन्थधृत स्मृत्यन्तर वचनाच्च । दिनद्वये तदव्याप्तावपिपूर्वैव सा च
द्विधा भवति त्रयोदश्यधिकरणक चन्द्रोदयोत्तरं रात्रिशेषे प्रविष्टा चतुर्दशी पर दिने क्षयवशाच्चन्द्रोदयात्पूर्वमेव समाप्तेत्याद्यःपक्षः सूर्योदयोत्तरम् क्षि य

॥ त्र ॥ त्थ पित्रयोदशी तदुत्तरम् प्रतिष्टा चतुर्दशी चन्द्रोदय कालात् पूर्वमेवसमाप्तेति द्वितीयः तत्राद्ये दिनद्वये मुख्यकालालाभाविशेषेपि। पूर्व विद्ध चतुर्दश्यां का
१३३ र्त्तिकस्य सितेतरे। पत्ते प्रत्यूष समये स्नानं कुर्यात्प्रयत्नत इति पृथ्वीचन्द्रोदयधृतस्कांदे न प्रत्यूषस्य कार्तिके कृष्णपक्ष्य चतुर्दश्यां दिनोदय इति लैङ्गेन
सूर्योदयस्यच स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मण इत्यनेन गौणकालत्वेनाभिहितोत्तर कालव्याप्ति लाभात्। अत्र तैलाभ्यङ्गस्य रात्रि कर्मत्वाद्रात्रावेव
वर्त्तमानया त्रयोदश्या विद्धाभवति। द्वितीयेपि पूर्वैव त्रयोदशी यदाप्रातःक्षयं याति चतुर्दशी। रात्रिशेषेत्वमावस्या तदाभ्यंगे त्रयोदशीति समयमयूखे चन्द्र
प्रकाशधृताचारानु संवादि वचनात्। यदि तु हेमाद्र्यादिभिरलिखनादत्रानाश्वासस्तदातैले लक्ष्मी जले गङ्गा दीपावल्याश्चतुर्दशी। प्राप्यतेतिशेषः
प्रातः स्नानन्तु यः कुर्याद्यमलोकं न पश्यतीति ब्राह्मवचनात्प्रातःकालव्यापिनी पूर्वैव अत्र चन्द्रोदये चतुर्दश्याः सत्वेपि चन्द्रोदयएवाभ्यङ्ग
स्नानादि कार्यं तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिःपरेहनि। तावान् ग्राह्यः सपूर्वेद्युरदृष्टोपि स्वकर्मणीति वाक्येन त्रयोदश्यन्ते चतुर्दशी
ह्रास प्रक्षेपेण चन्द्रोदये पारिभाषिक चतुर्दशी सत्वात्। पूर्वेद्युः पूर्वतिथ्यादिषु स्वकर्मणि कर्त्तव्यं। यत्र पूर्वा वा परा वा प्रमाणांतरेण ग्राह्या तिथिग्राह्य
त्वेन प्राप्तात्रानेन मुख्ये काले ग्राह्यतिथेरसत्वेपि क्षयादि प्रक्षेपेण शास्त्रतस्तत्र तिथेस्सत्वान्मुख्यकाल एव कर्मानुष्टानं कार्यमिति ज्ञाप्यते नत्वेतेना
प्राप्तं कर्त्तव्यत्वमुच्यते। तथा सति जन्माष्टम्यादौ दिनद्वये कर्मकालव्याप्तौ पूर्वविद्धा प्रसज्येत शास्त्रतस्तिथेः सत्वात् मुख्यकाले कथमप्यनुष्टाना
सभवे गौणकाले कर्तव्यत्वं शास्त्रांतरेण बाध्यते। तथाच प्रकृते चतुर्दश्याः खण्डत्वे पूर्वोक्तस्कांदेन पूर्वाप्राप्ते ग्राह्यातिथि चतुर्दशीगतक्षयस्यैव
पूर्वतिथौ प्रक्षेपो नत्वमाक्षयस्य चतुर्दश्यां। एव मेव तातचरणा नच्यास्त्र एतेन विधेयान्वयिन्याः पूर्वेद्युःपदोक्तायास्तिथेरेव स्वशब्देन निर्देशादमागतक्ष
यस्यैव चतुर्दश्यां प्रक्षेपेण कर्मकाल व्यापि निर्णयः कार्यः स्वशब्दस्य स्वपितृभ्यो दद्यादित्यादौ तथैवव्युत्पत्तेः तेन दिनद्वये चन्द्रोदये चतुर्दश्यभावेचन्द्रो १३३
दयव्यापिन्यांय स्नानं कार्यं। इषासित चतुर्दश्यामिंदु क्षयतिथावपि ऊर्जादौ स्वाति संयोगे तदा दीपावली भवेदिति नारदवचनेऽपि शब्देन चतु

र्दशी स्नानेऽमायानुकल्पत्वेन विधानस्योद्देश विशयएव प्रवृत्त्यौचित्यादिति परास्तं। अमान्तमासेनाश्विनकृष्णचतुर्दश्यमावास्ययोः ऊर्जादावित्यन्तेन कार्ति
क शुक्लप्रतिपद्येवं संलग्नतिथित्रये दीपोत्सवस्नानादिः कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयं॥ तैलेलक्ष्मीर्जले गङ्गादीपावलितिथौ वसेत्। अलक्ष्मीपरिहारा
र्थमभ्यंगस्नानमाचरेदिति नारदेनैवाग्रे स्पष्टीकृतत्वात्। चतुर्दशीस्नानेऽमाया अनुकल्पत्व विधिरयमिति यत्किञ्चिदेतत्। तस्माद्दिनद्वये चन्द्रोदये चतु
र्दश्यभावे त्रयोदश्यामेवाभ्यंगस्नानादि कुर्यादिति सिद्धम्। यत्तु कालादर्शधृत मात्स्ये॥ मृगांकोदय वेलायां भवेद्यदि त्रयोदशी। दर्शे वा मङ्गल
स्नानं दुःखशोका शुभप्रदमिति त्रयोदश्यादिनिषेधेप्यरुणोदयतोन्यत्र रिक्तायां स्नाति योनरः। तस्याब्दिकभवो धर्मो नश्यत्येव नसंशय इति
भविष्येयःस नहि निन्दान्यायेन चतुर्दशीस्तुत्यर्थोक्तेश्चोऽन्यथोक्तोदाहरणे विहितस्नानादेर्लोपापत्तेरिति दिक्॥ पूर्वोक्त स्नाने विशेषो ब्राह्मे॥ तैले
लक्ष्मीर्जले गङ्गादीपावल्याश्चतुर्दशी। प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यति। अपामार्गमथो तुम्बी प्रपुन्नाटमथापरं। भ्रामयेत्स्नानमध्ये तु नर
कस्य क्षयाय वै॥ अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि इति अत्र यमलोकदर्शनाभाव कामः स्नास्ये इति प्रयोगः। प्रपुन्नाटश्चक्रमर्दकः
तद्भ्रामणमन्त्रः सीतालोष्टसमायुक्तः सकंटकदलान्वितः। हरपापमपामार्ग भ्राम्यमाणः पुनः पुनरिति। तथा च नरकस्य क्षयार्थमपामार्गशि
स्वया सीतालोष्टसमायुक्तया स्नानमध्ये शिरसउपरि भ्रामणं पुनः पुनः कार्य्यं उक्त मन्त्रेण। तच्छाखालाभे तत्पत्रैर्वा कार्य्यं तदलाभे तुंबी पुन्न
ाटान्यतरेणवा। स्नानानन्तरकृत्यं तत्रैव। ततश्च तर्पणं कार्य्यं धर्मराजस्य नामभिः। नामानिच यमाय धर्मराजाय मृत्यवे चांतकाय च।
वैवस्वताय कालाय सर्व भूत क्षयाय च। औदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नम इति तर्पणे विशेषः तत्रैव
यज्ञोपवीतिना कार्य्यं प्राचीनेनन वेनवा। देवत्वं पितृत्वञ्च यमस्यास्ति द्विरूपतेति। विशेषांतरं स्कांदे दक्षिणाभि मुखो भूत्वा तिलैः सम्यक् समाहितः
देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो भवइति। इदञ्च जीवत्पितृकेणापि कार्यम् जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः कृष्णौः तिलै स्तयान्येश्च कुर्यात्तर्पण

 निष्कृयेति पाद्मोक्तैः अन्यैः शुक्लैः । देवत्व पक्षे शुक्लतिलैः पितृत्व पक्षे कृष्णतिलै रिति व्यवस्था । एवं स्नानाद्यवश्वितमेव प्रातःकाले यमादीन् संतर्प्य प्र
 दोषे दीपदानं कार्य्यं ॥ तदुक्तं ब्राह्मे । ततः प्रदोष समये दीपान्दद्यान्मनोरमान् । ब्रह्म विष्णु शिवादीनां मठेषु भवनेषु च । प्राकारो
द्यानवापीषु प्रतोली निष्कुटेषु च । मन्दुरासु विविक्तासु हस्तिशालासु चैवहीति । विशेषांतरं लैङ्गे ततः प्रेत चतुर्दश्यां भोजयित्वा तपोधनान् । शैवान्वि
प्रांस्तथ परान् शिवलोके महीयते । दानं दत्वा तु तेभ्यश्च यमलोकं न गच्छति । तथा माषपत्रस्य शाकेन भुक्ता तत्र दिने नरः । प्रेत कृष्णचतुर्दश्यां
सर्व पापैः प्रमुच्यते ॥ तथा नक्तं भोजनमप्युक्तं तत्रैव । नक्तम् प्रेतचतुर्दश्यां यः कुर्य्याच्छिवतुष्टये । न तत् क्रतुशतेनापि प्राप्यते पुण्यमीदृशमिति ।
अथ कार्त्तिक शुक्लचतुर्दश्यां वैकुण्ठ चतुर्दशी व्रतं । तदुक्तम् सनत् कुमार संहितायां । वर्षे वै हेमलंवाख्ये मासे श्रीमति कार्तिके । शुक्लपक्षे चतुर्दश्या
मरुणाभ्युदयं प्रति । महादेव तिथौ ब्राह्मे मुहूर्त्ते मणिकर्णिके । स्नात्वा विश्वेश्वरो देव्या विश्वेश्वर मपूजयत् । संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यन्नदृाक
रोत् । स्वयमेव स्वमात्मानं चरत्याशुपतव्रतं । ततः प्रभाते विमले कृत्वा पूजां महाद्भुतां । दण्डपाणेर्महानाम्नि वनेस्मिन् कृतपारणः । श्रीमद्भवा
नीसदनं प्रविश्येदमनुत्तममिति सनत्कुमारसंहितोक्तेः अत्र परकृति सरूपेणानेनार्थवादेन स्नात्वा विश्वेश्वरः पूज्य इति विधिः कल्पते । ततश्च प्रा
भातिक पारणाविधेश्च पूर्वदिने उपवासः सच चतुर्दशी युक्तारुणोदयवत्यहोरात्रे कार्य्य इति तातचरणाः । शिवरहस्ये । पुराच कार्त्तिके मासि चतुर्द
श्यां सुराः शिवे । सायङ्काले समागत्य पूजां कृत्वा स्थिता मुदेत्याद्युक्ता ततःपरं ऋषिगणाः सर्वेपि मदनुग्रहात् ॥ सपूज्यनिशि यत्नेन चक्रुर्जागरणं शि
वे । कार्त्तिकस्य चतुर्दश्यां विल्वैश्च कनकाह्वयैः । द्रोणपुष्पैश्च पूजांच चक्रुर्मयि महेश्वरि ॥ ततः पूजामुद्रा । रात्रिं नीत्वा प्रयत्नेन मत्कथा श्रवणादिभिः ।
ततोरुणोदये जाते स्नात्वा स्नात्वा च भस्मना । त्रिपुण्ड्रधारणं कृत्वा कृत्वा रुद्राक्षधारणं ॥ सन्ध्यां समाप्य विश्वेशं समभ्यर्च्य यथाविधि । मद्भक्तान् भोज 
यामासु ऋषयो बुभुजुस्ततः । यः शुक्लोर्जचतुर्दश्यां उपोष्य प्रयतः शिवे । मामर्चयति विश्वेशं समुक्तो भवति ध्रुवं । मल्लिङ्ग पूजनं पुण्यं सर्वदा सर्वकामदं

ऊर्जे शुक्ल चतुर्दश्यामर्चितं बहुपुण्यदमिति । पूर्वमप्युक्तं पुण्येऽस्मिन् कार्त्तिके मासि सोमवारेषु शङ्करं । उपोष्याभ्यर्चयेत् प्रीत्या निशि यामचतुष्टये । उ
र्ज्जशुक्लचतुर्दश्यां काश्यां विश्वेश्वरं प्रभुम् । समर्चयितुमिन्द्राद्यैर्गम्यते स्वाभिरादरादित्यादि ॥ इति वैकुण्ठचतुर्दशी ॥ अथामांत मासेन माघकृष्णचतुर्द
श्यां शिवरात्रि व्रतं ॥ तच्चार्द्धरात्रव्यापिन्यां कार्य्यं । तदुक्तं नारदीयसंहितायां । अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी । शिवरात्रि व्रतं तत्र सोऽश्वमे
धफलं लभेत् ॥ ईशान संहितायामपि । माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गमभूत्तत्र कोटिसूर्यसम प्रभं ॥ तत्कालव्यापिनी ग्राह्या
शिवरात्रिव्रते तिथिरिति । माघकृष्णत्वं चात्रामान्तमासपरत्वेन अतएव चतुर्दश्यां तु कृष्णायां फाल्गुने शिवपूजनं । तामुपोष्य प्रयत्नेन विषयान् परि
वर्जयेदिति । सुमन्तु वचने पूर्णिमांतमासेोप्युक्तः । महानिशाच । महानिशा द्वे घटिके रात्रेर्मध्यमयामयोरिति देवलोक्तेर्निशीथरूपैव । एवं चार्द्धरात्र
व्यप्त्यापि सैत्परएव । दिनद्वये निशीथव्याप्तावव्याप्तौ वापरैव । प्रदोषव्याप्ति लाभात् निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा । आदित्यास्तमये काले च
स्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमेति । त्रयोदशी यदा देवि दिनभुक्ति प्रमाणतः । जागरे शिवरात्रिस्यान्निशि पूर्णा चतुर्द
शी प्रदोषव्यापिनी ग्राह्या शिवरात्रि चतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् । अहो रात्रि व्रतं यत्र एकमेकतिथौ गतम् । तस्याःमुभयो
र्व्याप्यावरेत्तद्व्रतं व्रतीति कामिक शिवरहस्य सूर्य्यगरादि वचनाच्च नच पूर्वदिनेऽधिक व्याप्तिवशात्पूर्वैवेति शंक्यं एतस्य भूयसास्यात्तद्धर्मत्वमिति न्याय
मात्रत्वेन वचनबाधकत्वा योगात् प्रत्युत निरुक्तवचनैरेव तद्बाधाच्च पूर्वदिने निशीथे परदिने प्रदोषे तदा पूर्वैव अर्द्ध रात्रात्पुरस्ताच्चेज्जया योगो यदा भवेत्
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियेति पाद्मे॥ जयायोगस्य विहितत्वात् । महतामपि पापानां दृष्टावै निष्कृतिः पुरा । न दृष्टा कुर्व्वती पुंसां कुहूयुक्तां
तिथिं शिवामिति स्कान्दे दर्शयोगस्य निन्दितत्वाच्च यत्तु कालतत्वविवेचने नव्यैर्दिनद्वये निशीथव्याप्तावेव पूर्वविद्धाविधायकान्युत्तरविद्धानिषेधकानि वचनानि
सावकाशानीत्युक्त्वा पूर्वैव ग्राह्येत्युक्तम्॥ तन्न समंजसं निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभेति माधवाद्युदाहृत कामिकवचन विरोधात् ; नच पूर्वावि

॥ व्र ॥ द्वाविधायकानामुत्तरविद्वा निषेधकानां विषयालाभ इति शंक्यं प्रदोष निशीथयोर्विरोधे निशीथग्राह्यताया उपोद्घलकत्वेन विषयलाभस्यानुपदमेवोक्त
१३५ त्वात् प्रदोषव्याप्तिलाभाच्च यदा दिनद्वये निशीथा व्याप्तिस्तदा परैव माघासिते भूत दिनं हि राजन्नुपैति योगं यदि पञ्चदश्यां जया प्रयुक्ता नतु जातु कुर्या
च्छिवस्यरात्रिः प्रियकृच्छिवस्येति हेमाद्रिमाधवाद्युदाहृतपुराणवचनादपि परैव अस्मिंश्च व्रते उपवास जागरणपूजानां फलसम्बन्धात्त्रयमपि प्रधानं सच
नागर खण्डे । उपवास प्रभावेण बलादपि च जागरात् । शिवरात्रेस्तथा तस्यां लिङ्गस्यापि प्रपूजया । अक्षयान् लभते भोगांछिवसायुज्यमाप्नुयादिति इदं
व्रतं संयोग पृथक्त्वन्यायेन नित्यं काम्यं च । परात्परतरं नास्ति शिवरात्रिः परात्परं । न पूजयति भक्तेदं रुद्रं त्रिभुवनेश्वरं ॥ जन्तुर्जन्मसहस्रेषु युज्यतेनात्र
संशय इति स्कान्दे । अकरणे प्रत्यवाय श्रुतेर्नित्यं शिवं च पूजयित्वा यो जागर्ति चतुर्दशीं । मातुःपयोधररसं न पिबेत्सकदाचनेत्यादि तत्रैव च फलश्रु
तेः काम्यमिति । विस्तरस्तु तातचरण कृतसमयमयूखे द्रष्टव्यः । पारणंचै तद्व्रते स्कान्दे तिथिमध्ये तदन्ते चोक्तं । उपोषणं चतुर्दश्यां चतुर्दश्यान्तु पारणं ।
कृतैः सुकृत लक्षैश्च लभ्यते यदिवा नवा । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्तिवै ॥ संस्थितानि भवन्तीह भूतायां पारणे कृते । तिथ्यन्ते पारणं
कुर्याद्विना शिवचतुर्दशीं । तथा । कृष्णाष्टमी स्कन्दषष्टी शिवरात्रिस्तथैव च । एताः पूर्वयुताः कार्याः तिथ्यन्ते पारणं भवेदिति अनयोर्विरुद्धवचनयो
र्व्यवस्थैवं माधवेनोक्ता । यामत्रयोर्द्ध्वगामिन्यां प्रातरेवहि पारणेतिवचनाद्यामत्रयमध्ये चतुर्दशी समाप्तौ तिथ्यन्ते तदुत्तरगामित्वेतु प्रातस्तिथि मध्य
एवेति । तात चरणास्तु तिथिमध्यकालो मुख्यस्तदन्तकालो गौण उत्तरभावित्वादित्याहुः केचित्तु शक्तस्तिथ्यंते अशक्तस्तिथिमध्यएवेत्यूचुः नच
कृतैः सुकृत लक्षैस्चेत्यादि स्तुतिरनर्थिकेति वाच्यं ॥ आपः स्वभावतो मेध्याः किं पुनर्वह्नि संयुता अतःसन्तः प्रशंसन्ति स्नानमुष्णेन वारिणेत्यादिवदश
क्तं प्रत्येव तिथिमध्यपारणायास्तावकत्वेन सार्थकादिति । परेतु तिथ्यन्तपारणाविधानं न शिवरात्रिपरं किन्तु यत्राष्टम्यादौ तिथ्यन्तपारणा प्राप्तिरस्ति १३५
तत्परमेव । शिवरात्रि ग्रहणन्तु पूर्वविद्वाविधानार्थमिति वस्तुतस्तु सात्वस्तमयपर्यंतव्यापिनी चेत्परेऽहनि । दिवैवपारणं कुर्यात्पारणान्नैव दोषभागि

ति शिवरात्रिप्रकरण पठित कालादर्शादि लिखित वचनाद्दिवातिथि समाप्तौ तिथ्यान्तेऽन्यथा तन्मध्य एवेति इति निर्णयः। अथ व्रतविधिः। मासपक्षाद्यु
ल्लिख्य मम पाप क्षयार्थं अक्षय भोगमोक्ष प्रात्यर्थं शिवरात्रिव्रतं करिष्य इति सङ्कल्प्य षोडशोपचारैः शिवपूजां कुर्यात्॥ तत्रपूजा॥ आगच्छ देवदेवेश
मर्त्यलोक हितेच्छया। पूजयामि यिधानेन प्रसन्नः सुमुखोभव। अवाहनं। पादासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितं। भूषितं विविधै रत्नैः कुरु त्वं पादुका
सनं। आसनं। गङ्गादि सर्वतीर्थेभ्यो मया प्रार्थनया हृतं तोय मेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां। पाद्यं। गन्धोदकेन पुष्पेन चन्दनेन सुगन्धिना। अर्घं
गृहाण देवेश भक्तिं मेह्यचलां कुरु। अर्घं। मन्दाकिन्याः समानीतं हेमांभोरुहवासितं। स्नानाय ते मया भक्त्या नीतं स्वीक्रियतां विभो स्नानं। वस्त्रम्
सूक्ष्मम् दुकूलंच देवा नामपि दुर्लभं। गृहाणत्वमुमाकांत प्रसन्नो भव सर्वदा। वस्त्रम्। श्रीखण्डञ्चन्दनं दिव्यं मलयाचल सम्भवं। विलेपनं सुरश्रेष्ट गृहाण
परमेश्वर। गन्धं। यज्ञोपवीतं सहजं ब्रह्मणा निर्मितं पुरा। आयुष्यमभव वर्चस्व मुपवीतं गृहाणमे। यज्ञोपवीतं। मालत्यादीनितिपुष्पम्। वनस्पतिरसो
धूपो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्व देवानां धूपोयं प्रतिगृह्यतां। धूपं। आज्यं त्रिवर्त्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्य तिमि
रापहं। दीपं। नैवेद्यं गृह्यतां देव नैवेद्यं पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं। कर्पूरादि समायुक्तं तांवूलं प्रतिगृह्यतां तांवूलं। इदं फलं मया इतिफलं।
हिरण्य गर्भ गर्भस्थं हेमवीजं विभावसोः। अनन्त पुण्यफलद मतः शांति प्रयच्छमे दक्षिणा पुष्पांजलिं नीराजनं प्रदक्षिणा। अथकथा। श्रूयतां धर्म सर्वस्वं
शिवरात्रौ शिवार्चनं। प्रत्येद्येन विधानेन स्वर्गं पुण्येन कर्मणा कृत्वा स्नानं शुचि र्भूत्वा धौतवस्त्रसमन्वितः। स्थापयेद्देवदेवेशं मन्त्रैर्वेद समुद्भवैः। ततः
पूजा प्रकर्त्तव्या पूर्वोक्त विधिना ततः। नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर। पूजां गृहाण महत्तां महेश प्रथमे पदे। प्रथम प्रहरपूजा पूर्वे नंदि महा
कालौ गण भृङ्गीच दक्षिणे। वृषष्कन्दौ पश्चिमेच देशकालौ तथोतरे। गङ्गाच यमुनाचैव पार्श्वेचैव व्यवस्थिते। नमोव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरांतक
पूजां गृहाण देवेश यथा शक्त्योपपादितां। द्वीतिये वद्धोहं विविधैः पाशैः संसार भयवन्धनैः। पतितं मोहजाले मां त्वं समुद्धर शंकर। तृतीये चतुर्थे

॥ व्र ॥ षाद्यवत् नमः शिवाय शांताय सर्वपाप हरायच । शिवरात्रौ मया दत्तं गृहाणार्घं प्रसीद मे । द्वितीये । दुःखदारिद्र भावैश्च दग्धोहं पार्वतीप्रते । मांत्रै
१३६ त्राहि महादेव गृहाणार्घं नमोस्तुते । तृतीयेकिं न जानासि देवेश तवद्भक्तिं प्रयच्छमे । स्वपादाग्रतले देव दास्यं देहि जगत्पते । चतुर्थे कुर्वंति येवत्स
रकां शिवस्य पूजां सुभक्त्या तु यथा कथञ्चित् । सद्यत्प्रयांत्येव शिवस्य लोकं व्याधोपि यातोद्यहृदोशमस्मात् । इति पूजा अथ कथा सूत उवाच । सका
रणमशेषस्य जगतः सर्वदा शिवः । गो ब्राह्मण नृपाणांच शिवं भवतु सर्वदा । कैलासशिखरासीनं देवदेवं जगद्गुरुं । पञ्चवक्त्रं दशभुजं त्रिनेत्रं शूलपा
णिनं । पिनाकशोभितकरं खड्गखेटकधारिणं । कपालखट्वांगधरंशशांक कृतशेखरं कपालधारिणं भीमं वरदंचाभयप्रदं भस्मांगव्यालशोभाद्यमस्थि मालावि
भूषितं । नीलजीमूतसंकाशं सूर्यकोटि समप्रभं । क्रीडंतंच शिवं तत्रगणैःश्च परिवारितं । विसृज्य देवताः सर्वास्तिष्टंतं परमेश्वरं । तं दृष्ट्वा देवदेवेशं प्रहृष्टो
त्फुल्ल लोचना । पार्वती परिपप्रच्छ विनयावनता स्थिता । गौरी प्रोवाच भर्त्तारं विस्मयोत्फुल्ल लोचना । पार्वत्युवाच । कथयस्वप्रसादेन यद्गोप्यं व्रतमुत्तमं ।
श्रुतास्त्वयोक्ता देवेश व्रतानां निर्णयाःशुभाः । तथावै दानधर्माश्चतीर्थधर्मास्त्वयोदिताः । नास्ति मे निश्चयो देव भ्रान्ता हंच पुनः पुनः । तस्माद्वदस्वमे दे
व एकं निःसंशयं प्रभो । व्रतानामुत्तमं देव भुक्ति मुक्ति प्रदायकं । तदहं श्रोतुमिच्छामि कथयस्व ममप्रभो । ईश्वर उवाच । शृणु देवि परं गुह्यं व्रताना
मुत्तमं व्रतं । यन्नकस्यचिदाख्यातं रहस्यं मुक्तिदायकं । येनैव कथ्यमानेन पापो विलयतां व्रजेत् । तदहं कीर्त्तयिष्यामि शृणुष्वेकमनाः प्रिये । माघांते कृष्ण
पक्षेतु अविद्धा या चतुर्द्दशी । शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा । दानैर्यज्ञैः स्तपोभिश्च व्रतैश्च विविधैरपि । न तीर्थैस्तद्भवेत्पुण्यं यत्पुण्यं शिवरात्रितः
शिवरात्रि समं नास्ति व्रतानामुत्तमं व्रतं । अज्ञानात् ज्ञानतो वापि कृत्वा मोक्षमवाप्नुयात् । मृतास्ते निरयं त्यक्त्वा गतास्ते शिवसन्निधौ । सर्वं मङ्गल
दीवाच सर्वा मङ्गलनाशिनी । भुक्ति मुक्ति प्रदा चैषा सत्यं सत्यं वरानने । देव्युवाच । कथं यम पुरं मार्गं त्यक्त्वा दैवं व्रजेन्नरः । एतन्मे महदाश्चर्यं १३६
प्रत्ययं कुरु शङ्कर । शङ्कर उवाच । शृणुदेवि यथा वृत्तं कथां पौराणिकीं शुभां । यम शासनछंचीच शिवशासनदायिकां । कश्चिदासीत्पुरा देवि निषा

दस्त्वामिषप्रियः। प्रत्यन्तदेशवासीच भूधरासन्निकेतनं। सीमांते स सदा तिष्टेत् कुंटुंबपरिपालकः। तन्वा पीनो धनुर्धारी श्यामांगः कृष्णकञ्चुकः। बद्ध गोधांगुलि चापः सदैव मृगयारतः। एवं विधो निषादो सौ चतुर्दश्या दिने शुभे। व्यवहारकैश्च द्रव्यार्थं देवागारे प्रबंधितः। तेनापि देवता दृष्टा ज नानां वचनं श्रुतं। उपवास व्रतीनांच शिवः शिव शिवेतिच। दिनांते तैस्तदा मुक्तः प्रातर्द्रव्यं प्रदीयतां। ततोसैधनुरादाय दक्षिणेन गतः स्वयम् दमार्गेच आश्रमे शूकरान् मृगान्। इतश्चेतश्च धावत्स आमिषे लुब्धमानसः। वनं सपर्वतं सर्वं भ्रमतस्तद्दिनं गतं। संप्राप्तं तेन नोकिंचिन्मृगशूकरतित्तिरं मि रक्षो जालिमध्यतः। उटजं कर्त्तुमारेभे आत्मनोगुप्ति कारणात्। जालिमध्ये महालिङ्ग मस्तिस्वायंभुवं शुभं। बिल्ववृक्षो महादिव्यो जालिमध्येच संस्थि तः गृहीत्वा तस्य पत्राणि मार्गशुध्यर्थमक्षिपत्। क्षिप्तानि दक्षिणभागे गतानि लिङ्गमूर्द्धनि। न दिवा भोजनं तस्य आमिषे लुब्धमानसः। ततश्चिन्त यमानस्य न निद्रा समजायत। तस्य गन्धं समासाद्य लुब्ध कस्य वरानने। न तिष्ठन्ति मृगाः सर्वे शरघात भयात्तदा। मृगान्निरीक्षतस्तस्य निद्राना शोप्य जायत। बिल्वजालिङ्गतस्यास्य प्रथमः प्रहरोगतः। ततो जलार्थमायाता हरिणी गर्भसंयुता। यौवनस्था सुरूपाच स्तनपीना सुशोभना। निरीक्ष्य ती दिशः सर्वा भ्रमत्फुल्ललोचना लुब्धकेनापि सा दृष्टा बाणगोचरमागता। बाणश्च सन्धितस्तेन एकदृष्टेन चेतसा। चोटयित्वाथ पत्राणि प्रक्षिप्तानि शि वोपरि। शिवं देवं सदा ध्यायन् शीतेन परिपीडितः। एतस्मिन्नंतरे दृष्टो हरिण्या लुब्धकस्तदा। लुब्धकस्तुस्वरूपेण कृतांत इव तिष्ठति। दृष्ट्वा तु तस्य सन्धानं यमदंष्ट्रासमप्रभं। सा मृगी दिव्यया वाचा लुब्धकं वाक्यमब्रवीत्। स्थिरो भव महाव्याध सर्वजीवं निकृंतन। किमर्थं मां हनिष्यसे कथयस्व मम प्रभो। लुब्ध उवाच। कुटुंबं पीडितं मेद्य क्षुधया च मया सह। धनञ्च मद्गृहे नास्ति तेन त्वां हन्मि शोभने। सूतउवाच। जातपूजा प्रभावेण जाग

॥ व्र ॥ रोपोषणेनच। चतुर्थांशे न पापानां विमुक्तो लुब्धकस्तदा। लुधकस्तु ततो दृष्ट्वा मृगीं मानुष भाषिणीं। आश्चर्यं परमं दृष्ट्वा किञ्चिद्धर्मं समन्वितः। लुधक
१३७ उवाच। मयाहि पातिता जीवा उत्तमाधममध्यमाः। न श्रुता ईदृशी वाणी श्वापदनां कथञ्चन। कस्मिन्देशे त्वमुत्पन्ना कस्मात् स्थानादिहागता। कथय
स्व प्रयत्नेन परं कौतूहलं हि मे। मृगीउवाच। शृणु त्वं लुब्धकश्रेष्ट कथयामि तवाखिलं। आसं पूर्वं महारम्या स्वर्गे शक्रस्य चाप्सरा। अनन्तरूपलावण्या
सौभाग्येन विगर्विता॥ सौभाग्यमदपुष्टांगो दानवो बलगर्वितः। मयैव स कृतो भर्त्ता हिरण्याचो महासुरः॥ तेन सार्द्धं मया भुक्तं चिरकालं यथेप्सि
तं। अन्यस्मिन्दिवसे व्याध क्रीडन्त्या मेऽसुरेण च। प्रत्यहं प्रेचते नृत्यं शङ्करस्याग्रतस्तदा। यावद्गच्छाम्यहं तत्र तावन्मां शङ्करोऽब्रवीत्। क्व गता त्वं
वरारोहे केन वा सङ्गता शुभे। किंवा सौभाग्य गर्व्वेण नायाता मम मन्दिरं। सत्यं कथय शीघ्रंत्वं नोवाशापं ददामि ते। शापभीत्या मया तत्र इत्युक्तं
शङ्कराग्रतः। शृणु देव प्रवक्ष्यामि शापानुग्रहकारक। ममास्ति भर्त्ता विश्वेश दानवेन्द्रो महाबलः। तेन सार्द्धं मया देव क्रीडितं निजमन्दिरे। ते
नाहं नागता शीघ्रं सृष्टिसंहारकारक। रुद्रस्तद्वचनं श्रुत्वा सकोपो वाक्यमब्रवीत्। मृगः कामातुरो नित्यं हिरण्याचो भविष्यति। त्वं मृगी तस्य
भार्या वै भविष्यसि नसंशयः। त्यक्त्वा स्वर्गं तथा देवान्दानवं भोक्तुमिच्छसि। द्वादशाब्दानि भो भद्रे भविता शाप एव ते। परस्परस्य शोकेन शापान्तोपि
भविष्यति। अनुग्रहः पुनस्त्वेषः शङ्करेण कृतःस्वयं। कदाचिद्व्याधवर्य्यो मम सान्निध्यमाश्रितः। वधार्थं तस्य संप्राप्ता पूर्व्वजन्म स्मरिष्यसि। अतउर्ध्वं
तदा रुद्रं दृष्ट्वा मोक्षमवाप्स्यसि॥ शङ्करो न मया दृष्टो वसत्यास्मिन्महावने। ततो दुःखमनुप्राप्ता मांसमेद विवर्जिता। गर्भाक्रान्ता विशेषेण न वध्या
चेति निश्चितं। तत्कुटम्बस्य ते नूनं भोजनं न भविष्यति। आयास्यति मृगीत्वन्या मार्गेणानेन लुब्धक। पीना यौवन सम्पन्ना बहुमांसा मदोद्धता।
भोजनं सकुटुम्बस्य तव सद्यो भविष्यति। अथवान्यो मृगो व्याध पानार्थं तु जलाशये। आगमिष्यति प्रत्यूषे चुधार्थस्य नसंशयः। गर्भं त्यक्त्वा पुनः प्रात १३७
र्वाबान् सन्दिश्य बन्धुषु। शपथैरागमिष्यामि सन्दिश्य च सखीजनं। तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मयमागतः। चणमेकं तथास्थित्वा व्याधो वचनम

ब्रवीत्। नागमिष्यति चेदन्यो जीवंस्त्वमपि गच्छसि। क्षुधया पीडितोहं वै कुटुम्बश्च विशेषतः। प्रातस्त्वया मम गृहमागन्तव्यं यथायथं। शपथश्च व्रज
त्वं हि यथा मे प्रत्ययो भवेत्॥ पृथिवी वायुरादित्यः सत्ये तिष्ठन्ति देवताः। तस्मात्सत्येन गन्तव्यं भवत्या स्वगृहं प्रति। तस्य तद्वचनं श्रुत्वा गर्भा
र्ता सा मृगी तदा। चक्रे सत्यप्रतिज्ञां वै व्याधस्याग्रे पुनः पुनः। मृगी उवाच॥ द्विजो भूत्वा तु यो व्याध वेद भ्रष्टोभिजायते। स्वाध्यायसन्ध्यार
हितः सत्यशौच विवर्जितः। अविक्रेयाणां विक्रेता अयाज्यानां च याजकः। तस्य पापेन लिप्यामि यद्यहं नाग मे पुनः। दुष्ट बुद्धौ तु यत्पापं भूत्त वा
ग्राम कंटके। नास्तिके च विशीले च परदाररते तथा। वेद विक्रयिणैचैव शवसूतक भोजने। मृतशय्याप्रतिग्राहे मातापित्रोरपालके।
तेन पापेन लिप्यामि यदिनायामिते गृहं। दानं दातुं प्रवृत्तस्य योन्तरायकरो नरः। तेन० देवद्रव्यं गुरुद्रव्यं ब्रह्मद्रव्यं हरेत्तु यः। तेन पापे० दीपं
दीपेन यः कुर्यात्पादं पादेनधावयेत्। तेन० भर्त्तारं स्वामिनं मित्रं आत्मानं वालमेव च। गां विप्रं च गुरुं नारीं योमारयति दुर्मतिः तेन० अवैष्णवे च व
त्पापं यत्पापं दाम्भिके जने। अजितेन्द्रिय धूर्ते च परदोषानुकीर्त्तने। कृतघ्ने च कदर्ये च परदाररते तथा। सदाचार विहीने च परपीडा प्रदायिके
परपैशून्य युक्ते च कन्याविक्रय कारके॥ परापवाद सन्तुष्टे सर्वधर्मविवर्जिते। वृषलीपतौ वार्द्धुषिके पित्रोरन्तरदायके। हैतुके वकवृत्तौ च कूटसाक्षि
प्रदे तथा। एतेषां पातकं मह्यं यदि नायमि ते गृहं। यत्पापं ब्रह्महत्यायां पितृमातृवधे तथा। तेन पापेन० यत्पापं लुब्धकानाञ्च
यत्पापं गरदायिनां। तेन० द्विभार्यः पुरुषो यस्तु समदृष्ट्या न पश्यति। तस्य पापे० सकृद्दत्वा तु यः कन्यां द्वितीयाय प्रयच्छति। तेन० कथायां
कथ्यमानायामन्तरं कुरुते नरः। तस्य० पतिनिन्दापरोनित्यं वेदनिन्दापरो हि यः। तस्य० यस्य संग्रहणी भार्या ब्राह्मणी च विशेषतः। तस्य०
प्रेतश्राद्धे तु यो भुंक्ते पतिते वञ्चयाजके। असच्छास्त्रार्थ निरते पुराणार्थ विवर्जिते। मूर्खे पाखण्डनिरते क्रयविक्रयके द्विजे। एतेषां पातकं मह्यं यदि०।
एकाकीमिष्टमश्नाति भार्यापुत्र विवर्जितः। आत्मजां गुणसम्पन्नां समान सदृशे वरे। न प्रयच्छति यः कन्यां नरोवै ज्ञानदुर्बलः। तस्य०; मृगीवाक्यं

॥ ब ॥ ततः श्रुत्वा लुब्धको हृष्टमानसः। संहृत्य बाणसन्धानं मुमोच हरिणीं तदा। तस्या मुक्ति प्रभावेण लिङ्गस्यापि प्रपूजनात्। तस्मिन्नेव क्षणे प्राप्तेऽपरा
१३८ प्राप्ता मृगी तदा। संत्रस्ता भयसंमग्ना पतिमन्वेष्यती मुहुः। जालिमध्ये स्थिते नाथ दृष्टा सा लुब्धकेन तु। पुनर्वृक्षस्य पत्राणि त्रोटयित्वा करेण तु।
क्षिप्तानि दक्षिणे भागे लिङ्गोपरि दिदृक्षया। तस्यावधार्थे तेनाथ बाणो धनुषि सन्धितः। तिष्ठंस्तत्रैकचित्तेन कुटुम्बार्थं जिघांसया। निरीक्ष्य लुब्ध
को यावद्बाणं तस्यां विमुञ्चति। तावन्मृग्या ससंहृष्टो दृष्टा तं विह्वला भवत्। अद्यैव भगिनी मेऽपि लुब्धकेन विनाशिता। मम किं जीवितव्येन तस्या
दुःखेन पीडिता। वरं मृत्युर्न शोकोवै दृष्ट्वा व्याधं विशेषतः। एवं संचिन्त्य हरिणी लुब्धकं वाक्यमब्रवीत्। धनुर्धरवर व्याध सर्वजीवनिकृन्तन। देहि
मे वचनञ्चैकं पश्चात्त्वं मां निपातय। आयाता हरिणीचैका मार्गेणानेन लुब्धक। समायाताथवा नैव सत्यं कथय सुव्रत। तच्छ्रुत्वा लुब्धकस्तत्र विस्मिते
क्षणमैक्षत। तस्यास्तु यादृशी वाणी अस्यास्चैव तु तादृशी। साचैषा चागता नूनं प्रतिज्ञापालनाय च। अथचान्या समायाता तया या कथिता पुरा।
लुब्धक उवाच॥ अहोरात्रं कृतं कष्टं कुटुम्बार्थे मया मृगि॥ अधुना त्वां हनिष्यामि देवानां स्मरणं कुरु। व्याधोक्त वचनं श्रुत्वा हरिणी दुःखिता
भृशं। व्याधं प्राह रुदित्वा वै भो मां व्याध निपातय। तेजोबलं तया सर्वं निर्दग्धं विरहाग्निना। अहं प्राणान् प्रमोक्ष्यामि भोजनं ते न जायते। बल
वांश्च महातेजा मदमांस समन्वितः। अन्यश्च पीन गौराङ्गो मृगोह्यत्रागमिष्यति। अहं च दुर्बला नूनं मेदमांसविवर्जिता। केवलम् पापभाक् त्वं हि
मम प्राणविमोचकः। मार्गेणानेन भोव्याध आगमिष्यति सचस्फुटं। तं हत्वा तव भोव्याध तृप्तिर्नूनं भविष्यति। तयोक्तं लुब्धकः श्रुत्वा किं करोमीति
चिन्त्य च। मृगीं प्राह सयुक्तार्थं एषमे निश्चयो हृदि। संचिन्त्य लुब्धकः प्राह मृगीं शोकातुरां कृशां। सत्यं वद महाभागे प्रत्ययो मे यथा भवेत्॥
तस्य तद्वचनं श्रुत्वा हरिणी दुःखकर्षिता। चक्रे सत्यप्रतिज्ञां तु व्याधस्याग्रे पुनः पुनः॥ मृगी उवाच॥ क्षत्रियस्तु रणं श्रुत्वा संग्रामं यो नगच्छति। १३८
तस्य पापेन ०। भेदयन्ति तडागानि वापीनांच गवामपि। मार्गं स्थानंच येघ्नन्ति सर्वसत्वभयङ्कराः॥ तेषांवै पातकं मह्यं यदि नायामि ते गृहं। एत

च्छुत्वा तु व्याधेन सापि मुक्ता मृगी तदा। जलं पीत्वा तु वक्रशो गता सद्यो यथागतं। जालिमध्ये स्थितस्यास्य द्वितीयो प्रहरो गतः। त्रुटित्वा विल्वप
त्राणि पुनर्देवे नियोजयत्। पीडितोतीव शीतेन क्षुधया गृहचिन्तया। शिवः शिवेति जल्पन्वै न निद्रामुपलब्धवान्। क्षतं सुराचनं तेन प्रहरे प्रहरे
गते। वीक्षंश्चैव दिशः सर्वाः सत्वमार्गान्निरीक्षयन्। लुब्धकेनाथ दृष्टोसौ हरिणः स्फारितेक्षणः। विलोकयन् दिशः सर्वा मार्गमाणो मृगीपदान्।
सौभाग्यबलदर्पाढ्यो मदनोन्मत्तपीवरः। तं दृष्ट्वा बाणमुद्यम्य आकर्णं तुष्टचेतसा। बाणं मुञ्चति यावद्वै तावद्दृष्टो मृगेणतु। कालरूपन्तु तं दृष्ट्वा मृगश्चि
न्तितवान् भृशं। निश्चयो भविता मृत्युर्गोचरोस्य गतो यतः। भार्या प्राणसमा मेद्य व्याधेनेह विपातिता। तथा विरहितस्याद्य नूनं मृत्युर्भविष्यति।
हाहाकालकृतं पापं यद्भार्या दुःखमागतं। भार्य्यया न समं सौख्यं गृहेपिच वनेपिच। तया विना न धर्मोस्ति नार्थकामौ विशेषतः। वृक्षमूलेपि दयि
ता यत्र तिष्ठति तद्गृहं। प्रासादोपि तया हीनः कांताराद‌तिरिच्यते। धर्मकामार्थकार्य्येषु भार्य्या पुंसः सहायिनी। विदेशेच गतेनापि सैव विश्वास
कारिणी नास्ति भार्य्यासमो बन्धुर्नास्ति भार्य्यासमं सुखं। नास्ति भार्य्यासमं लोके नरस्यार्त्तस्य भेषजं। यस्य भार्य्या गृहे नास्ति सापि च प्रियवादिनी।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहं। एका प्राणसमा मेभूद्द्वितीया प्राणदा मम। इत्येवं चिन्तयित्वा तु लुब्धकं वाक्यमब्रवीत्। मृगउवाच। शृणु व्याध
नरश्रेष्ठ आमिषाहार भोजन। यत्ते पृच्छाम्यहं वीर तद्व्यक्तं वद मे प्रभो। आगतं हरणीयुग्मं केन मार्गेण तद्गतं। त्वया विनाशितं वाथ स [illegible] कथय मे
धुना। तस्य तद्वचनं श्रुत्वा लुब्धको विस्मयं गतः। असावपि न सामान्यो देवता काप्यनुत्तमा। उवाच लुब्धकः सद्यः तस्याग्रे वाक्यमुत्तमं। ते गतेऽनेन
मार्गेण सत्यं कृत्वा ममाग्रतः। ताभ्यां दत्तोसि भुक्त्यर्थं मम त्वमधुनानघ। संप्रति त्वां हनिष्यामि नैव मोक्ष्यामि कर्हिचित्। मृगउवाच। तत्सत्य कीदृ
शं ताभ्यां वाक्यमुक्तं तवाग्रतः। येन ते प्रत्ययो जातो मुक्तं तद्धरिणीद्वयं। ते गते केन मार्गेण ये मुक्ते व्याध तेऽधुना॥ व्याधउवाच॥ ते गतेऽनेन मार्गेण
स्वमाश्रमपदं प्रति। व्याधेन कथितास्ताभ्यां शपथा ये कृतास्तदा। तच्छ्रुत्वा वचनं तस्य हरिणोऽहृष्टमानसः। मृगउवाच। तभ्यां व्याध यदुक्तंच तत्क

॥ ब्र ॥ रोमि नचान्यथा। प्रभाते त्वत् गृहं नूनमागमिष्यामि निश्चितं। भार्य्याऋतुमती मेद्य कामार्त्ताप्यधुना भृशं। गत्वा गृहेथ भुक्ता तां ऋष्टच्छ च सु
१३९. हृज्जानान्। शपथैरागमिष्यामि शृण्वन्ते नाच संशयः। मद्देहं स्वगृहस्थानाद्य नेतुं शक्तः कथञ्चन। तद्वृथा मरणं मेस्याद्यदि त्वं चाच घातय। लुब्धकउवाच। असत्यं भाषसे धूर्त्त प्रतारयसि मां वृथा। श्रुत्वा मृत्यु स्थितं तच तदागच्छति कोल्पधीः। व्याधस्य वचनं श्रुत्वा हरिणो वाक्यमब्रवीत्। शपथैरागमिष्यामि यथाते प्रत्ययो भवेत्। व्याधउवाच। मृग त्वं शपथान् ब्रूहि विश्वासो मे भवेद्यया। यथाहि प्रेषयामि त्वां स्वगृहं प्रति कामुकं। मृगउवाच। भर्त्तारं वञ्चयेद्या स्त्री स्वामिनं वञ्चते नरः। मिचञ्च वञ्चयेद्यस्तु गुरुद्रोहं करोति यः। विरसन्तु रसं दद्यात् प्रेमभेदं करोति यः। भेदयेद्यस्तडागानि प्रासादं पातयेत्तु यः। प्रवादशीलो यो विप्रः क्रयविक्रयकारकः। सन्ध्यास्नानविहीनश्च वेदशास्त्रविवर्ज्जितः। मद्यपाः स्त्रीषु रक्ता ये परनिन्दारतास्च ये। परस्त्रीसेवका विप्राः परपैशून्यसूचकाः। शूद्रान्नभोजिनो येच भार्य्यापुत्रांस्त्यजंति ये। वेदनिन्दापरा येच वेदशास्त्रार्थनिन्दकाः। तेषां वै पातकं मह्यं यदि नायामि ते गृहं। भार्य्या संग्रहणी यस्य हत्तशौचविवर्ज्जिता। सर्वाशी सर्वविक्रेता द्विजानामपि निन्दकाः। त्रिषु वर्णेषु शुश्रूषां यः शूद्रो न करोति वै। विप्रवाक्यं परित्यज्य पाखंडाभिरताः सदा। ब्रह्मचर्य्यरताः शूद्रा येच पाखंडसंश्रिताः। तेषां वै० तिलास्तैलं घृतं चौद्रं लवणं सगुडं तथा। लोहं लाचादिकं सर्वरङ्गान्नानाविधानपि। विक्रयेतानि शूद्रेण तच दोषो न विद्यते। मद्यं मांसं विषं दुग्धं नीलीञ्च वृषभं तथा। चीरं सर्वकूटञ्चितानकफलानिच। मद्यादि विक्रयेद्यस्तु शूद्रोपि मदमोहितः। आदित्यं विष्णुमीशानं गणाध्यचन्तु पार्वतीं। एतांस्त्यक्ता मीनं न पूजयते नरः। तस्य पापेन लि० यो मां स्पृशति पादेन उदितेर्केण सुप्यति। एकाकी मिष्टमश्नाति तस्य पापस्य भाग्यहं। मातापित्रोरपोष्टाच क्रिया गृहे मूढो यो मुहिम्न पाचकः। कन्या शुल्कोपजीवीच देव ब्राह्मण निन्दकः गोग्रासं हंतकारञ्च अतिथीनांच पूजनं। ये न कुर्वंति गृहिणस्तेषां पापं भवेन्मम। हन्ताका
नि पटोलानि कालिङ्गं तुम्बनानिच। मूलकं लसुनं कन्दं कुसुंभं कनशाककं। एतानि भचयेद्यस्तु नरो वै ज्ञानदुर्वलः। तस्य वैजायते शुद्धिश्चांद्रायणशतैरपि १२९

एतेषां पातकं मह्यं यदि० यः पठेत्स्वरहीनंच लक्षणेन विवर्ज्जितं। इत्यासुः सञ्चरन् विप्रो वेदानुच्चैरये तु यः। विप्रस्य पठतः क्वापि शृणोति यदिवांत्यजः वेदोपजीविको विप्रोऽतिलो भात् शूद्र भोजनः। तस्य पापेन० सन्ध्याहीने व्रतभ्रष्टे विप्रे वेदविवर्ज्जिते। तेन पापेन० शूद्रान्नेषु च ये सक्ताः शूद्र सम्पर्कदूषिताः। तेषां पा० लेखकश्चित्रकर्त्ताच वैद्यो नक्षत्रसूचकः। कूटकर्त्ता द्विजो यश्च तस्य पापस्य भाग्यहं। कूटसाक्षी मृषावादी परद्रव्यस्य तस्करः। परदाराभिगामीच येच विश्वासघातकाः। द्रव्ये प्रव्यं विनिक्षिप्य पानकूटसमाश्रितः। वेश्यारताः सदा येच दानं दातुर्निवारकाः। भर्त्तारमर्थहीनञ्च कुरूपं व्याधिपीडितं। या न पूजयते नारी रूपयौवनगर्विता। एकादशीं तथा माघे या सा शिवचतुर्दशी। पूर्वविद्धां प्रकुर्वन्ति तेषां पापस्य भाग्यहं अथ किं बहुनोक्तेन भो लुब्धक तवाग्रतः। यदि नायामि ते गेहं मम सत्यं भवेद्वितत्। तेन वाक्येन सन्तुष्टो व्याधो वै वीतकल्मषः। संहृत्य धनुषो वाणं मृगो मुक्तो गृहंप्रति जलं पीत्वा तु हरिणः प्रविष्टो गह्वनम् वनम्। गतोसौ तेन मार्गेण गतं येन मृगीद्वयं। लुब्धकेन तदा तत्र जालिमध्ये स्थिते न हि। प्रत्यूषे विल्वपत्राणि चोटयित्वा प्रतर्प्यच। शिवःशिवेति जल्पन्वै आशु यातो निजाश्रमं। अथोदिते सूर्यविम्बे अकामा ज्जागरे कृते। पापान्मुक्तोप्यसौ सद्यः शिवपूजा प्रभावतः। यावद्दिशो निरीक्षेत निराशो भोजनं प्रति। तावच्छिशुहृता चान्या मृगी तत्र समागता। दृष्ट्वा मृगीं तदा व्याधो वाणं धनुषि योजयत्। यावन्मुञ्चत्यसौ वाणं तावदुक्तं तया तदा। मा वाणं मुञ्च धर्मात्मन्धर्मं मा मुञ्च सुव्रत। अहं न वध्या सर्वेषामिति शास्त्रे विनिश्चितः राजानो मिथुनासक्तास्तनयो व्याधिपीडितः। नहंतव्यो मृगो राज्ञा मृगीच शिशुनाहृता। अथवा धर्म मुत्सृज्य मां हनिष्यति मानव। वालकं स्वगृहे मुक्त्वा सखीनांच निवेद्यवै। शपथै रागमिष्यामि व्याध शृणु वचो मम। या स्वभर्त्तारमुत्सृज्य परपुंसि रता सदा। तस्याः पापेन० मद्यं मांसं विषं दुग्धं नीलीकुसुम्भफलानि च। एतानि विक्रयेद्यस्तु नरो मोह समन्वितः। तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मयमा गतः। ततो व्याधेन सा मुक्ता गता वै निजमन्दिरं व्याधोपि तत्सरस्त्यक्त्वा जगाम स्वगृहं प्रति। सर्वेषां वचनं ध्यायन्मृगाणां सत्यवादिनां। एतेषां

॥ ग्र ॥ घातको नित्यमहं वास्यामि कां गतिं। क्रमाद्गृहं समायाता वालकाः क्षुधयावृताः। नान्नं मांसं गृहे तस्य भोजनं येन जायते। निरामिषन्तु तं
१४० दृष्ट्वा निराशास्तेऽभवं स्तदा। व्याधोऽपि च तदा तत्र तेषां वाक्यानि संस्मरन्। न भोजनं न निद्राञ्च लभते विस्मयान्वितः। आगमिष्यंति ते नूनं श
पथैरपि यंत्रिताः। न तानहं वधिष्यामि इति मनसानुस्मरन्। लुब्धकेन तदा मुक्तो हरिणः शपथैर्गतः। स्वमाश्रमंतु संप्राप्तो यत्र तद्धरिणीद्वयं। सद्यः
प्रसूता सा चैका द्वितीया रतिलालसा। तृतीयापि समायाता वालकैर्वेष्टमिष्टता। सर्वाः समेता एकत्र मरणे कृतनिश्चयाः। परस्परं प्रजल्पन्तो लुब्ध
कस्य विचेष्टितं। आयातां हरिणीं भक्ता रूपाद्यां रतिलालसां। कृतकृत्योभवत्तत्र तेभ्यो वाक्यमथाब्रवीत्। युष्माभिरिह संस्थेयं कर्त्तव्यं प्राण
रक्षणं। व्याघ्रादिभ्यो लुब्धकेभ्यो वालकानि प्रयत्नतः। अहं मत्यानुगो भार्य्यां न भुक्तो मोहसंवृतः। भूण्हा स तु विज्ञेयस्तस्य जन्म निरर्थकं। सन्ता
नात्स्वर्गमाप्नोति इह कीर्त्तिश्च शाश्वती। सन्ततिर्यत्नतः पाल्या स्वर्गसौख्यप्रदायिका। अपुत्रस्य गतिर्नास्ति इहलोके परत्र च। येन केनाप्युपायेन
पुत्रमुत्पादयेत्पुमान्। मया च तत्र गन्तव्यं यत्र व्याधस्य मन्दिरं। सत्यन्तु पालनीयं स्यात्सत्ये धर्मः प्रतिष्ठितः। एतत् श्रुत्वा तु ता नार्यो वाक्य
मूचुः सुदुःखिताः। वयमप्यागमिष्यामस्त्वया सार्द्धं मृगोत्तम। तथा ते विप्रियं कान्तं न स्मरामः कदाचन। पुष्पितेषु वनांतेषु नदीनां सङ्गमेषु च।
कन्दरेषु च शैलानां युष्माभी रचिता वयं। न कार्य्यमद्यमस्माकं क्रीडितेन त्वया विना। नारीणां पति हीनां जीवितैः किं प्रयोजनं। मितन्ददाति हि
पिता मितं भ्राता मितं सुतः। अमितस्य तु दातारं भर्त्तारं का न पूजयेत्। अपि द्रव्ययुता नारी बहुपुत्र सुहृद्वृत्ता। सा शोच्या बंधुवर्गस्य पतिहीना
कुलाङ्गना। गन्धमाल्यैः स्त्रियो नित्यं प्रीयन्ते भर्तुरग्रतः। नातंत्री वाद्यते वीणा नाचक्रो भ्रमते रथः। नापतिः सुखमाप्नोति नारी पुत्रशतैर्वृता।
नास्ति भर्त्ता समो धर्मो नास्ति धर्मसमः सुहृत्। नास्ति भर्त्ता समो नाथः स्त्रीणां भर्त्ता परा गतिः। एवं विलप्य ताः सर्वाः मरणे कृतनिश्चयाः। १४०
वालकैस्तैः समायुक्ता मर्त्तृ शोकेन दुःखिताः। मृगदाराणां वचः श्रुत्वा हृदि चिन्ता परोभवत्। गन्तव्यं किं न गन्तव्यं मया व्याधस्य मन्दिरं। एकतः

सुकृतं रक्षन् कुटंबस्य क्षयोभवेत्। तदन्तिकं नवेद्यामि मम सत्यं क्षयं व्रजेत्। वरं पुत्रस्य मरणं भार्याया आत्मनस्तथा। सत्यं कृते परो नित्यमाकल्पं
रौरवं व्रजेत्। तस्मात्सत्यं पालनीयं नरैः श्रेयोर्थिभिः सदा। एवं सञ्चिन्त्य हरिणो धर्मान् हृदि मनोरमान्॥ ताभिः सहैव शनकैः क्षणात्तस्याश्रमं
ययौ तस्मिन् सरसि संस्नात्वा कर्मन्यासं चकारह। तल्लिङ्गं प्रणिपत्याशु हृदि ध्यायन् सदाशिवं। मान पानं परित्यज्य मैथुनं भोगमेवच। कामं
क्रोधं तथा लोभं मायां मोक्षविनाशनीं। वन्दयित्वा तु तन्देवं लुब्धकाभिमुखो ययौ। तस्य भार्याश्च पुत्राश्च मरणे कृतनिश्चयाः। अनाशंकं व्रतं
हृष्टं हृष्टमना समाययुः। भार्या पुत्रैः परिवृतो मृगस्तं देशमागतः क्षुधितैर्बालकैर्युक्तो लुब्धको यत्र तिष्ठति। मृगस्तं देशमागत्य कुटुम्बेन समन्वितः।
पालयन् सत्यवाक्यानि लुब्धकं वाक्यमब्रवीत्॥ मृग उवाच॥ हन मां प्रथमं व्याध पश्चादेताः क्रमेण तु॥ बालकानि ततः पश्चाद्धन्यतां माविलम्बय।
लुब्धकैस्तु मृगाभक्ष्या नास्ति दोषः कदाचन। वयं यास्यामः स्वर्लोकं सत्यपूताः नसंशयः। तथाते स कुटुम्बस्य प्राणयात्रा भविष्यति। एतच्छ्रुत्वा तु वचनं
मृगेण परिभाषितं। आत्मानं निन्दयित्वा तु लुब्धको वाचमब्रवीत्॥ व्याध उवाच। अहो मृग महासत्व गच्छ गच्छ स्वमाश्रमं। आमिषेण न मे कार्य्यं
यद्भाव्यं तद्भविष्यति। जीवानां घातने पापं बन्धने तर्जने तथा। नैव पापं करिष्यामि कुटुम्बार्थे कदाचन। त्वं गुरुर्मम धर्माणां उपदेष्टा मृगोत्तम। गच्छ
गच्छ मृगश्रेष्ठ कुटुंबेन समन्वितः। मया त्यक्तानि शस्त्राणि सत्यधर्मसमाश्रितः॥ मृग उवाच॥ कर्मन्यासमहं कृत्वा त्वत्सकाश मिहागतः। हन्यतां हन्यतां
शीघ्रं न ते पापं भविष्यति। मया दत्ता पुरा वाचा तया बद्धो न याम्यहं। एतच्छ्रुत्वा तु वचनं लुब्धको वाक्यमब्रवीत्॥ लुब्धक उवाच॥ त्वं बंधुस्त्वं
गुरुर्भ्राता त्वं मे माता पिता सुहृत मया त्यक्तानि शस्त्राणि त्यक्तं मायादिकं बलं॥ कस्य भार्य्या सुताः कस्य कुटंबस्य महामृग तैः स्वकर्मैव भोक्तव्यं मृग
गच्छ यथा सुखं। इत्युक्त्वा सतदा तूर्णं बभञ्ज सशरं धनुः। मृगं प्रदक्षिणीकृत्य नमस्कृत्य क्षमापयेत्। एतस्मिन्नन्तरे नेदुर्देवदुन्दुभयो दिवि। आकाशात्पु
ष्पवृष्टिस्तु पपात सुमनोहरा। तदा दूतः समायातो विमानं गृह्य शोभनं। देवदूत उवाच॥ अहो व्याध महासत्व सर्वसत्वक्षयंकर विमानमिदमारुह्य

सदेह: स्वर्गमाविश। शिवरात्रिप्रभावेण पातकं ते चयं गतं। उपवासस्तु संजातो निशि जागरणं कृतं। यामे यामे कृता पूजा अज्ञानेन शिवस्य च।
पाप विनिर्मुक्तो गच्छत्वं भद्रमन्दिरं। विमानञ्च समारुह्य सत्याद्भिचपदं व्रज। मृगराज महा सत्व भार्य्या पुच समन्वितः। भार्य्याचितय
संयुक्तो नचत्रपदमाप्नुहि। तव नाम्नातु नचत्रं लोके ख्यातं भविष्यति॥ एतच्छ्रुत्वातु वचनं लुब्धकेन समन्वितं विमानन्तु तदारुह्य नचत्रपदमा
गतः। हरिणी इव मन्वेनं पृष्टतो मृगमेवच। ताराचितयसंयुक्तं मृगशीर्षं तदुच्यते। वालकद्वितयं चाग्रे तृतीया पृष्टतो मृगी। पृष्टत स्तत्र
संप्राप्ता मृगशीर्षस्य सन्निधौ। मृगराट् दृश्यतेद्यापि ऋचं व्योममनुत्तमं॥ उपवासं करिष्यन्ति जागरेण समन्वितं। यथोक्त शास्त्रमार्गेण तेषां मोचो
न संशयः। शिवराचि समं नास्ति व्रतं पापचयावहं। यत्कृत्वा सर्व पापेभ्यो मुच्यते नाच संशयः। अश्वमेधसहस्राणि वाजपेय शतानिच। प्राप्नो
ति तत्फलं सर्वं नाच कार्य्या विचारणा॥ इति श्रीलिङ्गपुराणे उमामहेश्वरसंवादे शिवराचि व्रतं॥ अथोद्यापनं। हेमाद्रौस्कान्दे॥ स्कन्दउवाच॥
व्रतस्योद्यापनं कर्म कथं कार्यंच मानवैः। कोविधिः कानि द्रव्याणि कथयस्व मम प्रभो॥ ईश्वर उवाच॥ शृणु षण्मुख तत्वेन लोकानां हित काम्यया।
उद्यापन विधिंचैव कथयामि तवाग्रतः। यदा सञ्जायते वित्तं भक्ति श्रद्धा समन्वितं। स एव व्रतकालस्तु यतो नित्यं हि जीवितं। चतुर्द्दशाब्दं कर्त्तव्यं
शिवराचि व्रतं शुभं। एक भक्तं चयोदश्यां चतुर्द्दश्यामुपोषणं। संपाद्य सर्व सम्भारान्मण्डपं तचकारयेत्। वस्त्रैः पुष्पैः समाच्छन्नं पट्टवस्त्रैश्च शोभितं।
तान्मध्ये लेखयेद्दिव्यं लिङ्गतो भद्रमण्डलं। अथवा सर्वतो भद्रं मण्डपान्तः प्रकल्पयेत्। शोभोप शोभासंयुक्तं दीपैः सर्वच सोज्वलं। आचार्यं वरये त्तच
ऋत्विग्भिः सहितं शुचिः। शिवरूपास्तते विप्राः पूज्याश्चन्दनपुष्पकैः। अनुज्ञातश्च तै र्विप्रै शिव पूजां समा रभेत्। रुद्रनाम्ना नमोन्ते न ब्राह्मणान
पि पूजयेत्। अव्रणं सजलं कुम्भं तस्योपरि तु विन्यसेत्। सौवर्णं राजतं ताम्रं मृण्मयं वापि कारयेत्। कुम्भोपरि न्यसेद्देवं उमया सहितं शिवं। पलेन १४१
वा तदर्द्धेन तदर्धार्द्धेन वा पुनः। वस्त्र युग्मेन संवेष्ट्य विल्वपचैः प्रपूजयेत्। उमामहेश्वरीं मूर्त्तिं पूजयेद्वृषभेस्थितां। सोमंच सगणञ्चैव पूजयित्वा महे

श्वरं होमं कुर्यात्प्रयत्नेन रौद्रमन्त्रैर्यथाविधि । ब्राह्मणान् पूजयेद्भक्त्या भोजयेच्च चतुर्दश । आचार्यञ्च सपत्नीकं वस्त्रालङ्कार भूषणैः । यज्ञोपवीत वस्त्रादि दद्यात्तेभ्यः पृथक् पृथक् । गां सवत्सां सवसनां नानालंकारभूषणां । दद्यादाचार्यवर्याय शिवो मे प्रीयतामिति । ततः सकुंभां मूर्त्तिञ्च सवस्त्रां वृषभेस्थितां । सर्वालंकारसहितामाचार्याय निवेदयेत् । व्रतमेतत्कृतं यन्मे पूर्णंवाऽपूर्णमेवच । सर्वं संपूर्णतां यातु प्रसादाद्भवतां मम । इति संप्रार्थ्यतान् विप्रान् प्रणम्यच पुनः पुनः । अजैकपादभिस्तेभ्यो दद्यात् कुंभान् पृथक् पृथक् । पुराणैः स्तोत्रपाठैश्च रात्रिशेषं नयेद्बुधः । ततः प्रभातसमये कृत्वा सन्ध्यादिकाः क्रियाः । पुनः पूजां प्रकुर्वीत ततो होमं समारभेत् । तिलव्रीहियवैश्चैव पायसान्नेन भक्तितः । त्र्यंबकायेति मन्त्रेण नमोवै शंभवे तिच । गौरीर्मिमेति मंत्रेण शतमष्टोत्तरद्वयं । होमं कुर्याच्च मतिमान्बिल्वपत्रैस्तु नामभिः । अजैकपादहिर्बुध्न्योप्रभवः शर्व उमापतिः । रुद्रः पशुपतिः शम्भुर्वरदः शिव ईश्वरः । महादेवो हरो भीमो नामान्येवं चतुर्दश । पूर्णाहुतिं ततो हुत्वा कर्मशेषं समापयेत् । एतैर्होमः प्रकर्त्तव्यः कुंभदानेपि तान् स्मरेत् । भोज्यं समापयेद्देवमेभिर्नामपदैः पृथक् । प्रतिमां कुम्भसहितामाचार्याय निवेदयेत् । शम्भो प्रसीद देवेश सर्वलोकेश्वर प्रभो । तव रूपप्रदानेन मम सन्तु मनोरथाः । यज्ञोपीत वस्त्राणि दद्यात्तेभ्यः पृथक् पृथक् । आचार्यं पूजयेद्भक्त्या वस्त्रालङ्कार भूषणैः । गां सवत्सां ततो दद्यात् कर्मसंपूर्त्तिहेतवे । अन्येभ्योपि यथा शक्ति ब्राह्मणेभ्योपि दक्षिणां । आचार्याय प्रदद्याच्च मूर्त्तिं माहेश्वरीं तथा । आचार्यं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः । चतुर्दश प्रदातव्या विप्रेभ्यो जलपूरिताः । कुम्भा यज्ञोपवीतानि वस्त्राणिच पृथक् पृथक् । पूर्णमेवच वस्त्राणि शय्यां सोपस्करां तथा । द्वादशैवतु गां दद्यात्परिधानादिकं तथा । एतैर्होमः प्रकर्त्तव्यः कुम्भदानेपि तान् स्मरेत् । भोज्ये समापये द्देवमेभिर्नामपदैः पृथक् । प्रतिमां पूजयेद्भक्त्या आचार्याय निवेदयेत् । अथवा दक्षिणामेव प्रदद्यात् जुहुयात् तिलान् । व्रतमेतत्कृतं यन्मे पूर्णं वापूर्णमेववा । सर्वं सम्पूर्णतां यातु प्रसादाद्भवतां मम । इति संप्रार्थ्य तान् विप्रान् प्रणम्यच पुनः पुनः । ततश्च स्वजनैः सार्द्धं स्वयं भुञ्जीत स व्रती ॥ इति स्कान्दे शिवरात्र्युद्यापनं ॥ इति श्रीभट्टनीलकण्ठात्मज भट्ट

। व्र। [illegible]र इतो व्रतार्के चतुर्द्दशीव्रतानि। अथ पूर्णिमा व्रतानि तत्र ज्येष्ठपूर्णिमायां वटसावित्रीव्रतम्। इयञ्च पूर्वविद्धा ग्राह्या पूर्वं विद्धा न कर्त्तव्या अमा
१४२ [illegible]च पूर्णिमा वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तममिति ब्रह्मवैवर्त्तात्। वर्ज्जयित्वेति पर्युदासादष्टादश नाड़ीवेधः सावित्री व्रतातिरिक्तपरः वस्तुतस्तु
[illegible]ा निषेध एव भूतोऽष्टादश नाड़ीभिरिति वाक्यं वेधनियमविधया प्रवर्त्ततेति लाघवात् अन्यथा सावित्रीव्रतेऽष्टादश नाड़ीवेधदोषकल्पनायां
निषेधान्तरकल्पनागौरवात्। इदञ्च त्रयोदशीमारभ्य पूर्णिमांतं कर्त्तव्यं। तथा च स्कांद भविष्ययोः ज्येष्ठे मासि सितेपक्षे द्वादश्यां रजनीमुखे। व्रतं
त्रिरात्रमुद्दिश्य त्वघोरात्रं स्थिरोभवेदित्युपक्रम्यांते उपसंहृतं। ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतं। चीर्णं पुरा महाभक्त्या कथितन्ते मयानघेति।
धर्मराज उवाच। नारी वा विधवा वापि सपुत्रा पुत्रवर्जिता। सभर्तृका सपुत्रा वा कुर्याद्व्रतमिदं शुभं। ज्येष्ठे मासितु संप्राप्ते पौर्णमासीं पतिव्रता।
स्नात्वा चैव शुचिर्भूत्वा नियमं कारयेत्ततः। अमाया मुक्तं निर्णया व्रते भविष्ये अमायांच तथा ज्येष्ठे वटमूले सदा सती। त्रिरात्रोपोषिता नारी
विधिनानेन पूजयेदिति। अथ व्रतविधिः। आचम्य मासपक्षाद्युल्लिख्य मम भर्तुः पुत्राणांच आयुरारोग्यप्राप्तये जन्मजन्मनि अवैधव्यप्राप्तयेच सावित्री
व्रतमहं करिष्ये इति संकल्प्य। वट सिञ्चामिते मूलं सलिलैरमृतोपमैः। सूत्रेणावेष्टये इत्युक्त्वा गन्धपुष्पाक्षतैः शुभैः। ओं नमोवस्य वैवटायेति भ्रामयन्ति
प्रदक्षिणम्। इति वटं सम्पूज्य सावित्रीं पूजयेत् पद्मपत्रासनस्थस्य ब्रह्मा कार्य्यश्चतुर्मुखः सावित्री तस्य कर्त्तव्या वामोत्सङ्गगता तथा आदित्यवर्णां धर्म्मां
ज्ञां साक्षमालाकरान्तथेति ध्यानं ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरं सत्यव्रतञ्च सावित्रीं यमञ्चावाहयाम्यहं। आवाहनं। ब्रह्मणासह सावित्री
सत्यवत्सहिते प्रिये हेमासनं गृह्यतान्तु धर्मराज सुरेश्वर भक्त्या दत्तं धर्मराज सावित्रि प्रतिगृह्यतां। पाद्यं। भक्त्या समाहृतं तोयं फलपुष्पसमन्वितं।
अर्घं गृहाण सावित्रि ममास्य व्रतसिद्धये अर्घं। सुगन्धं सहकर्पूरं सुरभि स्वादुशीतलम् स्वपत्यासह सावित्रि कुर्यादाचमनीयकं। अथ पञ्चामृतस्नानं १४२
मया भक्त्या च कल्प्यते। मन्दाकिन्याः समानीतमुदकञ्च सदा प्रिये। सावित्र्यै धर्म राजायच स्नानं। आचमनं। सूक्ष्मतन्तु मयं वस्त्रं कर्पासेन विनि

मितं। सावित्री सत्यवत्कांते मया दत्तं प्रगृह्यतां वस्त्रं सावित्रि सत्यवत्कांते धर्मराजः सुरेश्वरः। सावित्री ब्रह्मणा सार्धमुपवीतं प्रगृह्यतामित्युपवीतं। कुङ्कुमा गरुकर्पूरकस्तूरी रोचनायुतं चन्दनं ते मया दत्तम् सावित्रि प्रतिगृह्यतां चन्दनं। अक्षताश्च सुरश्रेष्ठाः कुङ्कुमाक्ताः सुशोभनाः। मया निवेदिता भक्त्या गृहाण परमेश्वरीत्यक्षताः। माल्यादीनि सुगन्धीनि मालत्यादीनि वैप्रभो। मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां। पुष्पं। अथांग पूजा। सावित्रै पादौ पूजयामि। प्रसावित्र्यै जङ्घे कमलपत्राक्ष्यै कटिं भूतधारिण्यै उदरं ब्रह्मणः प्रियायै शिरः पू० अथ ब्रह्म सत्यव्रतांगपूजा० धात्रे नमः पादौ पू० ज्येष्ठाय नमः। उदरं पू० परमेष्ठिने नमः मेढ्रं अग्निरूपाय नमः कटिं ब्रह्मनाभाय हृदयं वेधसे नमः कण्ठं हिरण्यगर्भाय मुखं ब्रह्मणे शिरः विष्णवे सर्वाङ्गं पूजयामि० देवद्रुमरसोद्भूतः कालागरुसमन्वितः। आघ्रेयतामयं धूपो सावित्रि प्रतिगृह्यतां। धूपं। चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणं। आर्त्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि। दीपं। अन्नञ्चतुर्विधमिति नैवेद्यं। आचमनं। इदं फलमिति फलं पूगीफलं महद्दिव्यमिति तांबूलं। हिरण्यगर्भगर्भस्थमिति दक्षिणा। सावित्रीच प्रसावित्री सततं ब्रह्मणः प्रिये। जगत्पूज्ये जगन्मातर्विधात्रि वरदे नमः। सावित्री त्वं यथा देवी चतुर्वर्षं शतायुषे। पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु। सावित्रीच प्रसावित्री सततं ब्रह्मणः प्रिये। पूजितासि द्विजैः सर्वैः स्त्रीभिर्मुनिमणैस्तथा। त्रिसन्ध्यं देवि भूतानां वन्दनीयासि सुव्रते। मया दत्ता च पूजेयं त्वं गृहाण नमोस्तुते। इति पुष्पांजलिं दत्वा ततोर्घं दद्यात् ओंकार पूर्वके देवि सर्वं दुःख निवारिणि। देवि मातर्नमस्तुभ्यमवैधव्यं प्रयच्छमे। पतिव्रते महाभागे चारित्राते शुचिस्मिते। इढव्रते इढमते भर्तुश्च प्रियवादिनी। अवैधव्यञ्च सौभाग्यं देहि त्वं मम सुव्रते। पुत्रान् पौत्रांश्च सौख्यञ्च गृहाणार्घं नमोनमः। इत्यर्घं। अथ प्रार्थना० सावित्री ब्रह्मगायत्री सर्वदा प्रियभाषिणी। तेन सत्येन मां पाहि दुःखसंसारसागरात्। त्वं गौरी त्वं शुचिर्गौरी त्वं प्रभाचन्द्रमण्डले। त्वमेव च जगन्मातात्वमुद्धर वरानने। यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि। भस्मीभवतु तत्सर्वमवैधव्यञ्च देहि मे। अवियोग स्तथास्माकं भूयात् जन्मनि।

॥ व्र ॥ अम्मनोति प्रार्थना। इति पूजाविधिः। अथ कथास्कान्दे सनत्कुमार उवाच॥ कुलस्त्रीणां व्रतं देव महाभाग्यं तथैवच अवैधव्यकरं स्त्रीणां पुत्र
१४३ पौत्र प्रदायकं॥ ईश्वर उवाच॥ आसीन्मद्रेषु धर्मात्मा ज्ञानी परमधार्मिकः। नाम्ना चाश्वपतिर्वीरो वेदवेदाङ्गपारगः: अनपत्यो महाबाङः
सर्वैश्वर्यसमन्वितः। सपत्नीकस्तपस्तेपे समाराधयते नृपः। सावित्रीं च प्रसावित्रीं अपन्नास्ते महात्मनः। जुहोतिचैव सावित्रीं भक्त्या परमया युतः। ततस्तु
ष्टातु सादेवी सावित्री द्विजसत्तम। सावित्रिग्रहवती देवी तस्य दर्शनमागता। तां तु दृष्ट्वा जगद्वंद्यां सावित्रीं च नृपोत्तमः। प्रणिपत्य नृपो भक्त्या
प्रहृष्टेनान्तरात्मना। तं दृष्ट्वा पतितं भूमौ तुष्टा देवी जगाद ह। तुष्टाहं तव राजेन्द्र वरं वरय सुव्रत। एवमुक्तस्तया राजा प्रसन्नान्तामुवाच ह॥
आनपत्योस्म्यहं देवि पुत्रमिच्छामि शोभनं। नान्यं वृणोमि सावित्रि पुत्रमेव जगन्मये। अन्यदस्ति समग्रं मे वित्तौ यच्चापि दुर्लभं। प्रसादात्तव दे
वेशि तत्सर्वं विद्यते गृहे। एवमुक्ता तु सा देवी प्रत्युवाच नराधिपं। पुत्रस्ते नास्ति राजेन्द्र कन्यैका ते भविष्यति। कुलद्वयं तु सा राजन्नुद्धरिष्यति
भामिनी। मन्नाम्ना राजशार्दूल तस्या नाम भविष्यति। इत्युक्त्वा तं मुनिश्रेष्ठ राजानं ब्रह्मणः प्रिया। अन्तर्द्धानं गता देवी सन्तुष्टोसौ महीपतिः।
ततः कतिपयाहोभिश्च तस्य राज्ञी महीभुजः। ससत्वा समजायेत पूर्णे काले सुषाव च। सावित्र्या तुष्टया दत्ता सावित्र्याज्ञया तथा। सावित्री तेन
वरदा तस्या नाम बभूव ह। राजते देवगर्भा सा कन्या कमललोचना। ववृधे सा मुनिश्रेष्ठ चन्द्रलेखेव चांबरे। सावित्री ब्रह्मणो वै सा श्रीरिवायत
लोचना। तां दृष्ट्वा हेमगर्भाभां राजा चिन्तामुपेयिवान्। अवाच्यमानां च वरै रूपेणा प्रतिमां भुवि। तस्या रूपेण ते सर्वे संनिरुद्धा महीभुजः।
ततः स राजा वाक्यं उवाच कमलेक्षणां। पुत्रि प्रदानकालस्ते नच याचन्ति केचन स्वयम्वरं च वृणुयास्त्वं पतिं गुणसमन्वितं। मनोप्रह्लादनकरं शीले
नाभिकुलेन च। इत्युक्त्वा तां स राजेन्द्रो वृद्धामात्यैः सहैवतां। वस्त्रालङ्कारसहितां धनरत्नैः समन्वितां। विसृज्य च क्षणं तत्र यावत्तिष्ठति १४३
भूमिपः। तावत्तत्र समागच्छन्नारदो भगवानृषिः। संपूज्य च ततो राजा अर्घपाद्येन तं मुनिं। आसने च सुखासीनः पूजितस्तेन भूभुजा।

पूजयित्वा मुनिं राजा प्रोवाचेदं द्विजोत्तमं। पावितोऽहं त्वया विप्र दर्शनेनाद्य नारद। यावदेवं वदेद्राजा तावत्सा कमलेक्षणा। आश्रमादागता देवी
वृद्धामात्यैः समन्विता। अभिवाद्य पितुःपादौ ववन्दे सा मुनिं ततः। नारदेन तु दृष्टा सा दृष्ट्वा प्रोवाच भूमिपं। कन्येयं देवगर्भाभा किमर्थं न प्रयच्छ
सि। वराय त्वं महावाहो वरयोग्यापि सुन्दरी। एवमुक्तस्तदा तेन मुनिना नृपसत्तमः। उवाचतं मुनिं वाक्यमनेनार्थेन प्रेषिता। आगतेयं विशालाक्षी
मया संप्रेषिता सती। अनया च वृतो भर्त्ता पृच्छ त्वं मुनिसत्तम। सापृष्टा तेन मुनिना तस्मैचाचष्ठ भामिनी। आश्रमे सत्यवान्नाम द्युमत्सेनसुतो मुने।
मर्त्त्वे मनसा विप्र वृतोसौ राजनन्दनः॥ नारद उवाच कष्टं कृतं महाराज दुहिता तव सुव्रत। अजानन्त्या वृतो भर्त्ता गुणवानिति विश्रुतः।
सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते। स्वयं सत्यं प्रभाषेत सत्यवानिति तन्मतः। तथा चास्याःप्रियास्तस्य अश्वैः क्रीडति मृन्मयैः। चित्रेपिच लि
खत्यश्वं चित्राश्वस्तेन चोच्यते। रूपवान् गुणवांश्चैव सर्वशास्त्रविशारदः। न तस्य सदृशो लोके विद्यते चेह मानवः। सर्वैर्गुणैः स्वयं पूर्णो रत्नैरिव महा
र्णवः। एको दोषो महानासीद्गुणानावृत्य तिष्ठति। संवत्सरेण क्षीणायुर्देहत्यागं करिष्यति॥ अश्वपतिरुवाच॥ अन्यंवरय भद्रन्ते वरं सावित्रि
गम्यतां। विवाहस्य तु कालोयं वर्त्तते शुभलोचने॥ सावित्र्युवाच नान्यमिच्छाम्यहं तात मनसापि वरं प्रभो। यो मया च वृत्तो भर्त्ता समेनान्यो भवि
ष्यति। विचिन्त्य मनसा पूर्वं वाचं पश्चात्समुच्चरेत। क्रियते च ततः पश्चात् शुभं वायदिवा शुभं। तस्मान्मनः पुमांसं च कथं चान्यं वृणोम्यहं। सकृ
ज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः। सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत्। पतिं मत्वा न मे बुद्धिर्विचलेति कथञ्चन। सगुणोनिर्गुणो
वापि मूर्खः पण्डितएवच। दीर्घायुरथवाल्पायुः सवै भर्त्ता मम प्रभो। नान्यं वृणोमि भर्त्तारं यदिवा स्याच्छचीपतिः। इति मत्वा मया तात यत्कर्त्तव्यं
सुखेन च॥ नारद उवाच॥ स्थिरावुद्धिश्च राजेन्द्र सावित्र्याः सत्यवान् प्रति वरयस्व विवाहाय भर्त्तासह कुरुत्त्वियं। ईश्वर उवाच।
निश्चितान्तु मतिं ज्ञात्वा स्थिराबुद्धिश्च निश्चला। सावित्र्याश्च महाहाराजो प्रतस्थे सौवनं प्रति। गृहीत्वा तु वनं राजा द्युमत्सेनस्य

॥ म ॥ सन्निधौ। सभ्यानुगो महाराजो वृद्धामात्यैः समन्वितः। नारदस्तु ततो खेवे तत्रैवान्तरधीयत। स गत्वा राजशार्दूलो द्युमत्सेनवशङ्गतः। वृद्ध
१४४ स्यान्धस्य राजासौ वृक्षमूलमुपाश्रितः तस्या श्वपतिराजासौ पादौ जग्राह वीर्यवान्। स्वनाम च समुच्चार्य तस्थौ तस्य समीपतः। उवाच राजा तं
भूपं किमागमन कारणं। पूजयित्वार्घ्यदानेन वन्यमूलफलैस्तथः। ततः पप्रच्छ कुशलं सराजा मुनि सत्तम। अश्वपतिरुवाच ॥ कुशलं दर्शनेनाद्य तव राज
न्ममाद्यवै। दुहिता नाम सावित्री तव पुत्रमभीप्सति। भर्त्तारं राजशार्दूल प्राप्नोत्वियमनिन्दिता। ममेदं कांक्षितं पूर्वं भर्त्तारमनया विभो।
आवयोस्त्वैव संबन्धो भवेत्तद्य ममेप्सितः। द्युमत्सेन उवाच। वृद्धस्यान्धस्य राजेन्द्र फलमूलाशनो नृप। राज्याच्युतस्य मे पुत्रो वन्येनाद्य च जीवति॥
सा कथं सहते दुःखं दुहिता तव कानने अनभिज्ञा च दुःखानामित्यहं नाभिकांक्षते। अश्वपतिरुवाच॥ अनया च वृतो भर्त्ताजानन्त्या राजसत्तम।
अनेन सहवासस्ते तव पुत्रेण मोनद। स्वर्गतुल्यं महाराज भविष्यति न संशयः। एवमुक्तस्तदा तेन राजा राजर्षिसत्तम। तथेति सप्रतिज्ञाय चकारोद्वाह
मुत्तमं क्रत्वा विवाहं राजेन्द्रं संपूज्य विविधै धनैः अभिवाद्यद्युमत्सेनं जगामनगरं प्रति सावित्री तु पतिं लब्धा इन्द्रं प्राप्य शचीयथा। सत्यवानपि ब्रह्मर्षे
तया पत्न्याभिनन्दितः। क्रीडते तद्वनोद्देशे पौलोम्या मघवानिव। नारदस्य च तद्वाक्यं हृदयेन मनस्विनी। वहन्ती नियमं चक्रे व्रतस्यास्य च भामिनी।
गणयन्ती दिनान्येव न लभेत्तोषमुत्तमं। ज्ञात्वा तद्दिवसं विप्र भर्त्तुर्मरणकारणं। व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिराभवत् ततस्त्रिरात्रं निर्वर्त्य सन्तर्प्य पि
तृदेवताः। अचान्तरे च नियमं त्रिदिनस्यमनस्विनी। अस्मिन्दिने च मर्त्तव्यं तदा सत्यवता मुने। कुठारं परिसंगृह्य पीठकं चैव सुव्रत। प्रतस्थितं वनायैव सा
वित्री वाक्यमब्रवीत्। न गन्तव्यं वनंत्वद्य मम वाक्येन मानद। अथ वा गम्यते साधो मयासह वनं व्रज। संवत्सरं च सम्पूर्णं आश्रमेस्मिन्मम प्रभो। तद्वनं
द्रष्टुमिच्छामि प्रसादं कुरुमे प्रभो॥ सत्यवानुवाच॥ नाहं स्वतन्त्रः सुश्रोणि पृच्छस्व पितरौ मम। ताभ्यां प्रस्थापिता गच्छ मयासह सुचिस्मिता। १४४
एवमुक्ता तदानेन भर्त्रासा कमलेक्षणा। श्वश्रूश्वसुरयोः पादौ अभिवाद्य तमब्रवीत्। वनं द्रष्टुं समिच्छेयं आज्ञां मह्यं प्रदीयतां। उवाच वचनं

साध्वी वरमेकं प्रयच्छ मे। भर्त्रा सह वनं गन्तुमेतत्त्वरयते मनः। तस्यास्तद्वचनं श्रुत्वा द्युमत्सेनो ब्रवीदिदं। व्रतं कृतं त्वया भद्रे पारणं कुरु सुव्रते।
पारणान्ते मोद ततो गन्तुं चाथ त्वमर्हसि। सावित्र्युवाच। नियमस्तु कृतोऽस्माकं रात्रौ चन्द्रोदये सति। जाते मया प्रकर्त्तव्यं भोजनं तात मे शृणु। वन
दर्शन कामोऽस्ति भर्त्रा सह समाद्यवे। न मे तत्र भवेद्ग्लानिर्भर्त्रा सह नराधिप। इत्युक्तस्तु तदा राजा द्युमत्सेनो महीपतिः। यत्ते भिलषितं पुत्रि
तत्कुरुष्व सुमध्यमे। नमस्कृत्वा तु सावित्री श्वश्रूश्वशुरयोरपि। सहिता तेन शार्दूल तेन सत्यवता विभो। विलोकयन्ती भर्त्तारं तंच कालं
मनस्विनी। वनं च फलितं दृष्ट्वा पुष्पितं द्रुमसङ्कुलं। द्रुमाणां चैव नामानि मृगाणां चैव भामिनीः। पश्यन्ती मृगयूथानि हृदयेन प्रवेपती। तत्र
गत्वा सत्यवान्वै फलान्यादाय सत्वरः। काष्ठानि च समादाय ववन्ध भारकं तदा। कठिनं पूरयामास कृत्वा वृक्षावलोचनं। वटवृक्षतले साध्वी
उपविष्टा महासती। काष्ठान्पाटयतस्तस्य जाता शिरसि वेदना। ग्लानिश्च महती जाता गात्राणां वेपथुस्तदा। आगत्य वृक्षसामीप्यं सावित्रीमिद
मब्रवीत्। ग्लानिश्च महती जाता शिरसश्चापि वेदना। कण्टकैर्भिद्यते भद्रे शिरो मे शूलसंमितैः। उत्सङ्गे तव सुश्रोणि स्वप्तुमिच्छामि सुव्रते। विश्रमस्व
महाबाहो सावित्री प्राह दुःखिता। अभिज्ञाता विशालाक्षी तस्य मृत्यो मनस्विनी। प्राप्तकालं मन्यमाना तत्र तत्रैव भामिनी। सत्यवानपि सुप्तस्तु कृत्वो
त्सङ्गे शिरस्तथा। तावत्तत्र समागच्छत्पुरुषः कृष्णपिङ्गलः। आज्वल्यमानो वपुषा ददर्शाथ च भामिनी। उवाच वाक्यं वाक्यज्ञा कस्त्वं लोकभयङ्करः। यम उवा
च। क्षीणायुस्तु वरारोहे भर्त्ता तव मनस्विनी। विना केनापि च न मां नेतुं शक्यस्त्वदन्तिकात्। देविद्विषहं तेजः सोढुं शक्यं न ते शुभे इति ज्ञात्वा महा
भागे स्वयमागमनं मम। इत्युक्त्वा तां वरारोहां तस्य देहान्महात्मनः। अङ्गुष्ठमात्रं पुरुषं वद्ध्वा पाशेन सुस्वरं। निचकर्ष ततो वेगाद्गृहीत्वा प्रस्थितः पुरीं।
सावित्री तु ततः पश्चादनुयाति स्म तं पतिं। यम उवाच निवर्त्तस्व महाभागे त्वं दूरं समुपागता। गत्वा स्वभवनं शीघ्रं कुरु चैवोर्ध्वदैहिकं। एवमुक्ता तु सा तेन
प्रत्युवाच यमं तदा। न श्रमो नैवच ग्लानिः सकाशे तव मानद। विशेषतस्तु भर्त्तुर्मे कुतो ग्लानिर्मे सुरेश्वर। धर्मेण त्वं पालयसे धर्मेण त्वं विवर्धसे। ना

॥ व्र ॥ सम ॥ अर्चयित्वा तथाचार्य्यं सपत्नीकं सुसंमतं। तस्मै वस्त्रान्वितं सर्वं हेमसावित्रिसंयुतं। मन्त्रेणानेन दातव्यं द्विजमुख्याय सुव्रत। सावित्री कश्यपविद्
१४६ ये प्रतिपद्य तथा मुने। सावित्री जगतां माता सावित्री जगतः पिता। मया दत्ता च सावित्री ब्राह्मण प्रतिगृह्यतां। अवैधव्यञ्च मे नित्यं जावज्जन्म
नि जन्मनि। यताच वसते लोके ब्रह्मणा पतिना सह। तथैवच चिरं कालं भुञ्जन् भोगाननुत्तमान्। सावित्र्युवाच॥ या मदीयं व्रतं देव भक्त्या नारी
करिष्यति। भर्तुः सा सहिता साध्वी समस्तसुखभाजना। धर्मराज उवाच॥ नारी वा विधवा वापि अपुत्रा पतिवर्जिता। सभर्तृका
सपुत्रा वा कार्य्यंव्रतमिदं शुभं। ज्येष्ठमासेतु संप्राप्ते पौर्णमास्यां पतिव्रता। स्नात्वा चैव शुचिर्भूत्वा वटं सिंच्य वक्रदकैः। सचेष्व वेष्टयेत्
भक्त्या गन्ध पुष्पाक्षतैः शुभैः। नमेोवैव सुतायेति भ्रामयन्ति प्रदक्षिणं। रात्रौ कुर्वीत नक्तञ्च अब्दमेकं समाहिता। तथैव वटवृक्षञ्च
पक्षे पक्षे प्रपूजयेत्। अनेनैव विधानेन कर्त्तव्यं व्रतमुत्तमं। सर्वान्मनोरथान् प्राप्य ब्रह्मलोके महीयते। इति स्कांदे सावित्री व्रतं॥ अथोद्यापनं।
संप्राप्तेतु पुनर्ज्येष्ठे लघुभुक् द्वादशीं नयेत्। दन्तानां धावनं कृत्वा नियमं कारयेत्ततः। त्रिरात्रं लङ्घयित्वाच चतुर्थे दिवसे त्वहं। चन्द्रायार्घं प्रदत्वाच
पूजयित्वातु तां सतीं। मिष्टान्नानि यथा शक्त्या भोजयित्वा द्विजोत्तमान्। भोक्ष्येहन्तु जगद्धात्रि निर्विघ्नं कुरुमे शुभे। नियम मन्त्रः। कृत्वा वंशमये पा
त्रे वालुका प्रस्थमेव सप्तधान्ययुतं पात्रं प्रस्थकेन द्विजोत्तम वसुधोपरि संस्थाप्य सावित्री ब्रह्मणासह। हैमीं कृत्वा तयोःप्रीत्यै त्रिरात्रमुपवासतः। न्यग्रो
धस्य तले तिष्ठे यावच्चैव दिनत्रयं। सौवर्णीञ्चैव सावित्रीं सत्येन सह कारयेत्। रौप्यपर्य्यंकमारोप्य रथोपरि निवेशयेत्। पलादूर्ध्वं यथा शक्त्या रथं
रौप्यमयं शुभं। काष्ठभारं कुठारञ्च वटञ्चैव सुविस्तृतं। एवञ्च मिथुनं कृत्वा पूजयेद्गतमत्सरा। वर्तुलं मण्डलं कार्य्यं गोमयेन तपोधन।
पञ्चामृतेन स्नपनं गन्ध पुष्पोदकेन च चन्दनागरुकर्पूरैर्माल्यवस्त्रविभूषणैः पीतपिष्टेन पद्मञ्च चन्दनेनाथवा लिखेत् देवीं संपूजयेत्तत्र मंत्रैरे
भिर्विधानतः। नमः सावित्रि पादौतु प्रभाविश्वेच जानुनी। कटिं कमलपत्राक्षि उदर भूतधारिणि। ओं गायत्र्यै नमः कण्ठे शिरसि ब्रह्मणः प्रिये। १४६

अथ ब्रह्मसत्यवतोः पादौ धात्रे नमः। पूज्यावुरू ज्येष्ठाय वै नमः। परमेष्ठिनेच मेढ्रं वै अग्निरूपाय वैकटिं वेधसे चोदरं पूज्यं पद्मनाभाय वै हृदि। कंठंतु वेधसे पूज्यं हिरण्यगर्भाय वैमुखं। ब्रह्मणे वै शिरः पूज्यं सर्वांगं विष्णवे नमः अभ्यर्च्यैवं क्रमेणैव शास्त्रोक्त विधिना शुभं। ततो रजतपात्रेण अर्घं दद्यात् द्वयोरपि। अथार्घं। ओंकार पूर्विके देवि वीणापुस्तकधारिणी। वेदमातर्नमस्तेस्तु अवैधव्यं प्रयच्छ मे। पतिव्रते महाभागे वह्निजाते शुचिस्मिते दृढव्रते दृढमते भर्त्तुश्च प्रियवादिनि। अवैधव्यंच सौभाग्यं देहि त्वं मम सुव्रते। पुत्रान् पौत्रांश्च सौख्यञ्च गृहाणार्घं नमोनमः। अथ ब्रह्म सत्यवतोरर्घं मन्त्रः। त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषं। सत्यव्रतधरो देव ब्रह्मरूप नमोस्तुते। अथ यिमायार्घः। त्वं कर्म साक्षी लोकानां शुभाशुभ विवेक कृत्। वैवस्वत गृहाणार्घं धर्मराज नमोस्तुते। धर्मराजः पितृपतिः साक्षीभूतोसि जन्तुषु। कालरूप गृहाणार्घमवैधव्यंच देहिमे। गन्धपुष्पैश्च नैवेद्यैः फलैः कुसुमदीपकैः। रक्तवस्त्रै रत्नहारैः पूजयेद्गतमत्सरा। अथ सावित्री प्रार्थना। सावित्री ब्रह्मगायत्री सर्वदा प्रियभाषिणी। तेन सत्येन मां पाहि दुःख संसारसागरात्। त्वं गौरी त्वं शची लक्ष्मी त्वं प्रभा चन्द्रमण्डले। त्वमेवच जगन्माता त्व मुद्धर वरानने। सौभाग्यं कुरु दृद्धिञ्च देवि त्वं मम सुव्रते। जन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि। भस्मी भवतु तत्सर्वं अवैधव्यञ्च देहिमे। अथ यमसत्यवतोः प्रार्थना। अवियोगो यथा देव सावित्र्या सहितस्तव। अवियोगस्तथास्माकं भूयाज्जन्मनि जन्मनि। यम प्रार्थना। कर्म साक्षी जगत्पूज्यः सर्ववन्द्यः प्रसीद मे। संवत्सरव्रतं सर्वं परिपूर्णंतदस्तुमे। सावित्री त्वं यथा देवि। चतुर्वर्षशतायुषं। पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु। सावित्रीच प्रसावित्री सततं ब्रह्मणः प्रिया। पूजितासि द्विजैः सर्वै र्ऋषिभि र्मुनिगणै स्तथा। त्रिसन्ध्यं देवि भूतानां वन्दनीयासि सुव्रते। मया दत्ता च पूजेयं तां गृहाण नमोस्तुते। जागरं तत्र कुर्वीत गीत नृत्यादि मङ्गलैः। सुवासिन्य स्ततः पूज्या दिवसे दिवसे गते। सिन्दुरं कुङ्कुमंचैव तांबूलं च सपूगकं। तथा दद्याच्च शूर्पाणि मत्स्यं सौभाग्यमष्टकं। सौभाग्यमष्टकं परिभाषायामुक्तं। सातिष्ठेच्च दिवा रात्रौ कामक्रोधविवर्ज्जिता। दिनत्रयेपि कर्त्तव्यमेवमर्घादि पूजनं। ततश्चतुर्थे दिवसे यत्कार्य्यं

तस्कृच्छ्मे । मिथुनानि चतुर्विंशः षोडश द्वादशाष्टवा । पूजयेद्दक्षगोदानैर्भूषणाच्छादनासनैः । आचार्यंच ततःपश्चाद्व्रतस्य विधिकारकं । सव लक्षण सम्पन्नं सर्वशास्त्रार्थ पारगं । वेद विद्या व्रत स्नानं शान्तंतु विजितेन्द्रियं । सपत्नीकं समभ्यर्च्य वस्त्रालङ्कार कुण्डलैः । शय्यां सोपस्करां दद्यात्कृष्णस्येवाति शोभनं यशक्त्या यथा शक्त्या लोकं लोकस्य कल्पयेत् । सौवर्णं प्रतीमां पुत्र पतिनासह दापयेत् । दानमन्त्रः । सावित्रि त्वं यथा देवि चतुर्वर्षं शतायुषं । सत्य वन्तं पतिं लब्ध्वा मया दत्ता तथा कुरु । सावित्री जगतां माता सावित्री जगतः पिता । मया दत्ता च सावित्रि ब्रह्मणा प्रतिगृह्यतां । प्रतिग्रह मन्त्रः मया गृहीता सावित्रि त्वया दत्ता सुशोभने । यावच्चन्द्रश्च सूर्यश्च सह भर्त्रा सुखीभव । गुरूश्च गुरुपत्नीश्च ततो भक्त्या क्षमापयेत् । यन्मयाकृतवैकल्यं व्र तेस्मिन्दुरधिष्ठितं । सर्वं सम्पूर्णतां यातु युवयोरर्चनेन तु । धर्मराजो यमो धातानिलःकालोंतकोव्ययः । वैवस्वतश्चित्रगुप्तः दध्नोप्यत्युः चयोवटः मासि मासि तथा त्वेतैर्नामभिः सेवयेद्वटं । न्यग्रोधेशं वसेनित्यं तस्माद्यत्नेन सेचयेत् । ततो गुरुं सपत्नीकं पूजयेद्व्रत विस्तया । भूषणैश्च सुवस्त्रैश्च कुंकुमैश्च मनो हरैः । न्यग्रोधस्य समीपेतु गृहे वास्थंडिले शुभे । सावित्रोऽस्यैव मन्त्रेण घृतहोमंतु कारयेत् । पायसं जुहुयाद्भक्त्या घृतेनसह भामिनि । व्याहृत्याचैव मन्त्रेण तिलव्रीहियवांस्तथा । होमांते दक्षिणां दद्याद्वित्तशाठ्य विवर्जितः । क्षमापयेत्ततो विप्रं वन्द्यपादौ प्रयत्नतः । भुञ्जीत वासरांतेतु नक्तंशांता त पस्विनी । अर्घंदद्यात् त्वरुन्धत्यै हस्ताचैव प्रणम्यच । अरुन्धति नमस्तेस्तु वसिष्टस्य प्रिये शुभे । सर्वदेव नमस्कार्ये पतिव्रते नमोस्तुते । अर्घमेतन्मया दत्तं फल पुष्प समन्वितं । पुत्रान्देहि सुखन्देहि गृहाणार्घं नमोस्तुते । सखिभिर्ब्राह्मणैः सार्द्धं भुञ्जीतविजितेन्द्रिया एवं करोति यानारी व्रतमेतदनुत्तमं । भ्रातरः पितरौपुत्राः श्वशुरौ स्वजनः स्तथा । चिरायुष स्तथा रोग्या सुखजन्मशतत्रयं । भर्त्राच सहिता साध्वी ब्रह्मलोके महीयते । इति व्रतार्के स्कांदे सोद्यापनं सावित्री व्रतम् । अथाषाढ पौर्णमास्यां गोपद्मव्रतं । तत्रपूजा । चतुर्भुजं महाकायं जांबूनद समप्रभं । शङ्खचक्र गदापद्म रमा गरुड शोभितं १४७
सेवितं मुनिभिर्देव यक्ष गन्धर्व किन्नरैः । एवम्विधं हरिं ध्यात्वा ततो यजनमारभेत् । ध्यानं । आवाहयामि देवेशं भक्तानामभयप्रदं । स्निग्धकोमल

केशव्व मनसावाहयेद्धरिं। सहस्रशीर्षेत्यावाहनं। सुवर्ण मणिभिर्दिव्यैः रचिते देवनिर्मिते। दिव्यसिंहासने कृष्ण उपविश्य प्रसीदमे। पुरुष आसनं
पादोदकं सुरश्रेष्ठ सुवर्णकलशे स्थितं। गन्धपुष्पाक्षतै र्युक्तं पाद्यं मे गृह्यतां विभो। एतावानस्येति पाद्यं। अष्टद्रव्य समायुक्तं स्वर्णपात्रोदकं शुभं। भोऽभ
यंकर भक्तानां गृहाणाचमनीयकं। तस्माद्विराडि त्याचमनीयं। गङ्गा गोदावरी चैव यमुनाच सरस्वती। नर्मदा सिन्धु कावेरी ताभ्यः स्नानीयमाहृतं।
यत्पुरु० स्नानं। वस्त्र युग्मं समानीतं पट्ट सूत्रेण निर्मितं। सुवर्ण खचितं दिव्यं गृहाण त्वं सुरेश्वर। तं यज्ञं वस्त्रं। कार्पासतन्तुभिर्युक्तं ब्रह्मणा निर्मितं
पुरा। अनेक रत्न खचितमुपवीतं गृहाण मे। तस्मात् यज्ञोपवीतं। चन्दनं मलयोद्भूतं कस्तूर्यगरु संयुतं। कर्पूरेणच संयुक्तं स्वीकुरुष्वानु लेपनं। तस्मात्
गन्धं शतपत्रैः कर्णिकारैस्संपकै र्मल्लिकादिभिः। तुलस्या युक्त पुष्पाणि गृहाण पुरुषोत्तम। तस्मादश्वा पुष्पं। दशांगं गुग्गुलं धूपं सुगन्धञ्च मनोहरं।
कृष्णागुरु समायुक्तं धूपं देव गृहाण मे। यत्पुरुषं धूपं। आज्यञ्च वर्त्ति संयुक्तं वह्निना योजितं च यत्। दीपं गृहाण देवेश त्रैलोक्य तिमिरापहं। ब्राह्म
णोस्य दीपं। अन्नं चतुर्विधं स्वादु रसैःषड्भिः समन्वितं। भक्ष्य भोज्य समायुक्तं नैवेद्यं गृह्यतां हरे। चन्द्रमा० नैवेद्यम्। इदं फलं पूगीफलं महद्दिव्यं ना
भ्या० तांबूलं हिरण्यगर्भ समा० दक्षिणा यज्ञेन पुष्पांजलिं ततद्व्रर्षोक्तं वायणं सुपक्वान्नमिदं विप्र गृहाण त्वं द्विजोत्तम। त्वत्प्रसादा दहं विप्र ब्रतस्य फ
ल माप्नुयाम्। प्रदक्षिणा मन्त्रहीनं० प्रार्थना अथ कथा। सूत उवाच। नाथैकं त्वांहि पृच्छामि चतुर्वर्ग फलप्रदं। सर्व रोग प्रशमनं विष्णुसारूप्य मुक्तिदं।
नारीणामथवा पुंसां भुक्ति मुक्ति फलप्रदं। ब्रूहिचेदस्ति देवर्षे कृपां कृत्वा ममोपरि। नारद उवाच। भगवन् सर्व माख्यातं यत्पृष्टं विदुषा त्वया। गो
पद्मकं ब्रतं ह्येनं ब्रतानां ब्रतमुत्तमं। कर्त्तुः सिद्धि करं दिव्यं विख्यातं भुवनत्रये। सनत्कुमार उवाच। भगवन् भूतभव्येश सर्वशास्त्र विशारद। तद्व्रतं
ब्रूहि मे ब्रह्मन् कथमुद्यापनं भवेत्। पुरेदं केन वाचीर्णं देवर्षे कथय ब्रतं। नारद उवाच। आषाढ कार्त्तिकौ मासौ ब्रत ग्रहणे च सिद्धिदौ। आषाढ्यां
पौर्णमास्यांतु तथाष्टम्यां हरे र्दिने। प्रारम्भे ब्रतमेतच्च कार्त्तिकावधिसत् तिथौ। तिलामलक कल्केन स्नानं नित्यं विधायच। नदी तीरेथवागोष्टे शि

वागारे हरे गृहे वृन्दावने वापिविष्णोः लिखेच्छोपद्मकं पदं। त्रयस्त्रिंशत्तु पद्मानि कुर्याद्भक्त्या दिने दिने। तत्संख्यया प्रकर्त्तव्या अर्घं प्रदक्षिणानतीः।
ताश्च कृष्णं समुद्दिश्य लक्ष्म्यासह जगद्गुरुं गन्धाद्यै रुपचारैस्तु यथा शक्त्या प्रपूजयेत्। ब्राह्मणाश्च ततः पूज्य पद्म संख्याश्च मुत्सृजेत्। प्रथमेऽब्दे च वट
कैर्द्वितीये पूपकैर्व्रती। तृतीये शालिपिष्टान्नैश्चतुर्थे पूरिकादिभिः। पञ्चमे परमान्नैस्तु संयावै पूजयेत् व्रती। अथैवोदाहरन्तीममितिहासं पुरातनं।
ऋषीणां पृच्छमानानां सूतेनोक्तं मया श्रुतं। ऋषयऊचुः। केन चादौ पुराचीर्णं मर्त्ये केन प्रकाशितं। कथमुद्यापनं तस्य किं फलं सूत कथ्यतां। सूतउ
वाच। पुरा शक्रोऽमरावत्यां देव दानव किन्नरैः। रुद्रैरादित्य वस्वाद्यै गन्धर्वैर्वसुभिःसह। रम्भा नृत्यं समारेभे क्रीडालोभेन विह्वला। एवं नित्यं क्रिय
माणे त्रुटितम् चर्म मड्डुकम्। कथं तत्र विचार्याथ धर्मराजस्तमुक्तवान्। यम उवाच। जन्म मध्ये व्रतं येन न कृतं प्राणिभिः क्वचित्। तच्चर्म चायुभिः
शक्र कर्त्तव्यं च्छादनं तयोः। नारदेन श्रुतं तच्च जगाम यदुनन्दनम्। अर्चयित्वा तु तं कृष्णं वचनं चेदमब्रवीत्। श्रीकृष्ण उवाच॥ सर्वं लोकस्य देवर्षे
भुवनेषु चरन् सदा। तत्र जातं महाश्चर्यं श्रुतं मे धर्म संसदि। तत्र सर्वे समायाताः सुरा इन्द्रास्तथेश्वरः। रुद्रा एकादश विदुरादित्या द्वादशापिच।
वसवोऽष्टौ तथा नाग यक्ष राक्षस पन्नगाः। रम्भयाच समारब्धं नृत्यं शक्रस्य पश्यतः। त्रुटितश्चर्मवाद्यानामप्रुवंस्तस्य साधनं। यमः प्राह तदा दूतान्
सुभद्राख्य व्रताख्या भो। नामानवस्थं तच्चर्म वाद्ययोग्यं सदास्त्विति। तच्छ्रुत्वा तु मया भीत्या सर्वंह्यपि निवेदितं। सूत उवाच॥ इति नारद वाक्यन्तु श्रु
त्वा कृष्णस्त्वरान्वितः। सुभद्राया गृहं गत्वा पूजितस्तामुवाचह। किञ्चिद्व्रतं त्वया भद्रे कृतं वानेत्य संशयं। सुभद्रोवाच। सर्वं व्रतानि भो कृष्ण
कृतान्येव न संशयः। नोचेत्तव सहोदर्यं नस्यामर्ज्जुनवल्लभा। पुत्रोभिमन्युस्य कथं कथयस्व जगत्पते॥ श्रीकृष्णउवाच॥ तथापि त्वं महाभागे व्रतमे
कं समाचर। गोपद्मेति विख्यातं त्रिषु लोकेषु विश्रुतं। इति कृष्ण वचः श्रुत्वा सुभद्रा तत्तदाकरोत्। कृष्णोपदिष्टविधिना सत्वरंच समापितं। सोद्या १४८
पने व्रते पूर्णे काले यमभटा ययुः॥ दूताऊचुः॥ सुभद्रे तव देहस्य चर्मार्थं त्वागता वयं। त्वच्चर्म सुरवाद्याद्यार्थं यमेनच प्रशस्तितं॥ इति

इति वचः श्रुत्वा सव्रतास्मीति सा ब्रवीत् ततो भटाः सर्व एव ददृशुः सादरास्तदा। पद्मानां निचयं तस्या गृहे गां च सवत्सकां। स्थंडिले चलमाने तु सुसमिद्धं हुताशनं। कृष्णोपदिष्टं वीक्ष्यैवं भटा अभ्युर्युमान्तिकं। प्रापद्यत प्रभावेण सुभद्रा पदमच्युतं॥ नारद उवाच। इति सूत वचः श्रुत्वा ऋषयः चक्रिरे व्रतं। सनत्कुमार उवाच॥ भो भो नारद देवर्षे सर्वज्ञान सुधानिधे। शीघ्रं ब्रूहि सखे मेद्य व्रतस्योद्यापने विधिम्॥ नारद उवाच पूर्णे तु पञ्चमे वर्षे व्रतस्योद्यापनं भवेत्। श्रीविष्णोः प्रतिमा कार्या सुवर्णस्य पलेन वै॥ सुपुष्प मण्डपिका कार्या चतुर्द्वारा सुशोभना। तन्मध्ये पूजयेल्लक्ष्म्या रमया सहितं हरिं॥ अयस्त्रिंशत् ततो विप्रान् कृत्वा होमं समाचरेत्। अतो देवेति मन्त्रेण जुहुयात् तिलपायसं॥ रत्नवस्त्रयुतां धेनुमाचार्याय निवेदयेत्। माध्यर्णाश्च सपत्नीकान् भोजयेत् पूजयेत्तथा॥ एवं यः कुरुते विप्रः तस्य श्रीरचला भवेत्। यं यं चिन्तयते कामं तं तं प्राप्नोत्य संशयं। अन्ते विष्णुपदं गच्छेत् सर्वपापविवर्जितः। इति नारदीये गोपद्म व्रतं॥ अथ मूलं शिष्टाचार एव। अथाषाढपौर्णमास्यां कोकिलाव्रतं। आषाढस्याधिमासत्वे तोकानुष्ठानं तु निःप्रमाणं तद्विधिः आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य ममेह जन्मनि सर्वपापक्षय पुत्र पौत्र लक्ष्मी अवैधव्य सपत्नीनाश सौभाग्यसिद्धिद्वारा कोकिलारूप गौरी प्रीत्यर्थं कोकिलाव्रतं करिष्य इति सङ्कल्प्य॥ आषाढ पौर्णमास्यां तु सन्ध्याकाले ह्युपस्थिते। सङ्कल्पयेन्मासमेकं श्रावणे प्रत्यहं ह्यहं॥ स्नानं करिष्ये नियमाद्ब्रह्मचर्यस्थिता सती। भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयामित्युक्त्वा। स्नानं करोमि देवेशि कोकिले प्रीतये तव। अस्मिन् पावने पुण्ये सर्वदेव समाश्रये। इति मन्त्रेण तिलामलकैः सर्वौषधिजलेन आष्टौ दिनानि प्रत्येकं तिलामलकपिष्टेन सर्वौषधियुतेन च षट्दिनान्येवं मासावधि स्नाने क्रमः। एवं स्नात्वा रविं ध्यात्वा तस्मै अर्घं दद्यात्॥ ततः आदित्य भास्कर रवे अर्क सूर्य दिवाकर। प्रभाकर नमस्तुभ्यं गृहाणार्घं नमोऽस्तुते। इति सूर्यार्घः॥ ततः स्वर्णपक्षां रौप्यपादां मौक्तिकनेत्रां प्रवालमुखां रत्नपृष्ठां चूतचम्पकवृक्षस्थां पक्षिरूपिणीं कोकिलां विलिखित्वा पूजयेदित्युक्तं। स्वर्णपक्षां रत्ननेत्रां प्रवालमुखपङ्कजां। कस्तूरीवर्ण संयुक्तामुत्पन्नां नन्दने वने॥ चूतचम्पकवृक्षस्थां पुंस्वरसमन्वि

॥ ग्रं ॥ ह्रां । चिन्तयेत्पार्वतीं देवीं कोकिलारूपधारिणीं ॥ ध्यानं ॥ आवाहयामि त्वां देवि कोकिलारूपधारिणी । आगच्छ कोकिले देवी देहि मे वाञ्छितं फलं ।
१४९ [चूत]द्रुममारूढा क्रीडसे नन्दने वने ॥ आवाहनं । आसनं क्षौमवस्त्रेण निर्मितं ह्यनघे तव । गृहाणेदं मयादत्तं कोकिले प्रीतिवर्धनि । आसनं ॥
तिलकोकिले तिलमुखे तिलसौख्ये तिलप्रिये । सौभाग्य धनपुत्रांश्च देहि मे कोकिले नमः । तिलपुष्प फलैर्युक्तं पाद्यं मे प्रतिगृह्यतां ॥ पाद्यं ॥ रक्तच
न्दनपुष्पैश्च पीतचन्दनसंयुतं । हेमपात्रेस्थितं तोयं गृहाणार्घं नमोस्तुते । अर्घं । निर्मलं सलिलं गांगं कोकिले पक्षिरूपिणि । वासितं च सुगन्धेन गृहाणा
चमनीयकं ॥ आचमनं ॥ पञ्चामृतेन स्नपनं कोकिले कलकण्ठके । मया दत्तेन प्रीता त्वं भवत्वं परमेश्वरि ॥ पञ्चामृतं ॥ मन्दाकिनीजलं पुण्यं सर्व
तीर्थ समन्वितं । स्नानार्थं मया दत्तं कोकिले गृह्यतां नमः ॥ स्नानं ॥ कौसात्का र्पाससूत्रेण वासांसि विविधानि च । पीतवस्त्रप्रदानेन प्रीताभव ममांबि
के ॥ वस्त्रं ॥ कञ्चुकञ्च मयादत्तं नानावर्णं विचित्रितं । कोकिले गृह्यतां देवि प्रसीद परमेश्वरि । हरिद्रारञ्जितं देवि कण्ठसूत्रं समर्पितं । कोकिले
सुमुखे देवि वरदा भव मे शिवे । कण्ठसूत्रं ॥ यानि रत्नानि सर्वाणि गन्धर्वेषू रगेषु च । तैर्युक्तं भूषणं हैमं कोकिले प्रतिगृह्यतां ॥ भूषणं ॥ श्रीखण्ड
चन्दनं दिव्यं मलयाद्रिसमुद्भवं । विलेपनं सुरश्रेष्ठे गृह्यतां परमेश्वरि । गन्धं ॥ अक्षताः ॥ कुङ्कुमाक्तकं दिव्यं कामिनीभूषणास्पदं । सौभाग्यदं गृहाणेदं
प्रसीद हरवल्लभे । कुङ्कुमादि प्रतपत्रैर्जातीपुष्पैश्च चम्पकैः । मरुपत्रकैः पाटलैश्च दूर्वापुष्पं गृहाण मे ॥ पुष्पं ॥ वनस्पति रसोद्भूत इति धूपः ॥ आज्यं
च वर्तिसंयुक्तं इति दीपः । शर्कराखण्डखाद्यानि दधिक्षीर घृतानि च । आहारार्थं मया दत्तं नैवेद्यं प्रतिगृह्यतां । नैवेद्यं ॥ पाटलोशीरकर्पूरयुतं स्वादु
शीतलं । पानीयार्थं मयानीतं कोकिले प्रतिगृह्यतां । चन्दनागरुकर्पूरं कस्तूरी केसरान्वितं ॥ करोद्वर्तनकं देवि गृह्यतां हरवल्लभे ॥ करोद्वर्तनं ॥ कू
ष्माण्डं नारिकेरञ्च पनसं कदलीफलं । आम्रवं मातुलिङ्गञ्च फलं गृह्ण नमोस्तुते ॥ फलं ॥ पूगीफलं महद्दिव्यं इति तांबूलं । हिरण्यगर्भेति दक्षिणा । १४९
कोकिले कृष्णवर्णे च यदा वससि कानने ॥ भवान्यै हरकान्तायै कोकिलायै नमोनमः । नीराजनं ॥ पूजिता परया भक्त्या कोकिला गिरिजप्रिया ।

पुष्पैर्नानाविधैः श्रेष्ठैर्वरदास्तु सदा मम। पुष्पाञ्जलिः। कोकिलारूपधारिण्यै जगन्मात्रे नमोऽस्तु ते। शरणागतदीनानां त्राहि देवि सदाम्बिके।
गन्धपुष्पाक्षतैर्युक्तं तोयं हेमफलान्वितं। अर्घं गृहाण देवेशि वाञ्छितार्थं प्रयच्छ मे। आषाढस्य सिते पक्षे मेघवर्णे हरप्रिये। कोकिले त्वं जगन्मातर्गृ
हाणार्घं नमोऽस्तु ते। पुनरर्घं। तिलस्नेहे तिलसुखेति। रूपं देहि यशो देहीति प्रार्थना। मन्त्रैरेभिस्तिलपिष्टस्यां कोकिलां कृत्वा विप्राय दद्यात्।
देवि चैत्ररथोत्पन्ने विन्ध्यपर्वतवासिनी। अर्चिता पूजितासि त्वं कोकिले हरवल्लभे। कोकिले कलकण्ठासि माधवे मधुरस्वरे। वसन्ते वससे देवि
गच्छ त्वं नन्दनं वनं। विसर्जनं॥ इति कोकिलाव्रतपूजा॥ अथ कथा॥ युधिष्ठिर उवाच॥ स्वभर्तृरतिसंबन्धे महास्नेहो यथा भवेत्। कुलस्त्रीणां तथा
वद व्रतं मम यदूद्वह। श्रीकृष्ण उवाच। यमुनायास्तटे पूर्वं मधुरास्ति पुरी शुभा। तस्यां प्रद्युम्न नामा भूद्राजा राघववंशजः। तस्य भार्या कीर्ति
माला नाम्नासीत्प्रथिता भुवि। तया प्रणम्य भगवान् वशिष्ठो मुनिसत्तमः। पृष्टः कथं मुनिश्रेष्ठ सौभाग्यमतुलं लभेत्। एवमुक्तस्तया ज्ञानी वशिष्ठः
कीर्तिमालया ध्यात्वा मुहूर्तमाचख्यौ कोकिलाव्रतमुत्तमं॥ वशिष्ठ उवाच। आषाढपौर्णमास्यां तु संध्याकाल उपस्थिते। सङ्कल्पयेन्मासमेकं श्रावणे
प्रत्यहं ह्यहं। स्नानं करिष्ये नियता ब्रह्मचर्ये स्थितासती। भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयां। इति सङ्कल्प्य पुरुषो नारी वा ब्राह्मणान्तिके।
प्राप्यानुज्ञां ततः प्राक् सर्वसामग्रिसंयुतः। पुरुषः प्रतिपत्काले दन्तधावनपूर्वकं। स्नानम् कुर्याद्व्रते पार्थ सुगन्धामलकैस्तिलैः। दिनाष्टकम्
ततः प्रस्नायात् सर्वौषध्या पुनः पुनः। वचया पिष्टया चाष्टौ दिनानि पृथगाचरत्। स्नात्वा ध्यात्वा रविम् संध्यां तर्पयित्वा पितॄंस्तथा। तर्पयित्वा
लिखेत्पिष्टैः कोकिलां पक्षिरूपिणीं। कलकण्ठीं शुभैः पुष्पैः पूजयेच्चम्पकोद्भवैः। पत्रैर्वा धूपनैवेद्यैर्दीपाक्षतकचन्दनैः। तिलतण्डुलदूर्वाद्यैः पूजयेत् तां
समापयेत्। नित्यम् तिलव्रतीभक्त्या मन्त्रेणानेन पाण्डव। तिलस्नेहे तिलसुखे तिलसौख्ये तिलप्रिये। सौभाग्यधनपुत्रांश्च देहि मे कोकिले
नमः। इत्युच्चार्य ततः पश्चाद्गृहमभ्येत्य संयतः। कृताहारस्तु पत्यर्थं यावन्मासः समाप्यते। मासान्ते ताम्रपात्रे तु कोकिलां तिलपिष्टजां रत्ननेत्रां

॥ म ॥ स्वर्णपत्रां ब्राह्मणाय निवेदयेत्। वस्त्रैर्गुडैस्तथा युक्तां लावण्यां कुलजाय च। श्वश्रूश्वशुरवर्गे वा दैवज्ञे वा पुरोहिते। व्यासेच संप्रदातव्या व्रतिभिः
१५० शुभकांक्षया। तिलके वे इति दान मन्त्रः। एवं या कुरुते नारी कोकिला व्रतमादरात्। सप्तजन्मनि सौभाग्यम् सा प्राप्नोति सविस्तरं। निःसंपतम्
पतिं मध्यम् पद्म इम् प्राप्य भूतले ततोगौरीपुरं याति विमानेनार्क वर्चसा। एतद्व्रतम् वशिष्ठेन मुनिनागदितम् पुरा। तया या नुष्ठितम् पार्थ सम्यग्म्
कीर्त्तिमालया। तस्याश्च सर्वं सम्पत्तिम् वशिष्ठवचनादिह। पुत्रसौभाग्य सत्कारम् मधुराख्य प्रसादजं। एवमन्यापि कौंतेय कोकिलाव्रतमादरात्।
चरिष्यति व्रतम् तस्याः सौभाग्यम् च भविष्यति। ये कोकिलां कलरवां कलकण्ठपीठांयच्छन्ति चाज्यतिलपिष्टमयीं द्विजेभ्यस्तेनन्दनादिषु वनेषु विहृत्य
कामम् मर्त्येषमेत्य मधुरस्वनयो भवन्ति। इति हेमाद्रौ भविष्योत्तरे कोकिलाव्रतम्। अथापरमाषाढाधिमासे गुर्जराचार प्राप्तम् कोकिलाव्रतम्।
युधिष्ठिर उवाच। यमुनायास्तटे रम्ये मथुरानगरी शुभा। तस्यां ऋतुध्वज नामा शूद्राख्या राघवनन्दनः। तस्य भार्या कीर्त्ति माला नाम्नाचोत्प्रथिता
भुवि। प्रणम्य भगवान् पृष्टो वशिष्ठो मुनिसत्तमः। कीर्त्ति मालोवाच। वदमे त्वं मुनिश्रेष्ट सौभाग्य प्राप्तिदम् व्रतम्। पूज्यः कथम् च भगवान्
शिवः केन व्रतेन च। वशिष्ठ उवाच। यदि पृच्छसि मे त्वंहि व्रतानां मुत्तमम् व्रतम्। तारणं सर्वपापानां कथयामि निबोध तत्। दक्ष प्रजापते
र्यज्ञे सुरादेवा समागताः। ऋषयश्च तथा सर्वे विद्याधर गणास्तथा। ब्रह्माविष्णुश्च वायुश्च देवराजस्तथैवच। वरुणोग्निर्ग्रहाः सर्वे ये चान्ये च दिवौ
कसः। वसिष्ठो वाल्मिको गार्ग्यो विश्वामित्रो महानृषिः। एतेचान्ये च ऋषयः सर्वे यज्ञार्थमागताः। अपश्यन्नारदस्तत्र सन्निकेचागताइति ईश्वरेण
विना सम्यग् दृष्ट्वासर्वान् समागतान्। शिवां संस्पृश्य पाणिभ्याम् ननर्त्त कैलाशे शिवः। ज्ञात्वा कलहमूलस्य ततः कैलासमाययौ। सर्वाघनाशनम् स्थानम्
कैलास शिखरम् शुभम्। तत्र दृष्ट्वा समासीनम् गौरीसहितशङ्करम्। कृताञ्जलिपुटो भूत्वा प्रणिपत्य मुनिम् स्थितः। ईश्वरस्तमुवाचाथ निःश्वसन्त १५०
मनेकधा। किमागमन कथ्यन्ते मदीयम् सदनम् प्रति। स्वासोच्छ्वासेन संयुक्तस्तन्मेब्रूहि द्विजोत्तम। ईश्वरस्य वचः श्रुत्वा शिवां संस्पृश्य पाणिना।

दुःखयुक्त इवोवाच नारदः कलहप्रियः । नारद उवाच । यन्निमित्तम् महादेव मर्त्यलोकात्समागतः । त्वदन्तिकं दुःखयुक्तस्तच्छृणुष्व जगत्पते दक्षयज्ञ मद्रष्टुमन्य देवात्समागतः । तत्र यज्ञे स्थिताः सर्वे दक्षजामातरः प्रभो । दृष्टस्त्वं च न तन्मध्ये दृष्टाश्च त्रिभुवनेश्वराः । तवावज्ञा कृता तेन दक्षेण पुण्यकर्मणा । तेन निःश्वास संयुक्त आगतोस्मि त्वदन्तिकं । ईश्वरेण विना किञ्चित् धर्मकार्यं न सिद्ध्यति । अतोस्य विफलः सर्वः प्रयासः खलु संप्रति । नस्य न ज्ञापितं श्रुत्वा न तन्मिथ्येत्य चिन्तयत् । सक्रोधस्तु तदा जात ईश्वरो जगदीश्वरः । गौर्या च प्रार्थितो देवः श्रुत्वा तन्नारदेरितं । तस्य यज्ञस्य यात्रार्थं देव देव व्रजाम्यहं । इत्युक्त्वा चलिता रोषादीश्वरेण निवारिता । जगदीश नमस्तुभ्यं व्रजामि पितृवेश्मनि । नारदेनाथ सहिता गणेशेनाथ संयुता यज्ञार्थमागता चैव दक्षद्वारे शिवप्रिया । तिष्ठन्ती द्वारि तां दक्षो न ददर्श महासतीं । क्षणमेकञ्च तिष्ठन्ती यदा दक्षो न पश्यति । तदैवं चिंतितं गौर्या जीवितव्यं मया कथं । धाविता कुण्ड निकटे झम्पा कृत्वाच सा ततः । छिन्नं वक्षो तदा गौर्या शापं दत्वा सुदारुणं । दृष्ट्वा तच्च गणेशेन पाशः परशुर्धृतः । क्षुब्धोत्थायसौ तदात्यर्थं गौर्या अर्थे गणाधिपः । पाशेन बध्वा कतिचित्कोपाक्षिप्तवान् सुरान् । दक्षेण नोदिता देवाः सर्वे युद्धाय निर्ययुः । महद्युद्धमभूत्तत्र सह देवैर्गणेशितुः । तं दृष्ट्वा नारदः शीघ्रं पुनः कैलाश माययौ । निवेदयामास च तमुदंतं सर्वमीश्वरं । तच्छ्रुत्वा स्फालयामास जटां कोपादुमापतिः । ततोतिविकटः पुरुषो रक्तलोचनः । स बभाषे महादेवं स्वामिन्नाज्ञां च देहि मे । वीरभद्रेति नामास्य कृत्वाचाज्ञां समर्पयत् । दक्षयज्ञविघातार्थं महावीरातिसत्वरं । श्रुत्वा तदीश्वर वचः सर्वं प्रमथ संयुतः । ययौ यज्ञसदनमस्त्रमग्निषु निक्षिपन् । तत इन्द्रादयो देवाः सन्नद्धाश्च विनिर्ययुः । क्षणात्पराजिता स्तेन विद्रुताश्च दिशोदश । अनुद्रुतास्तान् सोपि पूष्णो दन्ता अपातयन् । भगस्य नेत्रे नाशाच ऋषिपुत्रस्य कृन्तत । एवं विद्राव्य तान् सर्वांश्छिरो दक्षस्य चिच्छिदे । कृत्वैवं यज्ञघातं स आजगाम शिवांतिकं । नमस्कृत्य पुरस्तस्थौ कृतं कार्यमिति ब्रुवन् । तथाप्यशांतं कोपोस्य ज्ञात्वेति ज्ञानचक्षुषा । प्रसाद यितुमीशानं ब्रह्मविष्णू समीयतुः । नमस्कृत्य स्तुतस्ताभ्यां प्रसन्नोभूत्तदा शिवः । नारदस्तुंबुरश्चैव गीतैः शिवमतोषयत् ।

॥ ब ॥ प्रणतं वीक्ष्य तं विप्रः शिवां संपूज्य पाणिना। ननर्त नारदस्तत्र तोषयन्नधिकं शिवं। एतस्मिन्नन्तरे ब्रह्मा विष्णुश्च प्रमथाधिपं। व्यजिज्ञपत्तं दक्षादीन्
१५१ कृपादृष्ट्या विलोकय। कृत्ताङ्गान् कुरु पूर्णाङ्गान् मृतान् संजीवय प्रभो। विलोकितास्ते देवेन कृपादृष्ट्या सुरासुरा पूषादयः सुरदाश्च अभूवंस्तत् प्रसा
दतः। उत्थितः पादयो मूलं ययौ दक्षः पिनाकिनः। अपराधं क्षमस्वेति पुनः पुनरुवाच ह। उत्थापितः करेणासौ दक्षस्तु शूलपाणिना। उक्तश्च मा
पुत्रः कार्षीरेवमीशावमाननं। विचरस्व सुखेनेति भूयस्तं कोप आविशत्। शशाप च तदा गौरीं यज्ञविघ्नकरीं शिवः। मखेविघ्नं कृतवती दक्षस्यैषा तत
स्त्वरात्। तिर्यग्योनिं समापन्ना विचरिष्यति भूतले। ततो गौरी वमाधेनं प्रणिपत्य सदा शिवं। कथं यास्यामि तिर्यक्त्वं भूतले च स्थितिः कथं। अन्यथा च
न भविता शाप एवस्त्वयोदितः। कोकिला मधुरालापा भवेयं नन्दने यतः। कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता। विद्यारूपं कुरूपाणां क्षमारूपं तप
स्विनां। अचिरादेव च पुनः कुले महति जन्मनि। भूयास्त्वमेव भर्त्ता च न वियोगश्च मे यतः। वरयेत्कुलजां प्राज्ञः कुरूपामपि कन्यकां। दुःकुले च समुत्पन्ना
भर्त्तुः पातयते कुलं। नदीपातयते कूलं नारीपातयते कुलं। नदीनां चैव नारीणां स्वच्छन्दं ललिता गतिः। ततस्तुष्टो महादेव स्तस्यै शापविमोचनं। द
शवर्षसहस्राणि कोकिलारूपधारिणी। नन्दने देव विपिने चरिष्यति ततःपरं। हिमाचलसुता भूत्वा मां प्रिये त्वमुपेष्यसि। देवानां तु यथा विष्णुः
सरकारो महीधर्ष्णां गङ्गा च सर्व तीर्थानां तथा तिर्यक्षु कोकिला। आषाढौ द्वौ यदा स्यातां कोकिलायास्तदार्चनं। तदा या कुरुते नारी न सा वैधव्य
माप्नुयात्। वसिष्ठ उवाच। एतद्वाक्यावसाने तु गौरी सा कोकिलाभवत्। तत आदि शुचि द्वैते प्रथितं कोकिलाव्रतं। या नारी नैव कुरुते मोहात्सा
विधवा भवेत्। कुरुत्वमेतत्कल्याणि कीर्त्तिमाले व्रतोत्तमं॥ कीर्त्तिमालोवाच॥ कथमाराध्यते गौरी कोकिलारूपधारिणी। विधानं ब्रूहि तद्विप्र त्व
त्प्रसादात्करोम्यहं। वसिष्ठ उवाच॥ कोकिलाव्रत माहात्म्यं विधानञ्च वदामि ते। शृणु देवि प्रयत्नेन मन्त्रैः पौराणिकैर्युतं। मलमासे त्वतिक्रान्ते शुद्धा १५१
षाढे समागते। आषाढ्यां पौर्णमास्यां तु सन्ध्याकाले ह्युपस्थिते। संकल्पयेन्मासमेकं श्रावणप्रभृतिह्यहं। स्नानं करिष्ये नित्यञ्च ब्रह्मचर्या स्थिता सिते। भो

खे नक्तञ्च भूशय्यां करिष्ये प्राणिनां दयां। सौभाग्यधनधान्यादि प्राप्तये शिवतुष्टये। इति संकल्प्य विप्राग्रे नारी विप्रैश्च एवच। प्राप्यानुज्ञां तु संवाद्य सामग्रीं सकलामपि। प्रत्यूषेच प्रतिदिनं दन्तधावन पूर्वकं नद्यां गत्वाथवावाप्यां तडागे गिरिनिर्झरे। स्नानं करोमि देवेशि कोकिले प्रीतये तव। जलेस्मिन्पावने पुण्ये सर्व देव जलाश्रये। स्नानं कुर्याद्व्रती देवि सुगन्धामलकैस्तिलैः। दिनाष्टकं ततः पश्चात्सर्वौषध्या पुनः पृथक्। वचा पिष्टेनच स्नानं दिनान्यष्टौ समाचरेत्। तिलामलकपिष्टेन वचौषधि युतेनच। षटदिनानि ततः स्नानं संपूर्ण फल लिप्सया। स्नात्वा ध्यात्वा रविं तस्मै दद्या दर्घं प्रयत्नतः। आदित्य भास्कर रवे ह्यर्क सूर्य दिवाकर। प्रभाकर नमस्तुभ्यं गृहाणार्घं नमोस्तुते। सूर्यार्घमन्त्रः। कारयेत्कोकिलां देवीं सौवर्णां सर्वकामदां। रौप्यंतु चरणयोश्चैव नेत्रयोश्चापि मौक्तिकं। रत्नानि पञ्च पृष्ठे तु चूतवृक्षसमाश्रितां। अथवा तिलपिष्टेन कोकिलां पक्षिरूपिणीं। निधा य ताम्रपात्रे तां पूजयेत्सुसमाहितः। उपचारैः षोडशभिर्यथावत्तन्निबोध मे। आवाहयामि तां देवीं कोकिलारूपधारिणीं। अवतारं कुरुष्वात्र प्रसादं कुरु सुव्रते। आवाहनं। आगच्छ कोकिले देवि देहि मे फलवांछितं। चूतवृक्षं समारुह्य रमसे नन्दने वने। आसनं॥ तिर्यग्योनि समुद्भूते कोकिले कलकण्ठके। तिलपुष्पाक्षतैरर्घं गृहाण त्वं नमोस्तुते। अर्घं॥ आषाढस्यसितेपक्षे मेघवर्णस्वरूपिणि। कोकिले नाम त्वं देवि स्नानार्थं प्रतिगृह्यतां स्नानं॥ कोकिले कलकण्ठे च माधवे मधुरस्वरे। वसन्ते वससे देवि वस्त्रंच प्रति गृह्यतां। वस्त्रं। श्रीखण्डचन्दं दिव्यं गन्धाढ्यं सुमनोहरं। विलेपनं मया दत्तं प्रीत्यर्थं प्रतिगृह्यतां। गन्धं। हरिद्रा कुङ्कुम द्रव्यैः कोकिले काम संभवे। कुङ्कुमेनार्चितासि त्वमतः शान्तिं प्रयच्छमे। हृद्यं मुक्तंच रक्तञ्च वासांसि विविधानिच। पीतसूत्र प्रदानेन प्रीताःस्युः सर्वदेवताः। वस्त्रयुग्मं। माल्यादीनीतिपुष्पं वनस्पत्युद्भव इति धूपं। आज्यञ्च वर्त्तिसंयुक्त मिति दीपं। सर्व भक्ष्य समायुक्तं रसैः सर्वैः समन्वितं। सर्व देव समाहारं नैवेद्यं प्रतिगृह्यतां। इति नैवेद्यं॥ कूष्माण्डै र्नालिकेरैश्च खर्जूरै र्दाडिमी फलैः। चूत जंबीरजंबूकैः श्रीफलै रामलै स्तथा। द्राक्षा नारिङ्ग वदरै र्मातुलिङ्गैः सशर्करैः। फलानि। नागवल्लीदलमिति तांबूलं। हिरण्येति दक्षिणा।

भ०प्र० प्रार्थना। विनानि कण्ठसूत्राणि दद्याद्वापि दिने दिने। कुङ्कुमं पुष्प तांबूल मक्षतांस्त्र दिने दिने। कुर्यादेवं विधां पूजां श्रीवत्सं तच्च सुव्रते। विसर्ज
१५२ येत्र पच्चान्तां सौवर्णं कोकिलां यदि। यदा तु तिलपिष्ठस्य कोकिलाक्रियते तदा। कुर्यात्प्रत्यक्षमाज्ञानं भिन्नायास्तु विसर्जनं। रम्यं वनं समागत्य श्रुत्वा को
किल कूजितं। यदा सम्भूयते शब्द मुपसाधन्तु तद्दिने। कोकिले कृष्णवर्णे च सदा वासो वनेषु ते। सौभाग्य मतुलं देहि गृहाणार्घं नमोऽस्तु ते। विसर्ज
नमन्त्रः। चैत्ररथ वनोत्पन्ने विन्ध्यपर्वतवासिनि। गच्छ गच्छ महादुर्गे स्वस्थाने नन्दने वने। विसर्जनं। रूपं देहि धनं देहि सर्वं सौख्यञ्च देहि मे।
पुत्रान् देहि यशो देहि सौभाग्यं देहि सम्पदः। इत्युवाच ततः पश्चाद्विष्णुध्यानेन सुव्रती। नक्तभोजी भवेत्पार्थ यावन्मासः समाप्यते। मासान्ते ताम्र
पात्रे तु कोकिलां स्वर्णनिर्मितां। वस्त्र धान्य गुडैर्युक्तां श्रावण्यां कुण्डलं तथा। दद्यात्सदक्षिणां चैव दैवज्ञे मा पुरोहिते। एवमाषाढ मासस्य द्वैवि
ध्ये समुपस्थिते। सधवा विधवा वापि या नारी कोकिला व्रतं। करोति सप्तजन्मानि सौभाग्यं लभते ध्रुवा। स्वतागौरीपुरं याति विमानेनार्कतेजसा।
भगवानुवाच। एतद्व्रतं वसिष्ठेन मुनिना कथितं पुरा। तथा कृतंतु तत्पार्थ समस्तं कीर्त्तिमालया। तस्यास्त्र सर्वं निष्पन्नं वसिष्ठवचनं तथा। एवं यान्यापि
कौन्तेय कोकिला व्रतमुत्तमं। करिष्यति तत तस्याः सौभाग्यञ्च भविष्यति। आषाढौ द्वौ यदा स्यातां कोकिला व्रतमाचरेत्। न करोति यदा नारी सा
सा भवति कानने। एकतः सर्वदानानि कोकिला व्रतमेकतः। कृतं पुरासुरेभिश्च ऋषिपत्नीभिरादरात्। अरुन्धत्या च सास्नात्वा अर्चिता आश्रमुत्तमे।
अनसूयया च सास्नात्वा पूजिता कोकिला नृप। सीतया पूजिता चापि सर्वं कामार्थ सिद्धये। गौतम्यां दण्डकारण्ये स्नानं कृत्वा यथा विधि। नलान्वेषण
कामाय दमयन्त्या च पूजिता। रुक्मिण्या च ततः स्नात्वा पूजिता कोकिला शिवा। विष्णोः पत्युरवाप्त्यर्थं तच्च जातं न संशयः। कुचैला बलिना दीना नरक
मरता तथा। एवं वन्ध्या काकवन्ध्या विवत्सा स्तवत्सका। सर्वा स्ताः फलभाजःस्युर्व्रतस्यास्य प्रभावतः। आयुरारोग्य मैश्वर्यं सुखं वृद्धिं यशः प्रजां। १५२
सौभाग्यं सुन्दरं रूपं नारी प्राप्नोति नान्यथा। एतद्व्रतं मया ख्यातं कार्यं वारत्रयं नृप। तृतीयांते च विधिवत्कार्य्यमुद्यापनं शुभं। एकस्मान्मावते

कृत्वं द्वितीयायां लभते सुतान्। तृतीयायाञ्चापि सौभाग्यं प्राप्नुयान्नात्र संशयः। इति वाराहे कोकिला व्रतं। अथोद्यापनं। उद्यापन विधिं ब्रूहि व्रतस्यास्य मम प्रभो। येन विज्ञान मात्रेण सौभाग्यञ्च भविष्यति। श्रावण्यां पौर्णमास्यांतु शुक्लपक्षे विशेषतः। द्वितीयायामेकभक्तं दन्तधावन पूर्वकं। उपवासस्य नियमं कर्तुं व्रतपरायणं। तृतीया पुण्यफलदा मध्याह्ने समुपोषिता। श्रावणे शुक्लद्वितीयायामेकभक्तं कृत्वा तृतीयामुपोषयेदिति। पौर्णमासी कालात्कालांतरं। उपलिप्य शुचौ देशे मण्डलं तत्र कारयेत्। अष्टदलं लिखेत्पद्मं चतुष्कोणञ्च भद्रकं। कलशं वारि पूर्णंच पञ्चरत्न समन्वितं। तस्योपरि न्यसेत्पात्रं शूर्पं वस्त्रैकविंशतिः। सप्त धान्य भृतं पात्रं प्रस्थैनैकेन पूजयेत्। तदभावे तदर्द्धं वा कुडवे नाथ नारद। ऊर्णापट्टं कृष्णवर्णं युग्मम् दद्याच्च शक्तितः। तस्योपरिन्यसेद्देवीं कोकिलां पूर्ववत्तदा। अथ गन्ध प्रदानेन धूप दीप प्रदानकं। नैवेद्यञ्च मोदकाद्यञ्च पक्वान्नं घृतं बहु। अर्घंचैव प्रदातव्यं तांबूलं फलमुत्तमं। रात्रौ जागरणं कार्यं वाद्य नृत्य प्रभृतिकं। पूजिता एक चित्तेन फलं प्राप्नोति चाक्षयं। प्रभाते विमले जाते स्नानं कृत्वा विधानतः। पूजयेद्विधिवद्देवीं होमञ्च विधिवद्द्विज। तिलचम्पक पुष्पैश्च तण्डुलैर्घृतपायसैः। अष्टोत्तर शतं जप्त्वाथ दुर्गा मन्त्रैश्च वैदिकैः। कोकिला प्रीतये ब्रह्मन् व्याहृतीनां शतत्रयं। ब्राह्मणान् भोजयेत्पश्चात्सपत्नीकांश्च पञ्चच। अशक्तौ द्व्येकयुग्मञ्च भोजयेच्च तथा गुरुम्। त्रिस्त्रिभ्यश्च प्रदातव्या कारिका पञ्चमेव च। मोदकाश्च सूपाश्च वंशपात्र समन्विताः। कृष्णवर्णं समायुक्ता पक्वान्नंच प्रपूजयेत्। सर्वोपस्कर संयुक्तांस्त्रिस्त्रीभ्यश्च प्रदापयेत्। आचार्यं पूजयेद्भक्त्या गां कृष्णांच सवत्सकां। उपानहौ तथा शय्यां चामरं छत्रमेवच। मुद्रिकाकर्णवेष्टौच चन्दनं कुङ्कुमानिच। सर्वं दद्याद्द्विजेन्द्राय सपत्नीकाय नारद। दापयेद्विधिवत्सर्वं ब्राह्मणाय कुटुम्बिने। व्रतोपदिष्टे दानञ्च भोजनञ्च सदक्षिणं। एवं या कुरुते राजन् कोकिला व्रतमुत्तमं। सर्वं प्राप्नोति सौभाग्यं पुत्र धान्य धनानिच। ततो भुञ्जीत नैवेद्यं पुत्रपौत्र समन्वितं। कोकिले पूजिता गच्छ विधिवत्सर्वकामदे। कारयेत्कोकिलां देवीं सौवर्णां सर्वकामदां। रौप्यं चरणयुग्मन्तु रचितानेत्र मौक्तिका। पञ्चरत्नानि पृष्ठेच चूतवृक्षसमाश्रिता। एवं त्वं च यथा पूज्या यथोक्ताच शनैः शनैः। विद्रुमैरर्चिता

॥ व्र ॥ वध्याः सप्रभाव मिदं शृणु । महाक्रम मवाप्नोति महामाया प्रभावतः । इति नारदीये कोकिलाव्रतोद्यापनं । अथ श्रावण पौर्णमास्यां रक्षाबंधनम् भविष्ये
१५२ युधिष्ठिरो० सर्वरोगोपशमनं सर्वाशुभ विनाशनं । सकृत्कृतेनाब्दमेकं येन रक्षा कृता भवेत् । श्रीकृष्णो० शृणु त्वं राजशार्दूल इतिहासं पुरातनं ।
इन्द्राण्या यत् कृतं पूर्वं शक्रस्य व्रतहृद्धये । देवासुरमभूद्युद्धं पुरा द्वादशवार्षिकं । तयोस्तुवदतो देवं शची प्राह सुरेश्वरं । अद्यभूतदिनं देव प्रातः स
र्वं भविष्यति । अहं रक्षां विधास्यामि येन जयो भविष्यति । इत्युक्ता पौर्णमास्यां सा पौलोमी व्रत मङ्गलम् । बबन्ध दक्षिणे पाणौ रक्षापोटलिकां त
तः बद्धरक्षस्ततः शक्रः कृतस्वस्त्ययनो द्विजैः । दुद्राव दानवानीकं क्षणाद्दलमवदन् प्रजाः । शक्रस्य विजयी भूत्वा पुनरेव जगत्त्रये । एवं प्रभावो रक्षायाः क
थितस्ते युधिष्ठिर । जयदः सुखदश्चैव पुत्रारोग्य धनप्रदः । युधिष्ठिरो० क्रियते केन विधिना रक्षाबन्धः सुरोत्तम । कस्मिन् तिथौ कदा देव
एतन्मे वक्तु मर्हसि । यथा यथाहि भगवन्विचित्राणि प्रभाषसे । तथा तथा नमे तृप्तिर्बह्वर्थाः शृण्वतः कथाः । श्रीकृष्णो० संप्राप्ते
श्रावणस्यान्ते पौर्णमास्यां दिनोदये । स्नानं कुर्वीतमतिमान् श्रुतिस्मृतिविधानतः । ततो देवान् पितॄंश्चैव तर्पयेत्पर मांभसा । उपाक
र्मादिकं प्रोक्तं ऋषीणां चैव तर्पणं । कुर्वीत चाक्षते स्तद्वत्सिद्धार्थं ब्रह्मचर्चितं वस्त्रैर्विचित्रैः कौशैश्च विचित्रैर्मलवर्जितैः । विचित्र तन्तुग्रथितानस्था
पयेद्भाजनोपरि । कार्या गृहस्य रक्षा गोमयरचितैः सुवृत्तरङ्गवल्लिकैः दूर्वावर्णैः सहितैः भिन्नैर्दुरितोपशमनाय च उपलिप्ते गृहे मध्ये न्यसेत् कुंभं पीठान्त
रोपरिविशेत् राजामात्यैर्युतस्तु सुमुहूर्ते वेश्याजनेन सहितो मङ्गलसहितां मङ्गलसहितैः समुत्थितस्त्रिभिः रक्षाबन्धः प्रकार्यः प्रशान्तिदः सर्वविघ्नानां
पुरोधा नृपते रक्षां बध्ना तचेति मन्त्रेण । येन बद्धो बलाद्राजा दानवेन्द्रो महाबलः । तेन त्वामपि बध्नामि रक्षे माचल माचल । ब्राह्मणैः क्षत्रियै
र्वैश्यैः शूद्रैश्चान्यैश्च मानवैः । कर्त्तव्योरक्षिका बन्धो विप्रान् संपूज्य भक्तितः । अनेन विधिना यस्तु रक्षिकाबन्धमाचरेत् । ससर्वदोषरहितः सुखीसंवत्सरं १५३
भवेत् । यः श्रावणे विमल मासि विधानविज्ञो रक्षाविधानमिदमाचरते मनुष्यः । आस्तेसुखेन परमेण सवर्षमेकं पुत्रप्रपुत्रसहितः ससुहृज्जनःस्यात् । अयं

रक्षाबन्धो भद्रायां न कर्त्तव्यः। भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा। श्रावणी नृपतिं हन्ति ग्रामन्दहति फाल्गुनी। इति वचनात्। इति रक्षाबन्धनविधिः। अथ भाद्रपदपौर्णमास्यां उमामहेश्वरव्रतं। शिवरहस्ये मात्स्ये। राजोवाच। भगवन्मुनिशार्दूल व्रतमेकं वदस्व मे। साङ्गे यस्मिन् व्रते चीर्णे सर्वान् कामानवाप्नुयात्। गौतमोवाच। उमामहेश्वरं नाम व्रतमस्ति व्रतोत्तमं। सांगे यस्मिन् व्रते चीर्णे कामाम् सर्वानवाप्नुयात्॥ मासि भाद्रपदे शुक्ले पौर्णमास्यां प्रयत्नतः। तद्व्रतं कार्यमनघै र्ब्राह्मणाद्यैर्विधानतः। भाद्रशुक्लचतुर्दश्यां प्रातःस्नात्वा विधानतः। शिवं संपूज्य विधिवच्चैवानध्यतियत्नतः। शिवं ध्यात्वा जगद्वन्द्यं सोमं सोमार्धशेखरं। कृताञ्जलिपुटो भूत्वा मन्त्रमेतं पठेन्नरः। श्वः करिष्ये व्रतं यत्नादुमामाहेश्वराभिधं। आज्ञां देहि महादेव सोम सोमार्धशेखर। इति विज्ञाप्य वै देवमर्चयेन्नियतो व्रती। ततो देवानृषीन् सर्वानभ्यर्च्य विधिवन्नृप। हविष्याशी शिवं सायं पूजयेद्विधिपूर्व्वकं। निद्रा कार्या तथा योगं महादेवस्य सन्निधौ। उत्थाय पश्चिमे यामे महादेवं ततः स्मरेत्। ततः शौचादिकं सर्वं निर्वर्त्य प्रीतमानसः। स्नानं कुर्याद्यथायोगं यथाशास्त्रं यथाक्रमं। परिधाय ततो वस्त्रं क्षालितं शुभमक्षतं। उर्द्धंततं ततः कार्यं त्रिपुण्ड्रं च यथाक्रमं। रुद्राक्षधारणं कार्यं सन्ध्याकार्या ततःपरं। ततः शिवार्चनं कार्यं विल्वपत्रादिभिर्नवैः। ततो होमोपि कर्त्तव्यः शिवप्रीत्यर्थमादरात्। सूत्रं पञ्चदशग्रन्थि पूजितं च शिवात्मकं। एवं पञ्चदशग्रन्थि डोरकं कुङ्कुमान्वितं। सम्पादनीयं यत्नेन व्रतनिष्ठैरनाकुलैः। उमामाहेश्वरञ्चैव सौवर्णं प्रतिमाद्वयं। सम्पादनीयं यत्नेन राजतं वा मनोहरं। यत्नादूर्ध्वं च कर्त्तव्यं प्रतिमाद्वयमुत्तमं। अधिकं चेद्यथाशक्त्या कर्त्तव्यमतियत्नतः। सौवर्णो राजतोवापि ताम्रो वा कलशो नवः। सम्पादनीयो यत्नेन प्रयतैर्व्रततत्परैः। ततः सदर्भयुञ्जीते वस्त्ररुग्मार्चिते शुभे। पृथक् पृथक् स्थापनीयं कलशे प्रतिमा द्वयं। आपोहिष्ठादिभिर्मन्त्रै स्तथात्र्यम्बकैरपि। अभिषिच्य प्रयत्नेन पूजयेत्प्रतिमा द्वयं। ततः प्रयत्नतो गच्छेदलंकृतशिवालयं। शिवस्थानं ततो गच्छेत्तोरणाद्यैरलंकृतं। ततः षोडशपात्रे च वहिरन्तश्चतुर्गुणे। अलंकृते स्वस्तिकाद्यैः स्थापयेत्कलशं नवं। ध्यायेत्ततो महादेवमुमादेहार्धधारिणं। मुक्तामालापरीतांगं दुकूलपरिवेष्टितं। पञ्चाननमुमा

॥ ब्र ॥ कान्तमनलेन्दुरवि प्रभं। चन्द्रार्धं शेखरं नित्यं जटामुकुटमण्डितं। त्रिपुंड्र लेखाविलसद्भालभागमनामयं॥ भस्मोद्धूलितसर्वाङ्गं रुद्राक्षाभरणान्वितं।
१५४ मन्दस्मितमनाधारमाधारं जगतां प्रभुं। देवैरनन्तैरनिशंस्तूयमानमनेकधा। देवात्मकं देववन्द्यं विष्णुब्रह्मादि वंदितं। विष्णुनेत्रार्चितारक्तपादपङ्कज
युग्मं। अप्रतिद्वन्द्वमद्वन्द्वं सर्ववृन्दारकार्चितं। सर्वोत्तममनाद्यन्तं सर्वदेवनिवेदितं। सत्यं शुद्धं परब्रह्म पुरुषं कृष्णपिङ्गलं। ऊर्द्ध रेतं विरूपाक्षं विश्व
रूपं चिदात्मकं। निष्कलं निर्गुणं शान्तं निरवद्यं निरञ्जनं। अप्रमेयं जगन्मध्ये स्थितिसंहार कारणं। विश्ववाक्रं विश्वपादं विश्वाक्षं विश्वभूभुवं। विश्वंनारा
यणाराध्यमक्षरं परमं पदं। विश्वतः परमं नित्यं विश्वस्थेशमनामयं। एवं ध्यात्वा महादेवं सर्वदेवोत्तमोत्तमं। ध्यायेत्ततःपरं गौरीमादिविद्यामनामयां।
लक्ष्मीसेवितपादाब्जां शचीसेवितपादुकां। सरस्वत्यादिभिर्नित्यं स्तूयमानपदाम्बुजां। अधरोष्ठाधरीभूतपक्वविम्बफलामुमां। मुखं कान्तिकलोपेतं पूर्णचन्द्र
मनामयं। तिरस्कृतालिमालां तामलकावलिभिः सदा। पीनवक्षोज निर्भूत चक्रवाकवरांगनाम्। नित्यं तिरस्कृतांभोजां नयनाभ्यामनिन्दितां। सीमन्ता
धिकृताशेष काममन्त्रामहर्निशां। भ्रूकुटीकोटी कृताशेषश्रमभक्तमनाकुलां। वाङ्कतालकलोद्भूतहेममालां विलासिनीं। रोमावलितिरोभूत अमलभ्रमरालिकां
माभिरन्ध्रतिरोभूतनद्यावर्तं सुवर्तुलां उत्तमोरुतिरोभूतरम्भास्तम्भां शुभावहां। पादयुग्मप्रभाकान्ति निर्जितारुण पङ्कजां। ब्रह्मेन्द्रोपेन्द्रजननीं महेशा
र्द्धांगभागिनीं। महेशाश्लिष्टवामाङ्गां वरदाभयदां सदा। प्रसन्नवदनां शान्तां स्मितपूर्वाभिभाषिणीं। पूर्णचन्द्रदुकूलाढ्यां नानाभरणभूषितां। स्तूयमा
नां सदा देवैर्यक्षैर्दानैश्च कोटिशः। एवं ध्यात्वा ततः सम्यक् उपचारान् प्रकल्पयेत्। ततः पुष्पाणि संगृह्य शिवमावाहयेच्छिवां। महादेव दयासिन्धो
विष्णुब्रह्मादि वन्दितं। आवाहयामि देव त्वां प्रसीद परमेश्वर। लक्ष्म्यादि देववनिता परिसेवित सुपादुके। आवाहयाभि देवित्वां प्रसीद परमेश्वरि
इत्यावाहनं॥ गृहाण सोमविश्वात्मन्नासनं रत्ननिर्मितं। अनन्तासन विश्वेश करुणासागर प्रभो। उमे सोमधराश्लिष्टे सोमार्धकृतशेखरे। नानारत्न १५४
समाकीर्णमासनं प्रतिगृह्यतां। आसनं॥ पाद्यं गृहाण गौरीश हेमपात्रस्थितं नवं। गृहाण देवि पाद्यंत्वं वेदवेदाङ्गसंस्तुते। पाद्यं॥ अर्घं गृहाण

देवेश सपुष्पं गन्धसंयुतं। शिवानन्तगुणग्राम सर्वाभीष्ट प्रदायक। गृहाणार्घं शिवे नित्ये सर्वावयवशोभिनि। शिवप्रिये शिवाकारे नित्यं भक्तवर प्रदे अर्घं॥ गृहाणाचमनं शम्भो शुचिर्भूतशिव प्रिय। गृहाणाचमनं देवि शुचिर्भूतेशिवप्रिये। आचमनं॥ मधुपर्कं गृहाणेश सर्वदा मधुपर्कद। मधुपर्क प्रदानेन प्रीतोमम महेश्वर। मधुपर्कमिदं देवि स्वीकुरु प्रियशङ्करे। मधुपर्कप्रदानेन सुप्रीता भव शोभने। मधुपर्कं॥ शम्भो पञ्चामृतस्नानं स्वीकुरुष्व कृपानिधे। सर्व्वतीर्थमयं स्नानं नित्यशासन पावन। शिवेपञ्चामृतस्नानं स्वीकुरुष्व सदा प्रिये। सृष्टितीर्थोत्तमे शुद्धे तीर्थराजनिषेविते। पञ्चामृतस्नानं। शम्भोः शुद्धोदकस्नानं स्वीकुरुष्व सुरोत्तम। प्रसीद परमं भक्तं पाहिमां करुणानिधे। शिवे शुद्धोदकस्नानं स्वीकुरुष्व शिवप्रिये। प्रसीद देवि दीनोहं पाहिमां शरणागतं। स्नानं॥ सोत्तरीयं गृहाणेश दुकूलमिदमुत्तमं। पाहि मां कृपयादेव करुणाकर शङ्कर। सोत्तरीयं गृहाणेदं दुकूलं शङ्करप्रिये। प्रसीद पाहि मां दीनमनन्यशरणं शिवे। वस्त्रं॥ उपवीतं गृहाणेश शम्भो सर्वामरोत्तम। उपवीतं गृहाणत्वं शिवसंश्लिष्टविग्रहे। उपवीतं॥ गृहाण चन्दनं रम्यं सुगन्धेन विराजितं। प्रसीद पार्व्वतीनाथ शरणागतवत्सल। गृहाण चन्दनं देवि चन्द्रभागविराजितं। विश्वविश्वात्मके पाहि विश्वनाथ प्रिये सदा॥ गन्धं॥ गृहाणाभरणानीश निराश्रय समाश्रयं। विश्वाभरण विश्वेश रत्नाभरणभूषितम्। गृहाणाभरणान्येव सर्वाभरणभूषिते। सर्वप्रिये जगद्वन्द्ये जगदानन्ददे शिवे॥ आभरणानि॥ गृहाण बिल्वपत्राणि समोदानि शिवप्रिये। सुगन्ध बिल्वमन्दार मल्लिकाद्यमलंकृते। बिल्वपत्राणि॥ दशाङ्गं गुग्गुलं धूपं सगोघृतमनुत्तमं। गृहाण पार्व्वतीनाथ प्राणतर्पणमादरात्। दशांगं गुग्गुलं धूपं सद्योघृतमनुत्तमं। गृहाणभक्तवरदे लक्ष्मीदेव्या दिसेविते॥ धूपं॥ कार्पासवर्तिसंयुक्तं गोघृतेन समन्वितं। गृहाण चन्द्रसूर्याग्निप्रभाधाम नमोस्तुते। साज्यन्निवर्त्तिविस्फूर्त्ति दीपमीशानवल्लभा। गृहाण चन्द्रसूर्याग्नि मण्डलादिकसुप्रभे॥ दीपं॥ शम्भोगोघृतसंयुक्तं परमान्नं मनोहरं। सशर्करं गृहाणांवे परमान्नप्रदायिनि॥ नैवेद्यं शम्भोगृहाण गन्धाद्यमिदमाचमनीयकं। कृताचमनदेवेश स्वतःशुद्धशिवापते। शिवे गृहाण गन्धाद्यमिदमाचमनीयकं। शुद्धेशुद्धिप्रदे देवि शिवंभूषितवि

॥ व ॥ ग्रहे। आचमनीयं॥ नीराजं गृहाणेश बहुदीपविराजितं। स्वप्रकाश प्रकाशात्मन् प्रकाशितदिगम्बरं। नीराजनं गृहाणांबे सूर्यनीराजितप्रभे।
१५५ नीराजनं॥ शम्भोगृहाण तांबूलं युगकर्पूर संयुतं। प्रसीद भगवन्शम्भो सर्वज्ञामितविक्रम। शिवेगृहाण तांबूलमेलाकर्पूर संयुतं। प्रसीद सस्मिते
देवि सोमालिङ्गित विग्रहे। ताम्बूलं। गृहाण परमेशान सरत्ने छत्रचामरे। दर्पणं व्यजनं त्वीश सर्वदुःख विनाशक। गृहाणोमे सुराराध्ये सरत्ने
छत्र चामरे। दर्पणं व्यजनं वाद्ये विद्याधारे नमोस्तुते ॥ छत्र चामरादि ॥ प्रदक्षिण नमस्कारान् गृहाण परमेश्वरि। नर्त्तनं च महादेवि शिवनाथ
प्रिये शिवे॥ इति प्रदक्षिणा नमस्काराः ॥ एवं प्रयत्नतः कार्यं शिवयोः पूजनं शिवं। शिवानीं च प्रयत्नेन पूर्वोक्तमपि पूजनं। उक्त मन्त्र समु
दाय्य यथापूर्वं यथाक्रमं। शिवाय नमः। शिवं पूजयामि आवाहनेति मन्त्रस्तु भवान्याः परिकीर्त्तितः कपर्दिने कपर्दं पूजयामि। भाललोचनाय
भालं। सोम सूर्याग्निलोचनाय त्रिनेत्राणि सुश्रोत्राय श्रोत्राणि घ्राणगन्धाय घ्राणानि स्मृतिदन्ताय दन्तान् श्रुति जिह्वाय जिह्वा० कण्ठ कपोलाय
कपोलानि ज्ञानोष्ठाय ओष्ठान् नीलकण्ठाय कण्ठं० भूरिवक्षसे वक्षांसि हिरण्य बाहवे बाहू विश्वोदराय उदरं विश्वोरवे ऊरू विश्वजङ्घाय
जङ्घां विश्वपादे पादान् विश्वनखाय नखान् सर्वात्मकाय सर्वाङ्गं पूजयामि शिवायै शिरः पूजयामि पृथुवेण्यैवेणीं सीमन्तं कुङ्कुममा
लायै भालं० सोमसूर्याग्निलोचनायै लोचनानि स्तुतिश्रोत्रायै श्रोत्राणि गन्धप्रियायै घ्राणं० सुभगकपोलायै कपोले कुड्मलदन्तायै दन्तान् विद्या
जिह्वायै जिह्वां० बिम्बोष्ठायै ओष्ठौ० वृत्तकण्ठायै कण्ठं० पृथुलकुचायै कुचौ० विश्वगर्भाय उदरं० सुभगकट्यै कटिं० दिव्योरुदेशायै ऊरू० वृत्तजंघायै
जङ्घां० लक्ष्म्यासेवित पादुकाय पादौ० महेश्वरप्रियायै नखान् शोभनविग्रहायै सर्वाङ्गं पूजयामि ॥ अङ्ग पूजां समाप्यैवं दोरकं च विसर्जयेत्। प्रत्येक
ग्रन्थिपुष्पैः स्वच्छैर्विल्वदलादिभिः। प्रथमं ग्रन्थिमारभ्य नमः सोमेतिमन्त्रतः। यथाक्रमेण संपूज्य ततो धार्य्यं हि दोरकं॥ तत्रोपचाराः सर्वे पि १५५
तेन मन्त्रेण सादरं। व्रतिभिर्यत्नतः कार्यं कुङ्कुमांकित दोरकं। ततः पञ्चदश प्रस्थ गोधूमास्तण्डुलापिवा। उपायनार्थमानेयाः कृष्णागोघृत पाविता।

श्रद्धा पञ्चदशाज्याक्ता गोधूमापूपमण्डकाः। ततः शिवैकशरणं शैवाशैवव्रतप्रियः। पूजनीयाः प्रयत्नेन गन्धपुष्पादिभिः क्रमात्। ततः सवस्त्रं
कलशं शिवयोः प्रतिमाद्वयं। शैवाय देयं यत्नेन सुवर्णफलसंयुतं। आदावुपायनम् दत्वा देयमेतदतःपरं। उपायनस्य मन्त्रोपि वक्ष्यतेच विशेषतः।
उमेशः प्रतिगृह्णातु उमेशोवै ददातिच। उमेशस्तारकोभाभ्यां उमेशाय नमोनमः। अमुं मन्त्रं समुच्चार्य्य दत्वादानं निवेदयेत्। ततः शैवाः प्रयत्नेन
भोजनीया विशेषतः। सुवासिन्योपि यत्नेन भोजनीयाः शिवप्रियाः। शैवानेवं भोजयित्वा स्वयं भुञ्जितवाग्यतः। अतिथीनपि संतर्प्य द्वारदेशस्थिता
नृप। एवं प्रयत्नतः कार्यं प्रतिवत्सरमादरात्। नियमेनैव विधिवदुक्तरीत्या यथाक्रमं। ब्राह्मणाद्यैरिदं कार्यं व्रतमाश्रितमानसैः सर्वाभीष्ट प्रदं
पुण्यं व्रतमेतच्छिवात्मकं। प्राप्तेतु षोड़शे वर्षे कार्यमुद्यापनं नृप। उद्यापन विधानञ्च वक्ष्ये शृणु यथाक्रमं। पौर्णमास्यां भाद्रपद्यां व्रतोद्यापन मादरात्।
कर्त्तव्यमिति यत्नेन द्रव्यं संपाद्य सादरं। हैमीकार्या सार्धषष्ठी प्रतिमा चपलान्विता। तदर्धेनाथवा कार्य्या तदर्धेनाथवा नृप। रजते नाथ वा
कार्या यथोक्तपलमानतः। सम्पादनीयाः कुम्भाश्च हैमाः पंचदशोत्तमाः। ततो गृहं वितानाद्यैरलंकृत्य प्रयत्नतः। स्वस्तिकाद्यैरलं कुर्याच्छिवस्थान
मघापहं। ततः सायं प्रयत्नेन शिवयोः प्रतिमा शुभाः। पूर्वोक्तेन विधानेन मन्त्रैस्तैरेव साधनैः। रात्रौ जागरणं कार्यं सोपवासं प्रयत्नतः। ऋत्विग्
भिः। सहसोत्साहं पयोमात्राशनेन वा। रात्रौ शिवकथाः श्राव्याः श्रोतव्या यत्नतो नृप। कर्त्तव्या यत्नतो रात्रौ पूजा यामचतुष्टये। ततःस्वयं
प्रयत्नेन स्नात्वा शङ्करसन्निधौ। पूजनीयः प्रयत्नेन शिवोदेवः शिखामणिः। चतुरस्रं ततः कुर्यात्कुण्डमष्टदलान्वितं। तत्र वन्हिं प्रतिष्ठाप्य
विधिवद्गृह्य मार्गतः। साज्येन परमान्नेन होमः कार्यस्ततःपरं। पञ्चविंशति साहस्रं होमः सोमेति मन्त्रतः। कार्यः प्रयत्नतः राजन्नमः पूर्वं शिवे
रतः। ततः पूर्णाहुतिं हुत्वा शैवान् संपूज्ययेत्ततः। विल्वपत्रैः०पुष्पमाल्यैर्भस्मना च यथाक्रमं। एकैकस्मै प्रदातव्यं शिवयोः प्रतिमाद्वयं। कलशोपि
प्रदातव्यः ततो वस्त्र द्वयान्वितः। आचार्याय प्रदातव्यं सुवर्ण शतमादरात्। ततो यत्नेन शैवेन्द्रा भोजनीयाः कृतव्रतैः। सुवासिन्योपि शैवानां भोज

॥ व्र ॥ नीयाः प्रयत्नतः। ततो देयाः स्वशक्त्या च भोजितेभ्यश्च दक्षिणा। ततश्च सुकृतं कर्म शिवाय विनिवेदयेत्। उद्यापनं कृतं शम्भो मयैतदधुना प्रभो।
१५६ इदं सम्पूर्णतां यातु त्वत्प्रसादान्महेश्वर। मन्त्रहीनं भक्तिहीनं शक्तिहीनमुमापते। कृतं कर्म भवत्वद्य त्वत्प्रसादात्फलप्रदम्। प्रायश्चित्तं वैदि
कानां स्मार्तानामपि कर्मणाम्। शिवस्मरणमेवेति श्रुतिरप्यस्ति शाङ्करी। अतः कृतमिदं श्रौतं कर्मव्यङ्गमपि प्रभो। सांगंभवतु विशेषेण तवैव स्मरणात्
प्रभो। इति सम्प्रार्थ्य सर्वेशं सांबम् सर्वसुरोत्तमम्। भुञ्जीयाद्बन्धुभिः सार्धं समौनं तैलवर्जितम्। एवं यः कुरुते सम्यगुमामाहेश्वरव्रतम्। स सर्वे
कामान्भुक्त्वा च मोक्षम् प्राप्नोति सर्वथा॥ राजोवाच ॥ गौतमेदं व्रतं चीर्णं पुरा केन वदस्व मे। कस्य वा समभूत्सिद्धिर्व्रतस्यास्य प्रभावतः॥ गौतमो
वाच॥ पुरा शैववरो राजन् दुर्वासाख्यो मुनीश्वरः। कदाचित्संचरन् लोके ददर्श कमलापतिं। बिल्वमालां ददौ तस्मै शङ्करेण समर्पितां। गृहीत्वा बिल्व
मालां तां हरिरनमत् सम्भ्रमात्। शिरसा पूजनीयां तां गरुडे स विनिक्षिपेत्। ततस्तं तादृशं दृष्ट्वा दुर्वासाः क्रोधमूर्च्छितः। हरिं शशाप बहुधा धिग्धिग
भवेति संवदन्। मया शिवार्पिता दत्ता माला तुभ्यमघापहा। सा कथं गरुडस्कन्धे विनिक्षिप्ता त्वया हरे। गर्वस्य मूलभूतेयं लक्ष्मीस्तव विनश्यतु।
लक्ष्मीवसतिर्दुग्धाब्धौ गरुडोऽपि विनश्यतु। वैकुण्ठस्याधिकारोऽपि तव यातु मदाज्ञया। निस्तेजस्को वनीपृष्ठे सञ्चराद्यावधि ध्रुवं। इत्युक्त्वा स तु
दुर्वासा ययौ लोकान्तरं नृप। ततः पपात दुग्धाब्धौ लक्ष्मीर्विष्णुमनोहरा। ततोऽति दुःखितो विष्णुः प्रलपन्वनमाश्रितः। उवास विपिने घोरे
स्वकृतं कर्म संस्मरन्। ततः कदाचिद्भूपाल मया तत्र गतं पुरा। तदा मामागतं दृष्ट्वा पूजयामास मां हरिः। ततोऽश्रुपूर्णनयनः कृताञ्जलिपुटो
हरिः। अगाद पूर्ववृत्तान्तं लक्ष्मीनाशकारणं। ततोऽतिक्रान्तचिन्ताय विष्णवे व्रतमुत्तमं। तत्पृष्टेन तथा भूप कथितं सादरं मया। ततोऽखिलं
विधिवच्चकार श्रद्धयान्वितः। ततः प्रसन्नो भगवान्हरये पार्वतीपतिः। ददौ लक्ष्मीं सगरुडं करुणानिधिरव्ययः। इदमेव व्रतं चीर्णमिन्द्रेणापि १५६
हृतो यथा। तेन प्राप्तस्तेन स्वर्गः स्वर्गभोगश्च शाश्वतः। ब्रह्मणापि पुराचीर्णमिदमेव व्रतं नृप। नष्टा वागीश्वरी तेन सम्प्राप्ता दुर्लभापि सा।

मुनिभिश्च पुराचीर्णं व्रतमेतन्मुमुक्षुभिः। अस्य व्रतस्याचरणान्मुक्तिः प्राप्ता मुनीश्वरैः। इदं व्रतं प्रयत्नेन यः करिष्यति भक्तितः। तस्य सौभाग्य
सम्पत्तिर्भविष्यत्येव सर्व्वथा। यस्यास्त्यैश्वर्यभोगेच्छा मोक्षेच्छाप्यनपायिनी। यस्य सर्वाधिपत्येच्छा तेन कार्यमिदं व्रतम्। शारदो नाम विप्रोभूद्वेदवेदांग
पारगः। मोक्षार्थमिति यत्नेन तेन चीर्णमिदं व्रतं। वैद्युतेनापि विप्रेण मोक्षार्थमिति यत्नतः। कृतमेतद्व्रतं पूर्व्वं सर्व्वाभीष्टफलप्रदं। मुक्तिः प्राप्ताच
तेनापि व्रतस्यास्य प्रभावतः। यं य कामं समुद्दिश्य व्रतमेतदनुत्तमं। यः करिष्यति तं कामं स समाप्नोति निर्मल। इदं व्रतं महेशेन समाख्यातमुमां
प्रति। कुमाराय समाख्यातमुमयैतद्व्रतं नृप। नन्दिकेशाय कथितं मयाप्येतत् व्रतं ततः। नन्दिकेशेन कथितं दूर्वासोमुनये व्रतं। दूर्वाससापि कथितम
गस्त्याय व्रतोत्तमं। व्रतं तत्सागरे मह्यं अगस्त्येन महात्मना। मयातिभक्तियुक्तचित्ताय विष्णवे कथितं पुरा। तेन चीर्णं व्रतमिदं सर्व्वसौभाग्य दायकं।
ब्रह्मणे कथितं पूर्व्वमिदमेवव्रतं मया। तेन चीर्णं व्रतं सांगं वाणीप्राप्त्यर्थमादरात्। सूर्यायेन्द्रायचन्द्राय मयैतत्कथितं व्रतं। तैश्च चीर्णं व्रतमिदं सर्वसौ
भाग्यदायकं। कश्यपादिमुनिभ्यश्च कथितं व्रतमुत्तमं। तैश्च चीर्णं व्रतं सम्यग्भुक्तिमुक्तिफलप्रदं। भूप व्रतानि सन्त्येव बहूनि विविधानि च। तथाप्ये-
तद्व्रतसमं व्रतं नास्त्येव सर्व्वथा। भवानपिकुरु प्रीत्या भूपाल व्रतमुत्तमं। इदं व्रतं शिवप्रोक्तं यः करिष्यति भक्तितः। तस्य सर्वार्थसंपत्तिर्भवत्येव न संश
यः॥ शिव उवाच॥ इति तद्वचनं श्रुत्वा सराजा प्रीतमानसः। सपुत्रः पूजयामास गौतमं शैवपुङ्गवं। ततो धर्मव्रतं देवमुपदिश्य स गौतमः। पुनः
सम्पूजितो राज्ञा स्वाश्रमं प्रतिसंययौ। राजा सपुत्रस्तद्वाक्यादिमं माहेश्वराभिधं। व्रतं चकार विधिवद्यथाक्रममतन्द्रितः। ये मामनन्यहृदयाः सक
ला महेशं संपूजयन्ति सततं धृतभस्मपूताः। ते मामुपेत्य विगताखिल दुःखबन्धाः कैलासमेत्य सुखिनो निवसन्ति नित्यं॥ इति शिवरहस्ये उमामहेश्वर
व्रतं॥ इदं कर्नाटके प्रसिद्धं। अथाश्विन पौर्णमास्यां कोजागर व्रतं॥ स्कान्दे॥ अस्ति कोजागरं नाम व्रतानामुत्तमं व्रतं। यत्कृत्वा सर्व्वमाप्नोति जन्तुर्लो
कानानुत्तमान्। पूर्णिमाश्वयुजे मासि कौमुदी परिकीर्त्तिता। तामाराध्य महालक्ष्मीमिन्द्रमैरावतस्थितं। उपवासं प्रकुर्वीत दीपान् दद्याच्च भक्तितः।

॥ व्र ॥ यथाशक्त्यर्धयुतं सहस्रं शतमेव वा। घृतेन दीपयेद्दीपान् तिलतैलेन वा व्रती। रात्रौ जागरणं कुर्यान्नृत्यगीतपुरःसरं। यथा विभवतो देयाः पुरो
१५७ वीथीषु दीपिकाः। देवतायतनेष्वेव आरामेषु गृहेषु च। ततः प्रभाते सुस्नातः संपूज्य च शतक्रतुं। ब्राह्मणान् भोजयेत् क्षीरघृतशर्करपायसैः। का
र्त्तिकादिमिह विधामिच्छ यवस्नान् पूजयेद्द्विजान्। यथाशक्ति च दातव्या दीपाः स्वर्णविनिर्मिताः। एवं विधिंविनिर्वर्त्त्य ततः पारणमाचरेत्। व्रतस्यास्य
प्रभावेण कल्पमित्यवसंख्यकान्। अप्सरोभिः परिवृतः स्वर्गलोके महीयते। इहचायुष्यमारोग्यं पुत्रपौत्रादिसंपदः। लभन्ते व्रतमाहात्म्यात् कुलश्रेष्ठं मनो
हरं। निशीथे वरदा लक्ष्मीः कोजागर्तीतिभाषिणी। जगत्प्रभूता तस्यां च लोकचेष्टावलोकिनी। नारिकेलोदकं पीत्वा अक्षक्रीडां समाचरेत्। तस्मै
वित्तं प्रयच्छामि कोजागर्ति महीतले॥ इति सम्वादे कोजागर व्रतं॥ इति व्रतार्के पूर्णमासी व्रतानि। अथामा व्रतानि तत्र मार्गशीर्षे अमायां गौ
रीतपो व्रतं॥ सूतोवाच॥ इन्द्राणी प्राञ्जलिर्भूत्वा स्वपतिं वाक्यमब्रवीत्। एकं व्रतं समाचक्ष्व पुत्रपौत्रप्रवर्धनं। इति वाक्यं तदा श्रुत्वा सुराच
र्वचनं शची। शृणुचार्वङ्गि वक्ष्यामि यन्मया दुष्कृतं कृतं। बृहस्पतेस्तु जनकः पृष्टः प्राहांगिराः सुधीः। यत्कृतं कथयाम्यद्य सद्यः सुखकरं परं। पतिपुत्र
सुखावाप्तिर्जायते जगतिस्थिरा। गौरीप्रीत्यर्थमेवादौ स्त्रीभिर्यत् क्रीयते तपः। गौरीतपइतिख्यातं तस्मात्तद्व्रतमुत्तमं। तस्मात् स्त्रिया तपोनिष्ठ तोषणी
या शिवप्रिया। आदौ मार्गशिरेमासि ह्यमावास्यादिने शुभे। गृह्णीयान्नियमं तत्र दन्तधावनपूर्वकं। उपवासस्य नक्तस्य गौरीप्रीतयेमुदा। ईश्वर
वल्लभरे देवि करिष्येहं व्रतं तव। पतिपुत्रसुखावाप्तिं देहि देवि नमोस्तुते॥ नियममन्त्रः॥ ततो मध्याह्न समये स्नात्वा नद्यादिषु व्रती। सूर्यायार्घं समा
दत्वा ध्यात्वा गौरीश्वरं हरं। अहं देव व्रतमिदं कर्त्तुमिच्छामि शाश्वतम्। तवाज्ञया महा देव तत्र निर्विघ्नं कुरु। उक्त्वैवं नियमं गृह्णन्वर्षाण्येव तु षोडश
गृहमागत्य पूजार्थं उपचारान् प्रकल्पयेत्। शिवालये ततो गत्वा शिवं संपूजयेत्सुधीः। गौरीमभ्यर्चयेत्पश्चाद्विधिना येन तच्छृणु। पार्वत्यैनमः ततः पादौ १५७
जानूमेवतीति च। जङ्घयोरम्बिकेत्येवं गुह्यं गिरिश वल्लभे। नाभिङ्गम्भीरनाभी च अपर्णेत्युदरं पुनः। महादेवीति हृदयं कण्ठं श्रीकण्ठकामिनी

मुखे चरणमुखमातेति ललाटे लोकमानिनी। मेनकाकुचिरतेति शिरस्यभ्यर्चयेत्ततः। दक्षिणे गणपः पूज्यो वामे स्कन्दः सवाहनः। धूपदीपादि नैवेद्यं
कृत्वा गत्वा प्रदक्षिणां। फलेनार्घं ततो दत्त्वा ध्यात्वा देवीं महेश्वरीं। कृत्वा ताम्रमयं पात्रं मृन्मयं वा शुभानने। अष्टतन्तुमयीं वर्त्तिं तस्मिन्पात्रे नि
वेशयेत्। घृतेन पूर्णं गव्येन तत्पात्रं विमलेन च। दीपमुज्ज्वालयेत्पश्चाद्यावत्सूर्योत्तरे स्थितः। एवं संक्षिप्यता रात्रिं जागरेण समन्विता। प्रातर्मुक्त
मौनोत्थाय पूजयेद्द्विजदम्पतिं। कुर्याद्दौर्भाग्यदलनीं पाकाग्निं शमनीं तदा। पक्वान्नेन गुडाज्याद्यैः पूर्णां पूर्णफलप्रदां। ऋतूद्भवैः फलैश्चैव पूरिका तिल
तण्डुलैः। सौभाग्याष्टकसंयुक्तं पात्रं कुर्यात्सधातुकं। तस्योपरिगतं दीपं भ्रामयेत्तिथिनामभिः। सुवासिनीवचो ग्राह्यं दीपं सूर्याय दर्शयेत्। यावत्क
लकलाशब्दं कुर्व्वन्ते बकवारिकाः। तावत्पुरस्तात्कर्तव्यमिदमेवादराग्रगे। उत्तिष्ठन्ते यदिनगाद्विहगा श्चारुलोचने। तदाकर्णनमात्रेण सौभाग्यं भज
तिस्त्रियः। अत एतद्व्रते नारी पश्चादुत्थापयेद्व्रतान्। तिथिमेकां समाप्यैवं दम्पती भोज्य शक्तितः। परिधाय स्वलंकृत्य वासोभिर्भूषणाञ्जनैः। माल्यैः
सुगन्धैर्विविधैः फलैः सिन्दूरकुङ्कुमैः। सन्तोष्य समनुज्ञाप्य स्वयं भुञ्जीत बन्धुभिः। एवं द्वितीयवर्षञ्च प्रतिपदाद्या चरेत्तिथिः। वर्षे वर्षे क्रमादेवं द्वितीया
दिषु चाचरेत्। एवं षोडशवर्षं तु कृत्वाचैव तु वत्सरं। पश्चादुद्यापनं कुर्याद्व्रतसंपूर्णहेतवे। मार्गशीर्षेथ संप्राप्ते मासे गौरीश्वरी प्रिये। पौर्णमासी
दिने रम्ये निमन्त्र्य द्वाष्टदम्पती। मध्याह्ने ष्टदले पद्मे मौनी नारीं समर्चयेत्। यथोक्तेन विधानेन पुष्पधूपादिभिस्तदा। सोहालिभिश्च कासारैः पूपापू
पैश्च भामिनि। पायसेन घृतेनापि शर्करा मोदकैस्तथा। पूरयित्वाष्टसंख्याकान् धातुमृन्मय संपुटान्। दम्पतिं भोजयित्वा तु तेभ्यो दद्याद्यथाविधि।
अलङ्कृत्य यथाशक्त्या गौरी मे प्रीयतामिति। गुरवे लक्षणोपेतां गौरीं कनकनिर्मितां। दद्याद्धेनुं सुपयसां सवत्सां स्वर्णदक्षिणां। अन्यान्यपि यथाशक्त्या दद्याद्दा
नानि भामिनि। यद्यदिष्टतमं लोके तत्तद्देयं द्विजन्मने। चापल्यमायुषो ज्ञात्वा संपत्तेश्चैव सुन्दरि। षोडशाब्दं व्रतमिदं कुर्याद्धर्षेण भक्तितः। गौरीतपोव्रत
मिदं या करोतीष्टभामिनी। तस्याः सुखं भर्तृसौख्यं जायते नात्र संशयः। दुर्लभं मानवं जन्म तत्रापि द्विजजन्मता। सदाचारपरत्वञ्च तत्रापि तु विशिष्यते

॥ व्र ॥ एवं यास्त्वकन्या स्त्री कुरुते व्रतमुत्तमं । मातापित्रोः प्रियं चापि प्राप्नुयाच्छुद्धवंशतां । निर्मलं जन्मतोवापि मनसश्चापि सम्पदः । लभते शुभतेजश्च पतिपुत्र
१५८ समन्विता । इह भोगान्यथाकामं भुक्का स्वर्गमवाप्नुयात्। इत्यङ्गिरो वचनमाप्य पुरा पुराणं गौरीतपोव्रतमिदं विदधे यथेच्छं। तस्य प्रभाववशतः सुलभं
हि राज्यं सौख्यं हि सर्व्वमतुलं पतिपुत्रयुक्तं । इत्यङ्गिरोक्तं गौरीतपोव्रतं इदमेव महाव्रतापरनामकमुक्तं हेमाद्रौ कालिकापुराणे ॥ अनिरुद्ध उवाच ॥
महाव्रतमहोवक्ष्ये येनारोहति तत्पदं । गौरीतपोव्रतं वक्ष्ये इत्यपि क्वचित्पाठः । सुरासुरमुनीनांच दुर्लभं तद्विधिंशृणु। पर्वण्याश्वयुजस्यान्ते पायसस्य घृतप्लुतं
नक्तं भुञ्जीत शुद्धात्मा ओदनं चैत्रसान्वितं ॥ आश्वयुजस्यान्ते कार्त्तिकेपर्वणि ॥ अमावास्यायां कार्त्तिकान्तेद्राचेत्यर्थः द्राचं इक्षुरसः । प्रर्वर्यन्ते शुचिर्भूत्वा
विधवत् दन्तधावनं। भुक्त्वा तन्महादेवं नत्वा भक्तियतो व्रती। अद्य देव करिष्यामि व्रतं तव महेश्वर । त्वदाज्ञया महादेव तच निर्विघ्नं कुरु । उक्त्वेमं नि
यमं गृह्य वर्षाण्येव तु षोडश । तिथयः प्रतिपदाद्यास्तु पारवित्वाप्यनुत्तमाः । ततो मार्गशिरे मासि प्रतिपद्याद्यपरेऽहनि । उपवसेद्गुरुं पृच्छ्य महादेवं
सत्यमुक्तः । षोडशाष्टौ तदर्धं वा दंपत्यश्च निमन्त्रयेत् । देवं भक्त्या समासाद्य दीपान् प्रज्वाल्यषोडश । पशुनाथं महादेवं भक्त्या नत्वा
निवेदयेत् । आमन्त्र्य च गृहं गत्वा महादेवं स्मरन् चितौ । शुचिवासास्तृतीयान्तु निराहारो शुचिःस्वपेत् । अथोदये सहस्रांशोः स्नात्वा यादास्यदी
पवान्। नैवेद्यं सकनाद्यञ्च आदाय गच्छेच्छिवालयं । स्नापयेत्पञ्चगव्येन घृतेन तदनन्तर । मधुनाच तथा दध्ना भूयश्चपयसा तथा । रसेनचाश्च
रसेन फलैश्च स्नापयेत्पुनः । तिलांबुना ततः स्नाप्य पश्चादुष्णेन वारिणा । गृहं गत्वा यथान्यायं हिरण्यरेतसं विभुं । जातवेदसमादाय तर्पयेत्तिलसर्पि
षा । अतिनम्र तथा चार्थं मिथुनानिच भोजयेत् । हेम वस्त्रादि दानेन यथा शक्त्या तु दापयेत् । एवं विसृज्य तान् सर्वान् सार्धं बन्धुजनैःस्वयं । पीत्वादौ
पञ्चगव्यञ्च हृष्टो भुञ्जीत वाग्यतः । यत् किञ्चिदेतदुद्दिष्टं महादेवमुदीरयेत् । प्रारम्भेयंत्त्रिविधिं कुर्याद्दरिद्रो वाथ चाधमः । वित्तसामर्थ्यतश्चैव १५८
प्रतिमासन्ततश्चरेत् । स्वल्पवित्तोथवा कश्चित्पुष्यादौ कार्त्तिकावधि । नक्तं कृत्वा त्वमावास्यां प्रागुक्तविधिना ततः । प्रतिपद्यामपोष्यैवं पञ्चगव्यं

शिवेत्युचिः । महादेवं स्मरन् सार्धं भक्त्या भुञ्जीत लिङ्गिभिः । मासस्य कार्त्तिकस्यान्ते तस्यैवं विधिमाचरेत् । प्रतिपदि द्वितीयायां शुभायां वा उपोषयेत् । एवं पौषेतु सम्प्राप्ते प्रतिपन्नक्तमाचरेत् । द्वितीयाब्दे द्वितीयान्ता मुपवसेत्कार्त्तिकावधि । आददीत तिथिश्चैकां मार्गमासे तथापरां । पूर्वस्पूर्वं त्यजेत्पौषे प्रष्टत्यैवं समाचरेत् । दर्शे नक्तं प्रतिपद्युपवास इति प्रथमेवर्षे दर्शप्रतिपदि नक्तं द्वितीयामुपवासो द्वितीये प्रथमे मासि प्रतिपदि नक्तं । द्वितीयातृतीययोरुपवासः शेषेषु द्वितीयायां नक्तं तृतीयायामुपवास इति तृतीये एवं शेषवर्षेषु कृत्वैवं षोडशे वर्षे पौर्णमास्याः समुद्गमे । कार्त्तिक्यामुदये इत्यर्थः । पूर्ववद्देवमभ्यर्च्य कृशानुन्धाचितर्पयेत । महादेवाय गां दद्यादार्चिताय द्विजायच । हैम शृङ्गीं सवत्साञ्च सघण्टांकांस्यदोहनीं । शिवव्रतधरान् विप्रान्सपत्नीकांश्च षोडश । संभोज्य हेमवस्त्राद्यैर्यथाशक्तितु दापयेत् । छत्रोपानह कुम्भांश्च दद्यात्तेभ्यः पृथक् पृथक् । भोजयेत्तान् विहृत्यैवं मिथुनानि च षोडश । ब्राह्मणांश्च यथाशक्त्या भोजयेद्वेदपारगान् । एवं व्रतम् महच्चैव ब्रह्मघ्नोप्यघमर्षणम् । धनमायुः प्रदम् नित्यम् रूपम् सौभाग्यदम्परम् । स्त्रीपुंसयोरेव निर्द्दिष्टम् व्रतमेतत्पुरातनम् । विधवयापि च कर्त्तव्यम् भवेच्च सधवाच या । उपोष्य प्रतिमासन्तु भुञ्जीत बन्धुभिः सह । एकद्वित्रिचतुर्भिर्वा सर्वेष्वब्देषु शक्तितः । अन्तेचान्तेच वर्षाणां प्रारम्भविधिमाचरेत् । अथारब्धे व्रते कश्चिदासमाप्ते मृतो भवेत् सोपितत् फल माप्नोति व्रतारम्भप्रभावतः । वाचकः श्रावकश्चैव श्रोतारश्च व्रतस्यये । भवन्ति पुण्यसंयुक्ताः सत्पदाभि मुखास्थये । इति हेमाद्रौ कालिकापुराणे महाव्रत संज्ञ गौरीतपो व्रतं । अथ माघामायां अर्द्धोदयव्रतं अर्धोदयस्वरूप भारते । अमावर्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः अर्धोदयः सविज्ञेयः कोटि सूर्य्यग्रहैः समः दिवैव योगः शस्तोयं नतु रात्रौ कदाचन । हेमाद्रौ स्कान्दे । अगस्त्युवाच । भगवंस्त्वत् प्रसादेन श्रुतोयं व्रतविस्तरः । अर्धोदयन्तु मे ब्रूहि दुर्लभं सचराचरे । जीवित प्राणिनां पुण्य यदि चेद्वदसि प्रभो । कथ कार्य कृते किंस्यात् फलं कथय षण्मुख । स्कन्दोवाच । श्रूयतां पुण्ययोगोयं दुर्लभोर्धोदयाह्वयः । तिर्य्यङ्मनुष्य देवानां दुःप्राप्यः सर्वकामदः । माघामायां व्यतीपाते आदित्ये विष्णु दैवते । अर्धोदय तदित्याहुः सहस्रार्कग्रहैः

॥ व्र ॥ यथा पुरा कृतं वशिष्ठेन वामदेवेन सुव्रतं। सनकाद्यैर्मनुष्यैश्च बहुभिर्वेद विश्रुतैः। अन्यैः सहस्रैश्च कृतंभुवि एवं तु कुम्भज। दानानां यच्चतीर्थानां फलं
१५९ येन कृतं भवेत्। ससागरा धरा तेन सप्तद्वीपसमन्विता। दत्ता स्यात्सर्व भावेन येन वार्ध्दोदयं कृतं गङ्गागयाप्रयागेच पुष्कराणां जले तथा। मानसादिषु
यत्पुण्यं तीर्थेषु स्नानदानतः। तत्समं वाथवा विप्र व्रतेनानेन कुम्भज। अश्वमेधायुतं श्रेष्ठमिष्ठापूर्त्तं चयद्भवेत्। अर्धोदयं कृतं येस्तु विधि दृष्टेन कर्मणा यांति
सत्यं गृहे लक्ष्मीः सन्ततिश्चानपायिनी। आयुर्यशोतिविपुलं व्रतकर्त्ता फलं लभेत्। इन्द्राग्नि यमलोकेषु निर्ऋतीनामपांपतेः। वायोः कुबेरस्येशस्य लोके
षु सततीः प्रभुः। वासयन्द्रार्क लोकेच लोकपालैश्च सेवितः। गोकोटि दानजं पुण्यं सर्व तीर्थ निवासिनां। अर्धोदयस्य यत्पुण्यम् कलां नार्हंति षोडशीं।
भूलोकाधिपति श्चैव भुवर्लोकाधिपस्तुसः। स्वर्लोके च जनानांच तपो लोके नरेश्वरः। महर्लोके वसेन्नित्यं यावदिन्द्राश्चतुर्दश। ततो हिरण्यगर्भस्य पुत्र
वो व्रतकारकः। तस्य लोकाधिपः साक्षी लोकानां पुरुषो व्ययः। अर्धोदय प्रसादेन ब्रह्मलोके वसेत्तु यः। तथा मानेन विष्णुत्वं ब्रह्मरुद्रसतो भवेत
शिवलोके गणैः पूज्यो देवराज समन्वितः। वसेच्छक्रेण मानेन व्रतस्यास्य प्रभावतः। ततो विष्णु स्वरूपेण त्रैलोक्याधिपतिर्भवेत्। शङ्खचक्रगदाधारी
वनमाली हरिः स्वयं। व्रत प्रभावात्सम्भोगी देवो नारायणो भवेत्। अगस्त्यउ० ॥ स्कन्द केन विधानेन कर्त्तव्यं व्रत मुत्तमम्। अर्धोदयं मनुष्याणां जीवितं
दुर्लभं भुवि। स्कन्दो० कृते कृतं वशिष्ठेन त्रेतायां रघुणा कृतं। द्वापरे धर्मराजेन कलौ पूर्णोदरेणच। अन्यैर्देव मनुष्यैश्चदैत्यैश्च द्विजसत्तम। कृतमर्धो
दं यस्य कत् सर्वकाम फलप्रदं। माघमासे कृष्णपक्षे पञ्चदश्यां रवे र्दिने। वैष्णवेन तु ऋक्षेण व्यतीपातं सुदुर्लभं॥। पूर्वाह्न सङ्गमे स्नात्वा शुचिर्भूत्वा समाहि
तः। सर्वे पाप विशुध्यर्थं नियमस्थो भवेन्नरः। त्रिदैवत्वं व्रतं देवाः करिष्ये भुक्ति मुक्तिदं। भवन्तु सन्निधौमेद्य त्रयो देवास्त्रयोऽग्नयः॥ इति नियम
मन्त्रः॥ ब्रह्मा विष्णु महेशानां सौवर्णपलं संख्यया। प्रतिमास्तु प्रकर्तव्यास्तदर्द्धेन द्विजोत्तम। शय्याचयम् ततः कार्यं सोपस्करसमन्वितम्। देवानां १५९
त्रयमुद्दिश्य कर्तव्यम् भक्ति शक्तितः। ब्रह्माविष्णुरुद्रप्रीत्यै दातव्यन्तु गवां त्रयम्। हिरण्य भूमि धान्यादि दानं विभवसारतः। दातव्यमाश्रयीपितं

प्राङ्मुखोपविश्य यत्नतः । मध्याह्ने तु नरः स्नात्वा शुचिर्भूत्वा समाहितः । तिलपर्वत मध्यस्थं पूजयेद्देवता त्रयं । आदौ ब्रह्मपूजा नमो विश्वकृते तुभ्यं सत्याय परमात्मने । देवाय देवपतये यज्ञानां पतये नमः । ओँ ब्रह्मणे नमः पादौ पूजयामि हिरण्यगर्भाय० ऊरुभ्यां पू० परमेष्ठिने जङ्घाभ्यां० वेधसे नमो गुह्यं पद्मोद्भवाय नाभौ० हंसवाहनाय कटिं० शतानन्दाय वक्षसि० सावित्रीपतये बाह्वो० पूर्वादिचतुर्मुखेषु० ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० चतुर्वक्त्राय० शिर पू० हंसाय० कपिलाय० ततो लोकपालपूजा स्वस्वमन्त्रैः । हिरण्यगर्भ पुरुष प्रधान व्यक्तरूपक । प्रसीद सुमुखो भूत्वा पूजां गृह्ण नमोऽस्तु ते । इति ब्रह्मप्रार्थना नारायण जगन्नाथ नमस्ते गरुडध्वज । पीताम्बर नमस्तुभ्यं जनार्द्दन नमोऽस्तु ते । अनन्ताय नमः पादौ पू० विश्वरूपाय ऊरुभ्यां० मुकुन्दाय जानुभ्यां० गोविन्दाय जङ्घाभ्यां० प्रद्युम्नदेवाय गुह्ये० पद्मनाभाय नाभौ० लम्बोदराय उदरे० कौस्तुभधराय० वक्षसि चतुर्भुजाय० बाहू विश्वतोमुखाय वदने शतसहस्र शिरसे नमः शिरसि आदित्य चन्द्र नयन दिव्याहो दैत्यसूदन पूजां दत्तां मया भक्त्या गृहाण करुणाकर इति विष्णु प्रार्थना । महेश्वर महेशान नमस्ते त्रिपुरान्तक जीमूतकेशाय नमो नमस्ते वृषभध्वज ईशानाय पादौ० चन्द्रशेखराय जङ्घाभ्यां पशुपतये जानुभ्यां उमाकान्ताय गुह्ये० नीललोहिताय नाभौ० कृत्तिवाससे उदरे० नागोपवीतिने मुखे० भोगिरूपाय बाह्वो० नीलकण्ठाय कण्ठे० पञ्चवक्त्राय मुखे० कपर्दिने शिरसि अन्धकारे प्रमेयात्मन्नमो लोकान्तकायच । पूजां मया कृतां भक्त्या गृहाण वृषभध्वज इति महेश्वर प्रार्थना मन्त्रः । इति पूजाक्रमः प्रोक्तो मन्त्रै रेतैः प्रयत्नतः । आचार्यं पूजयेत् भक्त्या वस्त्रा लङ्कार भूषणैः । हस्तमात्रा कर्णमात्रा पीठं छत्रं कमण्डलुं । श्वेतवस्त्र युग्मं देयं ब्राह्मणे सर्व मूर्त्तये । उपवीतं वस्त्रयुग्मं लोहितं शङ्करस्यच । पञ्चामृतेन स्नपनं पूजनं कुसुमैस्त्वकैः । कमलैः स्तुलसी पत्रै विल्वपत्रै रक्तचित्रैः । तत्काल संभवै र्दिव्यैः पूज्या देवा यथाक्रमं । यथा शक्त्या प्रकर्त्तव्यं व्रतमेतत्सुदुर्लभम् । जीवितं प्राणिनामेतदनित्यं निश्चितं यथा । अथ व्रतस्य करणं विधानं शृणु यत्नतः । देवतात्रय महिम्न शास्त्र दृष्टेन कर्मणा । प्रजापतये विष्णुरूपाय रुद्ररूपाय ते नमः । इत्यनेनैव मन्त्रेण वह्निं

॥ व ॥ संस्थाप्य भक्तितः ततो होमं प्रकुर्वीत षञ्चस्रयवसंयुतं। तिलाज्य शर्करांचैव होम द्रव्यं पृथक् पृथक्। ब्रह्मयज्ञान मंत्रेण ब्रह्मणे तिलं होमयेत्।
१६० अथ होमावसाने तु गांदद्याच्च पयस्विनीं। स्वर्ण शृङ्गीं रौप्यखुरीं घण्टाभरण भूषितां। तांम्र पृष्टीं कांस्य दोहां सर्वोपस्करसंयुतां।
सदक्षिणां शुभां पुण्यां ब्राह्मणाय निवेदयेत्। तेन दत्तं हुतं जप्तं दृष्टं यज्ञैः सहस्रधा। व्रत कृत्यो भवेद्विप्रो व्रतस्यास्य प्रभावतः। एवं सर्वं समाख्यातं
दुर्लभं व्रतमुत्तमं। अर्धोदयं त्वया दृष्टं किमन्यत्परि पृच्छसि। इति स्कांदे अर्धोदय व्रतं। अथ सोमवत्यमावास्याव्रतं शङ्खः अमावास्यातु सोमेन सप्तमी
भानुना सह। चतुर्थी भूमि पुत्रेण सोमपुत्रेण चाष्टमी। चतस्र स्तिथय स्त्वेता सूर्य्यग्रहण सन्निभाः। अथ कथा स्कांदे तत्रादौ प्रयोगः। अस्यां सोमवत्य
मावास्यायां सकल पापक्षयार्थं पुत्र पौत्राभि वृद्ध्यर्थं जन्म जन्मनि अवैधव्यञ्च पतिचिरंजीवितपरमसौभाग्यदायिका याममायामश्वत्थ मूले स्त्रिया सह विष्णु
पूजां करिष्ये ततः पूजा अश्वत्थ रूतभुग्वास गोविन्दस्य सदा प्रिय। अशेषं हर मे पापं वृक्ष राज नमोस्तुते। व्यक्ताव्यक्त स्वरूपाय सृष्टिस्थित्यंत कारिणे।
आदिमध्यांतहीनाय विष्टरश्रवसे नमः। इति मन्त्रद्वयाभ्यां पूजा कार्य्या ततः प्रदक्षिणाष्टोत्तरशतं कुर्य्यात् अथ कथा सूतउ०। शरतल्प गतं भीष्मं उप
गम्य युधिष्ठिरः कृतप्रणामो धर्मात्मा हितं वचनम ब्रवीत्। युधिष्ठिरोउ० हतेषु कुरुमुख्येषु भीमसेनेन कोपिना। तथा परेषु भूतेषु हतेषु युधिनि
भुमां। दुर्योधन कुमन्त्रेण जातोस्माकं कुलक्षयः। न सन्ति भुवि भूपाला बाल वृद्धातुराहते। अवशिष्टा वयं पञ्च वंशे भारत संज्ञके। एकातपत्रम
पिच राज्यं मह्यं न शोभते। जीवितेपि जुगुप्सा मे नच भोगेषु मे रतिः। दृष्ट्वा सन्ततिविच्छेदं सन्तापो हृदयेनिशं। अश्वत्थामास्त्रनिर्दग्धो उत्तरागर्भ
सम्भवः। अतो मे द्विगुणं दुःखं पिण्ड विच्छेद दर्शनात्। किं करोमि क्वगच्छामि पितामह वदाधुना येन संपद्यते सद्यः सन्ततिश्चिरजीविनी। भी
ष्मउ०। शृणु राजन् प्रवक्ष्यामि व्रतानामुत्तमं व्रतं। यस्याचरण मात्रेण सन्ततिश्चिरजीविनी। अमावास्या यदा पार्थ सोमवारयुता भवेत्। तस्यामश्व १६०
त्थमागत्य पूजयित्वा जनार्दनं। अष्टोत्तर शतं कृत्वा तस्मिन् वृक्षे प्रदक्षिणं। तावत् संख्यान् उपादाय रत्नधातुफलानिच। व्रत राज मिदं राजन्

विष्णोः प्रीतिकरं परं। उत्तरा कारयत् प्रा प्राप्ता गर्भोजीवमवाप्स्यति। भविष्यतिच गुणीपुत्रस्त्रिषु लोकेषु विश्रुतः। श्रुत्वा पितामहवचः प्रत्युवाच युधिष्ठिरः युधि
ष्ठिरउ०। तद्व्रतं व्रतराजाख्यं विस्तरेण प्रकाशय। केन प्रकाशितं मर्त्ये केनेदंविहितं प्रभो। भीष्मउ० आस्ते या सर्वमाख्याता कांची संज्ञा महापुरी ब्रह्म क्षत्रिय
विट्शूद्रैः स्वकर्मनिरतै र्वृता। रजताचलसंकाशा सौधसंघैर्विराजिता। सुवेषैर्नागर जनै र्नारीभीरूप शोभिता। अलकेवकुवेरस्य शक्रस्येवामरावती तेजोव
तीवरलाद्यापावकेव महापुरी। तत्र राजा रत्नसेनो बभूवामित विक्रमः। तस्मिन्वसति भूचक्रे मोदन्तेस्मिन् द्विजोत्तमाः। तस्य राज्ञो जनपदे न दुर्भिक्षंन
चापदा। तत्र कश्चि द्विजन्मा भूदेवस्वामीति विश्रुतः। तस्य भार्य्या भवद्रूपा नाम्नाधनवती शुभा। यथार्थ नामधेया सा लक्ष्मीरिव सविग्रहा। तस्यां संजन
यामास सप्तपुत्रान् शुभान्वितान्। एकांदुहितरं रम्यां नाम्ना गुणवतीं नृप। कृत दाराश्च ते पुत्रा विहरन्ति यथा सुखं। कन्या कुमारिका चासीदनुरूप प्रि
यिनी। अथांतरे द्विजः कश्चिद्भिक्षार्थं समुपागतः। दीप्यमानः स्वतेजोभि र्मूर्त्तिमानिवपावकः। द्वारदेश मुपागत्य प्रयुयोजाशिषं तदा। देव स्वामी.
स्नुषाः सप्त समुत्थाय ससम्भ्रमं। भिक्षां प्रत्येकमानिन्युर्ददुस्तस्मै द्विजन्मने। अवैधव्याशिषं प्रादात्ताभ्यः सौभाग्य सम्पदं। ततो गुणवती माता प्रेषि
ता सह भिक्षया विप्राय भिक्षांप्रददौ कृत्वा पादाभिवन्दनं। आशिषञ्च ददौ विप्रः शुभे धर्मवती भव। सर्वैलक्ष्य गुणवती श्रुत्वा प्रत्याययौगृहं। मा
त्रे निवेदयामास आशिषन्तेन योजितं। श्रुत्वा धनवतीं पुत्रीं करे धृत्वा समाययौ। प्रणतिं कारयामास पुनस्तस्मै द्विजन्मने। तथैवाशिषमुच्चार्य्य वि
प्रस्तामभ्यनन्दत्। श्रुत्वाशिषं धनवती सञ्चिन्त्य प्रत्युवाचह। धनवत्यु० प्रसीद भगवन्विप्र वचनं मेवधारय स्नुषाभ्यः प्रणताभ्योमे त्वया दत्ता वरा
शिषः अवैधव्य कराः पुत्र सुख सौभाग्य साधकाः सुतायाः प्रणतायामे विपरीतं त्वयोदितं भद्रे धर्मवती भूयादित्युदीर्य्य पुनः पुनः आशीः प्र
युक्ता विप्रर्षे कारणं वद सत्वरं॥ द्विज उवाच॥ धन्यासि त्वं धनवती प्रख्यातचरिता भुवि। यथा योग्य प्रयुक्तेयं मयाशीर्दुहितुस्तव। इयं
सप्तपदीमध्ये वैधव्यत्वमवाप्स्यति। धर्माचरण मत्यर्थं कर्त्तव्यं परमं त्वाया॥ धनवत्यु०॥ उपायं यदिजानासि तद्वदस्व ममप्रभो॥ विप्र उ०॥

॥ ग ॥ यदागता भवेत्सोमा गृहे वै तव सुन्दरि । तस्याः पूजन मात्रेण भवेद्वैधव्यभञ्जनं । अतो मयाशीर्दत्तेयं शुभे धर्मवती भव । श्रुत्वा धनवती याता चिन्ता
१६१ कुलितचेतना । उवाच वचनं दीनं प्रणिपत्य पुनः पुनः ॥ धनवत्यु० ॥ सोमागमनमात्रेण भवेद्वैधव्य भञ्जनम् । का सा सोमा त्वया प्रोक्ता
का जातिः कुत्र संस्थितिः । तस्या वद महाभाग कः कालो विस्तरेण मे ॥ द्विज उ० ॥ सा सोमा रजकी जातिः स्थितिस्तस्यास्तु सिंहले । साचेदायाति
ते गेहे तदा वैधव्य भञ्जनम् । इत्युक्त्वा ब्राह्मणोन्यत्र गतो भिक्षा प्रतीक्षया । धनवत्यपि पुत्रेभ्यः प्रोवाच वचनं तदा ॥ धनवत्यु० ॥ इयं दुर्बालिता
पुत्री स्नुषा गुणवती शुभा । सोमागमन मात्रेण भवेद्वैधव्य भञ्जनम् । अस्ति यस्य पितुर्भक्ति र्मातुर्वचन गौरवं । स प्रयातु सह स्वस्रा सोमामानयितुं द्रुतं
कुमारास्तु श्रुत्वा मातस्तव वाक्यं पुत्राः सर्व इदं वदन् । येन देशान्तर पुत्रान् प्रस्थापयसि दुर्गमं । अन्तरा दुस्तरः सिन्धुः शतयोजन विस्तरः । अशक्यं
गमनं तत्र अक्षमा गमने वयं । देवस्वाम्युवाच ॥ अपुत्रः सप्तभिः पुत्रै रहं यास्यामि सिंहलम् । आनयिष्यामि तां सोमां पुत्री वैधव्य नाशिनीं । एवं
वादिनि संक्रोधे देवस्वामिनि तत्क्षणे । शिवस्वामी कनिष्ठस्तु पुत्रः प्रोवाच सन्नतः । मैवं वद महाभाग रोषावेशेन सङ्कुलः । मयि तिष्ठति कः शक्तो
गन्तुं द्वीपं हि सिंहलम् । इत्युक्त्वा सहसोत्थाय प्रणम्य शिरसा मुदम् । प्रतस्थे सहितः स्वस्रा द्वीपं सिंहल संज्ञकम् । सकियद्भिर्दिनैर्गत्वा तीरम् प्राप्य
सरित्पतेः । ततस्तमम्बुधिं गत्वा प्रकार मकरोद्द्विजः । स ददर्श सुविस्तीर्णं न्यग्रोधद्रुममन्तिकम् । तत्कोटरे सुखासीनं गृध्रराजं सुतैः सह । तत्पाद
पतले स्थित्वा ताभ्यां नीतन्तु तद्दिनम् । शावकानां कृते गृध्रो गृहीत्वा शिशुभोजनम् । भोजनम् दत्तमपि ते भुञ्जते स्मिन्न शावकाः । प्रपच्छ चागतो
गृध्रः शावकांस्तान् बुभुक्षितान् ॥ गृध्र उ० ॥ कथन्नो भुञ्जते पुत्राः भवन्तः क्षुधिता अपि । आनीतम् कोमलम् मांसम् भवद्योग्यमिदं मया ॥ शावका
ऊचुः ॥ एतदृक्ष तले तात मानवौ द्वौच तिष्ठतः । आसीत्कृते तयोस्तात कथं भुञ्जामहे वयं । एतच्छ्रुत्वा स गृध्रस्तु सकरुणो हृदिजायते । तयोरन्ति १६१
कमागत्य वचनम् सम भाषत ॥ गृध्र उ० ॥ जातस्तु युवयोः कामो भोजनम् क्रियतामिदं । पार मुत्तारयिष्यामि जलधेः प्रातरेवतु । ततो रात्रा

अतीतायां उदिते तु दिवाकरे। पारमुत्तारितौ तौ तु गृध्रराजेन वेगिना। सिंहलं द्वीपमागत्य स्थितौ सोमा गृहान्तिके। ततः प्रत्यूष समये तौ तदा गत्वा मण्डले। लेपनम् चक्रतुस्तत्र तदावासे दिनम् प्रति। एवं विदधतोः तत्र पूर्णः सम्वत्सरो भवत्। स्नुषाः पुत्रान् समाहूय सोमा पप्रच्छ विस्मिता। मार्जनं लेपनं कोवा करोति मम कथ्यतां। एकदैवाथ जगदुः सर्वानास्य ज्ञायते वयं शुभे। एकदा रजकी सोमा निभृता संस्थिता निशि। ददर्श ब्राह्मणौ कन्यां मार्जयन्तौ गृहाङ्गणं। क्षिप्रमन्तमं गणं प्राप्तं भ्रातरश्च सुदुर्गतं। सोमा पप्रच्छ तौ मत्वा कौ युवां मम कथ्यतां। ऊचतुस्तौ तदा एतावावां ब्राह्मण पुत्रकौ ॥ सोमोवाच ॥ दग्धास्मि वत नष्टास्मि ब्राह्मणौ गृह मार्जकौ। काङ्गतिं वत यास्यामि पापादस्मादसंशयं। पापजातिरहं याता रजकी सर्वतो द्विज। कथं त्वं ब्राह्मणो भूत्वा विरुद्धं मे चिकीर्षसि ॥ शिवस्वाम्युवाच ॥ एषा गुणवती नाम स्वसा मम सुमध्यमा। अस्याः सप्तपदी मध्ये वैधव्यं संप्रपत्स्यते। तव सान्निध्य मात्रेण भवेद्वैधव्य भञ्जनं। अतो हेतोः मत्स्वसा दासकर्म करोमिते ॥ सोमोवाच ॥ अतःपरं न कर्त्तव्यं यास्यामि तव शासनात्। इत्युक्त्वा गृहमागत्य स्नुषाभ्यः प्रत्युवाच ह। यः कश्चिन्मम राजेस्मिन् म्रीयते मानवः क्वचित्। तदैव रक्षणीयोसौ यावदागम्यते मया। कस्यचिद्वचनात्कोपि न दग्धव्यः कथञ्चन। तथेत्युक्तास्नुषाभिः सा सोमा याता महाम्बुधिं। पारमुत्तारयामास यत्नेन द्विज पुत्रकौ। स्वयमाकाशमार्गेण सा ततार महार्णवं। प्राप्ता काञ्ची पुरी सर्वे निमेषात्तत्प्रभावतः। सोमा दृष्ट्वा धनवतीं दृष्ट्वा पूजामथाकरोत्। अत्रान्तरे शिवस्वामी सदा देशान्तरान्स्वसुः। सदृशं वरमानेतुं जगामोज्जयिनीं प्रति। तमानीय वरं तत्र देवशर्मा सुतं सुधीः। ब्राह्मणं रुद्रशर्माणं गुणेन सदृशं स्वसुः ततः सा रजकी सोमा वैवाहिक मकारयत्। सुलग्नेच सुनक्षत्रे देवस्वामी तु कन्यकां। ददौ तस्मै गुणवत्तीं गुणिने रुद्रशर्मणे। ततो वैवाहिके मन्त्रे क्रियमाने हुताशने। ततः सप्तपदीमध्ये रुद्रशर्मा मृतस्तदा। रुरुदुर्बान्धवाः सर्वे स्थिता सोमा निराकुला। आक्रन्दः स महानासील्लोकानां तत्र पश्यतां। धनवत्यै च सा तूर्णं व्रतराज प्रभावजं। पुण्यं सङ्कल्प्य विधिवत्तस्मै मृत्यो र्विनाशनं। रुद्रशर्मापि तस्माच्च व्रतराज प्रभावतः।। जात

॥ व्र ॥ शाद्वलाद्दा जीवं सुप्त मस्तकेवोत्थितः। एवं विवाहं निर्वर्त्य व्रतराजं निवेद्य च। आमन्त्र्य तां धनवार्तीं सोमा प्रायाद्गृहं प्रति। एवं सा रजकी सोमा
१६२ जीवयित्वा व्रतं द्विजं। ययाव वर्षसम्पूर्णा पूर्णकामास्य मन्दिरं। अथान्तरे गृहे तस्याः प्रथमं तनया मृता। पुनः स्वामी मृतस्तस्याः जामाता च
ततोमृतः। आगच्छन्त्या यदा तस्याः सोमवारान्विता तिथिः। अमावास्या बभूवाथ मृत सञ्जीविनी तिथिः। सा ददर्श तातोपान्ते दृष्ट्वा काञ्चित्
स्त्रियं तदा। मूलभार भराक्रान्तां क्रन्दमानां सुदुःखितां॥ दृष्ट्वोवाच॥ अवतारय मे पुत्रि मूल भारं शिरस्थितम्॥ सोमोवाच॥ अमावास्याद्य
मे दृष्टा सोमवार युता तिथिः। तूलकं न स्पृशाम्यद्य नियमोयम् मया कृतः। पुनर्ददर्श तां यान्तीं मूलभारवतीं स्त्रियं। साप्युवाच ततः पुत्री मूल
भारो महानिति। अवतार्यो मम निष्ठ सङ्गेयास्याम्यहं तव॥ सोमोवाच॥ अद्य मूलं तथा तूलं न स्पृशामि कदाचन। ततोश्वत्थतरुं प्राप्य नदीतीर
मेवेत्य च। स्नात्वा विष्णुं समभ्यर्च्य शर्कराभिः प्रदक्षिणां। सा चकार महाभागा तदेवाष्टोत्तरं शतं॥ भीष्म उ०॥ यदा प्रदक्षिणावर्तं कृतं शर्करया
तथा। तदा जीवितवन्तस्ते पतिजामातृ पुत्रकाः। नगरं श्रीसमाकीर्णं तद्गृहं च विशेषतः। अथ याता महाभागा सोमा स्वभवनं प्रति। जीवितं
वीक्ष्य भर्तारं पुत्रान् जामातरं तथा। अनुप्राप्तान् समासाद्य जगाम कृत कृत्यतां। प्रणिपत्य स्नुषाः सर्वाः पप्रच्छुस्तां तपस्विनीं। मृतास्ते तनया देवी
पति जामातृ पुत्रकाः। जीवितास्तत्कथं देवि मृतास्ते च कथं वद॥ सोमोवाच॥ गुणवत्यै मया दत्तं व्रतराजस्य पुण्यकं। मृतास्ते तद्विपाकेन पति
जामातृ पुत्रकाः। तूलकश्च मया स्पृष्टं मूलकश्च तथा अपि। अश्वत्थमूलमभ्यर्च्य तदा तव प्रदक्षिणां। शर्करायुतया तत्र कृतमष्टोत्तरं शतं।
जीवितास्तत्प्रभावेन पति जामातृ पुत्रकाः। सर्वाभिः क्रियतामद्य व्रतराजं विधानतः। भविष्यति न वैधव्यं सौभाग्यं संभविष्यति। स्नुषाभ्याः
कारयामास तथा सोमेश्वर व्रतं। भुक्त्वा भोगान्स्वयं सा च पुत्र पौत्रादिभिः सह। तैश्च सर्वैः परिवृता विष्णुलोकमवाप सा। इत्येतत्कथितं पार्थ १६३
विस्तरेण मया तव॥ युधिष्ठिरो०॥ माहात्म्यं व्रतराजस्य को विधिर्वद विस्तरात्। कर्त्तव्यं केन भीष्मेदं नारीभिः पुरुषेण वा॥ भीष्म उवाच। अमावा

स्या यदा पार्थ सोमवारान्विता भवेत्। तदा पुण्यतमः कालो देवानामपि दुर्लभः। प्रातरुत्थाय व्रतिभिः स्नानं कार्य्यं जलाशये। स्नात्वा मौनेन कौशेयं परिधाय व्रती ततः। प्रायादश्वत्थ वृक्षस्य समीपे कुरुनन्दन। अश्वत्थ मूले कर्त्तव्या विष्णुपूजा समन्त्रका। व्यक्ताव्यक्त स्वरूपाय सृष्टिस्थित्यंतकारिणे। आदिमध्यान्त हीनाय विष्टरश्रवसे नमः। विष्णुपूजामन्त्रः। एवं संपूज्य गोविन्दं पीतवस्त्राक्षतैः फलैः। कुसुमैर्विविधैश्चैव भक्ष्यभोज्यैस्तथाविधैः। अश्वत्थ पूजनं कार्य्यं प्रोक्त मन्त्रेण पांडव। अश्वत्थाद्भुतभुग्वासो गोविन्दस्य सदाश्रय। अशेषं हर मे पापं वृक्षराज नमोऽस्तु ते। एवं पूजाविधिं कृत्वा ततः कुर्यात्प्रदक्षिणां। मौक्तिकैः कांचनै रौप्यैर्हीरकैर्मणिभिस्तथा। कांस्यपात्रैः ताम्रपात्रै भक्ष्यपूर्णैः पृथक् पृथक्। गृहीत्वा भ्रमणं कार्य्यं प्रादक्षिण्येन पिप्पले तावत् प्रदक्षिणं कार्यं यावदष्टोत्तरं शतं। तद्वस्तुजातं विप्राय पुरंध्रीभ्यः प्रदीयते। ततो निरामिषाहारं कुर्य्यान्नारीजनैः सह। एषते कथितो भूप व्रतराजविधिर्मया। द्रौपदींच सुभद्रांच कारयस्व तथोत्तरां। उत्तरागर्भ संस्थस्तु जीवितं लभ्यतेऽचिरात्। युधिरो० या स्वल्पविभवा नारी कांचनाद्यै विना कृता। सा कथं लभ्यते पूर्णं व्रतराजफलं वद। भीष्मउ० फलैः पुष्पैस्तथा भक्ष्यै वस्त्राद्यैरपि पांडव। कुर्यात् प्रदक्षिणावर्त्तं सापि पूर्णं लभेत् फलं। व्रतमिदमखिलं नरेन्द्र विष्णोः श्रुतमनया हि परक्रमत्वयापि पति सुत धनमिच्छती पुरन्ध्री सपदि करोतु नचात्र चित्रमस्ति भीष्मउ० शृणु पार्थ प्रवक्ष्यामि उद्यापन विधिं शुभं। यं विना पूर्णता नस्याद्व्रतस्य न फलं लभेत्। सर्वतो भद्र मध्येतु स्थापयेत् कुम्भ मुत्तमं। तत्समं तात कलशाः स्थाप्या द्वादश संख्यया वृक्षराजः सुवर्णस्य पञ्चरत्नस्य वेदिका। तन्मूले प्रतिमां विप्र सौवर्णांच चतुर्भुजां। लक्ष्म्या वाहन संयुक्तां माषामाषाद्विपलावधि। उपचारै रनेकैश्च यथा विभवविस्तरैः। नैवेद्यैः पुष्पधूपैश्च दीपैश्च परितस्थितैः। रात्रौ जागरणं कुर्यात् प्रभाते होम माचरेत्। समिद्भिः पिप्पलाभिस्तु पायसेन तिलै स्तथा। पूर्णाहुतिश्च जुहुयाद्गांदद्याच्च पयस्विनीम्। सालङ्कारां तुशय्यांच आचार्य्याय निवेदयेत्। द्वादश ब्राह्मणा भोज्या घृतपायसलड्डुकैः। उपवीतानि वस्त्राणि तेभ्यो दद्याच्च दक्षिणां। इदं विष्णु र्विचक्रमे होमं मण्डल मध्यतः। अष्टोतर शतं कृत्वा त्रिभिर्द्रव्यैः पृथक् पृथक्। सोमायाः प्रीतये

।व्र। मार्गशोमवेषु सुवासिनीः । प्रणम्य दण्डवद्भूमौ प्रार्थयित्वा विसर्जयेत् । इति महाभारते सोद्यापनं सोमवती व्रतं । इति व्रतार्के अमाव्रतानि अथमास
१६२ संक्रान्ति तथादौस्वस्तिक व्रतं कर्णाटकेषु प्रसिद्धं चातुर्मास्य व्रतं आषाढादि आश्विनांतं कार्त्तिकी पूर्णमावधि । युधिष्ठिरे॰ व्रतानि सर्व सिद्धानां कथिता
नि त्वया विभो । तथापि स्वस्तिकं नाम कथितं यत्त्वया प्रभो । नैव तस्य विधानञ्च कथितन्ते सुरेश्वर । श्रीमदनगोपाल उवाच । साधु पृष्टं मया
नाम लोकानां हितकाम्यया । येनचीर्णेन राजेन्द्र न रिपुर्जायते भुवि । स्वस्तिना च क्तं तात स्वस्तिकं विष्णवेर्पयेत । स्वस्तिकानि लिखित्वाशु पू
जा कर्म समारभेत् । रमया सहितं देवं पूजयेत् प्रत्यहं पुनः । इति संकल्प्य मेधावी स्वस्तिकं कर्म कारयेत् अष्टोत्तरं स्वस्तिकानि प्रत्यहं विष्णवे पुनः
जन्मार्जितं पापं तस्य नश्यति तत् क्षणात् । गोमूत्र गोमये नैव स्थण्डिलं शुचि कारयेत् । रङ्गवल्या कृतं कार्यं यदि भक्त्या समर्पयेत् । नीलपीत
सितै रक्तै रङ्गै स्वस्तिकधारणं । यदि कुर्याद्विशुद्धात्मा विष्णुलोकं सगच्छति । पञ्चवर्णैस्तु नीलाद्यै र्यदि स्वस्तिक मंडलं । नारी वा पुरुषो वापि यदि
भक्त्या समन्वितः । विष्णु प्रीतिकरं कुर्यात् तस्य पुण्यमनन्तकं । विष्ण्वालये विष्णु पूजा कर्त्तव्या स्थण्डिलेपिवा । पञ्चरङ्गकवर्णैस्तु कोटि यज्ञ फलं लभेत्
एवं यदि रङ्गरक्ष्यौं विष्णोस्तु पुरतो न्यसेत् । स्वस्तिकैः शोभयित्वा तु विष्णु स्थानं समंगलं अशुभन्तत कुले नैव स्याद्विष्णु प्रसादतः । सहस्रं स्वस्तिका
नांतु येन भक्त्या समर्पितं । पुत्र पौत्र समायुक्तो मोदमानः पुनः पुनः । स्वर्गलोके वसेच्छीघ्रं धनवान् भूमिपो भवेत् । तत्कुले न दरिद्रत्वं नैवनैवास्ति
पार्थिव । अयुतं स्वस्तिकानांतु विष्णवेह्यर्पयेद्यदि । पुत्र पौत्रादिकं तस्य स्वस्तिमान् जायते ध्रुवं । नरोगादिर्भवेच्चैवं गोपालस्य प्रसादतः । नारीचे
द्विधवा नैव पुरुषो पिधनवान भवेत् । विजयै र्विभवैर्युक्तः नात्र कार्या विचारणा । नार्योभिभवन्त्येवं स्वस्तिकैः पूजनं परं । अथ स्वस्तिक लक्षन्तु यदि
कुर्याद्विचक्षणः । तस्य पुण्यफलं वक्तुं कः शक्तो दिवि वाभुवि । आषाढे मासि राजेन्द्र प्रथमस्थरणो भवेत् । आश्विने तु समाप्तिर्वै कर्तव्या स्वस्तिकार १६३
कं । धनिनानु कृतं विप्र गोदानादि पुरःसरं । कर्तव्यं फल सिध्यर्थं नात्र कार्या विचारणा । दरिद्रेणतु कर्तव्यं यदि स्वस्तिक लक्षकं । कंबलाद्यासन

स्वर्गादपवर्गस्य सिद्धये। विभवे सति राजेन्द्र महद्व्रत कारणं। स्वस्तिकं त्वासनं दद्याद्व्रत संपूर्ति हेतवे। आहिताग्नेतु होमः स्यात्तदभावे द्विजार्चनं
द्विज संतर्पणादेव व्रतपूर्तिर्भविष्यति। शुभकारिणि राजेन्द्र स्वस्तिकानि विधापयेत्। ब्राह्मणेभ्यः प्रदेयानि ततः संपूर्ति हेतवे। यथा वति विधानेन
गदितं पुण्यमुत्तमं। तथैव स्वस्तिपुण्यानामित्याहुर्वेदवादिनः। अथ होमं प्रवक्ष्यामि लक्ष स्वस्तिक सिद्धये। पायसेन हुते द्विद्वान् स्वस्य सूचोक्त सारतः
घृत पायसहोमस्या दशांशेनैव सादनं। स्वस्त्ययनं तार्क्ष्यमरिष्टनेमीतिमन्त्रः होमं मन्त्रोर्थविधिवत्कुर्वाणः साधु साधकः। आहिताग्नेर्वैदिकास्तु मन्त्रा
स्तद्धोमसिद्धये। अनाहिताग्निना विद्वान्तंत्रमार्गे भवेध्रुवं। तन्मन्त्रं कथयिष्यामि फलानां तस्य सिद्धये। स्वस्तिनाम परं देवं स्वस्तिकारण कारणं।
पायसं घृत संयुक्तमग्नौ स्वाहा युतं हुतं तुभ्यन्दत्तं महादेव तृप्तो भव महामते स्वस्तिं कुरु महादेव स्वाहया संयुतः सुखिन्। एवं दशांशतो होमः कुर्याद्वि
ष्णु तुष्टये। ब्राह्मणान् भोजयेत्पश्चात्तद्दशांशेन वै बुधः। अथासनानि देयानि पञ्च रत्न युतानिच। ब्राह्मणेभ्यो विशिष्टेभ्यः फलानां तस्य सिद्धये
चौर्णानि चापि देयानि दर्भजान्यथवा पुनः। तत्पूजाविधिसिद्ध्यर्थमाचार्यं वरयेत्सुधीः। गोपालेनतु मन्त्रेण तमेवं पूजयेद्बुधः। पश्चात्तैः स्नापयित्वा
पूजयेद्भक्तिसंयुतः। आयुर्वैभक्ष्य भोज्यैश्च नैवेद्यं परितर्पयेत्। तांबूलैर्धूपदीपैश्च कुसुमैश्चम्पकैः शुभैः। शतपत्रैश्च कल्हारै रर्चयेत्पुरुषोत्तमं। नमस्कारै
स्तथा दिव्यैः स्तोत्रपाठै र्विशेषतः। प्रदक्षिणमथो कृत्वा वाग्यतः संयतेन्द्रियः। ततो गोमिथुनं दद्याद्व्रतसंपूर्तिहेतवे अभावे पाठकानां तु द्रोणमात्रं प्र
दीयते। अथवाप्याढकानांतु पाठके परिकीर्त्तितं। पूरिकामोदकाद्यैश्च भोजयेद्द्विजसत्तमान्। आचार्याय तु तां शुद्धां प्रतिमां दापयेत्सुधीः। हस्तमा
त्रा कर्णमाला कटिसूत्रादिभिः पुनः। पीतांबरैश्च संपूज्य कोटियज्ञ फलं लभेत्। य एवं कुरुते भक्त्या विष्णुप्रीतिपुरःसरः। तस्यानंतफलं राजन्प्रो
दितं वेदवेदिभिः। स्वस्तिकव्रतमेतत्तु गङ्गा स्नान फलप्रदं। तस्मादादौ प्रकर्त्तव्यं धर्मकामार्थ सिद्धये। राजानो मित्रतां यान्ति शत्रवो यान्ति दासतां। नरो
गामि भवन्त्येनं स्वस्तिकव्रतचारिणं। स्त्रीणामपि च कर्त्तव्यं सर्वसौभाग्यसिद्धये। मासत्रये समाप्तिः स्याच्चतुर्भिश्च तथा पुनः। एकस्मिन्नपि मासेन स

 कामिः कोटिगुणप्रदा। य इदं शृणुयाद्भक्त्या तस्यैवं फलदं भवेत्। नेदं कस्यापि व्याख्येयं यदिच्छेद्विपुलं धनं। नदेयं यस्य कस्यापि विकल्पोपिहता
 त्मने। भक्ति शुद्धिविहीनाय बंध्य सामान्य दर्शिने। विकल्प हतचित्ताय नास्तिकाय शठायच। देयं पुत्राय मित्राय फलानां तस्य सिद्धये। एवं ज्ञा
त्वातु तत्सर्वं चकारैवं युधिष्ठिरः। इति श्रीभविष्योत्तरे स्वस्तिकव्रतं अत्रमूलं चिन्त्यं। अथ श्रावणस्यांत्य भृगुवासरे वरलक्ष्मीव्रतं। तत्र पूजाविधिः क्षीरसागर
संभूता क्षीरार्णव समप्रभा। क्षीरार्णव समं वस्त्रं दधाना हरिवल्लभा। ध्यानं। ब्राह्मी हंस समारूढा धारिण्यक्षकमण्डलू। विष्णुतेजोधिका देवि सा मां
पातु वरप्रदा। आवाहनं। महेश्वरि महादेवि आसनं ते ददाम्यहं। महैश्वर्य समायुक्ते ब्रह्माणी ब्राह्मणप्रिये। आसनं। तीर्थोदकैर्महा दिव्यै
पाप संहार कारकैः। अर्घं गृहाण भो लक्ष्मि देवानामुपकारिणि। अर्घं। कुमार शक्ति संपन्ना मयूरवरवाहना। पाद्यं ददाम्यहं देवि वरदे वरल
क्षणे। पाद्यं। वैष्णवी विष्णु संयुक्ता असंख्यायुधधारिणि। आचम्यतां देवपूज्ये वरदेऽसुरमर्दिनि। आचमनं। स्नानं पञ्चामृतैः शुद्धैः स्नपयिष्ये हरिप्रिये
वरदे शक्ति संभूते वरदे ईश्वर प्रिये। पञ्चामृत स्नानम्। गङ्गाजलं समानीतं सुगन्ध द्रव्य संयुतं। स्नानार्थं च मया दत्तं गृहाण परमेश्वरि। स्नानं।
रक्तांतादि समं दिव्यं क्षीरसागर सन्निभं। चन्द्रप्रभा समं दिव्यं वस्त्रं ते प्रददाम्यहं। वस्त्रं। मांगल्यमणिसंयुक्तं मुक्ताफल समन्वितं। दत्तं मङ्गलसू
त्रञ्च गृहाण सुरवल्लभे। सुवर्ण भूषणं दिव्यं नानारत्न सुशोभितं। त्रैलोक्य भूषणे देवि गृहाणाभरणं शुभं। आभरणानि उपवीतं अष्टगन्ध सुगन्धा
ढ्यं मदगन्ध समन्वितं। दास्यामि देवि वरदे लक्ष्मीदेवि प्रसीद मे। गन्धं। महाब्राह्मी समुद्भूता नक्षत्रानपि षोडश। मुक्ताविशेषज प्रख्या गृहाण
परमेश्वरि। अक्षताः नानाविधानि पुष्पाणि नानावर्ण युतानिच। पुष्पाणि ते प्रयच्छामि भक्त्यादेवि वर प्रदे। पुष्पं अथांग पूजा। वरलक्ष्म्यै नमःपादौ
पूजयामि। कमलवासिन्यै गुल्फौ० पद्मालयायै जङ्घे श्रियै जानुनी इन्दिरायै ऊरू० हरि प्रियायै नाभिं लोकधात्र्यै स्तनौ० संखनिध्यै हस्तौ विधात्र्यै कण्ठं धात्र्यै १६४
नासां० पद्मप्रियायै नयने० मांगल्यै कर्णौ० क्षीरसागरजायैललाटं० श्रीलक्ष्म्यै शिरः पू० महालक्ष्म्यै सर्वाङ्गं पूजयामि धूपं दास्याम्यहं देवि गोघृतेन समन्वितं

प्रगृहाण महादेवि भक्तानां वरद प्रिये धूपं। आज्यश्चेति दीपं नैवेद्यं परमं शुभं दृष्टि प्रीतिकरं शुभं। भक्ष्य भोज्यादि संयुक्तं परमान्नादि संयुतं। नैवेद्यं। कर्पूरं नागवल्लीश्च क्रमुकं चूर्णसंयुतं। वरलक्ष्मि गृहाण त्वं तांबूलं प्रददाम्यहं। तांबूलं सुवर्णं सर्वधातूनां श्रेष्ठं देवि परं सदा। भक्त्या ददामि वरदे स्वर्णं दृष्टिं प्रदेहि मे। सुवर्णं० नीराजनं सुमांगल्ये कर्पूरेण समन्वितं। चन्द्रार्क वह्निसदृशप्रभे देवि नमोऽस्तुते। नीराजनं सर्वमङ्गलमांगल्ये सर्व पाप प्रणाशिनि। दोरकं प्रतिगृह्णामि सुप्रीता हरिवल्लभे। दोरकग्रहणं। करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः। श्रियं देहि यशो देहि सौभाग्यं देहि मे शिवे। दोरकबन्धनं। क्षीरार्णवसुता लक्ष्मी चन्द्रेणैव सहोदारे। गृहाणार्घं महालक्ष्मी देवि तुभ्यं नमोऽस्तुते। पुनरर्घं श्रीवृक्षस्य दलं देवि महादेवि प्रियं सदा। बिल्वपत्रं। इहजन्मनि यत्पापं मम जन्मान्तरेषुच। निवारय महादेवी लक्ष्मी नारायण प्रिये। प्रदक्षिणा दामोदरि नमस्तेऽस्तु नमस्त्रैलोक्यनायके। हरिकांते नमस्तेऽस्तु त्राहि मां परमेश्वरि। नमस्कारः क्षीरार्णवसमुद्भूते कमले कमलालये। प्रयच्छ सर्वकामांश्च विष्णुवक्षस्थलालये। व्रतसमर्पणं छत्रचामरमांदोलव्यजनं दर्पणं तथा। सूपचारैः समभ्यर्च्य क्षमाप्यच महेश्वरीं। वरलक्ष्मी महादेवि सर्वकामप्रदायिनि। क्षमापणं प्रयच्छ पुत्रकामांश्च विष्णुवक्षस्थले नघे। गीतवादित्र नृत्यैश्च राजसन्मानने स्तथा। पुत्रान् देहि यशो देहि सौख्यसौभाग्यमेवच। त्रैलोक्य जननी त्राहि वरदे भक्तवत्सले। इति प्रार्थना एकविंशति पक्वान्नं घृत शर्करं संयुतं। इन्दिरा प्रीयतां देवि अतःशांतिं प्रयच्छ मे। इन्दिरा प्रतिगृह्णातु इन्दिरावै ददातिच। इन्दिरा तारको भाभ्यां इन्दिरायै नमोनमः। इति पूजनं अथकथा। सूतउ० कैलास शिखरे रम्ये सर्व देव निषेविते। गौर्यासह महादेवो दिव्याक्षैश्च विनोदतः। जितोसित्वं जितेत्याह पार्वती परमेश्वरं। सोपित्वञ्च जितेत्याह सुविवादस्तयोरभूत्। चित्रनेमिस्तदा पृष्टो मृषावादमभाषत। तदाकोप समाविष्टा गौरी शापन्ददौ तु तं। कुष्टी भव मृषावादी चित्रनेमे हतक्रियः। नान्टतेन समं पापं क्वापि दृष्टं श्रुतं नच। चित्रनेमिर्महा प्राज्ञो सत्यं वदति नो मृषा। प्रसादं क्रियतां देवि देवीमाह वृषध्वजः। प्रसाद सुमुखी तस्मै विशापञ्च जगाद सा।

॥ ब्र ॥ यदा सरोवरे रम्ये करिष्यसि तपः शुचिः ततः स्वर्गगणिकाः सर्वाः वचन्ति त्वां समागताः तदा भवान् विशापःस्यादित्युक्तः सपपातच । ततोद्रिनैश्च कतिभिः
१६५ चित्रनेमिः सरोवरे । कुष्ठो भूत्वा वर्षस्तच ददर्श स्वर्विलासिनीः । देवता पूजनोद्युक्ताःपप्रच्छ प्रणिपत्यताः । किमेतद्भो महाभागाः किं पूजायांतु वांछितं ।
किन्नामभिरनुष्ठेय विशामुच सुखायच । इति व्रतं चित्रनेमिश्चरम्बक्रे सुलोचनाः। येनास्मान् गिरिजाशापान् मोक्ष्यामि चिरदुःखितान् । ताऊचुः क्रियमा
णमस्माभिः व्रतमेतदनुत्तमं । वरलक्ष्मी व्रतं दिव्यं सर्वकाम समृद्धिदं । यदा रवौ कुलीरस्थे मासेच श्रावणे तथा । गङ्गायमुनयोर्योगं तुंगभद्रासमं तदा ।
तस्मिन्वै श्रावणे मासि शुक्लांतेतुभृगोर्दिने ! प्रारब्धव्यं व्रतं तच महालक्ष्म्या यतात्मभिः। सुवर्णप्रतिमां कुर्याच्चतुर्भुज समन्वितां । पूर्वं गृहमलङ्कृत्य तोरणै रङ्ग
वल्लिभिः । गृहस्य पूर्वदिग्भागे ईशान्यांच विशेषतः तण्डुलान् प्रस्थसंख्याकान् भूमौ निक्षिप्य पूजयेत् । संस्थाप्य कलसं तच तीर्थतोयैः प्रपूजयेत् । फलानिच
विनिक्षिप्य सुवर्णं प्रक्षिपेत्ततः । पल्लवांश्च विनिक्षिप्य वस्त्रेणाच्छाद्ययत्नतः । प्रतिमां स्थापयेत्तच पूजयेच्च यथा विधि अग्न्युत्तारण पूर्वंतु शुद्ध स्नानं यथा
क्रमं । पञ्चामृतेन स्नपनं कारयेन्मन्त्रतः सुधीः शुद्धस्नानं ततः कृत्वा देवी सूक्तेन वै ततः । अष्टगन्धैः समभ्यर्च्य पल्लवैश्च समर्पयेत् अश्वत्थवटबिल्वादि
चूतदाडिम मालती । एतेषां पत्रमादाय एकविंशति संख्यया नानाविधानि पुष्पाणि मालत्यादीनि वैततः । धूप दीपै र्महालक्ष्मीं पूजयेत् सर्व कामदां
पायसं सर्व भक्ष्यञ्च सर्व भक्ष्यैश्च संयुतं । एकविंशति संख्याकैरपूपैः पूजयेच्छिवं देव्यै सर्वं समर्प्याथ वरं सद्गुण्यात्ततः । एवं संपूजयित्वा तांबूलाद्यैश्च षोड
श उपचारैर्वेद्धविधैर्नानासन्मानने स्तथा । नृत्यगीतादि सहितं देवीं संप्रार्थयेच्छिवं उमासरस्वती माया शचीव प्रियवादिनी । एताभिश्च कृतं सम्यग्
व्रतं सर्वसमृद्धिदं पूजावसान पर्यन्तं चित्रनेमिरभूत्ततः । होमं धूपं समाधाय धूपदीपं प्रभावतः । गतकुष्टः स्वर्णतेजो शुचिस्तद्गतमानसः । तस्मिनेव व्र
ते सम्यक् मनःसन्धाय सर्वदा पञ्चवायनकन्दत्वा कथां शृण्वीत यत्नतः । तथा मौनं गृहीत्वातु आरतीभिः प्रपूजयेत् । व्रतञ्च कुर्वतां हस्ता देकं पूगफलं तथा १६५
पर्णैकं चूर्ण रहितं चर्वनीयं प्रयत्नतः । भक्षयित्वातु चैलांतं बन्धयित्वा दृढं ततः । ततः प्रभात उत्थाय दर्शनीयं प्रयत्नतः । अहं तस्या करिष्यामि व्रतं सर्व

सप्तद्विदं इत्युक्ता सर्वदेव्यास्तु कारयामास तत्क्षणात्। सुवर्णनिर्मितां देवीं वस्त्रालङ्कार संयुतां। पूर्वोक्तेन विधानेन पूजां कृत्वा प्रयत्नतः। पञ्च वायनकं कृत्वा दत्वा तेभ्यो यथाक्रमं। विप्राय वाथ यतये देव्यै च ब्रह्मचारिणे। सुवासिन्यै ततस्त्वेकं अर्पितञ्चित्रनिर्मित। एवं सम्यक्क्रमेणैतान् दत्वा वायन पञ्चकं। ततो गृहं गतं तेन देवीं नत्वा यथाक्रमं। ततोऽत्वनुज्ञां संप्राप्य भक्षयित्वा ततोव्रती। नागवल्लीदलं त्वेकं क्रमुकं चूर्णवर्जितं चर्वयित्वा तु चैकांते प्रभाते तं निरीक्ष्य च। आरक्तेच ततो जाते व्रतस्यास्य प्रभावतः। अद्याहं गतपापोस्मि देवी दर्शन योगतः। एतत्सम्यग् व्रतं चीर्णं व्रतं यन्मे मया कृतं। चित्रनेमि व्रतं कृत्वा कैलासं शङ्करालयं। गत्वा प्रणम्य देवेशं देवी मादर पूर्वकं। पार्वती च तदा प्राह चित्रनेमिं स्वपुत्रवत्। पालनीयो मया त्वं वैसत्यमित्यवधार्यतां। चित्रनेमिस्तदा प्राह पार्वतीं हरवल्लभां। तव पादाम्बुजं दृष्टं वरलक्ष्मी प्रसादतः। महादेवस्ततः प्राह चित्रनेमे शुचिव्रत अद्य प्रभृति कैलासे भुंक्ष्व भोगान्यथेप्सितान्। पश्चाद्गमिष्यसि वैकुण्ठ व्रतस्यास्य प्रभावतः। पार्वत्यापि कृतं पूर्वं पुत्रलाभार्थया तया। दृष्टस्य षण्मुखस्तेन व्रतेन सुमहाव्रत। नवराज्ञाच विक्रमेण राज्यं प्राप्तं तदाज्ञया। नन्दीच कांतया हीनो कांता लब्धा प्रसादतः। तयाच तद्व्रतं कृत्स्नं कृतं वै पुत्रहेतुतः पुत्रं प्रसुषुवे साच त्रिलोका भरणक्षम। इह मानुष लोके हि व्रतं चीर्णं सुविस्तर। तदा प्रभृति येनैव व्रतलक्ष्मी व्रतं शुभे। व्रतंपुण्यं नरोवापि कुर्याच्चैतत् तथांगना। भक्त्या करोति विपुलान् भोगान् प्राप्य श्रियं व्रजेत्। व्रतानामुत्तमं पुण्यं वरलक्ष्मी व्रतं शुभं। तत् कृतीच नरो नारी फलमाप्नोत्यसंशय। य इमं शृणुयान्नित्यं श्रावयेद्वासमाहितः। धनधान्य मवाप्नोति वरलक्ष्मी प्रसादतः। इति श्रीभविष्योत्तर पुराणे वरलक्ष्मी व्रतं। आश्विन शुक्लांत्य मानुवासर मारभ्य माघशुक्लसप्तम्यवधि दानफल व्रतं। तत्र पूजा। ध्येयःसदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजासन संनिविष्टः केयूरवान् मकरकुण्डलवान् कीरीटी विष्णुर्हिरण्मयवपुर्धृतशङ्खचक्रः। इति ध्यानम् जगन्नाथाय नमः आवाहनम् पद्मासनाय नमः आसनं गृहपतये नमः पाद्यं तमोहंत्रे नमः अर्घं मित्राय नमः आचमन विश्वतेजसे नमः पञ्चामृतस्नानं जगत्पतये नमः वस्त्रम् त्रिमूर्त्तये नमः यज्ञोपवीतं हरये नमः गन्धं

॥ व्र ॥ सूर्य्याय नमः अक्षतान् भास्कराय नमः पुष्पम् बृहस्पतयेनमः धूपं अज्ञाननाशिने नमः दीपं लोकेशाय नमः नैवेद्यं विश्वतेजसे नमः ताम्बूलं
१६६ प्रभाकराय नमः नीराजनं सूर्य्याय नमः सुवर्णपुष्पं भास्कराय नमः मन्त्रपुष्पं नमस्ते देवदेवेश नमस्ते सर्वकामद । नमस्ते पद्म
हस्ताय नमस्ते देव सत्यवे । नमस्कारः सर्वात्मने प्रदक्षिणं । दिवाकर नमस्तुभ्यं पापं नाशय भास्कर । त्रयीमयार्क विश्वात्मन्
गृहाणार्घं नमोस्तुते । द्वादशं चात्र अर्घं ततो ब्राह्मणं पूजयेत् । यस्य स्मृत्यापि इति पूजा विधानं । पूजा विधाने पितृगृहे वर्तमाना कुन्ती व्या
सं ददर्श ह । नमस्कृत्य महाभक्त्या पादार्घाचमनीयकं । दत्वा संप्रार्थ्य तं व्यासं कुन्ती मुकुलितांजलिः । पति पुत्रान्नमोक्षार्थं व्रतं ब्रूहि महामुने । व्यासउवाच
शृणु दानफलं नाम वक्ष्येहं व्रतमुत्तमं । कैलासशिखरे रम्ये पार्वती परमेश्वरं । दानस्य सर्व दानानामुत्तमं ब्रूहि तत्वतः । शङ्कर उवाच । साधु देवि
त्वया पृष्टं शुभे मे सर्वतः शुभं । भूमौतु भारते वर्षे पुण्येच यमुनातटे । ऋषिपत्नीसमूहस्य व्रतांगेन सुसंस्थितः । तत्र गत्वातु हे देवि शृणु सर्वं व्रतोत्तमं
शंभोरनुज्ञया देवी कैलासादागता भुवि । आगच्छमाना मार्गेण ददर्श कुसुमावतीं । किं वने क्लिश्यते वाले तामुवाचाथ पार्वती । हे देवि वरदे
त्वंहि पति भ्रष्टासि दुःखिता । आगच्छ त्वं मया सार्द्धं करिष्यामो वयं व्रतं । भविष्यति ते पतेर्योगः सुपुत्रो धनवान् परः । तया सह व्रजन्ती सा दमयन्तीं
ददर्श ह । तथैवच पतिभ्रष्टा पुत्रहीना सुदुःखिता । तच्छ्रुत्वा तं गृहीत्वातु ताभ्यां सार्द्धं जगाम ह । पुण्यांच यमुनां गत्वा पूर्वाह्ने भानुवासरे । तत्र ह
ष्ट्वातु सा देवी पप्रच्छ स्त्रीकदंबकं । इदं व्रतं किमेतन्मे वक्तव्यन्तु ऋषिस्त्रियः । स्त्रियऊचुः । पुण्यं व्रतमिदं देवि सौरं पापप्रणाशनं । सर्व सम्पत् करं स्त्री
णां पति पुत्रान्नमोक्षदं । धर्मार्थ काम मोक्षाणां सिद्धये तद्व्रतं नृणां । कन्यादान सहस्रन्तु गोदानन्तु त्रिलक्षकं । भूहिरण्यतिलादीनां सर्वेषामधि
कं व्रतं । सर्व दानफलञ्चैव तस्माद्दान फल व्रतं । तच्छ्रुत्वा पार्वती प्राह करिष्यामो वयं व्रतं । सांगं व्रतं तु मे ब्रूहि कालद्रव्यविशेषतः । स्त्रियऊचुः । १६६
आवाहये जगन्नाथं भास्करं देवरूपिणं । पद्मासनः पद्मकरः पद्मगर्भ समद्युतिः । सप्ताश्वः सप्तवक्त्रश्च द्विभुजःस्यात्सदा रविः ॥ ध्येयःसदा सवितृमण्डलम

प्रवर्त्तौ एवं ध्यात्वा द्विजः सम्यग् भास्करं देव रूपिणं। नमः पद्मासनायेति दद्यादासनमुत्तमं। पाद्यं गृहपते तुभ्यं मित्राद्याचमनं तथा। त्रैलोक्यांधत
मोहन्त्रे अर्घं दद्यात्प्रयत्नतः। पञ्चामृतविधानेन स्नापयेद्विश्वतेजसं। जगत्पतये तु वस्त्रञ्च उपवीतं त्रिमूर्त्तये। रक्तगन्धाक्षतञ्चैव रवेर्दद्यात्
समन्त्रकं। बृहस्पतये तु वै धूपं दीपमज्ञाननाशिने। नैवेद्यं परमान्नञ्च सफलञ्चाज्यशर्करं। गृहाण सर्वलोकेश सर्वकामफलप्रदं। तांबूलंच सकर्पूरं
प्रदद्याद्विश्वतेजसे। नमस्ते देवदेवेश नमस्ते देव मूर्तये। नमः कमलहस्ताय आदित्याय नमोनमः। नमस्कुर्यादनेनैव प्रार्थये द्विश्वतेजसं। कृत्वा
प्रदक्षिणं देवमर्घं दद्यात्प्रयत्नतः। रक्त गन्धाक्षते स्ताम्रपात्रेणार्घं समन्त्रकं। दिवाकर नमस्तुभ्यं पापं नाशय भास्कर। त्रयीमयार्क विश्वात्मन् गृहाणार्घं
नमोस्तुते। एवं द्वादशवारञ्च व्रतीदद्यात्समन्त्रकं। तैलाम्लावणक्षारं वर्जयित्वातु भोजयेत्। बहुवीज फलं वर्ज्यं शेषं द्रव्यन्तु भोजनं। कन्दमूलफला
हारं विशेषेण फल प्रदं। नीवारदध्यादतिविशेषतः सदृहस्मृतः। एवं कुर्याद्व्रतं सम्यक् प्रत्येकं भानुवासरे। माघमासे शुक्लपक्षे सप्तम्यां यावदन्तिके।
षष्ठ्यामुपोष्य विधिवत्सप्तम्यामुदये शुचिः। पूर्ववद्रविमभ्यर्च्य प्रतिमां वस्त्रसंयुतां। आचार्य्येणाग्निमादाय गोमयेनोपलिप्यच। सघृतं परमान्नञ्च होमयेत्
सौर मन्त्रकं। पायसं प्रतिमां वस्त्रं ब्राह्मणाय निवेदयेत् एवं कुर्यात् पञ्चवर्षं पञ्चधान्यं समर्पयेत्। पञ्च प्रस्थ प्रमाणञ्च प्रथमं व्रीहि मेवच। गोधूमास्च
द्वितीयेच तृतीये लवणं तथा। चतुर्थे तिलदानञ्च पञ्चमे माषमेवच। सफलां दक्षिणां दद्यात् विप्रान्द्वादश भोजयेत्। एवं कुर्याद्व्रतं सम्यक् सर्वं संपूर्णता
मियात्। तच्छ्रुत्वा ते गृहीत्वाथ सर्वेतत्र चकारयेत्। पद्मावती पतिंप्राप्य दमयन्ती तथानलं। सुमित्रा पुत्रपिंडार्थे तत् प्राज्ञया द्विजोत्तमं। सर्वभाग्ययुता गौरी
स्वर्णसाधुफलं यथा। तद्गृहीत्वा गते मार्गे ददर्श ब्राह्मणस्त्रियं। तां दृष्ट्वा तत्फलं दत्वा ततः शिव पुरं ययौ। ततः सफलविप्रस्य गृहं गत्वा सविस्मयः।
धन धान्य समृद्धिस्तु बहु गोधन सकुलः। सर्वरत्न मयो भूत्वा भार्यया सममब्रवीत्। सविष्णु विस्मितो भार्यां पृष्ठवान् किं कृतं मया। साब्रवीद्ब्राह्म
बन् स्वामिन् भवद्भिः फल मागतं। स्वर्णमाधु फलं दत्तं येन केन ध्रुवंतु मे। महादेव फलं दत्तं पार्वत्या कृपया मम। ततः शिवपुरं प्राप्यभार्या

॥ अ ॥ याः सर्वमब्रवीत् । सुपुत्रं लभते कुन्ती त्वं कुरु व्रतमुत्तमं । ये पठन्तीदमाख्यानं शृणोति श्रद्धयान्वितः । सर्वपापविनिर्मुक्तो ते यास्यन्ति परां गतिं ॥
१६७ इति श्रीस्कान्दे दान फल व्रतं ॥ अथ चातुर्मास्यैकादशी मारभ्य धारणा पारणा व्रत । भविष्योत्तर पुराणे । श्रीकृष्ण उवाच ॥ शृणु कौन्तेय वक्ष्यामि
व्रतं धारण पारणं । यान्मवादि वध दोषं सर्वेन्द्रिय नियामकं । चातुर्मास्ये तिथावादौ मासिकौन्तेय सुव्रतं । पुण्याहं कारयेत्पूर्वं एकादश्यां शुभे
दिने । पश्चात्संकल्प्य राजेन्द्र तदारभ्य व्रतं चरेत् । आदौ मासि तिथावन्ते चातुर्मास्य मथापिवा । एकस्मिन् धारणं कार्यं पारणञ्च तथा परं ।
उपवासं धारणं स्यात् पारणं भोजनं भवेत् । पारणाया दिने प्राप्ते अर्घं पूर्वं निवेदयेत् । पारणन्तु ततः कार्यं मन्त्रमष्टाक्षरं जपेत् । अष्टोत्तर शतं
दद्यादर्घं देवाय तन्मनाः । समाप्ते मासि राजेन्द्र कुर्यादुद्यापनं बुधः । चातुर्मास्ये व्रतीचापि मासे मासे तु कारयेत् । उपवास दिने प्राप्ते पुण्याहं
कारयेत्पुरा । आचार्यं वरयेत्पश्चाद्ब्राह्मणन्तु ततःपरं । कुर्यात्तु प्रतिमां पश्चात् लक्ष्मीनारायणस्यवै । पूर्णकुम्भेतु तां स्थाप्य पूजयेद्विधि भूमिप । पञ्चा
मृतैस्तथा पुष्पैः तुलसीदलसंयुतैः । मालतीकेतकीभिश्च मल्लिका कुसुमैस्तथा । रात्रौ जागरणं कुर्यात् पुराणपाठनादिभिः । प्रातःकाले समायाते
ब्राह्मणांस्तु निमन्त्रयेत् । मासे विप्रान् पञ्चदशद्विमासे द्विगुणं भवेत् । चातुर्मास्ये तथा राजन् तथा विंशति भूसुरान् । आनीय संख्यया राजन् ब्रा
ह्मणांश्च निमन्त्रयेत् । पश्चात् स्नानादिकं कृत्वा देव पूजां समाचरेत् । पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि । निषुसीदेति मन्त्रेण जुहुयाच्च
तिलौदनं । वनानि काणे मन्त्रेण जुहुयाच्च घृतौदनं । अष्टाक्षरेण मंत्रेण पायसं जुहुयात्ततः । लक्ष्मी नारयणं देवं स्थाने च येपि देवताः ।
पूर्णाहुतिं ततो हुत्वा होम शेषं समापयेत् । ब्राह्मणान् भोजयेत्पश्चादाचार्यं पूजयेत्ततः । एवं कृत्वा महाभाग ब्रह्महत्यादि पातकैः । मुच्यते नात्रस
न्देह तस्मात्कुरु महाव्रतं । सुग्रीवस्तु महाराज हत्वा वालिनमाहवे । रामादिषु ततो भूत्वा कृत्वा धारण पारणं । विमुक्तस्तद्गतान् दोषान् तथा १६७
न्यैः पातकैरपि । नारदोपि तथा राजन् पूर्वजन्मनि शूद्रकः । द्विजेभ्य उपदेशस्तु सत्कृद्वारण पारणं । होमादिकं विना वापि तस्य पुण्यप्रभावतः ।

जितेन्द्रिय स्ततो भूत्वा ब्रह्मभूर्द्विजांवरः। तस्मात्सर्वं प्रयत्नेन कुर्याद्धारण पारणं। इन्द्रियाणां वशार्थाय सर्वं पापापनुत्तये। तस्मात्त्वमपि राजेन्द्र कुरुष्व व्रतमुत्तमं। किं दानेन तपसा किं वा किमन्यैस्त्वव्रतैर्यमैः। धारणं पारणं कुर्याद्व्रतानामुत्तमं व्रतं। सर्वं यज्ञेषु तीर्थेषु सर्वं दानेषु यत्फलं। तत्फलं समवाप्नोति कृत्वा धारण पारणं। इदं व्रतं महापुण्यं तपसामुत्तम तपः। यज्ञानाञ्च तथा यज्ञः व्रतानामुत्तमोत्तमं। तस्मात्त्वमपि राजेन्द्र कुर्विदं विधि पूर्वकं। वान्धवादिवधैर्दोषैर्मुच्यते नात्र संशयः। इति तं सम्भाष्याथ विष्णुः स्वांच पुरीं ययौ। हृष्यमानः पौरजनैः समस्तैः पाण्डुपुत्रकैः। युधिष्ठिरोपि राजर्षिश्चकारेदं महाव्रतं। विमुक्तः सर्वं पापेभ्यो वंशजश्च ततो भवेत् ॥ इति भविष्योत्तर पुराणे धारण पारण व्रतं ॥ अथाश्विन शुक्लैकादश्यादि मासपर्यन्तं मासोपवास व्रतं हेमाद्रौ विष्णुरहस्ये। नारद उवाच ॥ भगवन् श्रोतुमिच्छामि व्रतानामुत्तमस्य च। विधिमासोपवासस्य फलंचास्य यथोदितं। यथाविधानरैः कार्या व्रतचर्या यथा भवेत्। आरभ्यते यथापूर्वं समाप्यंहि यथाविधि। यावत्संख्यं हि कर्त्तव्यं तद्ब्रूहि प्रपितामह। व्रतमेतत्सुरश्रेष्ट विस्तरेण ममानघ ॥ ब्रह्मोवाच॥ साधु नारद संधैतत् पृष्ठंच वत्सपोधन। यादृग् मतिमतां श्रेष्ठ तच्छृणुष्व ब्रवीमीते। सुराणाञ्च यथा विष्णुः तपतांच यथा रविः। मेरुः शिखरिणां यद्वत् वैनतेयस्तु पक्षिणां। तीर्थानांतु यथा गङ्गा प्रजानांतु यथा वणिक्। श्रेष्टं सर्वं व्रतानांतु तद्वन्मासोपवासकं। सर्वं व्रतेषु यत्पुण्यं सर्वं तीर्थेषु यद्भवेत्। सर्वं दानोद्भव वापि लभेन्मासोपवासकृत्। अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरि दक्षिणैः। नतत्पुण्यमवाप्नोति यन्मासपरिलङ्घनात्। तेन तप्तं कृतं जप्तं तपस्तेन सदाकृतं। यः करोति विधानेन नरोमासमुपोषणं। प्रविश्य वैष्णवं यज्ञं येनाभ्यर्च्य जनार्द्दनं गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासन। वैष्णवानि यथोक्तानि कृत्वा सर्वं व्रता नितु। द्वादश्यादीनि पुण्यानि ततोमास मुपावसेत्। अति कृच्छ्र पराकंच कृच्छ्रचान्द्रायणं ततः। मासोपवास कुर्वीत ज्ञात्वा देहवलावलं। वानप्रस्थो यतिर्वापि नारीणां विधवा मुने। मासोपवासं कुर्वीत गुरुविप्राज्ञया ततः। आश्विनस्यामले पक्षे एकादश्यामुपोषितः। व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु। वासुदेवं

॥ अ ॥ समुद्दिश्य कार्त्तिके सकलं नरः । मासञ्चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत्। अच्युतस्यालये भक्त्या त्रिकालैः कुसुमैः शुभैः । मालतीन्दीवरैः पद्मैः
१६८ कमलैस्तु सुगन्धिभिः। कुंकुमोशीर कर्पूरै र्विलिप्य वरचन्दनैः । नैवेद्यधूपदीपाद्यैरर्चयेच्च जनार्द्दनं। मनसा कर्मणा वाचा पूजयेद्गरुडध्वजं।
कुर्यान्नरःस्त्री श्रवणं शुद्धभक्ति जितेन्द्रियः। नाम्नामेव तथालापं विष्णोः कुर्यादहर्निशं भक्त्या विष्णोः स्तुतिर्वाच्या स्वषाव दं विवर्जयेत्। सर्व सत्व
दयायुक्तो शान्तवृत्ति रहिंसकः। सुप्तो वा आसनस्थो वा वासुदेवं प्रकीर्त्तयेत्। स्मृत्या लोकन गन्धादि स्वादनं परिकीर्त्तनं। अन्नस्य वर्जयेत्सर्वं ग्रा
सानांचाभिकांक्षिणां। गात्राभ्यङ्गं शिरोभ्यङ्गं तांबूलं सविलेपनं। व्रतस्थो वर्जयेत्सर्वं यच्चान्यच निराकृतं। व्रतस्थो न स्पृहेत्किञ्चिद्विकलं कर्णस्थो न
चालयेत्। देवतायतने तिष्ठन्गृहस्थस्वरेव्रतं। कृत्वा मासोपवासंतु यथोक्तविधिना नरः। नारी वा विधवा साध्वी वासुदेवं समर्चयेत्। न्यू
नाधिकमेवंतु व्रतं चिंशद्दिनैरिदं। कृत्वा मासोपवासन्तु संयतात्मा जितेन्द्रियः। ततोर्चयेन्महद्भक्त्या द्वादश्यां गरुडध्वजं। पूजयेत्पुष्पमालाभि र्गन्धधूपै
रलं कृतं। वस्त्रालङ्कार वाद्यैश्च तोषयेदच्युतन्नरः स्नापयेत हरिं भक्त्या तीर्थचन्दनवारिभिः। चन्दनेनानुलिप्ताङ्गं पुष्पधूपैरलंकृतं। वसुदा
नादिभिश्चैव भोजयेत द्विजोत्तमान्। दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत्। क्षमापयित्वा विप्रांश्च विसर्ज्याभ्यर्च्य पूज्य च। एवं वित्तानुसारेण
भक्तियुक्तेन शक्तितः। एवं मासोपवासंतु कृत्वाभ्यर्च्य जनार्द्दनं। भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते। एवं मासोपवासोक्तिं सम्यक्कृत्वा त्रयो
दश। निर्यापयेत्ततस्तद्वै विधिना येन तच्छृणु कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः। पूजयित्वा च देवेशमाचार्यानुज्ञया हरिं। अर्चयित्वा हरिं
भक्त्या अभिवाद्य गुरुं तथा। ततोनु भोजयेद्विप्रान् भोजयित्वा यथाविधि। विशुद्ध कुल चारित्रान्विष्णु पूजन तत्परान्। पूजयित्वा द्विजान् सम्यक्
भोजयित्वा त्रयोदश। तावन्ति वस्त्र युग्मानि भोजनान्यासनानिच। योग पदानि शुभ्राणि ब्रह्म सूत्राणि चैवहि। दद्याच्चैवं द्विजाग्रेभ्यः पूजयित्वा १६८
प्रणम्यच। ततोनु कल्पयेच्छय्यां शक्यास्तरण संस्थितां। सच्छादनशुभांश्रेष्ठ सोपधाना मलंकृतां। कारयित्वात्मनोमूर्त्तिं कांचनीं तु सभक्तितः। त्यजेत्त

स्नान्तु शय्यायामर्चयित्वा स्रगादिभिः। आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ। पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत्। एवं शय्यां तु संकल्प्य प्रणि
पत्य च तान् द्विजान्। प्रार्थयेच्चानुमोदार्थं विष्णुलोकं व्रजाम्यहं। एवमभ्यर्चिता विप्रा वदेयुर्व्रतिनं तदा। शीघ्रं व्रज नरश्रेष्ठ विष्णोःस्थानमनामयं।
विमानं वैष्णवं दिव्यं शय्यया परिकल्पितं। तेन विष्णुपदं याहि सदानन्दमनामयं। ततो विसर्जयेद्विप्रान् प्रणिपत्यानुगम्य च। ततस्तु पूजयेद्भक्त्या
गुरुं ज्ञानप्रदायकं। तां शय्यां कल्पितां सम्यक् गुरुं व्रतसमापकं। प्रणम्य शिरसा शान्तो गुरवे प्रतिपादयेत्। एवं पूज्य हरिं विप्रान् गुरुं ज्ञानप्रका
शकं। कृत्वा मासोपवासं च नरो विष्णुतनुं विशेत्। कृतमासोपवासस्तु विष्णुपूजनतत्परः। नयेच्छान्तमनाः कालं स्वर्गं गच्छेद्द्विजितेन्द्रियः। कृत्वा
मासोपवासं च विचार्य्य विधिवन्मुने। कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः। यस्मिं जाते महापुण्ये कुले मासोपवासनात्। सर्वपापविनिर्मुक्तो वि
ष्णुलोके महीयते। नरो मासोपवासानां कर्त्ता पुण्यकृतां वरः। पितृमातृकुलाभ्यां च समं विष्णुपुरीं व्रजेत्। नारी वा सुमहाभागा यथोक्तव्रत
माश्रिता। कृत्वा मासोपवासं च व्रजेद्विष्णुं सनातनं। नारद उवाच। सुदुःकरमिदं देव मूर्च्छा ग्लानिकरं परं। व्रतं मासोपवासाख्यं भक्तिमन्
यतेऽच्युते। पीड़ितस्य भृशं देव मुमूर्षोर्व्रतिनस्तदा। त्यागो वानुग्रहो वापि किं नु कार्य्यं पितामह। ब्रह्मोवाच। व्रतस्थं कर्शितं दृष्ट्वा मुमूर्षुम्वा तपोधन
दृष्ट्वा तु ब्राह्मणास्तस्य कुर्युः सम्यगनुग्रहं। घृतं पाययेत् क्षीरमिच्छमानं सक्तुन्निशि। यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती। अतिमूर्च्छान्वि
तं क्षीणं मुमूर्षुं क्षुत्प्रपीड़ितं। पाययित्वा घृतं क्षीरं रक्षेद्दत्वा फलानि च। अहोरात्रं च यो नित्यं व्रतस्थः परिपालयेत्। पयोमूलं फलं दत्वा विष्णुलोकं
व्रजेत्तु सः। एवं मासोपवासस्य मारुह्य प्राणसंशये। अव्रतघ्नगुणैर्दिव्यैः परिरक्षेत् ब्राह्मणाज्ञया। नैते व्रतं विनिघ्नन्ति हविर्विप्रानुमोदितं। क्षीरौष
धैर्गुरोराज्ञा आपोमूलफलानि च। एवं कृत्वाभिरक्षेत् सगुडं पायसं तथा। पाययेद्रक्षितो यस्मात्समाप्नोति पुनर्व्रतं। अर्थविष्णुर्व्रती विष्णुर्दाता
विष्णुर्व्रतं तथा। सर्वं विष्णुमयं ज्ञात्वा व्रतस्थः क्षीणमुद्धरेत्। यदा मुमूर्षुर्निश्चेष्टः परिम्लानोऽतिमूर्च्छितः। तदा समुद्धरेत् क्षीणमिच्छतं विमुखं स्थितं।

यथोक्तं द्विगुणं तस्य फलं विप्रमुखोदितं। इन्द्रियार्थेष्व संसक्ता सा देव विमला मतिः। परितोषयते विष्णुं नोप
॥ व्र ॥ परिपाल्य व्रती देहं व्रतशेषं समापयेत्। यथोक्तं द्विगुणं तस्य फलं विप्रमुखोदितं। इन्द्रियार्थेष्व संसक्ता सा देव विमला मतिः। परितोषयते विष्णुं नोप
१६९ वासो यतात्मनां। किं तस्य बहुभिस्तीर्थैः स्नान होम जप व्रतैः। जितेन्द्रियगणो धीरो निर्जितो दुष्टचेतसा। जितेन्द्रियः सदाशांतः सर्वभूतहिते
रतः। वासुदेवपरो नित्यं नक्तेशं कर्तुमर्हति। कृत्वानूनं यथोक्तन्तु वैष्णवं पदमव्ययं। प्राप्नोति पुरुषो नित्यं पुनरावृत्तिदुर्लभं। ये स्मरन्ति सदा विष्णुं
विशुद्धेनांतरात्मना। ते प्रयांति भयं त्यक्त्वा विष्णुलोकमनामयं। प्रभाते चार्द्धरात्रे वा मध्याह्ने दिवसक्षये। अच्युतं ये कीर्त्तयन्ति ते तरन्ति भवा
र्णवं। आमन्त्रितोथ दुःखार्त्तः क्रुद्धः शांतोथवा हरि। योनुकीर्त्तयते भक्त्या स गच्छेद्वैष्णवीं पुरीं। गर्भ जन्म जरा रोग दुःख संसार बन्धनैः। नबाध्यते
नरो नित्यं वासुदेव मनुस्मरन्। स्थावरे जङ्गमे सत्वे स्थूले सूक्ष्मे शुभा शुभे। विष्णुं पश्यति सर्वत्र यः स विष्णुः स्वयं नरः। सर्वं विष्णुमयं ज्ञात्वा
त्रैलोक्यं स चराचरं। यस्य शांन्तिर्मतिः स्तेन पूजितो गरुड़ध्वजः। इति कल्पानुकल्पानां व्रतानामुत्तमस्य च। विष्णुलोकमवाप्नोति प्रसादाच्चक्रपाणिनः
विधिर्मासोपवासस्य यथावत्परिकीर्त्तितः। सुतसेशान्मुनिश्रेष्ठ सर्व लोक हिताय च। कृत्वा श्रुत्वा च यद्भक्त्या नरो विष्णु पुरीं व्रजेत्। नाभक्ताय प्रदा
तव्यं न देयं दुष्ट चेतसे। इति विष्णु रहस्योक्तं मासोपवास व्रतं। अथ मलमास व्रतं। हेमाद्रौ पाद्मे देवेशं शङ्करं शम्भुं सर्वदेवनमस्कृतं। षड़ाननो
महातेजाः प्रणम्य पर्यपृच्छत्। स्कन्दउवाच। देवदेव महादेव सर्वधर्म सुरेश्वरः। व्रतांतरं महापुण्यं कथयस्व महाप्रभो। ईश्वर उवाच। शृणु वत्स
प्रवक्ष्यामि व्रतं पापहरं शुभं। यस्यानुष्ठान मात्रेण तुष्टो भवति भास्करः। दुःखं हरति यः क्षिप्रं दद्यात्सौख्यमुत्तमं। स्कन्दउवाच। किं व्रतं कस्यै दा
नं कस्य देवस्य पूजनं। केन चादौ पुरा चीर्णं तत्सर्वं कथयस्वनः। ईश्वर उवाच। मलमास व्रतं स्कन्द सर्व पापहरं नृणां। सकांस्यमन्नदानञ्च पूजनं
भास्करस्यच। यथानुष्ठान मात्रेण पुत्र दौर्भाग्य बान्नरः। धन धान्य समायुक्तः सर्व पापैः प्रमुच्यते। आसीत्पुरा महाराजो नहुषः पृथि वीतले। धर्मा १६९
त्मा सत्यसन्धश्च
प्रियः सपोनिष्ठो देव पूजन तत्परः। प्रजानां पालको नित्यमतिथीनांच पूजकः। मन्त्रं शमपदंमोथ ब्राह्मणानां नरवाहने। भोक्तुमाकारयत् दैवाद

गतस्त्वं मुनि पुङ्गवं। मुक्तोसमारुह्यत्तोऽथ तदानीमिन्द्रमायया। मोहितेन चतेनैव मुक्तो ब्रह्मविदांवरः। संपदा चातिमूढेन ताडितश्च मुनि स्तदा।
क्रुद्धेन मुनिना तेन शापितः कुम्भयोनिना। सर्पोभवेति- ह्येपाप महाशब्दस्तदाभवत्। राजा प्राप्तस्तदा स्कन्द सर्प्यं त्वमतिदारुणं। महारण्ये महा
प्राप्त सर्वं सन्तोष वर्जितः। देहभावेन तेनापि कृतास्तु पापराशयः। एक दातु महारण्ये कृष्णाद्वैपायनो मुनिः। आजगाम महाभागस्तस्य भाग्येन
नोदितः। तयोस्तु सङ्गतमभूदरण्ये तरु सङ्कुले। तद्दर्शनात् स सस्मार पूर्वजन्म विचेष्टितं। ततश्च विह्वलीभूतं प्रणम्य शिरसा मुनिं। पतितं दण्ड
वत् शापं उवाच वचनं रुदत्। पपातच महीपृष्ठे पापी दण्डइव प्रभो। मादृशानां पापिनांतु त्वमेव शरणं सदा। तस्माद्दुःखाब्धिं मग्नत्वं कृपां
कुरु मयि प्रभो। इति श्रुत्वा वचस्तस्य स मुनिः करुणायतः। उवाच वचनं सर्पः शृणुष्व मनसेप्सितं। सर्पउवाच। तात केन चिन्मुच्येहं अनन्तात् दुःखसाग
रात्। मुक्तिर्भवेद्विभोस्माकं कस्येदं कर्मणः फलं। व्यास उवाच। पूर्वं जन्मनि राजेन्द्र मलमासे समागते। नार्चितो भास्करो विष्णु र्विधिना न कृतं
व्रतं। तत्कर्म परिपाकेन वुद्धिस्ते विप्रशेजने। शिविकायां समभत्स्वक्रमायासम यतः। तस्मात्सर्वं प्रयत्नेन नृप त्वं व्रतमाचर। यस्यानुष्ठान मा
त्रेण स्वपदं प्राप्स्यसे ध्रुवं। सर्पउवाच। केन तावत् विधानेन कर्त्तव्यं व्रत मीदृशं। किं देयंहि व्रतेमेह्नि तत्सर्वं कथयस्वनः। व्यास उवाच। विष्णुरूपं सह
स्रांशुं मलिने मासि पूजयेत्। पूजितेच सहस्रांशौ विष्णुर्भवति पूजितः। मलमासस्तु मासानां मलिनः पाप सम्भवः। तस्य पाप विशुद्ध्यार्थं मलमास
व्रतं चरेत्। दिने दिने प्रदेयानि विविधान्नानि भक्तितः। दक्षिणा घृतयुक्ताचि कांस्यपात्र युतापि च। विष्णुरूपी सहस्रांशुः सर्वं पाप प्रणाशनः।
अपूपान्न प्रदानेन मम पापं व्यपोहतु। अधिमासेतु सम्प्राप्ते गुडसर्पिः समायुतान्। दद्यादनेन मन्त्रेण त्रयःत्रिंशदपूपकान्। त्रयस्त्रिंशदपूपानि दातव्या
नि दिने दिने। साज्यानि गुडमिश्राणि अधिमासे नृपोत्तम। यावन्ति तत्र छिद्राणि अपूपस्यच पार्थिव। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। च
न्द्रांशुनिर्मला पूयाः शालितन्दुलमिश्रिताः। आहारः सर्व देवानां ते कुर्वन्ति समङ्गलं। सहिरण्य घृतान् भक्त्या त्रयस्त्रिंशदपूपकान्। अधिमासेतु संप्रा

॥ व्र ॥ न्ते त्रयस्त्रिंशदपूपकान्। उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत्। मासाधिकेतु संप्राप्ते यावत्सर्वानपूपकान् । तावद्वर्ष मवाप्नोति विष्णुलोकं सनातनं
१७० त्रयस्त्रिंशदपूपान्नं कांस्य पात्रे निधायच। सघृतं सहिरण्यञ्च ब्राह्मणाय निवेदयेत्। नारायण जगद्बीज भास्कर प्रतिरूपकः। व्रतेनानेन पुत्रांश्च सम्पदं
चाभि वर्द्धय। प्रार्थनामन्त्रः। अधिमासे यदा राजन् द्वादशीवाथ पूर्णिमा। व्यतिपात दिने वापि दद्यादन्नञ्च शक्तितः। साज्य पात्रं हि सगुडं त्रयस्त्रिंश
द् पूपकान्। कांस्यपात्रे विनिःक्षिप्य हिरण्येन समन्वितान्। उपानच्छत्र संयुक्तान्विप्राय विनिवेदयेत्। तत्रमन्त्रः। यस्य हस्ते गदाचक्रौ गरुड़ो यस्य
वाहनं। शङ्खं करतले यस्य स मे विष्णुः प्रसीदतु। कला काष्टादि रूपेण निमेष घटिकादिना। योवैश्चयति भूतानि तस्मै कालात्मने नमः। कुरुक्षेत्रम
यो देशः कालःपार्थ द्विजोहरिः। पृथ्वी सममिदं दानं गृहाण पुरुषोत्तम। मलानांच विशुध्यर्थं पाप प्रशमनायच। पुत्र पौत्राभिवृध्यर्थं तव दास्यामि
भास्कर। मन्त्रेणानेन वैदद्यात् त्रयस्त्रिंशद पूपकान्। अन्नदानात्परं दानं मलमासे न विद्यते। गृहे तस्य स्थिरा लक्ष्मीर्योदद्यात्सूर्य्य सन्निधौ। दारिद्र्यं न
भवेत्तस्य रोग शोक विवर्जितः। व्याधिभ्यो मुच्यते रोगी मूको वाचस्पति र्भवेत्। एवंतु विधिना राजन् मलमास व्रतं चरेत्। पुत्रपौत्र समायुक्तो मोदतेपा
लयन् महीं। इत्युक्तः समुनिःस्कन्द तत्रैवान्तरधीयत। नहुषो मानुषं सर्वं व्रतमेतच्चकारह। व्रतस्यास्य प्रभावेन सर्पो मानुषत्तांययौ। पुनर्व्रतं चक्र
त्वेदं मुनिवर्य्योपदेशितं। विमानवरमारुह्य जगामेन्द्रस्य मन्दिरं। तस्मात्स्कन्दनरैःकार्य्यं व्रतमेतदनुत्तमं। व्रतेन तोषितो देवो भास्करो भक्तवत्सलः
ददाति विपुलां लक्ष्मीं पुत्रपौत्रादिसम्पदः॥ इति व्रतार्के मलमासव्रतं॥ अथ मलमासे व्रतान्तरं॥ श्रीकृष्ण उवाच॥ देवदेव जगन्नाथ भुक्तिमुक्ति
प्रदायक। कथयस्व प्रसादेन लोकानां हितकाम्यया। मुनीश्वराः प्रवदन्ति कृष्णद्वैपायनादयः। अदत्तं नैव लभ्येत दत्तञ्चैवोपतिष्टते। यथा वन्ध्या
गृहस्थस्य पतिवंशस्य नाशिनो। तथा दानविहीनन्तु जन्मसर्वंनिरर्थकं। तथापि कथयन्तीह दैवज्ञाः शास्त्रकोविदाः। मलिम्लुचे सदा प्राप्ते क्रियाःकार्याः १७०
कथं प्रभो। चौरमौञ्जीविवाहस्य व्रतं काम्योपवासकं। मलिम्लुचे सदा त्याज्यो गृहस्थेन विशेषतः। श्रीरुवाच॥ अधिमासे च संप्राप्ते किंकार्य्यं ब्रूहि मेप्रभो

कस्मोद्देशे न दातव्यं परश्चकः प्रदायकः॥ श्रीकृष्ण उवाच॥ शृणु देवि महाभागे सर्वलोकस्य हेतवे। स्वयं भोक्ता स्वयं दाता यो ददाति द्विजातये। नान्योदा ताच भोक्ता च इहलोके परत्र च। असंक्रान्तेपि संप्राप्ते मामुद्दिश्य व्रतं चरेत्। अधिमासस्याधिपत्यो अहं वै पुरुषोत्तमः। स्नानं दानं जपो होमः स्वाध्याय पितृतर्पणम्। देवार्चनमथान्यच्च कुर्वन्ति च मनुष्यजाः। अक्षयं तद्भवेत्सर्वं ममोद्देशेन यत्कृतम्। मलमासो गतःशून्यो येषां देवि प्रसादतः। दारिद्र्यं पुत्रशोकश्च पापपंकवि गर्हणं। मर्त्यलोके भवेज्जन्म तेषां देवि भवेत्सदा। सुखप्रदासि देवीत्वं येर्चयन्ति द्विजोत्तमाः। यदा मलिम्लुचो मासः प्राप्यते मानवैः प्रिये। महोत्सवं सदा कार्यं आत्मनोहितकांक्षिभिः। कृष्णपक्षे चतुर्दश्यां नवम्यां वा सुरेश्वरि। अष्टम्यां वाथकर्तव्यं व्रतंशोकविनाशनं। यथालाभोपचारेण मासेवास्मिन् मलिम्लुचे। पुण्येऽह्नि प्रातरुत्थाय कृत्वा पूर्वाह्निकीं क्रियां। गृह्णीयान्नियमं पश्चाद्वासुदेवं हृदिस्मरन्। उपवासस्य नक्तस्य एकभक्तस्य भामिनि। व्रतस्य निश्चयं कृत्वा ततोविप्रान्निमन्त्रयेत्। सपत्नीकान् सदाचारान् सुरूपान् सुखवेषकान्। श्रुताध्ययनसम्पन्नान् कुलीनान् ज्ञानसम्भवान्। ततो मध्याह्न समये लक्ष्मीयुक्तं सनातनं। स्थापयेद्व्रणे कुम्भे वेदमन्त्रैर्द्विजोत्तमैः। पूजयेत्परया भक्त्या गोविभिः स पितामहं। गन्धतोयेन संस्नाप्य पञ्चामृत शुभेन च। चन्दनेन सुगन्धेन पुष्पैर्नानाविधैः प्रिये। मिष्टान्नैर्नैव नैवेद्यैः धूपदीपाभिरञ्जितः। आच्छादनं सवस्त्रैश्च पीतवस्त्रैर्विशेषतः। घण्टाद्धदक्क निर्घोषैः शङ्खध्वनि समन्वितः। आरार्त्रिकं व्रतीकुर्यात् कर्पूरागरुचन्दनैः। अलाभेतूलमुक्तेनापि फलस्यानंत्य हेतवे। ताम्रपात्रस्थिते तोये चन्दनाक्षतपुष्पकैः। अर्घं दत्वा सपत्नीकः प्रहृष्टेनान्तरात्मना। मंत्रेणानेन देवेशि ब्राह्मणैः सह मां स्मरन्। नारिकेलैर्नारिकेलैश्च फलैर्नानाविधैः शुभैः। पञ्चरत्नसमायुक्तं जानुनीकृतभूतले। आरोप्य भालेहस्ताभ्यां श्रद्धाभक्तिसमन्वितः। अर्घदान मन्त्रः॥ देवदेव महाभाग प्रलयोत्पत्तिकारक। कृपया सर्वभूतेश जगदानन्द कारक। गृहाणार्घं मयादत्तं दयां कृत्वा ममोपरि। अथ प्रार्थनामन्त्रः॥ स्वयंभुवे नमस्तुभ्यं ब्रह्मणे मिततेजसे। नमोस्तुते श्रियानन्द दयां कृत्वा ममोपरि। एवं प्रार्थ्यश्च गोविन्दं पूजयेद्ब्राह्मणैः सह। सपत्नीकान् शुचिस्मितान् लक्ष्मीनारायणौ स्मरन्

पूजयित्वा विधानेन भोजयेद्घृतपायसैः । भोजयित्वा विधानेन सपत्नीकान् स्मरन् विभुं । स्मर्त्तव्यो द्विजरूपेण पत्न्याचैव मनुस्मरन् । परिधाय यथाशक्त्या
॥ व्र ॥ पूजयित्वा विधानेन भोजयेद्घृतपायसैः । भोजयित्वा विधानेन सपत्नीकान् स्मरन् विभुं ।
१७१ वस्त्रालङ्कार कुङ्कुमैः । द्राक्षाम्रैश्च कपित्थैश्च पनसैः कदलैः फलैः । नालिकेरैश्च नारङ्गैः कूष्माण्डैः दाडिमैः प्रिये । घृतपक्कान्न गोधूमैः शुभैः सोहालिके
वटैः । शर्करैः घृतपूरैश्च फाणितैः खण्डमण्डकैः । वृन्ताको कर्कटी शाकैः शृङ्गवेरैः समूलकैः । अन्नैश्च विविधैः शाकैः रम्यपाकैः पृथक् पृथक् । भक्ष्यभोज्यैश्च ले
ह्यादिकंदुकानि विशेषतः । गोरसानां विचित्राणि वासितानि इलादिभिः । अन्यान्यपि च देयानि दानानि विविधानि च । वित्तशाठ्यं न कुर्वीत
आत्मनः श्रेयमिच्छता यथावसरंसंप्राप्य परिवेष्यन्वद् ब्रुवन् । इदंस्वद् इदं भोज्यं भवदर्थे विचिन्तयेत् । पच्यतां रोच्यते यच्च यन्मया याचितं प्रभो । ध
न्योस्म्यनुगृहीतोस्मि सार्थं कृतंच मंदिरं । विसर्जयेत्ततो विप्रान् दत्वा तांबूलदक्षिणां । पत्राणि पुंगखण्डानि चूर्णंच खदिरं शुभं । एलाकर्पूरलवङ्गानि
जातीफलतजत्वच । मृगनाभि मरीचीनि मुरमांसनखस्तथा । चतुर्भिर्मिलितैर्देवि तांबूलं ममवल्लभं । यो ददाति द्विजाग्र्याणां सभवेत्सुभगोनरः ।
सुभगाच सदाचारा वल्लभा स्वजनेषुशुभे । पुत्रसौभाग्य संयुक्ता तांवूला जायतेचलाः । पत्रैः सुकेशवः प्रीतःपूगैरीश सदांवया । चूर्णेनानलः सशक्त्या खदि
रेण तु मन्मथः । चतुर्भिर्विश्वरूपेशो यः पुष्णाति जगत्त्रयं । परितोष्य सपत्नीकान् हस्ते दद्याच्च मोदकान् । आसीमान्तमनुव्रज्य भुञ्जीत वन्धुभिः सह ।
न पूजि
असंक्रान्त व्रतं नारी या करोति हरिप्रिये । दारिद्रं पुत्रशोकञ्च वैधव्यं न भवेत्सदा । पुरुषोप्येवं विधो देवि यदि कुर्यान्मलिम्लुचे । न पूजि
तोथैः श्रीनाथ देवः परत्रेह भक्त्या कथं भवेत्तेषु सुखं च सम्पत् पुत्रां सुहृत्स्वजनताचभार्या । इति श्रीभविष्योत्तर पुराणे मलमास व्रतं ॥ अथ व्रता
न्तर देवी पुराणे ॥ ईश्वर उवाच ॥ शृणु देवि मह्यत्म्यञ्च मलमासस्य पार्वती । ये च मासासंक्रान्तास्तेषां स्वामीरविस्मृतः । असं
क्रान्तास्तु ये मासा स्तेषां स्वामी जनार्दनः । तमुद्दिश्य च यत्किञ्चित् वार्ष्यं वा यदिवावक्त । अक्षयं तद्भवेत्कर्त्तुं जन्मनामयुतं ध्रुवं । मलिम्लुचे तु संप्राप्ते १७१
योन कुर्यात्स शक्तितः । दानंवाऽपि व्रतं वापि विप्रभोजनमेव च । मलिम्लुचेन देहेन सयाति निरयं नरः । एकभक्तेन भुक्तेन तथैववार्चनेन च

उपवासंन कुर्वंति मनसा संप्रयत्नतः। दाने वाथ व्रते वापि यस्य शक्तिर्नविद्यते। शरीर शोषणं तेन कर्त्तव्यं तीर्थ सेवनं। वचनादित्र मुख्यानां सर्वव्रत फलं लभेत्। सर्व व्यापी यथा विष्णुः सर्वभूत कृपाकरः। मलिम्लुचे यथा दानं लोकद्वयसुखावहः। श्री देव्युवाच॥ भाग्यहीनास्तु ये मर्त्याः पशुबुद्धिपर त्मिति। विवेको नास्ति येषां किं कार्य्यं तैर्मलिम्लुचे। निर्धनाश्च दुराचाराः परभाग्योपजीविनः। ईश्वर उवाच। दाने व्रते तथा नक्ते आयासे कायशो षणे। सर्वथा नास्ति सामर्थ्यं कर्त्तव्यं विप्रसेवनं। साधूनां सेवनं देवि सर्व तीर्थ फलप्रदं। कालेन लभते तीर्थं सद्योवै साधुसेवनात्। साधूनां दर्शनञ्चै व कीर्त्तनं श्रवणं तथा। कर्तव्यं भाग्यहीनेन लोकान्तर सुखप्रदं। चन्द्र सूर्य्य ग्रहे पुंभिः कर्तव्यं पुण्य कर्मभिः। प्रभासेच कुरुक्षेत्रे प्रयागे पुस्करे तथा। मलमासे तथा देवि कर्तव्यं श्रेय इच्छतां। पुण्यव्ययेन संप्राप्ते सम्पदो विविधा गृहे। ताभिःपुनः प्रकर्तव्यः सञ्चयः पुण्य कर्म भिः। अन्यायेन महादेवि यैः प्राप्तो धन सञ्चयः। पुण्य कर्म क्षयान्नेह प्राप्यते पुण्य सञ्चयः। तस्मात् पर्वणि सम्प्राप्ते द्रव्यप्राप्तं प्रकल्पयेत्। यथा वीजांकुरन्यायो विद्वद्भि धर्मं तत्परैः। विचार्य्य निश्चयः प्राप्तो धर्मादर्थोन संशयः। धर्म वीजं अर्थ फलं फलाद्वीजं सुरक्षितं। कर्त्तव्यं तत्प्रयत्नेन प्रदाश्च हार्थं भवे भवे। वीजांकुरं ततो भक्षेत् येोनदद्याद्धनं द्विजे। लक्ष्मी नारायणं पूज्य भोजयेच्च द्विजोत्तमान्। इति श्रीदेवीपुराणे मलमास व्रतं। अथ विशेष पूजा। मत्स्याय नमः कुर्माय नम सहस्र शीर्षे नमः देवाय नमः सहस्राक्षाय नमः हरयें नमः पुरुषोत्तमाय नमः महादेवाय नमः सृष्टिस्थित्यंत कारिणे नमः कृष्णाय नमः वासुदेवाय नमः लक्ष्मीकांताय नमः सुरेश्वराय नमः स्वयम्भुवे नमः लक्ष्मीऽमिततेजसे नमः ब्रह्मप्रियाय नमः देवाय नमः श्रस्मञ्चे नमः लक्ष्म्यै नमः कमलायै नमः पद्मायै नमः श्रियै नमः पद्मवासायै नमः हरिवल्लभायै नमः क्षीराब्धितनयायै नमः इन्दिरायै नमः श्रीसूक्तेन पूजा अर्घमन्त्रः पुराण पुरुषोत्तमाय नमः पुरापुरुषेशान सर्वशोकनिकृन्तन। अधिमास व्रत प्रीतो गृहाणार्घं श्रिया सह। पुराण पुरुषेशान जगद्धा ता सनातन। सपत्नीको ददाम्यर्घं सृष्टिस्थित्यन्त कारिणे। देव देव महाभाग प्रलयोत्पत्ति कारक। कृपालो सर्वभूतस्य जगदानन्द कारक।ᐧगृहाणा

॥ व्र ॥ र्घमिमं देव दयां कृत्वा ममोपरि। इति श्रीभट्टनीलकण्ठात्मज भट्टशङ्कर कृतौ व्रतार्के मलमास व्रतानि। अथ वारव्रतानि तत्र रविवारव्रतं मदन
१७२ रत्ने सौरधर्मे यस्योदये स्याज्जगतः प्रबोधो यः कर्मसाक्षी भुवनस्य गोप्ता कुष्टादिक व्याधि विनाशनीयः। स भास्करो यो दुरितं निहन्यात् मांधाता उवाच
भगवन् ज्ञानिनां श्रेष्ठ कथयस्व प्रसादतः। त्वद्वक्रात्च्छ्रोतुमिच्छामि व्रतं पाप प्रणाशनं। सर्वकाम प्रदञ्चैव सर्वरोग विनाशनं। पूजार्घदान सहितं नैवे
द्यं प्राशनान्वितं। एतत् कथय सर्वस्वं प्रसन्नो यदि मे प्रभोः। वसिष्ठ उवाच। शृणु राजन् प्रवक्ष्यामि यद्गुह्यं व्रतमुत्तमं। सर्व काम प्रदं पुंसां कुष्ठादि
व्याधि नाशनं। भानोस्तुष्टिकरं राजन् भुक्ति मुक्ति प्रदायकं। यस्योदये सुरगणा मुनिसंघा सचारणाः। दैत्यदानवयक्षाश्च कुर्वंति सततार्चनं। यस्योदये
तु सर्वेषां प्रबोधो नृपसत्तमः। तस्य देवस्य वक्ष्यामि व्रतं राजन् सविस्तरं। पूजार्घं प्राशनं दानं नैवेद्यं शृणु तत्वतः। सर्व तीर्थेषु यत्पुण्यं सर्व यज्ञेषु य
त्फलं। सर्व दानेन तपसा यत्पुण्यं समवाप्यते। प्रातः स्नानेन यत्पुण्यं तत् फलं रविवासरे। मार्गशिर्षादि मासेषु द्वादशेष्वपि भूपते। सूर्य्य व्रतं करिष्या
मि यावद्वर्षं दिवाकर। व्रतं संपूर्णतां यातु त्वत्प्रसादात् प्रभाकर। नियम मन्त्रः। ततः प्रातः समुत्थाय नद्यादौ विमले जले। स्नात्वा संतर्प्ययेद्देवान् पितॄं
श्च वसुधाधिप। उपलिप्य शुचौ देशे सूर्य्यं तत्र समर्चयेत्। संलिखेत्तत्र पद्मंतु द्वादशारं सकर्णिकं। ताम्रपात्रे तथा पद्मं रक्तचन्द वारिणा। ततः संपूज
येद्देवं दीनानाथं सुरेश्वरं। मासे मासे च ये राजन् विशेषां स्तान् शृणुष्व वै। मार्ग शीर्षे यजेन्मित्रं नालिकेरार्घ मुत्तमं। नैवेद्यं तंदुला देयाः साज्याश्च
सगुडाः स्मृताः। पत्रत्रयं तुलस्यास्तु प्राश्य तिष्ठेज्जितेन्द्रियः। दद्याद्विप्राय भोज्यन्तु दक्षिणा सहितं नृप। पौषे विष्णुं समभ्यर्च्य नैवेद्यं कैशरं तथा। बी
ज पूरेणचैवार्घं प्राश्य घृत पलत्रयं। दद्यात् घृतन्तु विप्राय भोजनेन समन्वितं। माघे वरुणनामानं संपूज्याज्यन्तिलान् गुडं। भोजनं दक्षिणां
दद्यान्नैवेद्यं कदलीफलं। अर्घं तेनैव दत्वातु प्राश्यमुष्टित्रयं तिलान्। फाल्गुने सूर्य्य मभ्यर्च्य जंबीरार्घं निवेदयेत्। पलत्रयं दधि प्राश्य नैवेद्यं सघृतं दधि १७२
दधि तंदुल दानञ्च भोजने समुदाहृतं। चैत्रे भानुन्तु संपूज्य नैवेद्यं घृतपूरितं। फलेतु दाड़िमं प्रोक्तं प्राश्यं दुग्धपलत्रयं विप्राय भोजनं दद्यान्मिष्टान्न

न्तु सदक्षिणं वैशाखे तपन प्रोक्तो मासान्नं सघृतं स्मृतं। अर्घं दद्यात्तु द्राक्षाभिः प्राश्यञ्च गोमयं स्मृतं। कुर्य्यान्माषान्नदानन्तु सघृतं वै सदक्षिणं। इन्द्रं ज्य ष्ठे यजेद्राजन्नैवेद्यंतु करम्भकं। अर्घस्य सहकारेण प्राश्यञ्जलमञ्जलित्रय। दध्योदनसमायुक्तं भोजनं ब्राह्मणायतु। आषाढे रविमभ्यर्च्य पूजाचिपिटकं तथा। विप्राय भोजनं दद्यात्प्राशयेन्मरिचत्रयं। गभस्तिमान् श्रावणेर्घेचपुष्पं फलमेवच। मुष्टित्रयञ्च सक्तूनां प्राशने समुदाहृतं। विप्राय भोजनं द द्यात् दक्षिणा सहितं नृप। यमो भाद्रपदे पूज्यः कुष्मांडं तंदुलाज्यकं। गोमूत्रं प्राशने युक्तं ब्राह्मणे भोजनं तथा। हिरण्य रेता आश्विनेच नैवेद्यं शर्करा स्मृतं। दाड़िमेनार्घ दानन्तु प्राश्यङ्कुण्डम् पलत्रयं। विप्राय परया भक्त्या भोजने शालि शर्करा। दिवाकरः कार्त्तिकेच रम्भायाः फलमेवच। पायसञ्चैव नैवेद्यं पायसं प्राशने स्मृतं। एवं व्रतं समाप्येत तत उद्यापनं चरेत्। ततो गुरु गृहं गत्वा गृह्णीयाच्चरणावुभौ। उद्यापनं करिष्येऽहमागच्छ मम वेश्मनि माषकेन सुवर्णस्य प्रतिमा कारयेद्रवेः। रथो रूप्यमयः कार्य्यः सर्वोपस्करसंयुतः। कृत्वा द्वादश पत्रन्तु कमलं रक्त तंदुलैः। स्थापयेंदव्रणं कुम्भं पञ्चरत्न समन्वितं। तस्योपरि न्यसेत्पात्रं ताम्रतन्दुल पूरितं। रक्तवस्त्रसमाच्छन्नं पुष्पमालाभि वेष्ठितं। पञ्चामृतेन स्नपनं मग्नुत्तारणपूर्वकं। प्रतिष्ठांच ततः कृ त्वा पूजां देवस्य कारयेत्। चन्दनैः कुसुमै रम्यैः विविधैः कालसंभवैः। अखण्डपटवस्त्रैस्च कमण्डलु मुपानहौ। वर्द्धनीच्छित्रयं तत्र स्थापयेत् शिवसन्निधौ। संज्ञाया वस्त्र युग्मन्तु कौशुम्भन्तु महीपते प्रतिपन्नेषु संपूज्य सूर्य्यं द्वादश नामभिः। मित्रोविष्णु सवरुणाः सूर्यो भानु स्तथैवच। तपनेन्द्रो रविः पूज्यो गभ स्तिः समन स्तथा। हिरण्यरेता दिनकृत् पूज्या एते प्रयत्नतः। मध्ये सहस्र किं रणः संपूज्यः संज्ञया सह। पूगीफलै धूंपदीपै र्वस्त्र नैवेद्य संयुतैः। नालिकेरे णचैवार्घं दद्याद्देवस्य भक्तितः। मन्त्रेणानेन राजेन्द्र व्रतस्य परिपूर्त्तये। नमः सहस्र किरण सर्व व्याधि विनाशन। गृहाणार्घं मया दत्तं संज्ञया सहितो रवे आरार्त्तिकं ततः कुर्य्यात् पूजासंकल्पमेवच। संकल्पञ्च ततः कुर्य्याच्छ्राद्धंवै सूर्य्य दैवतं। ब्राह्मणान् भोजयेद्भक्त्या मिष्टान्नै र्द्वादश प्रभो। दम्पत्योर्भोजनं देयं परमान्नसमन्वितं। ततः सुदक्षिणा देयास्तमभ्यर्च्य स्रगादिभिः। उपहारादि तत्सर्वं गुरवे प्रतिपादयेत् गुरुं तंचैव संतो

॥ व्र ॥ च शाह्मणांश्च विसर्जयेत् । मन्त्र हीनं क्रीयाहीनं भक्तिहीनन्तु यत्कृतं। तत्सर्वं पूर्णतां यातु भूमिदेव प्रसादतः । अनुव्रज्य गुरुं विप्रान् भोजनन्तु समा
१७२ चरेत्। इष्टैश्च बन्धुभिः सार्द्धं नत्वा देवं दिवाकरं। एवं यः कुरुते मर्त्यो वित्तसाठ्यविवर्जितः। सूर्य्यव्रतं महाराज तस्य पुण्यफलं शृणु। ब्राह्मणो
लभते विद्यां क्षत्रियो राज्यमाप्नुयात्। वैश्यो समृद्धिं विपुलां शूद्रःसुखमवाप्नुयात्। अपुत्रो लभते पुत्रं कुमारी लभते पतिं। रोगार्त्तो मुच्यते रोगात्
बन्दी मुच्येत बन्धनात्। यं यं चिंतयते कामं तंतस्य भवति ध्रुवं। यइदं शृणुयाद्भक्त्या ह्येकचित्तो भवेन्नृप। सर्वं कामानवाप्नोति प्रसादात् भास्वतो नृप।
इति सौरधर्मोक्ते सूर्य्यव्रतं। आश्विनादि रविवारेष्वाशादित्य व्रतं भवेत्। स्कन्द उवाच। शृणु दिव्यं परं गुह्यं आदित्याराधनं परं। यत् कृत्वा स
र्वं कामानां सकलं फलमाप्नुयात्। समुद्रतीरे विप्रेश पुरी द्वारावती शुभा। वासुदेवे यदुवरे पुराराज्यं प्रशासति। दूर्वासाः शङ्करस्यांश आजगामाव
लोकितः। कृष्णेन पूजित स्तत्र अर्घ माल्यासनादिभिः। भोजनं तस्य यद्दत्तं यथाभिलखितं मुने। संपूजितः स कृष्णेन यदागच्छत्यसौ मुनिः। शांवेन सहितः
तस्य सुतेन सहसा किल। क्रुद्धोपि मुनि शार्दूलः कोपं संहृत्यवान् स्वयं। पूजितेन मयेदानी मन्यत् कर्त्तुं कथं क्षमं। सगत्वा नारदं प्राह शांवेन हसितो
स्मिभो प्रभासम्बरता कार्यं तस्य शिक्षापनं त्वया। इत्युक्तो नारदः प्रायात्। द्वारकां कृष्णसन्निधौ। स्वकं सैन्यं दर्शयस्व मम देवकिनन्दन। देवयात्रा
मिषं कृत्वा हस्त्यश्वरथसङ्कुलं। नारदेनैवमुक्तस्तु तथैव कृतवान् विभुः। दर्शितेतु बले प्राह नात्र शांवः प्रदृश्यते। मयैवानीयते शीघ्रं द्वारवत्यास्तवां
तिकं। गत्वैवमुक्तो मुनिना श्रेष्टो जांववतीसुतः। सशृङ्गारस्तथानीतो मकरध्वजदर्शनः। गत्वाक्लिंग्य चुचुंवुस्तं गोप्यःकृष्णपरिग्रहाः। नारदः प्राह भ
गवान् दुश्चरित्रं तथानघ। क्रुद्धेन शौरिणाशप्तः कुष्टीभव नराधमा। एव मुक्तो तथा पुत्रः कुष्टरोगातुरोऽभवत्। शांवः प्रणम्याह पितः किमर्थं शापि
तस्त्वया। स्वमनया ज्ञानदृष्ट्यातु विचार्य्य सुविनिश्चयं। ध्यानात् दुर्वाससो ज्ञाता विक्रियाह्यस्य कारणं। अनुग्रहो मया पुत्र कार्यस्ते पततोशुचौ। आदित्य १७२
स्य व्रतं चैव कुरु कुष्टविनाशनं। शांवउवाच। कथं तात मया कार्य्यं व्रतं सर्व फल प्रदं। किं विधनन्तु के मन्त्राः किं दानं किञ्च पूजनं। श्रीकृष्ण उवाच

मासमास्य युजं प्राप्य यदा रवि दिनं भवेत्। तदा व्रतमिदं ग्राह्यं नरस्त्रीभिर्विशेषतः। यावत् संवत् सरं ताद्विधिनानेन पुत्रक। गोमयेन चितौ कुर्या
त् मण्डलं वर्त्तुलं पुनः। रक्तपुष्पै रचतैश्च अर्घं तत्र प्रदापयेत्। मन्त्रेणानेन भास्वंत माचार्यः प्रतिवासरं। यथाशा विमलाः सर्वाः सूर्यभास्करभानु
भिः। तथाशाः सफलामह्यं कुरु नित्यंममार्घतः। अर्घमन्त्रः। एवं तमर्चयेत्तावद्यावद्वर्षं समाप्यते। समाप्तेतु व्रते वत्स कुर्य्यादुद्यापने विधिं। गोमयेनानु
लिप्तायां भूमौ मण्डल मालिखेत्। रक्तचन्दन रेखाभिः कुङ्कुमेन विशेषतः। तन्मध्ये द्वादश दलं पद्ममाकारयेद्बुधः। सिन्दूर पूरितदलं जपा कुसुम पू
जितं। तन्मध्ये स्थापयेत्कुंभं प्रवालांकुरसन्निभं। शालि तन्दुल सम्पूर्णं शर्करा चन्दनार्च्चितं। तस्योपरि न्यसेत्पात्र ताम्रं शक्त्यादि निर्मितं। सौवर्णं भास्करं
कृत्वा पद्महस्तं स्वशक्तितः। रक्तवस्त्र युगोपेतं पात्रोपरि निवेशयेत्। अथ पञ्चामृतेनादौ जपाकुसुमलेपितं। रक्तपुष्पैस्तु नैवेद्यैः फलैःकालोद्भवै स्तथा।
पूजयेज्जगतामीशं दीप धूपै स्तथोत्तमैः। सूर्य्याय नमः। वरुणाय नमः माधवाय नमः धात्रे नमः इन्द्राय नमः भर्गाय नमः सुवर्णरेतसे नमः अचये नमः
दिवाकराय नमः तपनाय नमः भानवे नमः हंसाय नम इति द्वादशभिः पूजा कार्या वैः व्रतिभिःसदा नमो नमः पापविनाशनाय विश्वात्मने सप्ततुरङ्गमा
य सामग्र्य जुर्धामविधे त्रिधातर्भवाश्रिपोताय नमः सवित्रे। प्रार्थनामन्त्रः अनेन मन्त्रेणार्घं एवं संपूज्य मानन्तु नक्तं भुञ्जीत वाग्यतः। आचार्यं पजयित्वा
तुवस्त्रे राभरणैः शुभैः। तस्मै तां प्रतिमां कुम्भं सहिरण्यं प्रदापयेत्। प्रीयतां भगवान्देवो मम संसारतारकः। ब्राह्मणान् भोजयेत्पश्चाद्द्वादशान्नादि वि
स्तरैः। तेभ्यस्तु कलशान् दद्याद्यथा शक्त्यातु दक्षिणां। एवं यः कुरुते सम्यक् व्रतमेतदनुत्तमं। आशादित्येति विख्यातं तस्य पुण्य फलं मच्छृत्। नि
र्व्याधि निपुणो स्त्री पुत्र पौत्र समन्वितः। भुक्ताच भोगानमलानमरै रपि दुर्लभान्। देहांते रविसायुज्यमाप्नुयादुत्तमोत्तमं। प्राप्स्यते परमाम्ऋद्धिं वि
मुक्तः कुष्टरोगतः। आशाभङ्गो न तस्यास्ति कदाचिदपि जन्मनि। एतस्मात्कारणाद्वत्स कुरुष्व व्रतमुत्तमं। एतत् श्रुत्वा वचः शांवः पित्रा कृष्णे न भाषि
तं। व्रतञ्चरित्वा संप्राप्तः सर्व सिद्धिम् सुदुर्लभां। इद यः शृणुयाद्भक्त्या श्रावयेद्वापि मानवः। तावुभौ पुण्यकर्माणौ रविलोकं समाप्नुतः। इति स्कांदे.

॥ स ॥ पाशादिव्रतं। अथ सोमवार व्रतं। देशकालौ स्मृत्वा अमुककाम इदं व्रतं करिष्ये इति सङ्कल्प्य महाकालाय शूलिने शंभवे इति मन्त्रेण षोडशोपचारान्
१७४ कृत्वा परिवार देवताः पूजयेत्। प्रागादि क्रमेण ब्रह्माणम् विष्णुम् स्कन्दम् महाकालं शूलिनम् उमामहेश्वरौ नन्दिकेश्वरं आवाहनाद्युपचारैः चण्डाय नमः
इति मन्त्रैरैशान्यां पञ्चोपचारैः सकृत् प्रपूजयेत् ततः प्रार्थना दशभुजाय त्रिनेत्राय पञ्चवक्त्राय शूलिने। श्वेतवस्त्राय रूपाय सुश्वेताभरणाय वै उमा सहितायै
नमः पाहि मां कृपया देव शरणं तव महेश्वरं। नन्दिकेश्वराय नमः इत्यग्रे नन्दिकेश्वरं प्रपूजयेत् ततः पुष्पाणि गृहीत्वांग पूजा कार्या तत्प्रकारं तो देवाधिदे
वाय नमः पादयोः शङ्कराय नमः जङ्घयोः शिवायनमः इति जान्वोः शूलपाणये नमः इति गुल्फयोः स्थाणवे नमः स्तनयोः नीलकण्ठाय नमः कण्ठे श्रीकण्ठाय
नमः शिवाय नमः मुखे त्रिनेत्राय नमो नेत्रयोः शशिभूषणाय नमः मुकुटे देवाधिदेवाय नमः सर्वाङ्गे इति पूजाविधिः अथ कथा नारद उवाच भगवन्
दृष्टि मे ब्रूहि येनाहं प्राप्नुयां परं। अथ कथाच शिवे भक्तिः पुत्र सौभाग्य सम्पदः। नन्दिकेश्वर उवाच। सोमवार व्रतं पुण्यं कथ्यमानं निबोध मे। श्रा
वणे चैव वैशाखे ज्येष्ठे वा मार्गशीर्षके प्रथमे सोमवारे च गृह्णीयाद्व्रत मुत्तमं। यदा श्रद्धा भवेत्कर्तुं सोमवारव्रतं प्रति। तदाचार्यं पुरस्कृत्य श्रद्धा भक्ति स
मन्वितः। सुस्नातश्शुचिर्भूत्वा शुक्लांवरधरो नरः। काम क्रोधाद्यहंकार द्वेषपैशून्य वर्जितः। आहरेच्छ्वेत पुष्पाणि मालती मल्लिकादिकं। श्वेतपद्मानि
दिव्यानि चम्पकानि तथैव च कुन्दमन्दारजैः पुष्पैः पद्मैश्च शतपत्रकैः। आचार्येणोमया सार्द्धं शङ्करं लोकशङ्करं। मलयजेन धूपेन धूपयेत्पार्वतीपतिं। अन्या
नि चाप्यभीष्टानि तानि सर्वाणि दापयेत्। नागमतैश्च पुष्पैश्च पूजयेत्पार्वती पतिं। कामिकेनतु मन्त्रेण व्यापकेन महेश्वरं। पूजयेन्मूलमन्त्रेण अम्बकेन
ततः परं। भवाय भवनाशाय महादेवाय धीमहि उग्रायोग्राय नाथाय शर्वाय शशिमालिने रुद्राय नीलकण्ठाय शिवाय भवहारिणे। शङ्कराय नमो
अङ्गे शिवाय इति जानुनी। शूलपाणये नमो गुल्फौ कट्यां शंभुं प्रपूजयेत्। गुह्यं स्वयंभुनामानं पूजयेत्पार्वतीपतिं। महादेवाय इति पूजयेज्जानि म १७४
स्तके। उदरे विश्वकर्मेच पार्श्वयोः सर्वतो मुखं। स्थाणुं स्तनौ च सम्पूज्य नीलकण्ठाय कण्ठतः। मुखे सपूजयेद्देवं श्रीकण्ठाय शिवाय च। त्रिनेत्रायनमो नेत्रे

मुकुटे शशिभूषणं। नमो देवाय सर्वांगे पूजयेच्च विभुं सदा एवं संपूज्य देवेशमुपचारै र्मनोहरैः। यथा विभवसारेण तस्य पुण्य फलं शृणु। सोमवारे यश्च
नौति पार्वत्या सह शङ्करं। तेन मर्त्यश्च याल्लोकान् पुनरावृत्तिदुर्लभान्। एकभक्तस्य यत्पुण्यं कथयामि समासतः। सप्तजन्मार्जितं पापमभेद्यं देवदानवैः
नश्यते कैकभक्तेन नात्र कार्या विचारणा। मासैकस्य तु यत्पुण्यं शृणु यत्नेन सुव्रत। अभाग्यो जातभाग्यः स्यात् दुर्भगः सुभगो भवेत्। पुत्रार्थी लभते पुत्रान्
धनार्थी लभते धनं। कन्यार्थी लभते कन्यां रूपलावण्य शालिनीं। यं यं चिन्तयते कामं तं तं प्राप्नोति मानवः। गृहे तस्य वसेत् लक्ष्मी सौख्यानि विवि
धानि च रुद्रांशो धर्ममार्गस्थो विघ्नहीनः क्षितिंश्चरेत्। अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः। इहलोके चिरं स्थित्वा भुक्त्वा भोगान् मनोरमान्।
विमानवरमारुह्य रुद्रलोके महीयते। यथात्मानन्तथा देवं यथा देवं तथा गुरुं। तोषयेत् परया भक्त्या तेन पूर्णं भवेद्व्रतं। नन्दिकेश्वर उवाच। उप
वासेन नैवेद्यं समाचरति मानवः। यदा तिलश्च वित्तश्च जायते पुरुषस्य वै। तदैवोद्यापनं कुर्याद्व्रतसंपूर्णहेतवे। चलच्चित्तं चलं वित्तं चलं जीवनमेव च।
एवं ज्ञात्वा प्रयत्नेन व्रतस्योद्यापनं चरेत्। उमामहेश्वरौ हैमौ वृषभेण समन्वितौ। यथा शक्त्या प्रकर्तव्यौ वित्तशाठ्यं न कारयेत्। मण्डलं कारयेद्दिव्यं
त्रिकोणेन कृतं शुभं। कलशं पयसा पूर्णं श्वेतवस्त्रयुगान्वितं। ताम्रपात्रं वेणुमयं कुम्भस्योपरि संन्यसेत्। स्थापयेन्मण्डले दिव्ये कलशं कनकोज्ज्वलं। त
स्योपरिन्यसेद्देवं उमया सहितं शिवं। पूर्वोक्तैरेव मन्त्रैश्च पूजयेत्पार्वतीपतिं। नाना पुष्पैः फलैर्दिव्यै र्नानारत्नैः समर्चयेत्। श्वेतवस्त्रयुगेनैव नाना
मन्त्रैर्महेश्वरं। उपवीतं सोत्तरीयं भक्ष्याणि विविधानि च। धान्यानि यान्यभीष्टानि तानि चान्यानि कल्पयेत्। पुष्पमण्डपिका कार्या वितानं तत्र शो
भितं। शय्या तूली तथादर्शं देवस्याग्रे प्रकल्पयेत्। रात्रौ जागरणं कार्यं गीतवादित्रनिस्वनैः। स्वगृह्योक्तविधिना कृत्वाग्निस्थापनं ततः। ततो
होमञ्च सर्वाणि मन्त्रकार्यविदैस्तथा। पालाश शमीसमिद्भिर्जुहुयादष्टाधिकं शतं। आप्यायस्वेति मन्त्रेण पृषदाज्ययुतस्तदा। यवव्रीहितिलाज्येन
पुष्पैः पूर्णां पृथक् पृथक्। पूर्णाहुतिन्ततो दद्यात्कृत्वा स्विष्टकृतादिकं। होमान्ते च गुरुं पूज्य सपत्नीकं समाहितः। वस्त्रैराभरणैः श्रेष्ठैः गृहोपकरणादि

॥ व्र ॥ भिः । श्वेता वा कपिलावापि सुशीलाच पयस्विनी । सवत्सा रत्नपुच्छाच घण्टाभरणभूषिता । दक्षिणा सहिता देया शिवो मे प्रीयतामिति । धेनु
१७५ र्वैजगतां माता नित्यं विष्णुपदे स्थिता । सवत्साच मया दत्ता प्रियतां मे सदा शिवः । ब्राह्मणान् भोजयेद्विद्वान् चयोदश शुभाननान् । वस्त्रालङ्कारद
चाद्यं तेभ्यो देयं सदक्षिणं । चयोदश घटादेया वंशपात्रसमन्विताः । पक्वान्नफलसंयुक्ता नानाभक्ष्यसमन्विताः । पूजितन्तु ततो देवं देवोप क
रणानिच । आचार्याय ततो दद्यात् प्रणिपत्य पुनः पुनः । इमं देवं गृहाणत्वं सर्वोपस्करसंयुतं । परिपूर्णं व्रतं मेस्याच्छिवो मे प्रीयतामिति । गृह्णा
मि देव देवेशं चयाणां जगतां गुरुं । शांतिरस्तु शिवं चास्तु व्रतस्यास्य कृतं फलं । यद्भक्त्या देवदेवेश मया व्रतमिदं कृतं । न्यूनं वाथ क्रियाहीनं परि
पूर्णं तदस्तु मे । इति संप्रार्थयेत् देवं द्विजश्चैव पुनः पुनः । भुञ्जीयात् सह धर्मात्मा शिष्टै रिष्टैश्च बन्धुभिः । अनेनैव विधानेन य इदं व्रतमाचरेत्
यं यं चिंतयते कामं तं तं प्राप्नोति मानवः । दाता सुखीच तेजस्वी चिषु लोकेषु विश्रुतः । विमानवरमारुह्य सोमलोके महीयते । मनूनांच शतं याव
त्तावच्चैव मोदते । शिवलोकं ततो गत्वा शिवेन सह मोदते । क्रीड़ते शंभुरूपेण पुनरावृत्तिदुर्लभं । कृष्णेनाचरितं पूर्वं सोमवारव्रतं शुभं । न्ट
पश्रेष्ठैः पुराचीर्णं भास्तिकैं धर्म तत्परैः । इति पठतिरहस्यं यः शृणोत्यन्वहं वैः । तदनुवदति दत्तं यो ददाति स्वशक्त्या । सकलकलुषहानो वन्द्य
मानो गणाद्यैः । शिवविमलविमानैर्याति शैवं पुरंसः । इति स्कांदे सोमवार व्रतं सम्पूर्णं । अथ भौमवार व्रतं । तच तद्यंच प्रकारउक्तः स्वगृहेचिकोण
पूर्वमकृत्य पञ्चधा विभजेत्ततः । तृतीये रेखाचिन्हाभ्यां लांछयेत्समभागतः । आद्य रेखायुगलं तृतीय चिह्न योर्न्यसेत् । द्वितीयाग्रं समाकृष्य तृती
य चिन्हयोर्न्ययेत् । युतारेखा तृतीयांतु समं भज्यात्समांशतां । तूर्याचिन्हद्वयेनाथ चिभिश्चिन्हैस्तु पञ्चमी । तृतीयाग्रे प्रकुर्वीत पञ्चम्या मध्यचिह्नगे । तु
र्याग्रे योजयेत्सम्यक् पञ्चम्या चिन्हयोर्द्वयोः । प्रथमानद्वये दद्यात्सूत्र युग्मं विचक्षणः । एवमेकाधिकासम्यक्कोणानां विंशति र्भवेत् । तृतीयातुर्ययोर्म १७५
ध्येस्थिति चिन्हे गृहे र्चयेत् । देवं तदग्रतो मन्त्री कोणेदक्षिणक्रमाल्लिखेत् । मङ्गलाद्यानोंकार पूर्वान् नमोन्तानेकविंशति । एकविंशति कोष्ठेषु नाममन्त्रान्

समालिखेत्। ततः पूजा प्रकर्त्तव्या पुत्रसंपूर्त्तिहेतवे । पूजाप्रकारमाह एहिमे भगवन् भौम अंगारक महाप्रभो। त्वयि सर्वं समायातं त्रैलोक्यं सच
राचरं। भौममावाहयिष्यामि तेजोमूर्त्तिं दुरासदं। रुद्ररूपमनिर्दिश्यं वक्रास्त्र रुधिरप्रियं। अग्निर्मूर्द्धेति मंत्रेण गायत्र्या मङ्गलस्य वा। गायत्री च
अङ्गारकाय विद्महे शक्तिहस्ताय धीमहि। तन्नो भौमः प्रचोदयात्॥ अथ पूजाविधिः॥ मन्त्रमहोदधौ॥ मार्गशीर्षे वैशाखे वा शुक्लपक्षे भौमवारे।
अरुणोदयकाले अपामार्गकाष्ठेन दन्तधावनं विधाय नद्यादौ स्नात्वा रक्तवस्त्रं परिधाय रक्तोत्तरीयञ्च धृत्वा मासपक्षाद्युल्लिख्य ऋणच्छेदाय पुत्रावाप्त्य
र्थं वा भौमव्रतं करिष्येतिसङ्कल्प्य प्रार्थयेत्। अथ देवेश ते भक्त्या करिष्ये व्रतमुत्तमं॥ ऋणव्याधिविनाशाय धनसन्तानहेतवे इति सन्ततंकर्त्तास्व
देहन्यासान् कुर्यात्। यथा अंघ्रौ मङ्गलाय नमः जानुनी भूमिपुत्राय नमः ऊर्वोः ऋणहर्त्रे नमः कटिदेशे धनप्रदाय नमः
गुह्ये स्थिरासनाय उरसि महाकायाय वामबाहौ सर्वकर्मविरोधकाय दक्षिणबाहौ. लोहिताय गले लोहिताक्षाय. नमः मुखे साम
गानां कृपाकराय नमः धरात्मजाय कुक्षौ कुजाय ललाटे भौमाय भ्रुवोर्मध्ये भूमिनन्दनाय शिखायां नमः शिखायां अङ्गारकाय नमः
चरणान् मस्तकावधि वृष्टिहर्त्रे नमः इति न्यासान् कृत्वा हृदयादिन्यासं कुर्याद्यथा क्रांहृदयाय नमः ॐ क्रीं शिरसे स्वाहा क्रूं शिखायै वौषट् ॐ क्रैं
ह्रीं ह्रूं कवचाय हुं ह्रैं नेत्रत्रयाय वौषट् खंख अस्त्राय फट् करन्यासः ॐ ऌं कनिष्ठिकाभ्यां नमः ॐ ह्रं मध्यमाभ्यां नमः ॐ ह्रां ह्रीं ॐ तर्जनीभ्यां
नमः ॐ हंसः अङ्गुष्ठाभ्यां नमः ॐ खंखः करतलकरपृष्ठाभ्यां नमः इतिन्यासान् कृत्वा आवाहयेत्। रक्तमाल्यांबरधरः शक्तिशूलगदाधरः। चतुर्भुजो मेष
गमो वरदः स्याद्धरासुत इति ध्यानं॥ एह्येहि भगवन् ब्रह्म अङ्गारक महाप्रभो। त्वयि सर्वं समायातं त्रैलोक्यं स चराचरं। भौममावाहयिष्यामि
तेजो मूर्तिं दुरासदं। रुद्ररूपमनिर्देश्यं वक्रास्त्र रुधिरप्रियमिति। ततो अग्निर्मूर्द्धेति मंत्रेण पूर्वोक्त भौमगायत्र्या वा आसनादिपुष्पान्तां पूजां कृत्वा
यंत्रस्थैकविंशति कोष्ठेष्वगानि पूजयेदेकविंशति नामाभिर्यथा मङ्गलाय नमः पादौ पूजयामि भूमिपुत्राय नमः जानुनी ऋणहर्त्रे ऊरू पूजयामि धन

॥ व्र ॥ प्रदाय नमः कटिं पूजयामि शिरासनाय नमः गुह्यं पूजयामि महाकायाय नमः उरः पूजयामि सर्वकर्मावरोधकाय नमः वामबाहुं पूजयामि लो
१७६ हिताय नमः दक्षिणबाहुं पूजयामि लोहिताङ्गाय कण्ठं पूजयामि सामगानां कृपाकराय मुखं पूजयामि धरात्मजाय नासिकां पूजयामि कुजाय अक्षि
णी पूजयामि भौमाय ललाटं पूजयामि भूतिदाय नमः भ्रूमध्यं पूजयामि भूमिनन्दनाय नमः मस्तकं पूजयामि अंगारकाय नमः शिखां पूजयामि
यमाय नमः सर्वांगं पूजयामि सर्वरोगापहारकाय नमः बाहुद्वयं पूजयामि सृष्टिकर्त्रे नमः मूर्द्धादिपादपर्यन्तं पूजयामि हव्यकर्त्रे नमः पादा
दि मस्तकपर्यन्तं पूजयामि हव्यकर्त्रे नमः शिरः पूजयामि अथ मूलमन्त्रमेवोदधिमार्ध अन्यच्च क्वचिदन्यथा तत्प्रकारः स च यथा। शिखायां मङ्गलः
पातु भूमिपुत्रस्य मूर्द्धनि। ललाटे ऋणहर्त्ता च चक्षुषोश्च धनप्रदः। शिरासनः श्रोत्रयोश्च महाकायश्च नासिके। वाक्यदन्तौष्ठजिह्वासु सर्वकर्मावरोधकः।
कर्णं मे लोहितः पातु लोहिताङ्गस्य कण्ठके। स्कन्धयोरुभयोरक्षेत् सामगानां कृपाकरः। धरात्मजो भुजौ पातु कुजो रक्षेत् करद्वयं। भौमो मे हृदयं पातु
भूतिदस्तु तथोदरे। भूमिनन्दश्च नाभौ गुह्ये अङ्गारकं न्यसेत्। ऊरू मम यमो रक्षेत् आम्बोरोगापहारकः। जङ्घयो सृष्टिकर्त्ता च हव्यकर्त्ता च गुल्फयोः पा
दांगुष्ठे च पादौ च सर्वकाम फलप्रदः। शक्तिर्मे पूर्वतो रक्षेत् शूलं रक्षेच्च दक्षिणे। पश्चिमेच धनुः पातु उत्तरे च शरस्तथा। ऊर्ध्वं षडाननः पातु अध
स्तात् पृथिवी मम। एवं न्यस्तशरीरोऽसौ चिन्तयेद्भूमि नन्दनं॥ अथ कथा॥ सूत उवाच॥ पूजितो देवदैत्यैस्तु मङ्गलो मङ्गलप्रदः। गौतमेन पुरापृष्टो
लोहिताङ्गो महाग्रहः॥ गौतम उवाच॥ कथयस्व महाभाग गुह्यं पूजनमुत्तमं। मन्त्रमाराधनं दानं सर्वपापप्रणाशनं। रूपं सुवर्णसङ्काशं वाहना
युध संयुतं। येन पूजितमात्रेण जायते सुखमुत्तमं। धर्मार्थकाममोक्षाणां कालेनैव फलप्रदं। सर्वपाप प्रशमनं सर्वव्याधि विनाशनं। सर्वसौभाग्यदं
देवं दत्वा पातकनाशनं। सर्वयज्ञफलं प्रोक्तं सर्वकामफलप्रदं। तपसां जपदानानां फलमेव तु लभ्यते। तद्व्रतं ब्रूहि मे देव लोहिताङ्ग महाग्रह। यस्मि १७६
न्नाराधिते मर्त्यः सर्वसौभाग्यवान् भवेत्। मङ्गल उवाच॥ शृणु विप्र महाभाग सर्वज्ञ ऋषिगौतम। व्रतं च पूजनं दानं यद्वृतं भुवनत्रये॥ आसीत्

पूर्वं हि सर्वज्ञो ब्राह्मणो वेदपारगः । तस्य भार्या सुनन्दा च नाम्ना ख्याता सुलोचना । तस्यापत्यं न सञ्जातं दुःखत्वात्तु कदाचन । तेनान्यस्य सुतां सु ख्यां गृहीत्वा पोषिता भुवं । ब्राह्मणस्य कुलेजाता सुरूपा रूपसंयुता । सर्वलक्षणसम्पन्ना प्रयत्नेनैव गौतम । पुराजन्म तथा चाहमेकभावेन पूजितः । तां पुत्रीं स्वगृहे नीत्वा ब्राह्मणेनैव पालिता । नित्यं हि पुष्यते तस्या अष्टाङ्गकनकद्युति । तत्सुवर्णेन विप्रःसौ धनाढ्यो बलगर्वितः । कोटिकोटीश्वरो जातो राजते भुवि मण्डले । दृष्टा नन्दकविप्रेण दशवर्षा वरार्थिनी । विवाहार्थं च विप्रस्य दत्ता सोमेश्वरस्य च । वेदोक्तविधिना विप्रो विवाहमकरोत्तदा । वर्षैः कतिपयैर्विप्र सा कन्या प्रौढयौवना । ततः स्वदेशमार्गेण ब्रजन्विप्रोऽप्यहर्निशं । निशान्ते चाध्वरे घोरे चारण्ये पर्वतोत्तमे । सर्वशून्यं व्रतं स स्मिन् महालोभेनभावितः । मार्गे चलति विप्रोऽसौ चौरैश्च विनिपातितः । तं पतिं हतमालोक्य सा नारी शोकपीडिता । पतिना सह विप्रेण मरणे कृतनिश्चया । स्वपतिं तन्मयं विम्बं चिन्तयन्ती पदे पदे । पतिं प्रदक्षिणीकृत्य चितायाश्च समीपतः । तस्मिन् क्षणे तु तुष्टोऽहं वरार्थं च प्रचोदिता । वरं ब्रूहि महाभागे यत्ते मनसि वर्तते । इत्यवोचं ततो वव्रे सा नारी पतिमानसा । ब्राह्मण्युवाच ॥ यदि तुष्टोऽसि मे देव तदा जीवतु मे पतिः ॥ मङ्गल उवाच ॥ देववत् चाजरामरस्तव भर्त्ता भविष्यति । अन्यं ब्रूहि ममाख्यातं वरं त्रिभुवनोत्तमं ॥ ब्राह्मण्युवाच ॥ यदि तुष्टोऽसि मे देव ग्रहाणामधिपेश्वर । ये त्वां स्मरन्ति देवेशं रक्तचन्दनचर्चितं । रक्तपुष्पैश्च संपूज्य प्रत्यूषे भौमवासरे । बन्धनं व्याधिरोधे च कदाचिन्नोपजायतां । सर्पाग्नि शत्रुभयं वियोगन्तु विषयस्य वै । मा कुरुष्व महीपुत्र भक्तानां सौख्यदो भव ॥ मङ्गल उवाच ॥ एकविंशति भौमाश्च महाव्रतस्य जितेन्द्रियः । एकान्नेनापि तान्नेन भुञ्जीत न परगृहे । अर्घंच मङ्गलैर्मन्त्रैर्वेदपौराणिकैस्तथा । युवारक्तमनड्वाहं सर्वोपस्करसंयुतं । स्वशक्त्या भोजयेद्विप्रान् दातव्यञ्च हिरण्यकं तेषां वै ग्रहपीडाथ न भवेत कदाचन । भूतवेताल शाकिन्यो न भवन्तीति हिंसकाः एवमुक्ता सुवन् तत्र मङ्गलोपि दिवं गतः । मङ्गल उवाच । इदं व्रतं तवाख्यातं सर्वसौख्यप्रदायकं । इदं व्रतं करिष्यन्ति तेषां पीडा न जायते । स्त्रीभिर्व्रतं प्रकर्तव्यं पुरुषैश्च विशेषतः ।

॥ व्र ॥ तेषां मुक्ति नं सन्देहो स्वर्गवासो न संशयः। इति भविष्योत्तर पुराणे भौमव्रतं अथोद्यापन विधिर्भविष्ये। सौवर्णं मङ्गलं कृत्वा स्वर्णपुष्पैः प्रपूजनं।
१७७ रक्तांबर धरं विप्र रक्तचन्दन चर्चितं। रक्तपुष्पैः सुसंपूज्य मङ्गलञ्च विधानतः। अष्टांगैरष्ट पुष्पैश्च फलैरर्घं प्रदापयेत्। नारिकेलादिभिश्चैव कुम्भाने
वं निवेशयेत्। एकविंशति कुम्भांश्च रक्तचन्दन चर्चितान्। ब्राह्मणान् भोजयित्वातु ततो कुम्भान् प्रदापयेत्। रक्तधेनुं वृषंचैकमेवं दद्याद्यथाविधि।
शय्यां सोपस्करां दद्याद्व्रती नियममेवच। भौमंतत्र प्रदातव्यं चिप्रव्रतं समापयेत्। उमामहेश्वर तत्र परिधाय स्वशक्तितः। आचार्यंच सपत्नीकं वि
नक्राद्य विवर्जितः। तस्य जन्मकृतं पापं विलयं याति तत्क्षणात्। सदाच नियमारूढः प्रत्यूषे सुसमाहितः। यावज्जीवं प्रकर्त्तव्यं व्रतमेतद्विधानतः।
सन्तानाश्च भविष्यन्ति पुत्र पौत्र धनादिभिः। यस्त्वकस्त्वन विप्रेन्द्र करोति मानवो भुवि। धनं सर्वमवाप्नोति व्रतस्यास्य प्रभावतः। अन्तेच परमं स्थानं
वच सूर्यादयो ग्रहाः। गच्छन्तीतिशेषः यः शृणोति व्रतं विप्र मौनव्रत परायणः। तस्य मास कृतं पापं विलयं याति तत्क्षणात्। नवकनकशरीरस्तेज
सा दुर्निरीक्ष्यो द्रुतवह समकांति र्मानवे लब्धजन्मा अवनितलनरैः स्तूयते भारतेसौ भवति बहुविभूतिं भूमिजस्य प्रभावात।एवं यः कुरुते विप्र सम्पूर्ण
फलभाक् भवेत्। इति व्रतार्के सोद्यापनं भौमव्रतं सम्पूर्णं। इति श्रीमीमांसक भट्टनीलकण्ठात्मज भट्टशङ्कर कृते। व्रतार्के वासरव्रतानि अथ संक्रांति
व्रतानि हेमाद्रौस्कांदे नन्दिकेश्वर उवाच। अथातः संप्रवक्ष्यामि धान्यव्रतमनुत्तमं। यत्कृत्वाहि नरोराजन् सर्वान् कामान वाप्नुयात्। अयने विषुवे
चैव स्नानं कृत्वा विचक्षणः। व्रतस्य नियमं कुर्यात् ध्यात्वा देवंदिवाकरं। करिष्यामि व्रतं देवं त्वद्भक्तस्त्वत्परायणः। तदा विघ्नंनमेयातु तवदेव
प्रसादतः। इत्युच्चार्य लिखेत्पद्मं कुङ्कुमेनाष्टपत्रकं। भास्करं पूर्वपत्रेतु आग्नेयेच तथा रविं। विवस्वतं तथा याम्ये नैरृत्ये पूषणं तथा। मार्त्तण्डमिति
कौवेरे ऐशाने भानुमेवच। एवं च क्रमशोभ्यर्च्य विश्वात्मं मध्यदेशतः। कृतांजलिपुटो भूत्वा अर्घंदद्यात् समन्त्रकं। कालात्मकं सर्वदेवात्मा वेदात्मा १७७
विश्वतोमुखः। व्याधि मृत्यु जराशोक संसार भयनाशनं। इत्यर्घ मन्त्रः पुष्पैर्धूपैः समभ्यर्च्य शिरसा प्रणिपत्यच। रविं ध्यात्वा ततोदद्याद्दानम्

स्य द्विजातये। प्रतिमासं पुनस्तद्वत् पूज्योदेवः सहस्रपात् । एवं सदा प्रदातव्यं दान प्रस्थ द्विजातये। एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियां । अर्घं पात्रंहि सौवर्णं कारये न्मण्डलं शुभं। द्विभुजं पूजयेद्भानुं रक्तवस्त्रयुगान्वितं। धान्य द्रोणेन सहितं तदर्द्धेन स्वशक्तितः । स्वर्णशृङ्गीं रौप्यखुरां कांस्य दोहां पयस्विनीं। रविरूपं द्विजं ध्यात्वा तत्सर्वं विनिवेदयेत्। अग्निष्टोमसहस्राणां फलं प्राप्नोति मानवः। सप्तजन्मसहस्राणि धनधान्य समन्वितः निर्व्याधिर्निरुजोधीमान् रूपवानभिजायते। इति धान्य संक्रांति व्रतं। अथ लवण संक्रांति व्रतं। तत्रैव अथातः संप्रवक्ष्यामि लवण संक्राति मुत्तमां संक्रांतिवासरं प्राप्य स्नानं कृत्वा शुभैर्जलैः। वस्त्रालङ्कार सवीतै र्भक्ति भाव समन्वितः। कुङ्कुमेन लिखेत्पद्ममष्टपत्रं सकर्णिकं। भास्करं पूजयेद्भक्त्या सप्त धान्य समन्वितं। तदग्रे लवण पात्रं सगुडं स्थापयेद्बुधः। पूजितस्त्वं यथा शक्त्या प्रसीद मम भास्कर। लवणं सगुडं पात्रं ब्राह्मणाय निवेदयेत्। एवं संवत्सरे पूर्णे भानुं कार्य्यं हिरण्मयं। रक्त वस्त्र युगच्छन्नं रक्त चन्दन चर्चितं। कमलं लवणं पात्रं धेन्वा सार्द्धं द्विजातये। प्रदद्याद्भानु मुद्दिश्य विश्वात्मा प्रीयतामिति। एवं कृत्वातु यत्पुण्यं प्राप्यते भुवि मानवैः। तत्केन गदितुं शक्यं वर्ष कोटि शतैरपि। लवणाचलदानस्य फलं प्राप्नोति मानवः। सर्वकाम समृद्धात्मा विमानवरमध्यगः। सूर्यलोके वसेत् कल्पं पूज्यमानः सुरासुरैः। इति लवणसंक्राति व्रतं। अथ भोगसंक्रांति व्रतं। तत्रैव संक्रांतिदिवसं प्राप्य योषितस्तु समाहूयेत्। कुङ्कुमं कज्जलञ्चैव सिन्दूरं कुसुमानिच। सुगन्धीनि चन्द्रव्याणि तांबूलं शांति संयुतं। तंदुलान् फल संयुक्तांस्ताभ्यो दद्याद्विचक्षणः। दद्यात्प्रहृष्टमनसा मिथुनेभ्यः प्रयत्नतः। भोजयित्वा यथा शक्ति वस्त्र युग्मं प्रदापयेत्। एवं संवत्सरस्यांते रविं संपूज्य पूर्ववत्। धेनुं सदक्षिणां दद्यात्सपत्नीकद्विजातये। स्यात्सुखी सर्व मर्त्येषु भोगी जन्मनि जन्मनि। इति भोग संक्राति व्रतं। अथ रूपसंक्रांतिव्रतं तत्रैव संक्रांति वासरे स्नानतैलं कृत्वा विचक्षणः। हेमपात्रे घृतं कृत्वा हिरण्येन समन्वितः। स्वरूपं वीक्ष्य तत्पात्रं ब्राह्मणाय निवेदयेत्। एक भक्तं ततः कृत्वा भक्त्याचैव समन्वितं। व्रतेन कांचनं दद्यात् घृत धेनु समन्वितः। इति रूपसंक्रातिव्रतं। अथ तेजसंक्रांतिव्रतं। शालितंदुल संयुक्तं करकं कारयेच्छुभं। तन्मध्ये दीपकं स्थाप्य प्रज्वलं तं स्वतेजसा।

सवत्सरेतु संपूज्य कुर्यादुद्यापन बुधः। शोभनं दीपकं कार्यं सुवर्णे

 तन्मध्ये मोदकं स्थाप्य ब्राह्मणाय निवेदयेत्। अर्घंच पूर्ववत्कार्यमेकभक्तञ्च पूर्ववत्। अथ सौभाग्य सक्रांतिः। पूर्ववत्स्नानमभ्यर्च्य तथार्चे।

 न तु नारद। ताम्रेण करकं कार्यं तन्मध्ये दीपकं न्यसेत्। कपिला सच दातव्या करकेण द्विजातये। एवं संवत्सरे पूर्णे कृत्वा ब्राह्मण भोजनं।

व सुवासिनीः। सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मो पशोभितं। विप्राय वेदविदुषे भक्त्या तत् प्रतिपादयेत्। सौभाग्याष्टकंतु ऐक्षवं

लवणस्याचलः कार्यः यथाविभवसारतः। कांचनं कमलं कृत्वा भास्करञ्चैव कारयेत्। गन्धपुष्पादिना पूज्य विप्राय प्रतिपादयेत्। अथ तांवूल संक्रांतिः तांवूलञ्च

राजिकामदनिष्पावाश्च सुशोभनाः। धान्यकं जीरकंचैव कौसुंभं कुङ्कुमं तथा। लवणं वा ष्टमं तद्वत्सौभाग्यष्टकमुच्यते। संवत्सरांतेच कमलं कृत्वाचैवतु कांचनं

न्दनांस्त्रांच दद्यातांश्च द्विजोत्तमं। एवं संवत्सरं पूर्णं रात्रौ रात्रौ ततःपरं। तांवूलं भक्षयेद्विप्रैः कारयेद्देवनांतरं। द्विजं दांपत्यमावाह्य सर्वो

पस्करोपेत कुर्वीत तथा पूगफलालयं। स्वर्णभाडं प्रकुर्वीत पूर्ण प्रस्फोटनं तथा। मुखवासादि चूर्णानां भांडानिच द्विजर्षभ। एवं करोति या नारी तांवूलाख्यं व्रतोत्तमं ..

वस्कर संयुतैः। द्रव्यैस्तु पूजयेद्भक्त्या षड्रसैर्भोजयेद्विद्वान्। उपकल्पितं तु यत्किञ्चि द्ब्राह्मणाय निवेदयेत्। संक्रांतिवासरे दद्यातद्ब्राह्मणाय कु

मर्त्या पुत्रैश्च पौत्रैश्च मोदते स्वगृहे सदा। अथ मनोरथ संक्रांति व्रतं। गुडेन पूर्णं कुम्भच वत्सरन्तु स्वशक्तितः। यं यं कामयते का

टुंम्बिने। एवं संवत्सरे पूर्णे स्वशक्त्योद्यापनं मुने। गुडेन पर्वतं कृत्वा वस्त्ररत्नैश्च भूषितं। अयनेचोत्तरे दद्याद्वित्तशाठ्यं न कारयेत्। एक भक्तंतु यः कुर्यात्तिलदान प्र

मं तं तमाप्नोति पुष्कलं। शेषं धान्यसंक्रांतिवत्। अथ विशोक संक्रांति व्रतं तत्रैव अयने विषुवेचैवव्यतिपातोभवेद्यदि। संच्छाद्य रक्तवस्त्राभ्यां ताम्रपात्रे निधापयेत्। भास्कराय

पूर्वकं। कांचनं भास्करं कृत्वा यथा विभव शक्तितः। स्नापयेत्पञ्चगव्येन गन्धपुष्पैस्तु पूजयेत्। अर्घमेतु कटिं पूज्यः भानुश्चैवोदरे तथा। नमः पूष्णेति वाहूभ्यां अर्यम्णे पुनः १७८

नमः पादौ रवे अङ्गेतिवै नमः। आदित्याय नमो जानू उरुचैव दिवाकरः। शिरःवरुणाय नमः केशान् पादादौ पूजयेद्रविं। अर्घंच पूर्ववत्

स्तनौ विवस्वते नमः कण्ठे सहस्रांशो मुखं स्मृतं प्रभाकर नमो नेत्रे तेजोराशे नमः

कार्यं ब्राह्मणाय निवेदयेत्। एवं संवत्सरे पूर्णे कांचनेन दिवाकरं सप्ताश्वं संपूज्य यथा विभव शक्तितः। कारयेत् पूजयेद्भक्त्या रक्तवस्त्रेण वेष्टयेत्
ततो होमं प्रकुर्वीत सर्वं मन्त्रैस्तु नारद। द्वादशकाः कपिला दद्यात् वस्त्रालंकार संयुताः। अशक्तः कपिलामेकां वित्तशाठ्य विवर्जितः। आयुरारोग्य
मैश्वर्यं भार्या पुत्र समन्वितः। अथायु संक्रांतिव्रतं। अथान्यच्च प्रवक्ष्यामि आयु संक्रांति मुत्तमं। संक्रांति दिवसे पूज्य पूर्ववद्धि दिवाकरं। कांस्ये क्षीर
घृतं दद्यात्सहिरण्यं स्वशक्तितः। मन्त्राः पृथक् पृथग्दाने पूजा सैव प्रकीर्त्तिता॰। सक्षीरं सुरभी जातं पीयूषममसर्पियुक्। आयुरारोग्य मैश्वर्यं
मतो देहि द्विजार्पितं। अनेन विधिना वर्षं सर्वं दद्यादतंद्रितः। उद्यापनादिकं सर्वं धान्यसंक्रांतियद्भवेत्। निर्व्याधिस्सैव दीर्घायुस्तेजस्वी
कीर्त्तिमांस्तथा। अपमृत्युभयं नास्ति जीवेत् शरदांशतं। इत्यायु संक्रांतिः अथ धन संक्रांतिः हेमाद्रौ स्कांदे संक्रांतिदिवसे पूज्यं भास्करं
गुरुविधानतः। कलशञ्च निर्व्रणं गृह्य वारिपूर्णं निधापयेत्। सुवर्णपात्रं तं कृत्वा प्रतिमासन्तु दापयेत्। विधिना तेन वर्षांते प्रीयतां मे दि-
वाकरः। पूजाविधानं सर्वन्तु धान्य संक्रान्तिवद्भवेत्। सौवर्णं कलशं कृत्वा सूर्यस्योपरि विन्यसेत्। तस्मिं सुवर्ण घटितं पंकजं वै निवेशयेत्।
गोदानं तत्र दातव्यंमेवं संपूर्णतां व्रजेत्। जन्मनां शतसाहस्रं धनयुक्तो भवेन्नरः। आयुरारोग्य सम्पन्नः सूर्यलोके महीयते। अथ संक्रान्ति
उद्यापनं हेमाद्रौ मात्स्ये नन्दिकेश्वरउवाच। अथान्यदपि वक्ष्यामि संक्रांत्युद्यापने फलम्। विषुवे चायने चैव संक्रांतिव्रतमाचरेत्।
पूर्व्वेद्युरेकभक्तेन दन्तधावनपूर्वकं। संक्रान्तिवासरे प्रातस्तिलैः स्नानम् विधीयते। रविसंक्रमणे भूमौ चन्दनेनाष्टपत्रकं। पद्मं सकर्णि-
कं कुर्यात्तस्मिन्नावाहयेद्रविं। कर्णिकायां न्यसेत्सूर्यमादित्यं पूर्वतस्ततः। नमः सोमार्चिषे याम्ये नमोऽग्निमण्डलाय तु। नमः सवित्रे नैर्ऋत्ये वारुण्या
तपनं बुधः। मार्त्तण्डमुत्तरे विष्णुमीशाने विन्यसेत्तदा। द्विजाय सोदकं कुम्भं तिलपात्रं हिरण्मयं। कमलन्तु यथाशक्त्या कारयित्वा निवेदयेत्।
चन्दनोदकपुष्पैश्च देवायार्घं न्यसेद्भुवि। विश्वाय विश्वरूपाय विश्वधाम्ने स्वयंभुवे। नमोऽनंत नमो धात्रे ऋक्सामयजुषाम्पते। अनेन विधिना सर्वं

॥ व्र ॥ मासि मासि समाचरेत्। वत्सरान्ते तथा कुर्यात् सर्वं द्वादशधा नरः। संवत्सरान्ते घृतपायसेन सन्तर्प्य वह्निं द्विजपुङ्गवांश्च कुम्भान् पुनर्द्वादश

१८७९ धेनुयुक्तान् सरत्नहैरण्मय पद्मगर्भान् पयस्विनीः शीलवतीश्च दद्यात्सवत्सका रूप्यखुरा वस्त्रयुक्ताः गावोथवा सत्पलकांस्य दोहा माल्यांबरा वाचतुरोथ

शक्त्या देयाथ्यशक्तः कपिलातथैका निवेदयेद्ब्राह्मण पुङ्गवाय ॥ हैमांच दद्यात् पृथिवीं समेषां कृत्वाथ रौप्यामथवापितार्म्रीं पैष्टीमशक्तोथ तिलैर्विधाय

सौवर्ण सूर्येण समं प्रदद्यात् नवित्तशाठ्यं पुरुषोत्र कुर्यात् कुर्वन्नधोयाति न संशयोत्र यावन्महेन्द्र प्रमुखा नगेन्द्राः पृथ्वी च सप्ताब्धियुतेह तिष्टेत् तावत्

सगन्धर्वगणैरशेषैः संपूज्यते नारद नाकपृष्ठे ततस्तु कर्मक्षयमाप्य सोथ द्वीपाधिपःस्यात्कुलशीलयुक्तः स्पष्टेर्मुखे व्यंगवपुः सभार्यः प्रभूतपुत्रान्वय-

वन्दितांघ्रिः ॥ इति सप्तकृत्युद्यापनम् ॥ अथ घृतस्नपनं हेमाद्रौ भविष्ये उत्तरेत्वयने प्राप्ते घृतप्रस्थेन यो हरिं । स्नापयित्वा ब्राह्मणाय उपवासं

प्रयच्छति। सर्वपाप विनिर्मुक्तः सूर्यलोके चिरंवसेत्। ततो भवति भूपालः प्रजानन्द विवर्धनः। इति रवेर्घृतस्नपनं ॥ इति श्रीनीलकण्ठात्मज

भट्टशङ्कर कृतो व्रतार्के सोद्यापनसंक्रान्ति व्रतानि समाप्तानि ॥ सम्पूर्णम् ॥

---

जिस पोथी मे मेरी मुहर न होवे वः चोरी की है कभी उसे कोई मोल न लेवे अगर किसी के पास

पकड़ी आवेगी तो उस्को चौगुना दाम देना पड़ेगा और कहां से पाई पता बतलाना होगा इति



यह पोथी बनाई थी कलकत्ते के संस्कृत यन्त्रालय मे श्रीज्वालानाथ पण्डित ने
छपवाई और बोर्ड आफ् एग्‌जामिनर के श्रीजगन्नाथ पण्डित काशी निवासी में
कई पोथियों का पाठ मिलाके उस शोधा इति संवत् १९१४ आश्विनवदी ८ ॥